॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

(Continued from page 626 Vol XI.)

"ह्रस्वो नपुंसके प्रातिपदिकस्य" ॥ सूत्रे नपुंसकशब्देन तद्वृत्तिद्रव्यं विवक्षितं न लिङ्गमात्रमित्याह । 'नपुंसकलिङ्गेऽर्थे इति' । नपुंसकं लिङ्गमस्येति बहुव्रीहिः । 'ग्रामणीरिति' । सत्सूद्विषेत्यादिना क्विप् । 'प्रातिपदिकस्येति किमिति' । नपुंसकलिङ्गं द्रव्यस्यैव धर्म्मो द्रव्यवाचित्वं च प्रातिपदिकस्यैव न सुबन्तस्य शक्तिसङ्ख्याप्राधान्यात्, न धातोस्तिङन्तस्य वाक्यस्य वा क्रियाप्रधानत्वात्, वर्णास्त्वनर्थकाः, स्त्रीप्रत्ययानां तु विरुद्धं नपुंसकेनायोग इति प्रश्नः । 'काण्डे कुड्ये इति' । अप्रत्यय इति निषेधात् प्रातिपदिकत्वं नास्ति । ननु च एकादेशः पूर्वे प्रत्यन्तवद्भावात् प्रातिपदिकग्रहणेन गृह्यत इति क्रियमाणेपि प्रातिपदिकग्रहणे ह्रस्वत्वं स्यादेवात आह । 'प्रातिपदिकग्रहणसामर्थ्यादिति' । कथं पुनः सामर्थ्यं यावता यत्रान्तवद्भावो नास्ति वाः वारी त्रपुणी इत्यादौ तद्भावर्थं स्यात् । अथ शक्तिसङ्ख्याप्रधानत्वात् तत्र नपुंसकेनायोगः काण्डे इत्यादावपि एवमेव न भविष्यति, नह्यन्तवद्भावेन प्रातिपदिकत्वे सत्यपि शक्तिसङ्ख्याप्राधान्यं हीयते । एवं मन्यते । असति प्रातिपदिकग्रहणे नपुंसकवृत्तेरनपुंसकवृत्तेश्च य एकादेशः स नपुंसकवृत्तित्वेन गृह्यते नपुंसकइति स्यात्प्रसङ्गः प्रातिपदिकग्रहणे तु मुख्यप्रातिपदिकार्थत्वाद् अतिदिष्टप्रातिपदिकत्वस्य ह्रस्वस्याभाव इति, उत्तरपदे प्रातिपदिकग्रहणम् । इह वनाय वनाभ्यां वनानि वनेभ्य इति ह्रस्वो, बहिरङ्गयोर्दीर्घत्वयोरसिद्धत्वात्, काण्डीभूतमित्यत्र पूर्वं नपुंसकत्वान्तदशायाम् अव्ययत्वेनालिङ्गत्वाद् ह्रस्वाभावः ॥

"गोस्त्रियोरुपसर्जनस्य" ॥ 'स्त्रीति प्रत्ययग्रहणमिति' । अत्र हेतुमाह । 'स्वरितत्वादिति' । स्वरितेनाधिकार इत्यस्य यत्र स्वरितत्वं प्रतिज्ञायते तत्र तदधिकारो ग्राह्य इत्ययमप्यर्थः, इह च स्त्रीग्रहणं

स्वर्यते तेन स्त्रियामित्यधिकृत्य विहितानां टाबादीनां ग्रहणं भवति नार्थस्य नापि स्वरूपस्य, क्तिवादीनां तु ह्रस्वभावित्वाभावादग्रहणम्। 'उपसर्जनग्रहणं तयोर्विशेषणमिति'। प्रत्येकं सम्बन्धात्तु द्विवचनं न भवतीत्याह। 'गोरुपसर्जनस्येत्यादि'। स्त्रीप्रत्ययान्तस्येति पाठः। पारिभाषिकं ह्यत्रोपसर्जनं गृह्यते न च स्त्रीप्रत्ययमात्रस्य पारिभाषिकोपसर्जनत्वसम्भवः। 'ताभ्यामिति'। उपसर्जनेन गोशब्देन स्त्रीप्रत्ययान्तेन च यदि ताभ्यां तदन्तविधिर्न विज्ञायते तदा उपसर्जनस्य गोशब्दस्य स्त्रीप्रत्ययान्तस्य च प्रातिपदिकस्य ह्रस्व इत्यर्थः स्यात्ततश्च गोकुलं राजकुमारीपुत्र इत्यत्रापि स्यादिति भावः। इह तु कुमारीपुत्र इत्यत्र प्रातिपदिकत्वादेवाप्रसङ्गः। उपसर्जनस्त्रीप्रत्ययान्तस्येति पाठः। उपसर्जनं यत् स्त्रीप्रत्ययान्तं तदन्तस्येत्यर्थः। यदि तु लौकिकेनोपसर्जनेन स्त्रीप्रत्ययमात्रं विशेष्य पश्चात्तेन प्रातिपदिकस्य तदन्तविधिर्विज्ञायत उपसर्जनं यः स्त्रीप्रत्ययस्तदन्तस्य प्रातिपदिकस्येति ततो हरीतक्यः फलानीत्यत्रापि स्यात् स्त्रीप्रत्ययार्थस्य फलं प्रत्युपसर्जनत्वात्तद्विदन्तत्वेन प्रातिपदिकत्वाच्च, अत एवमेवाश्रयणीयं स्त्रीप्रत्ययान्तं यच्छास्त्रीयमुपसर्जनं तदन्तस्य प्रातिपदिकस्येति। 'निष्कौशाम्बिरिति'। कौशाम्बीत्येकविभक्तीत्युपसर्जनं स्त्रीप्रत्ययान्तं तदन्तं समासप्रातिपदिकम्। अथेह 'कथं ह्रस्वत्वम् अतिराजकुमारिरिति यावता कुमारशब्दात् ङीब्विहितो न तु राजकुमारशब्दात्, सत्यम्। अनुपसर्जने स्त्रीप्रत्यये तदादिनियमो नास्ति। अथ गोशब्देन स्त्रीप्रत्ययान्तेन च प्रातिपदिकस्य तदन्तविधौ सत्यपि गोकुलं राजकुमारीपुत्र इत्यत्र कस्मान्न भवति यावता 'येन विधिस्तदन्तस्य' त्यत्र स्वंरूपमित्यनुवर्तते ततश्च येन तदन्तविधिः तत्स्वरूपस्यापि ग्रहणेन भाव्यम्, एवं तर्हि गोशब्देन प्रातिपदिकस्य विशेषणसामर्थ्यात् केवलस्य न भवति, अन्यथा गोशब्दस्यैवोपसर्जनस्य ह्रस्वं विदध्याद् 'येन विधिस्तदन्तस्य' त्यत्र वा स्वंरूपमिति निवर्त्य, व्यपदेशिवद्भावो ऽपि प्रातिपदिके नास्ति राजकुमारीपुत्र इत्य तु परिहारः शास्त्रीयमप्युपसर्जनं सति सम्भवे ऽन्वर्थमेवाप्रधानमुपस-

र्जनमिति प्रधानं चापेक्ष्याप्रधानं भवति स्त्रीप्रत्ययान्तस्य च प्रातिपदिकत्वं समासमन्तरेणानुपपन्नं समासश्चावयवात्मको द्वयं चात्र संनिहितं प्रधानमप्रधानमिति तत्रैवं विज्ञास्यामो यत् स्त्रीप्रत्ययान्तं समासप्रातिपदिकं तदन्तर्भूतमेवापेक्ष्य स्त्रीप्रत्ययान्तस्याप्राधान्यमिति, इह तु तत्रानन्तर्भूतं पुत्रमपेक्ष्याप्राधान्यमिति न भवति ह्रस्वः । 'ईयस इत्यादि'। इयसुचन्ताद्यः स्त्रीप्रत्ययो विहितस्तदन्तान्तस्येत्यर्थः । 'बहुश्रेयसीति'। 'प्रशस्यस्य श्रः' ङीप् बह्व्यः श्रेयस्योस्येति बहुव्रीहिः 'नद्यृतश्चेति' कप 'ईयसश्चे'ति प्रतिषेधः, पुंस्यपि सोर्हल्ङ्यादिलोपः । बहुव्रीहेरिति किम् । अतिश्रेयसिः ॥

"लुक्तद्धितलुकि" ॥ 'स्त्रीग्रहणमनुवर्तते इति' । न तु गोग्रहणं कुतः प्रत्ययादर्शनस्य लुक्संज्ञाविधानाद् गोशब्दस्याव्युत्पन्नत्वाद् व्युत्पत्तिपक्षेप्यस्वरितत्वात् । 'उपसर्जनस्य चेति' । अनुवर्ततइत्यपेक्षते, लौकिकं चात्रोपसर्जनं गृह्यते न शास्त्रीयं, पूर्वेण ह्रस्वत्वे प्राप्तइति क्वचित्पठ्यते, तत्र क्वचिदिति विशेषः ।.पूर्वसूत्रेण हि शास्त्रीयमुपसर्जनं गृहीतं तस्यावकाशो यत्र न तद्धितलुग् निष्कौशाम्बिरिति, अस्यावकाशो यत्र शास्त्रीयमुपसर्जनम् आमलकमिति, तद्धितलुक्च यथा पञ्चेन्द्र इति, अत्र हि समासार्थे नानाविभक्तिके पञ्चेन्द्राणीत्येकविभक्तिकमिति अस्त्युपसर्जनत्वं तत्रोभयप्रसङ्गे परत्वादयमेव लुग् ह्रस्वं बाधतइत्यर्थः । केचित्त्वस्मादेव ग्रन्थात् पूर्वसूत्रेऽपि लौकिकस्योपसर्जनस्य ग्रहणं मन्यन्ते तेषां हरीतक्यः फलानि इति लुब्विषये ह्रस्वप्रसङ्ग इत्युक्तं, स्यादेवं योऽपि युक्तवदिति शब्दार्थयोरप्यतिदेशः प्रकृत्यर्थस्य यल्लिङ्गं यश्च तदभिधायी प्रत्ययः तयोर्द्वयोरतिदेशस्तत्रोपदेशिकस्य ह्रस्वत्वमातिदेशिकस्य श्रवणं भविष्यतीति । यद्येवं युवतिरिव पुरुषः 'लुम् मनुष्ये' युवतिः, द्वौ तिशब्दौ श्रूयेयातां तस्मा'ल्लुब्योगाप्रख्याना'दिति लुपः प्रत्याख्यानेन वात्र परिहारो वाच्यः शास्त्रीयं वोपसर्जनं ग्राह्यं ग्रन्थस्य च व्याख्यात एवार्थः । अभावरूपेण लुका पौर्वापर्यासम्भवात् लुकीति सत्सप्तमीत्याह । 'लुकि सतीति' । 'पञ्चेन्द्र इति' । तद्धितार्थ इति समासः, 'सास्य देवते' त्यणो 'द्विगोर्लुगनपत्य'-

इति लुक्, इन्द्रवरुणेत्यादिना विहितस्य ङीषो ऽनेन लुक्, सन्नियोगविशिष्टानामन्यतराभावइत्यानुको निवृत्तिः। 'पञ्चशष्कुल इति'। 'तेन क्रीत'-मित्यार्हीयस्य ठको ऽध्यर्द्धपूर्वेति लुक्। 'आमलकमिति'। 'नित्यं वृद्धशरादिभ्य' इति मयटः 'फले लुक्' बदरीकुवलीशब्दाभ्याम् 'अनुदात्तादेश्चे' त्यञ्, शष्कुल्यादयो गौरादिङीषन्ताः। 'अवन्तीत्यादि'। अवन्तिकुन्तिशब्दाभ्यामपत्ये 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' कुरोः 'कुर्वादिभ्यो ण्यः' स्त्रियामवन्तीति लुक्, कुरुशब्दाद् 'ऊङुत' इत्यूङ्। इतराभ्या 'मितो मनुष्यजाते' रिति ङीष् अत्रापत्यलक्षणा जातिः स्त्रीप्रत्ययान्तेन प्राधान्येनाभिधीयते॥

"इद्गोण्याः"॥ 'पञ्चगोणिरिति'। गोणीशब्दः परिमाणवचनः आवपनवचनश्च तत्राद्या 'त्प्राग्वतेष्ठञ्' द्वितीयादार्हीयष्ठक् तयोः पूर्ववल्लुक्। 'इदिति योगविभाग इति'। इहेद्ग्रहणमनर्थकं गोण्या इत्येवास्तु ह्रस्व इत्येव लुकस्तु वचनसामर्थ्यादननुवृत्तिः, तदेतदिद्ग्रहणमेव लिङ्गं योगविभागस्य, यदि योगविभागः क्रियते सर्वत्रेत्वं प्राप्नोति तत्राह। 'स चेति'। यदि सर्वत्र स्याद् गोणीग्रहणमनर्थकं स्यादिति भावः। ननु तद्धितलुकि लुगप्यक्त इत्व चेति तयोर्विकल्पप्रसङ्गे नित्यमित्वमेव यथा स्यादित्येवमर्थं गोणीग्रहणं स्यात् तत्कथं ततो विशिष्टविषयत्वं योगविभागस्य। उच्यते, एक एव तावद्योगः सूत्रकारेण पठितस्तत्सामर्थ्याद् विभागसंस्कारोऽप्यनुवर्त्तते, अविभक्तश्च योगो विशिष्टविषयः इद्ग्रहणसामर्थ्यात्क्रियमाणो विभागो विशिष्टविषय एव कल्प्यते। अत एवोच्यते योगविभागादिष्टसिद्धिरिति स पुनर्विशिष्टो विषयो व्याख्यानादवसेयः, तपरकरणन्तत्कालार्थं दीर्घस्य दीर्घो मा भूद् वचनं तु लुग्घ्रस्वबाधनार्थं स्याद्, असति च तकारे प्राप्तप्रतिषिद्ध ईकार एव प्रतिप्रसूतः स्याद् न त्वपूर्व इकारो विहितः स्याद् इति भाव्यमानत्वमेव न स्यात्॥

"लुपि युक्तवद्व्यक्तिवचने"॥ अभिधेयवल्लिङ्गवचनयोः प्राप्तयोरयमारम्भः। अभावरूपस्य लुपो लिङ्गसङ्ख्यातिदेशासम्भवादाह 'लुब्रिति'। 'लुप्संज्ञेत्यादि'। क्वचित्तु सप्तम्यन्तो लुप्शब्द उपादीयते तत्रापि प्रकृत्यर्थ-

एवाभिधातुमिष्टः सप्तम्युपादानन्तु सूत्रे पठितत्वाद्, यथा मताविति मत्वर्थ उच्यतइति। 'युक्तवदिति' 'निष्ठाप्रत्ययेनेत्यादि'। अत्र हेतुमाह। 'स हीति'। युनक्ति, सम्बध्नाति, यद्यपि प्रत्ययार्थोऽपि प्रकृत्यर्थमात्मना युनक्ति तथापि न तस्येह ग्रहणमानर्थक्याद् नहि तस्यैव लिङ्गसङ्ख्ये तस्यैव विधातव्ये। 'अथ वेत्यादि'। पूर्वं युजिर्योगइत्यस्य क्तवत्वन्तस्य षष्ठीसमासो दर्शित इदानीं तु तस्यैव धातोः क्तान्तस्य वतिनिर्देशो ऽसमासश्चेति प्रदर्श्यते। 'युक्तः प्रकृत्यर्थ इति'। अत्र हेतुः 'प्रत्ययार्थेन सम्बद्ध इति'। अस्मिन्नपि पक्षे पूर्ववदेव प्रत्ययार्थस्याग्रहणं सप्तम्यर्थे वतिरिति, 'लुपीति'। प्रतियोगिनि सप्तमीनिर्देशात् सप्तम्यर्थे वर्त्तमानादिवार्थे वतिरित्यर्थः। व्यक्तिशब्द आविर्भावादिके ऽप्यर्थे वर्त्तते वचनशब्दो ऽपि भीमसेनो भीम इतिवद् एकवचनादिशब्दानां एकदेशप्रयोगो ऽपि सम्भाव्येत तस्य च ग्रहणे पञ्चालानां निवास इति वाक्यावस्थायां षष्ठीदर्शनात्तस्या एवातिदेशः स्यात्, कुरुपञ्चाला इति च द्वन्द्वे वाक्यावस्थायामतिदिष्टस्य वचनस्य लुकि समुदायाद् बहुवचनं न स्यात् ततस्तत्सम्प्रत्ययो माभूदित्याह। 'व्यक्तिवचने इति चेत्यादि'। पूर्वाचार्यनिर्देशाश्रयणे कारणमाह। 'तदीयमेवेत्यादि'। कुत इत्यत आह। 'तथा चेत्यादि'। नहि स्वकृतमेव स्वयं प्रत्याचष्टइति युक्तम्, विषवृक्षो ऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतमिति न्यायादिति भावः। 'पञ्चालाः क्षत्रिया इति'। पञ्चालस्यापत्यानि बहूनि 'जनपदशब्दात् क्षत्रियादञ्' 'ते तद्राजाः' तद्राजस्य बहुषु। 'तेषां निवासो जनपदइति'। अस्य वक्ष्यमाणेन पञ्चाला इत्यनेन सम्बन्धः 'तस्य निवास' इत्यणो 'जनपदे लुप्'। 'कुरव इत्यादि'। कुरवः क्षत्रिया इत्यादिकं तु पूर्वानुसारेण गम्यमानत्वान्नोक्तं कुरुशब्दादपत्ये 'कुरुनादिभ्यो ण्यः' मगधादिभ्यो ऽणमगधेभ्यण् शेषं पूर्ववत्। 'लुपीति किमिति'। तद्धितो ऽनुवृत्तः साहचर्यादयमुस्यापविष्यतीति प्रश्न। 'लुकि माभूदिति'। अन्यथा तद्धितलुकीत्यनुवृत्तेस्तत्रैव स्यादिति भावः। 'लवणः सूप इति'। 'संसृष्टे' 'लवणाल्लुक्'। 'व्यक्तिवचने इति किमिति'। युक्तवदिति

कान्ताद्वृतिरेवाश्रयिष्यते षष्ठीनिर्द्देशो वा करिष्यतइति मन्यते । 'शिरीषाणामदूरभवइत्यादि' । अरीहणादिषु वराहादिषु कुमुदादिषु शिरीषशब्दस्य पाठाद् वुञ्छणादिसूत्रेण वुञादयो ऽस्माद्भवन्ति तेषां च विशेषविहितत्वाल्लुबा न भवितव्यं, सत्यम् । औत्सर्गिको ऽपि तत्र दृष्यतइति वक्ष्यति तस्य वरणादिदर्शनाल्लुप्, असति व्यक्तिवचनग्रहणे शिरीषेषु यद्वनस्पतित्वं तस्यापि ग्रामे ऽतिदेशः स्यात् ततश्च णत्वं प्राप्नोति, णत्वविधौ विफली वनस्पतिरिति नाश्रीयते विशेषः । अत एव वृत्तवृत्तेर्णत्वं भवत्येव । 'शिरीषवणमिति' । ननु च ग्रामे ऽपि वर्त्तमानो गुणभूतं वनस्पतित्वमाहेति णत्वप्रसङ्गः, नं चात्र किञ्चित्प्रधानाश्रयं कार्यमस्ति येन गुणः स्वकार्यं नारभेत, न च व्यक्तिवचनग्रहणस्य वैयर्थ्यं,मसति हि तस्मिन्प्रकृत्यर्थगतस्य व्यतिरेकस्याप्यतिदेशात् षष्ठी प्रसज्येत, सति तु तस्मिन् सङ्ख्यामात्रातिदेशे व्यतिरेकसहितायाः सङ्ख्याया अनतिदेशाद् नायं दोषः, एवं तर्हि णत्वविधौ प्रधानवनस्पतिग्रहणाद् अत्र तदभावः । 'हरीतक्यः फलानीति'। हरीतकीशब्दात् गौरादिङीषन्ताद् अनुदात्तादेश्चेत्यञो 'हरीतक्यादिभ्यश्चेति' लुप्, अत्र व्यक्तिरेव युक्तवद्भवति वचनं त्वभिधेयवदेव । 'खलतिकं वनानीति' । खलतिकशब्दो वरणादिः समासे उत्तरपदस्य बहुवचनस्य लुपो नियमार्थमेतत् लुबर्थस्य बहुत्वातिदेशः समासे यदि भवति उत्तरपदस्यैवेति मधुरापञ्चालाः, इह न भवति पञ्चालमधुरे इति बहुवचनस्येति वचनाद् । द्वित्वातिदेशः पूर्वपदस्यापि भवति गोदौ च ग्रामः मधुरा च गोदमधुरा इति ॥

"विशेषणानां चाजातेः" ॥ पूर्वं प्रकृत्यर्थगतयोर्ल्लिङ्गसङ्ख्ययोर्लुबर्थे ऽतिदेशः कृतो न तु लुबन्ते शब्दइति तत्र वर्त्तमानानां[1] विशेषणानां सिद्ध एव युक्तवद्भावो वचनं तु जातिप्रतिषेधार्थम् । अथ व्यधिकरणानां विध्यर्थं कस्मान्न भवति ब्रह्मदत्तस्य पञ्चाला इति, तत्पुरुषः समानाधिकरण इत्यतः समानाधिकरणानुवृत्तेः । 'गोदाविति' । गोदौ ह्रदौ वरणादिः, ग्रा-

1 शब्दानामिति पा० २ ।

मजनपदशब्दा जातिवाचिनो ताभ्यां लुबर्थो जातिरूपेणोच्यते. । 'जात्यर्थस्य चेत्यादि' । जातिरूपस्य चार्थस्य न जातिवाचिनः शब्दस्येत्यर्थः । तेन किं सिद्धं भवतीत्याह । 'तेनेति' । द्वारग्रहणेनैतद्दर्शयति जातो प्रक्रान्तायां यद्विशेषणमुपनिपतितं तज्जातिमेव साक्षाद्विशिनष्टि तद्द्वारेण तु लुबर्थो विशिष्टः प्रतीयते तत्र विशेषणविशेष्यभावं प्रति कामचार इति रमणीयादीनां जात्युपनिपाते युक्तवद्भावो न भवति लुबर्थोपनिपाते तु भवति, यद्येवं नार्थो ऽनेन लुपो ऽन्यत्राप्ययं प्रकारो दृष्टो यथा बदरी सूक्ष्मकण्टका मधुराऽवृक्ष इति । मधुरादीनां बदर्युपनिपाते तल्लिङ्गसङ्ख्यायोगो वृक्षोपनिपाते वृक्षलिङ्गसङ्ख्यायोगो वृक्षस्य च नियतलिङ्गता, एवं तर्हि ,यत्तत्रतत्रोच्यते गुणवचनानां हि शब्दानां नाश्रयतो लिङ्गवचनानि भवन्तीति तदनेन क्रियते, 'विशेषणानां' गुणवचनानामित्यर्थः । 'युक्तवद्व्यक्तिवचने' । आश्रयवल्लिङ्गसंख्ये इत्यर्थः । यदा तु जातिविशेषणं तदा नेति । पदसंस्कारपक्षे च वाचनिकमेतत् पदे हि पदान्तरनिरपेक्षे संस्क्रियमाणे लिङ्गसर्वनामनपुंसकं • वस्त्वन्तरानपेक्षमेकत्वं च प्राप्तमिति शुक्लं पटा इति प्राप्ते भाविनो बहिरङ्गस्याश्रयस्य लिङ्गसंख्ये विधीयेते वाक्यसंस्कारे त्वयमनुवाद एवाश्रयविशेषनिष्ठत्वेन विशेषणानामपि तल्लिङ्गसंख्ययोरसिद्धत्वात् । 'मनुष्यलुपीति' । मनुष्यलक्षणे लुबर्थे विशेषणानां प्रतिषेधो लुबन्तस्य तु भवत्येव चञ्चाभिरूप इति, तृणपुरुषश्चञ्चा तत्सदृशो मनुष्यश्चञ्चा 'संज्ञाया' मिति कन् 'लुम्मनुष्ये' इति लुप्, चर्मविकारविशेषो वध्रिका ॥

"तदशिष्यं संज्ञाप्रमाणत्वात्" ॥ 'संज्ञाप्रमाणत्वादिति,' प्रमाणानां हि प्रमाणत्वं प्रतिपादकत्वं स्वार्थप्रत्यायनलक्षणमेतच्च सर्वेषामेव शब्दानामस्ति न संज्ञाशब्दानामेव, उच्यते चेदं तत्र विशेषो विज्ञायत इत्याह । 'संज्ञाशब्दा हीत्यादि' । ये संज्ञाशब्दास्ते नानालिङ्गसंख्या अपि स्वाभिधेयगतलिङ्गसंख्यापेक्षया भिन्नलिङ्गसंख्या अपि प्रमाणं स्वार्थस्य प्रतिपादका इत्यर्थः । भवतु संज्ञाशब्दानामेवंविधं प्रमाणत्वं किमायातं यैागिकानां पञ्चालादिशब्दानामित्यत आह । 'पञ्चाला वरणा इत्यादि' ।

तदनेन पक्षधर्मत्वं हेतोरुक्तं पूर्वं तु दृष्टान्तगतो हेतुर्व्याख्यातः । दृष्टान्तमाह । 'यथेति' । युक्तवद्भावमारभमाणो ऽपि नात्र कश्चिद्यत्नं करोति तदवश्यमयं शब्दस्वभाव एवाश्रयणीयः कश्चिद्धि शब्दः स्वभावात् समुदायसंख्यामभिधत्ते कश्चिदवयवसंख्यां यथा वनं वृक्षा इति, एवं लिङ्गेपि द्रष्टव्यम् ॥

"लुब्योगाप्रख्यानात्" ॥ 'किं कारणमिति' । निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति प्रथमा द्वितीया वा, तथा च योगाप्रख्यानादित्युत्तरोपपत्तिः योगो जनपदादेः क्षत्रियादिभिः सम्बन्धस्तस्याप्रख्यानादनुपलब्धेरित्यर्थः, तदाह । 'नहीति' । एतदेव विवृणोति । 'नैतदिति' । 'संज्ञा एता इति' । यद्यपि संज्ञाशब्दा अपि पङ्कजादयो ऽपेक्षितप्रवृत्तिनिमित्ताः सन्ति तथापीह प्रकरणादनपेक्षितप्रवृत्तिनिमित्ता अपीति बोद्धव्यम् । अत एवाह । 'तस्मादत्रेत्यादि' । ननु योगाप्रख्यानेऽपि तद्धित उत्पद्यते तद्यथा 'कम्बलाच्च संज्ञायां' कम्बल्यमूर्णापलशतमिति. सत्यं यत्र रूपे विशेषोस्ति, ननु च संज्ञाप्रमाणत्वादिति पञ्चालादिशब्दानामयौगिकत्वमुपपादितमित्यर्थाल्लुबपि प्रत्याख्यात एव किमनेन क्रियते । उच्यते । संज्ञाप्रमाणत्वादित्यनेन दृष्टान्तगतो हेतुः शब्देनोक्तस्तस्यैव त्वर्थात् पञ्चालादिगतत्वेन प्रतीयमानस्यासिद्धिमाशङ्क्य योगाप्रख्यानादिति यौगिकत्वमपाकुर्वन् हेतुमेव समर्थयते ॥

"योगप्रमाणे च तदभावे दर्शनं स्यात्" ॥ 'पञ्चालादय इत्यादि' । पूर्वंयोगस्याप्रतिभास उक्तो यस्तु तमपजानीते तं प्रत्यनेनानिष्टमापद्यतइति दर्शयति । 'योगप्रमाणे हीति'। हिशब्दो हेत्वर्थे प्रयुञ्जानः सूत्रे चशब्दो हेतौ प्रयुक्त इति दर्शयति, एतदेव व्याचष्टे । 'यदीति' । 'अदर्शनमयोगः स्यादिति'। दर्शनं ज्ञानं तच्च प्रयोगस्योच्चारणस्य फलम् अतः फलाभावेन हेत्वभावो विवक्षित इत्याचष्टे, योगनिमित्तको हि योगाभावे स प्रदर्शनं युज्यते यथा दण्डीशब्द इति भावः । ननु भूतपूर्वमपि निमित्तं भवति ततश्च सम्प्रति वरणादियोगाभावेऽपि भूतपूर्वः स एव निमित्तं भविष्यति, नैतदेवम्, भूतपूर्वनिमित्तो हि व्यपदेशो गौणः स्यात्, न चायं

गौणः पदान्तरस्य प्रयोगमन्तरेणाऽपि प्रतीयमानत्वात्। किञ्च यौगिकत्वे पुरुषान्तरसम्बन्धनिबन्धनो ऽपि व्यपदेशः कस्माच्च प्रवर्तते विपर्ययो वा कस्माच्च भवति देशसम्बन्धाद्राजसु पञ्चालशब्द इत्यतो ऽक्षादिशब्दवद-नेकार्थ एवायं पञ्चालादिशब्दः॥

"प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्"॥ 'अर्थवचनमि-ति'। कर्मणि षष्ठ्याः समासः। ननु च प्रधानप्रत्यययोः कर्त्रोर्निर्देशादुभय-प्राप्ताविन्यनेनात्र षष्ठी ततश्च 'कर्म्मणि चे'ति निषेधः प्राप्नोति। नैष दोषः। प्रधानप्रत्यययोरत्र करणत्वं विवक्षितं कस्तर्हि कर्ता पुरुष-स्समुदायो वा प्रधानोपसर्जनयोः प्रकृतिप्रत्यययोश्च, एतदुक्तं भवति प्रधानप्रत्ययाभ्यां करणाभ्यां पुरुषेण समुदायेन वा यदर्थस्य वचनशब्देन सह 'कर्तृकरणे कृता बहुल' 'कृद्ग्रहणे गतिकारकपूर्वस्या ऽपि ग्रहण'-मिति समासः। ननु च प्रत्ययो ऽपि प्रकृत्यपेक्षया प्रधानं कस्माद्भेदेनो-पादीयते, उच्यते। यदा प्रकृतिः प्रत्ययार्थं प्रति विशेषणतया स्वार्थमभि-धत्त इति सिद्धं भवति तदा प्रत्ययस्य प्राधान्यं तदेवेदानीं परिभाष्यत-इति पूर्वाचार्यैस्तावत्प्रत्ययो भेदेन निर्दिष्टः, प्रधानोपसर्जने प्रकृतिप्रत्य-याविति ततश्च तल्लक्षणनिराकरणे प्रत्ययो ऽपि भेदेनोपादेयः। 'अश-क्यत्वादिति'। अशक्यत्वमनन्तप्रकारत्वात् बहुव्रीहावन्यपदार्थ उच्यते, प्लक्षन्यग्रोधमिति समाहारः क्व चित्प्रधानयोरेव सहाभिधानं प्लक्षन्यग्रोधा-विति स्वार्थिकेषु च प्रकृतिप्रत्ययौ प्रकृत्यर्थं सह ब्रूतः। 'शुक्लतर इति'। तथा आख्यातेषु क्रियाप्रधानमाख्यातमिति तथा 'कर्तरि कृत्' कर्तरि तृतीया तत्र कृत्सु शक्तिमद् द्रव्यं प्रधानमुच्यते इति क्रियाभेदे शक्त्यन्तराति-भावः। पाचकं पश्यति विभक्तिषु शक्तिप्राधान्यमित्याद्यनन्तप्रकारमर्थाभि-धानमशक्यं परिभाषितुमिति। 'लोकत एवार्थावगतेः'। कथमेतदि-त्याह। 'यैरपीत्यादि'॥

'कालोपसर्जने च तुल्यम्'॥ 'अर्थस्यान्यप्रमाणत्वादिति'। कथं पुनरयमत्र हेतुर्लभ्यत इत्याह। 'तुल्यशब्दो हेत्वनुकर्षणार्थ इति'। कथ-मेतदित्याह। 'अशिष्यविशेषणं चैतदिति'। चशब्दो हेतौ। 'अन्याय्या

दिति'। रात्रेश्चतुर्द्धा विभक्तायाः पश्चिमे यामे न्याय्यं स्वापादुत्थानं शास्त्रीयत्वात् प्रथमे यामे गते च संवेशनं शयनम् अत्र लक्षणे रात्रेर्मध्ययामद्वयं नाद्यतनं द्वितीये तु तदपि। 'उभयतोर्द्धरात्रमिति'। बहुव्रीहिः, कृत्स्नो दिवस आगामिन्या रात्रेः पूर्वार्द्धेनातीतायाः पश्चिमार्द्धेन च युक्त इत्यर्थः। 'यद्येवमिति'। यद्यर्थस्यान्यप्रमाणत्वादित्ययमेवात्रापि हेतुरित्यर्थः। 'पूर्वसूत्रएवेति'। एवं हि तुल्यमिति न वक्तव्यं भवतीति भावः॥

"जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्" ॥ जात्याख्यायामिति विषयसप्तमी एवमेकस्मिन्नित्यपि व्यधिकरणे चैते सप्तम्यौ। जातिर्नामेत्यादिना सूत्रारम्भस्य कारणमाह। 'एकोर्थे इति'। यद्यपि वैशेषिकपरिभाषिता संख्या जातेर्न विद्यते तस्या द्रव्यधर्म्मत्वात् तथापि भेदगणनरूपा संख्या विद्यतएव। यथोक्तम्॥

दिष्टिप्रस्थसुवर्णादि मूर्त्तभेदाय कल्पते॥
क्रिया भेदाय कालस्तु संख्या सर्वस्य भेदिका॥

इति। वैशेषिकाश्च व्यवहरन्ति पञ्च कर्म्माणि चतुर्विंशतिर्गुणा इति। जातेराख्येति'। आख्यानमाख्या प्रत्ययनम् एकस्मिन्नर्थेइति जात्याख्ये बहुवचनशब्दोऽयमन्वर्थो न पारिभाषिकः, उक्तिर्वचनं बहूनां वचनं बहुवचन ततश्चायमर्थः एकस्मिन्नर्थे बहूनामुक्तिर्भवतीति सामर्थ्याद्वत्यर्थो गम्यते बहूनामिवोक्तिर्यदि च जात्यर्थो बहुवद्भवतीति बहूनामिवोक्तिर्भवतीति सामर्थ्यात् स एवार्थः संपद्यतइत्याह। 'जात्यर्थो बहुवद्भवतीति'। तेन किं सिद्धं भवतीत्याह। 'तेनेति'। यदि तु जातिशब्दाद्बहुवचनं जात्यादि विधीयेत ततो विशेषणेभ्यः सपन्नादिभ्यो न स्यात् तेषामजातिशब्दत्वादिति भावः। 'देवदत्त इति'। यद्यपि जातिपदार्थवादिपक्षे ह्यत्राप्यवस्थाभेदानुगता जातिः शब्दवाच्या तथापीह सामर्थ्याद्विवपिण्डसमवेता जातिराश्रीयतइत्यनतिदेशः। 'काश्यप इति'। कश्यपशब्दाद्विदाद्यञ् तत इवार्थे संज्ञायां कन् 'लुम्मष्ये'। 'भवत्ययं जातिशब्द इति'। गुणभूताया गोत्रजातेरभिधानात्। 'न त्वनेन जातिराख्यायतइति'। प्राधान्येनेति भावः। असत्याख्याग्रहणे जातौ वर्त्तमानादित्यर्थः स्यात् तत्र

यथा व्यक्तिपर्यन्ताभिधाने गवादिभ्योऽपि भवति एवमत्रापि स्यात् । सति तु तस्मिँस्तत्सामर्थ्याज्जातिप्राधान्ये भवति । 'व्रीहियवाविति' । ननु च यथा काशिकोसलीया इति जनपदलक्षणो वुञ् न भवति तथा बहुवद्भावोऽत्र न भविष्यति । विषम उपन्यासः । जनपदवाचिनो वुञ् विधीयते न च जनपदरूपः समुदायोऽवयवाभ्यामारभ्यते ऽतो यत्स्वतन्त्रं प्रातिपदिकं न तज्जनपदवाचि यज्जनपदवाचि न तत्स्वतन्त्रं प्रातिपदिकमिति कुतो वुञः प्रसङ्गः । अयं तु जातिप्रत्यायने विधिर्न जातिशब्दादिति स्यादेव प्रसङ्गः । 'संख्याप्रयोग इति' । एकस्यैव बहुत्वातिदेशे क्रियमाणएकशब्दप्रयोगे ऽपि स्यादिति भावः । आरभ्यमाणेऽप्येतस्मिन् गोत्वं व्रीहित्वमित्यादि निष्कृष्य जात्यभिधानेनैवायं विधिरिष्यते व्यक्तिपर्यन्ते त्वभिधने जातिव्यक्त्योस्तादात्म्यं सम्बन्ध इति जातिरूपेण व्यक्तीनामभिधाने एकवचनं सिद्धं व्यक्त्यात्मना तु जातेरभिधाने बहुवचनमिति नार्थो ऽनेन ॥

( शेषमग्रे )

( शेषमग्रे )

---

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

श्रीगणेशाय नमः ।

(*Continued from page* 645. Vol. XI.)

कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्तिव्यक्तस्तनोन्नतिरभूत्नयनावनौ सा ॥

अत्र चन्द्रादय उद्दीपनालम्बनविभावाः शृङ्गारयोग्या अनुभावाप्रतीत्या आस्वादापर्य्यवसायिनः स्थिताः· यद्यप्यंशुकनिवेशोऽनुभावस्त्व-

योग्य,स्तथापि तस्य स्तनशक्तियोजकत्वेनोपात्तस्य नानुभावत्वपर्य्यवसानमिति प्राञ्चः वस्तुनस्तु, पुंसि न कश्चिदनुभाव उपात्तः नच विभावैरप्याक्षेपार्ह इति कष्टेन कल्पनीयः। विभावस्य यथा—

परिहरति रतिं मतिं लुनीते, स्खलतितरां, परिवर्त्तते च भूयः,।
इति बत[क] विषमा दशा ऽस्य देहं परिभवति प्रसभं, किमत्र कुर्मः॥

अत्र कामिनीरूपशृङ्गारविभावोऽभिमतो, न पुनरुपात्तः न च रतिपरिहारादिभिरनुभावैराक्षेप्तुमपि शक्यते, तेषां करुणादावपि सम्भवादिति कष्टेन कल्पनीयः॥ (२)

प्रतिकूलविभावादिग्रहः, प्रकृतरसादेः प्रतिकूलो यो रसादिस्तद्विभावानुभावव्यभिचारिणां ग्रहः तत्र तादृशविभावव्यभिचारिणोर्ग्रहो यथा—

प्रसादे वर्तस्व, प्रकटय मुदं, सन्त्यज रुषं,
प्रिये! शुष्यन्त्यङ्गान्य ऽमृतमिव ते सिञ्चतु वचः,।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं,
न मुग्धे! प्रत्येतुं प्रभवति गतः कालहरिणः॥

अत्र प्रकृते शृङ्गारे प्रतिकूलस्य शान्तस्य प्रकाश्यमान[ख]कालाऽनित्यतारूपो विभावः एतत्प्रकाशितो निर्वेदरूपो व्यभिचारी च स्फुटमेव गृह्यते। तादृशानुभावग्रहो यथा—

णिहुअरमणम्मि लोअणपहम्मि पड़िए गुरुअणमज्झम्मि।
सअलपरिहारहिअआ वणगमणं एव्व महइ वहू॥

अत्र व्याजादिकं विना वनगमनं सकलपरिहारश्च शान्तानुभावः नच व्याजः प्रतिप्रतिपादित इति शृङ्गारस्य प्रकृतस्य विच्छित्तिः इन्धनाद्यानयनव्याजेन सम्भोगार्थं वनगमनं यद्युच्यते, तदा न शान्तानुभावग्रहः॥ (३)

पुनःपुनर्दीप्तिरङ्गरसादिविषया दोषः अङ्गिनस्तु सा महाभारतादौ शान्तादेरिव न वैरस्यमावहति उदा०—कुमारसम्भवे "अथ मोह-

(क) वर्तेति पु०।
(ख) प्रकाश्यमानानित्यतेत्यादिः पुस्तकान्तरे भवति।

परायणे''त्यादिना दीप्तिमानीतोपि करुणो "ऽथ सा पुनरेवे''त्यादिना पुनःपुनर्दीप्तिं नीतः· उपभुक्तो हि पुनरुपभुज्यमानः परिम्लानस्तवकवद्वैरस्याय कल्पते ॥ (४)

अकाण्डे अनवसरे प्रथनम्· यथा वेणीसंहारे द्वितीयेऽङ्के[क] ऽनेकवीरसङ्क्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम् ॥ (५)

अकाण्डच्छेदो यथा वीरचरिते राघवभार्गवयोरविच्छिन्नप्रसरतया प्रवृत्ते वीररसे कङ्कणमोचनाय यामी''ति राघवस्योक्तौ· अकाण्डे हि तथावचनं व्याजेन निर्गमं प्रतिपादयद्वीरत्वाभावे पर्य्यवस्यति ॥ (६)

अङ्गस्यातिविस्तृतिः,अप्रधानस्यातिविस्तृति,रप्रधानस्यातिविस्तरेण वर्णनम्· यथा हयग्रीववधे हयग्रीवस्य· यद्यपि प्रतिनायकवर्णनं नायकस्योत्कर्षे पर्य्यवस्यति, तथाप्यतिशयितं प्रधानतिरोधायकतया दोषपदवीमवतरति ॥ (७)

अङ्गिनः प्रधानस्याननुसन्धानं.यथा रत्नावल्यां चतुर्थे ऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः ॥ (८)

प्रकृतीनां विपर्य्ययः, यत्प्रकृतौ यद्वर्णनमनुचितं तत्र तद्वर्णनम्· प्रकृतयस्तावद्दिव्या, अदिव्या, दिव्यादिव्याश्च· अत्र दिव्यत्वम ऽमर्त्यैकरूपत्व,मतो न पातालीयाद्यसंग्रहः· उदाहरणं श्रीमन्महेश्वरादिः· अदिव्यत्वं मर्त्यैकरूपता, यथा माधवादेः·दिव्यादिव्यत्वमुभयरूपता· यथा श्रीकृष्णादेः· त्रिविधा अप्येते चतुर्धा भवन्ति धीरोदात्तधीरोद्धतधीरललितधीरशान्तभेदात्· क्रमेण वीररौद्रशृङ्गारशान्तप्रधानत्वान्येषां लक्षणानि·[ख]श्रीरामभार्गवकृष्णजीमूतवाहना उदाहरणानि· एते च प्रत्येकमुत्तमाधममध्यमभेदाः, अनुकूलादिभेदास्त्वस्थिराः, अनुकूलादिर्हि कदाचिद्दक्षिणादिः सम्पद्यत इति·[ग]एवं भिन्नासु प्रकृतिषु, रतिहासशोकाद्भुतान्य ऽदिव्योत्तमप्र·

---

(क) द्वितीयाङ्के- इति पु० ।

(ख) "क्रमेण वीररौद्रशृङ्गारशान्तप्रधानत्वमेषां लक्षणानी''ति सर्वेष्वेव पुस्तकेषु प्राप्यते, ऽथापि न्याय्यत्वात् ०प्रधानत्वान्येषामिति स्थापितम् ।

(ग) "प्रकृतिभेदे नं गणनीयाः"–इत्येतावन्मात्रमत्राधिकमेकत्र ।

कृतिवद्दिव्येष्वपि वर्णनीयानि, किन्तु रतिः सम्भोगशृङ्गाररूपा उत्तमदिव्यविषया न वर्णनीया। तद्वर्णनं पित्रोः सम्भोगवर्णनमिवा ऽत्यन्तमनुचितम्।

क्रोधं विभो! (क)संहर संहरेति यावद्गिरः खे मरुतां चरन्ति,।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार॥

इत्याद्युक्तवद् भ्रुकुट्यादिवर्जितः सद्यःफलदक्रोधो नाकपातालगमनसमुद्रोल्लङ्घनादावुत्साहश्च(ख)द्दिव्येष्वेव वर्णनीयः। अदिव्येषु तु यावदेव महत्कर्म लोकप्रसिद्धमुचितं वा, तावदेवेह निबन्धनीयम्। अधिकं हि निबध्यमानमसत्यप्रतिभासनया(ग)रामादिवद्वर्तितव्यमित्याद्युपदेशे न पर्य्यवस्येत्। दिव्यादिव्येषु पुनरुभयोरप्युचितं वर्णनीयम्।—एवमुक्तस्यौचित्यस्य दिव्यादीनामिवाधमादीनामप्यन्यथावर्णनं प्रकृतिविपर्य्ययः। आमन्त्रणौचित्यलङ्घनेऽप्येवम्। तद्यथा, 'तत्र भवन्, भगव'न्नित्युत्तमेनैव प्रयोक्तव्यं, ना ऽधमेन। उत्तमेनापि मुनिप्रभृतावेव, न तु राजादौ। 'भट्टारके'ति न राजादावुत्तमेन, किंतु देवादावेव। अन्यथा, प्रकृतिविपर्य्ययापत्तिः। एवं यत्र देशे काले वयसि जातौ वा यद्वेषव्यवहारादि समुचितं, तदेव तत्रोपनिबन्धव्यम्,(घ) अन्यथा निबन्धने तु प्रकृतेर्विपर्य्ययः। यथा स्वर्गाङ्गनासु मानुषीवेशादिः, रसातलादौ मेघादिरिति॥ (९)

अनङ्गस्याभिधानम्, रसानुपकारकस्य वर्णनम्। यथा कर्पूरमञ्जर्य्यां नायिकया स्वात्मना च यद्वसन्तवर्णनं तदनादृत्य वन्दि(ङ)वर्णनस्य राज्ञा प्रशंसनम्॥ (१०)

"ईदृशा" इत्यनेनैतदुक्तं, यदेवंविधा अन्येऽप्यनौचित्यहेतवो भवेयुः। यथा नायिकापादप्रहारादिना नायककोपादिवर्णनमित्यादि। अनौचित्यं तु रसविच्छेदहेतुः। यदुक्तं ध्वनिकृता—

(क) प्रभो!—इति क्वचित्।
(ख) ०द्युत्साहश्चेति पु०।
(ग) ०मसत्यप्रतिभासनयेति पु०।
(घ) निबद्धव्यमिति प्रायः प्राप्तत्वेऽपि योग्यत्वादिदं न्यस्तम्।
(ङ) बन्दीति पु०।

"अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥

इति (११) ॥ ६० ॥ ६१ ॥ ६२ ॥

इदानीमेषां केषांचित् क्वचिददोषत्वमपीत्याह–

**न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित् ।**

संचारिणो, नतु रसस्थायिनोरपि· क्वचिदिति, यत्र विलक्षणो नानुभावः· यथा–

औत्सुक्येन कृतत्वरा, सहभुवा व्यावर्त्तमाना ह्रिया,
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीता ऽऽभिमुख्यं पुनः,[क] ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता ऽऽश्लिष्टा शिवायाऽस्तु वः ॥

अत्रौत्सुक्यशब्दवत् सहसाऽपसरणादिरूपो ऽनुभावो नौत्सुक्यमसन्दिग्धं प्रतिपादयितुमीष्टे, भयादिसाधारणत्वात्· अत एव

दूरादुत्सुक,मागते विवलितं, सम्भाषिणि स्फारितं,
सश्लिष्यत्यरुणं, गृहीतवसने कोपाञ्चितभ्रूलतम् । [ख]
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं,[ग]
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥–

इत्यत्र व्रीडादीनि विवलितत्वादिभिरनुभावैरुपनिबध्नन्नेव रसिकशिरोमणिरमरुकविरौत्सुक्यं स्वशब्देनैवोपात्तवान्· दोषत्वाभावबीजमुक्तं प्राक्· इदन्त्ववधेयम्–त्वरादीनां भयादिसाधारण्येप्यौत्सुक्यादिना स्वकारणेन विशिष्यमाणास्ता एवासाधारण्यमासाद्यौत्सुक्यादि व्यञ्जयन्तीत्यास्वादोदयो,नतु शब्दादेव तत्प्रतिपत्त्या, व्यभिचार्य्यादीनां वाच्यत्वासहत्वव्युत्पादनात्· अत एवात्र न वैयर्थ्यमपि, विशेषणत्वेनोपयोगात्· "दूरादुत्सुक"मित्यादौ तु शब्दमहिम्ना विशिष्टस्यैवानुभावस्य

(क) तथेति, तत इति च क्वचित्क्वचित् ।
(ख) किञ्चाऽञ्चितेति पाठस्त्वत्तरमिश्रीभागभवन्नपि न सुश्लिष्टार्थः ।
(ग) बाष्पाम्बुपूरेक्षणमिति पा· ।

कल्पनमिति ततोऽभिव्यक्तिरिति· एवं च व्यवस्थिते, शब्देन तदुपस्थितिं विना न तदनुभावस्यासाधारण्यं, नच तेन विनाऽभिव्यक्ति,र्नवाभिव्यक्तिं विना ऽऽस्वादसम्भवो, नच तेन विना भावमध्यप्रवेशो, नच तमन्तरेण तथाकीर्त्तनं युक्तमिति भावस्योत्कीर्त्तनमप्येतादृशस्य व्यभिचारिणः शब्दवाच्यताया दोषत्वाभावं साधयतीति युक्तमुत्पश्यामः ॥ ऽ ॥

संचार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥ ६३ ॥

प्रकृतविरुद्धं व्यभिचार्यादि यदि बाध्यत्वेनोच्यते, तदा दूरे दोषत्वम्, प्रत्युत प्रकृतरसपरिपोषकतया गुणत्वम्· तत्र व्यभिचारिणो यथा–"क्वाऽकार्य्यं शशलक्ष्मणः क्व च कुल''मित्यादौ· अत्र चतुर्षु पादेषु पूर्वभागप्रतिपाद्यानां शमाङ्गानां वितर्कमतिशङ्काधृतीनामुत्तरभागप्रतिपाद्याभिलाषाङ्गभूताभिरौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारपुरस्सरं चिन्तायामेव पर्य्यवसानमिति भावशबलतापरिपोषकत्वाद्गुणत्वम् ।

पाण्डु क्षामं वदनं, हृदयं सरसं, तवाऽलसं च वपुः, ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः ॥

इत्यत्र पाण्डुत्वादीनां रोगानुभावतया विरुद्धत्वेपि विप्रलम्भशृङ्गारे समारोपादङ्गभावप्राप्त्या दोषत्वाभाव इति ध्वनिकारः· तदयुक्तं, तेषामुभयसाधारण्याद्विरोधस्यैवासिद्धेः । विभावस्य बाध्यत्वं यथा–

सत्यं मनोरमा रामाः, सत्यं रम्या विभूतयः, ।
किंतु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥

अत्र पूर्वार्द्धे शृङ्गारस्य, परार्द्धे शान्तस्य विभावः· अनयोर्विरोधेऽपि पूर्वार्द्धस्य बाध्यत्वेनैवोक्तत्वाच्च दोषत्वं, प्रत्युत शान्तपरिपोषा(क)द्गुणत्वम्· एवं ह्यत्र प्रतीयते, सर्वो रामादयः सन्त्येव जीविते तत्सौकर्य्यार्थमुपादेयाः, जीवितं चातिभङ्गुरमिति किंकृतमुपादेयत्व,मतो रम्यत्वे ऽपि निष्फला एत इति· नन्वेवं पूर्वार्द्धप्रतिपाद्यस्य बाध्यत्वेपि मत्ताङ्गनापाङ्गभङ्गेत्यनेन विरोधो न परिहृतः· न च तत्र न शृङ्गारप्रतीतिरिति वक्तुं शक्यं, तदु-

(क) परिपोषकत्वादिति पा· ।

पादानवैयर्थ्यप्रसङ्गादितिचेन्न तत्र रसप्रतीतिस्तद्व्यञ्जकानुभावाद्यप्रत्ययात्· किमर्थं तर्हि तदुपादानमिति चेत्, शान्तस्य परिपोषणार्थमेवेति ब्रूमः· स एव कथमिति चेत्, जीवितस्यातिभङ्गुरत्वप्रतीतेः· सापि कुत इति चेत्, जीवितादप्यधिकमपाङ्गभङ्गस्यास्थैर्यं सकलजनप्रसिद्धम्· अतस्तथाविधभङ्गुरस्यापाङ्गभङ्गस्योपमानत्वेनोपादानात्· तदेतदुक्तं "जीवितादप्यधिकमपाङ्गभङ्गस्यास्थिरत्वमिति प्रसिद्धभङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णाती"ति· केचित्तु प्रसिद्धभङ्गुरस्य साधर्म्येण जीवितोपमानतयोपात्तमिति तद्व्याचक्षते· ध्वनिकारस्तु–भवत्यवात्र शृङ्गारप्रतीतिः, परन्तु तया गुडजिह्विकान्यायेनोन्मुखीकृत्य विनेयाः शान्तरसे निवेश्यन्त इत्यदोषता· यद्वा, काव्यशोभानिमित्तमेव तदुपादानाद्दोषत्वाभावः· नहि विना शृङ्गारेण काव्यशोभेति समादधे· तच्चातिमनोरमम्, शृङ्गारशान्तयोर्नैरन्तर्याभावेन प्रथमसमाधेरसम्भवात्· द्वितीयसमाधिरपि तदा स्याद्यदि रसान्तरयोगेन चारुत्वं नानुभूयेत· नत्वेवम्· किञ्च, रसमात्रेण चारुत्वमित्यपि न शक्यते वक्तुं, प्रागेव तु शृङ्गारमात्रेणेति; यतश्चित्रकाव्येऽलङ्कारादेव चारुत्वप्रत्ययः· तस्मादत्र शान्तरसादनुप्रासमात्रेण वा चारुत्वसम्भवाच्चोत्तरोपि समाधिरिति ॥ ६३ ॥

अविरोधोपायान्तरमाह–

आश्रयैक्ये विरुद्धो यः, स कार्य्यो भिन्नसंश्रयः, ।
रसान्तरेणाऽन्तरितो, नैरन्तर्य्ये तु[क] यो रसः ॥ ६४ ॥

यो रस इत्यत्र विरुद्ध इत्यनुषज्यते·[ख] रसानां विरोधो द्विधा समानाधिकरणतया नैरन्तर्य्येण वेति· तत्र वीरभयानकयोरैकाधिकरण्ये विरोध इति प्रतिपक्षगतत्वेन भयानको वर्णनीयः,स्तथा सति दूरे तस्य दोषत्वम्, प्रत्युत वीरपरिपोषः· यथा मम–.

आहूतापि पदं ददाति न पुरो, न प्रार्थितापीक्षते,
साकूतं परिभाषितापि बहुशः किञ्चिच्चाऽऽभाषते, ।

(क) नैरन्तर्य्येणेति पा· ।
(ख) इत्यनुषज्जते–इति पु· ।

आश्लिष्टापि न संमुखानि रचयत्यङ्गानि मूढाशया,
कोपोद्रेकवशंवदेव तरुणी श्रेणी यदीयद्विषाम् ॥

नचात्र शृङ्गारभयानकयोरपि विरोधः· वक्ष्यमाणक्रमेण द्वयोरप्यन्याङ्गत्वाद् व्यधिकरणत्वाच्च· यद्यप्यालम्बनभेदेनैकाश्रयावपि वीरभयानकौ क्वचिदनुभूयेते, तथापि न तथा वर्ण्येते इति भिन्नाश्रयतयैव निवेशनं योः· एवमन्येषामप्यूह्यम्· यस्य तु येन रसेन नैरन्तर्य्येण विरोधः, सोऽविरोधिना रसान्तरेणान्तरितो निबन्द्धव्यः·[क] यथा नागानन्दे शान्तस्य[ख] जीमूतवाहनस्या "ऽहो गीतमहो गीत,महो वादित्र"मित्यनेनाद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः· न केवलं प्रबन्ध एव रसान्तरव्यवधिना विरोधनिवृत्तिः, किन्त्वेकस्मिन्नपि वाक्ये· यथा–

भूरेणुदिग्धानथ पारिजातमालारजोरञ्जितबाहुमध्याः, ।
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः, ॥
सशोणिते क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः, ॥
विमानपर्य्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्द्दिश्यमानान्[ग] ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन् ॥

अत्र विशिष्टस्य वीरस्य कर्त्तुः सर्ववाक्यान्वयित्वेन विमानाधिरोहणादिना मध्ये उत्साहप्रतीतेर्बीभत्सशृङ्गारयोरविरोधः· यद्यप्यत्र वीर एव प्रधान,मन्यौ च तद्व्यभिचारिणाविति न विरोध,स्तथाप्येवमप्यविरोधः सम्भवतीत्युदाहृतम् ॥ ६४ ॥

(शेषमग्रे)

(क) निबद्धव्य इति प्रायः सत्त्वे ऽपि निबन्द्धव्य इति स्यात्·तम् ।

(ख) शान्तजीमूतवाहनस्येति पु· ।

(ग) ०मानान्ललनेत्यस्य सर्वत्रसत्त्वे ऽपीत्थं न्याय्यम् ।

# सिद्धान्तमुक्तावली

## प्रकाशानन्दविरचिता ।

(*Continued from page* 664. VOL. XI.)

२१ मैवं श्रुत्यभिप्रायापरिज्ञानात् नहि तत्त्वमस्यादिश्रुत्या अनात्मानं पृथक् स्थापयित्वा शुद्धांशयोरभेदो बोध्यतइति श्रुत्यभिप्रायः किं तु प्रत्यक्चैतन्ये कूटस्थे जागराद्यवस्थात्रयं कर्तृत्वाद्यनर्थजातं च व्यभिचारि सर्वं तत्रैवानुगते साक्षिण्यध्यस्तमित्यन्वयव्यतिरेकाभ्यां तदतिरेकेण तत्स्वरूपं नास्तीति निश्चित्य शुद्धेन प्रत्यगात्मना ब्रह्मणो ऽभेदसिद्ध्यर्थं ब्रह्मण्यपि जगत्कर्तृत्वपरोक्षत्वादि आकाशादिकं च जगज्जातमननुगतमनुगते तस्मिन्सच्चिदात्मन्यध्यारोपितमसद्भ्रान्त्यैव प्रतिपन्नमित्यन्वयव्यतिरेकाभ्यामध्यारोपापवादमाश्रित्य प्रवृत्तसृष्टिवाक्यसमनन्तरप्रवृत्तेन नेतिनेतीत्यादिवाक्येन चावधारयति । ततः शुद्धयोस्तत्त्वंपदार्थयोर्लक्ष्यांशयोर्निरस्तानात्मसम्बन्धयोर्भेदेऽ-

Wherefore the opponent's view may be summed up thus:—Your view of Monism is not proved even by the certain knowledge that Self is identical with Brahman. For through perception and the other sources of evidence the existence of the not-Self as distinct from Self is assured.

21. The above view is to be rejected because the opponent has not understood the meaning of the Sruti passages. For the import of these is not that such a passage as 'that thou art' establishes the not-Self as something distinct, and then goes on to declare the identity of the two *pure* (attributeless) portions (sc. Intelligence or Brahman underlying what is meant by 'that' and 'thou'). But when an aspirant of the highest order (paramajijnāsu, sc. one who desires intuition of Brahman as the Self within) is convinced that the three states of waking, dreaming and dreamless sleep, and the complex of evils beginning with agency—all of which fail to attach (vyabhichāri) to the unchanging Self within—are erroneously surmised in that very Self (tatraiva), the pervading Witness; that, therefore, by the inductive method of

Met: the opponent has misunderstood the bearings of Sruti passages.

भेदे वा प्रमाणमपश्यन्संदिहानः संसाररोगराजानुचरगर्भवासाद्यनेकरोगसमुद्भुतदुःखव्रातानुभवासादितोद्वेगः ब्रह्मलोकप्रभवमपि सुखं विषमिव मन्यमानस्तरति शोकमात्मविदिति श्रुत्या संसारदावानलप्रसूतसन्तापशमनामृताब्धिमात्मविद्यामजानानः परमजिज्ञासुः स्वहृ- पापरोक्षदर्शिनं परमकारुणिकं गुरुमुपसर्पति

conjoint presence and absence, it is proved that the world as described above (tat) has no existence of its own (svarūpa) apart from the Self (tat): and further when, in order to prove the identity of Brahman with the pure (attributeless) Self within, he ascertains beyond doubt that *the being the cause of the world* and *the not being positively presented* and other attributes, and also the whole world beginning with ether—all of which are not pervasive as regards Brahman also—are surmised to exist in that pervasive Self which is Existent (sat, real), Intelligence,—are unreal (asat) as being surmised through error, (and this he can do) in accordance with the method of conjoint presence and absence, and by having recourse to the method of unreal predication and annulment of the same in accordance with such negative passages as 'Brahman is not this, not this' which find place immediately after passages setting forth the creation of the world. Then, finding no certain evidence for the identity or non-identity of the two entities which are implied by the words *that* and *thou*, and from which all relation with the not-Self has been removed (by the processes described above), the aspirant begins to doubt; and being pained by his experience of all those pains which spring from the many diseases of gestation onwards and which attend on transmigratory life (as servants) on a rājā, and deeming as poison even that pleasure which accrues in the world of Brahmā, and not knowing that a knowledge of Self is the nectar-sea that quenches the fire of the world-conflagration, as declared in the passage, 'He who knows Self passess beyond sorrow', he approaches his most merciful guru who has attained to intuition of the Self.

तेन च शुद्धयोस्तत्त्वं पदार्थयोरभेदे तत्त्वमस्यादिवाक्येन नित्यनिर्दोषेण बोधिते स्वयमेवाद्वैततत्त्वं साक्षात्कृत्य स्वानन्दतृप्त आत्मारामो भवति अतः श्रुत्यभिप्रायापरिज्ञानविजृम्भितमेतत् यदानात्मभेदेनाद्वैतक्षतिरिति ।

यच्च स्वरूपं भेदः प्रत्यक्षादिगोचर इति तदतितुच्छं प्रत्यक्षादेरसद्विषयत्वेन स्वरूपागोचरत्वात् स्वरूपस्य भेदत्वानुपपत्तेश्च । कुत इति चेत् शृणु किं शुद्धं सर्वधर्मविनिर्मुक्तं स्वरूपं भेदः किं वा विशिष्टम् ।

And being taught by the guru, by means of that eternal faultless sentence 'that thou art', that the two *unrelated* (śuddha) things implied by the words *that* and *thou* are really identical, the aspirant himself attains intuition of the one reality without a second, and becomes self-contained in that Bliss which is his own nature, and delights in his Self (alone).

Hence the statement that (Vedantic) Monism is overthrown by the fact that not-Self exists distinct from Self was made through misunderstanding the meaning of Śruti.

His view that the *own nature* of a thing is *difference* is self-contradictory:

And as to the opponent's statement that *svarūpa* is a *bheda* made known by perception and the other sources of evidence,—that is utter nonsense. For since perception &c. make known the unreal (asat) they cannot make known svarūpa or that which *is*: and further, because *svarūpa* cannot be proved to be *bheda*. Why not, you ask? Then listen, and say whether you mean that svarūpa, pure and simple, sc. destitute of all attributes, is bheda; or as qualified by attributes.

आद्ये व्यवहारहेतुत्वमपि तस्य नास्तीति वक्तव्यं तथाच सर्वव्यवहारानास्पदं सर्वधर्मविनिर्मुक्तमस्थूलानण्वादिशास्त्रसिद्धं सदात्मकं ब्रह्मैव नामान्तरेण प्रत्यक्षादिगोचर इत्युक्तं स्यात् नच तदप्युपपद्यते न चक्षुषा गृह्यते नैव वाचा नान्यैर्देवैस्तपसा कर्मणा वेत्यादिश्रुतिविरोधप्रसङ्गात् द्वितीये विशेषणविशेष्ययोर्भेदे विशिष्टं स्वरूपान्तरं भेद इति वाच्यं तथा च तत्राप्यन्यत्तत्राप्यन्यदिति सैव दुस्तराऽनवस्था अभेदे वा विशिष्टस्वरूपासिद्धिः ।

If the first, then you will have to declare that such svarūpa could not be the cause of any experience (vyavahāra *), and thus you would have to declare that what is made known by perception &c. is indeed Brahman under another name, sc. bheda,—(Brahman) which is not the object of any experience whatever, which is free from all attributes, which as proved by Śruti is neither great nor small, which is the Existent. But this will not hold good as being contradicted by the Śruti—'It is grasped not by the eye, nor by speech nor by the other devas (senses), not by penance or work.' On the second alternative sc. that svarūpa, qualified by attributes, is bheda, if it be maintained that subject and attribute are different, then you will have to declare (as the cause of this difference) a second qualified-svarūpabheda and for the second a third, and so you will not escape the vice of an infinite regress. If subject and attribute be regarded as identical (abhede vā) then your *qualified* svarūpa does not exist! Nor again is your *qualified* svarūpa made known by perception and the other sources of evidence; for it is attributeless, as is the svarūpa of a thing in itself, since the attribute colour does not pertain to a *coloured* object, and so with other attributes.

Mu. Up. III. 1. 8.

* व्यवहारः = ज्ञानजन्यप्रवृत्तिनिवृत्तिः action, or cessation from action, consequent on knowledge.

नवा विशिष्टं स्वरूपं प्रत्यक्षादिगोचरः तस्यापि शुद्धवस्तुस्वरूपवन्नि-र्द्धर्मकत्वात् नहि रूपादिविशिष्टे रूपादयः सन्ति । नच विशिष्टं नाम किंचिद्वस्त्वस्ति विशेषणविशेष्यतत्सम्बन्धातिरिक्तस्य तस्याननुभवात् तेषां च प्रत्येकसमुदायाभ्यां विशिष्टव्यवहाराजननात् नच सम्बन्ध एव विशिष्टं विशेषणविशेष्यतत्सम्बन्धा इत्यत्र सम्बन्धे ऽपि तद्व्यवहारादर्शनात् । विशेषणविशेष्ययोस्तद्व्यवहाराभावप्रसङ्गात् । नच वस्तुस्वरूपं भेद इति शङ्कितुमपि शक्यं तस्य विदारणात्मनो भेदस्य वस्तुस्वरूपनाशरूपत्वान्नाशतत्प्रतियोगिनोरभेदासम्भवात् नहि पट-विदारणं पटस्वरूपं वस्तुस्वरूपातिरिक्तस्य तस्य निःस्वरूपस्य निरा-श्रयस्यासिद्धिरेव ।

Nor is your *qualified* svarūpa an entity at all, for it is unperceived apart from subject, attribute and the relation between these; and because a qualified (determinate) judgment in regard to these three (*i. e.* one in which these three are combined) cannot be effected through them singly or taken together. Nor is it *relation* simply that constitutes (your) *qualified svarūpa,* for when all three are present to the mind, thus, *subject, attribute,* and *relation,*—no determinate judgment is observed to result, although the relation (between subject and attribute) was present to the mind. And because it would follow that there could be no determinate judgment in regard to the subject and attribute (if relation by itself were the qualified svarūpa).

Nor can it be argued at all that *the thing itself* is bheda: for since *bheda* (tasya) implying *tearing asunder* consists in the destruction of the thing itself, it is impossible for the destruction and its counter-entity (sc. the thing which is destroyed) to be identical. For the tearing of a piece of cloth is not the cloth itself: in fact, apart from the thing itself, or piece of cloth, this character-less, baseless tearing cannot be affirmed at all (asiddhi). Nor can that which is divided *bhinna* sc. destroyed, be the substrate of anything: otherwise a *broken* jar might be regarded as a receptacle for water!

नहि भिन्न आश्रयो भवति अन्यथा ध्वस्तोपि घटो जलाधारः स्यात् अभिन्ने त्वाश्रये भेदो विरोधादेव न वर्तते ।

तस्मादलमनेनानात्मविचारेण सर्वथा प्रत्यक्षादेरात्मानात्मभेदगोचरत्वं नास्तीति सिद्धम् ।

२२ यदुक्तं जगत्कारणत्वविषयश्रुत्योरज्ञानब्रह्मगोचरयोर्मिथो विरोध इति तन्न

ब्रह्माज्ञानाज्जगज्जन्म ब्रह्मणोऽकारणत्वतः ।
अधिष्ठानत्वमात्रेण कारणं ब्रह्म गीयते ॥ ३८ ॥

दृश्यत्वाद्यनुमानसिद्धानिर्वचनीयस्य जगतोऽनाद्यनिर्वचनीया अविद्यैव कारणं न ब्रह्म तस्य कूटस्थस्य कार्यकारणविलक्षणत्वात् तदेतद्ब्रह्माऽपूर्वमनपरमनन्तरमबाह्यं अयमात्मा ब्रह्म सर्वानुभूरितिश्रुतेः।

But if the substrate or thing in itself is undivided, *bheda*, division, cannot reside in it—for that would be a palpable contradiction!

To conclude this discussion of the not-Self. We have proved that perception and the other sources of evidence in no way declare a difference between Self and not-Self.

22. Thus, we must reject the statement that the two sets of Śruti passages, which deal with the cause of the world and declare, the one that Brahman is, the other that Nescience is, the cause contradict each other.

Through Nescience, Brahman is (said to be) the cause of the world; for to Brahman causality does not pertain. Brahman is said to be cause as being simply the substrate (of Nescience which is the cause of the world)......XXXVIII.

Nescience, eternal ab ante, inexplicable (cf. note p. 28), is indeed the cause of the world, which is inexplicable and which is proved by reason of its visibility &c. Brahman is not the cause; for the unchanging one (Kūṭastha) is neither cause nor effect, as declared in the Śruti passage—'This is the Brahman, without cause and without effect, without anything inside or outside: this Self is Brahman, omniscient.'

Brihad Up. II. 5. 19.

कथं तर्हि ब्रह्मणो जगत्कारणत्वं श्रुतौ प्रसिद्धं जगत्तत्कारणाधिष्ठानत्वेन कारणत्वोपचारात् ब्रह्मकारणश्रुतेरन्यार्थत्वाच्च एकमेवाद्वितीयमितिश्रुतेरद्वितीयत्वं तावद्ब्रह्मणः सिद्धं तत्कथं सम्भाव्यतामिति कार्यकारणयोरभेदस्तावल्लोकप्रसिद्धः ब्रह्मापि जगत्कारणमिति कथमसम्भावना स्यादित्यद्वितीये सम्भावनाबुद्धिमात्रप्रयोजनत्वात्तस्याः नचाज्ञानमपि जगत्कारणं श्रुत्या विवक्षितं । तस्य भ्रमनिमित्तमात्रत्वेनैवोक्तत्वात् कार्यकारणवादस्य वेदान्तबहिर्भूतत्वात् विवर्तस्यैव वेदान्तवादत्वात्

How then is Brahman declared in Śruti to be the cause of the world? Because to Brahman as the substrate and cause of the world causality is by a metaphor ascribed. And because the Śruti passage declaratory of Brahman as the cause has a further purport. From the Śruti passage—'(In the beginning) there was that one only, without a second.'—is proved the unrelated nature of Brahman. But how is a notion of the unrelated Brahman (tat) possible? The well-known fact of common experience, sc. that cause and effect are identical, (steps in to meet this difficulty)—thus it is not impossible to conceive of Brahman also as the cause of the world. And so the above passage (tasyāḥ) finds its purport in merely making possible (for us) a notion of the unrelated Brahman (sambhāvanābuddhi cf. p. 47 supra). Nor does Śruti imply that Nescience also is the cause of the world. For causality is affirmed as simply due to error (sc. the notion of cause depends on that of duality, which again is the outcome of Nescience). For a theory of cause and effect (as implying duality) lies outside the Upanishads; in that these confine their teaching to that of *illusory manifestation* * (vivartta).

Ch. Up. VI. 2. 1.

* The Vivarta-vādins or Māya-vādins or Vedāntins of Saṅkara's school hold that the cause only appears to pass, but never really passes into a second state, so *the effect* which is therefore only a

किं जगतः कारणमिति पृष्टे प्राप्ताप्रतिभानिवृत्तिमात्रप्रयोजनतया अज्ञानं कारणमित्यभिहितत्वाच्च

२३ नन्विदमज्ञानं कार्यमकार्यं वा आद्ये किमस्य कारणं अज्ञानं ब्रह्म वा नाद्यः तेनैव तज्जनने आत्माश्रयात् अज्ञानान्तरानुसरणे त्वनवस्थादिप्रसङ्गात् न द्वितीयः ब्रह्मणोऽकारणत्वात् अनिर्मोक्षप्रसङ्गाच्च ।

And because the statement that Nescience is the cause of the world is made with the view merely of obviating the awkward silence (apratibhā) * that ensues when one is asked the question, What is the cause of the world ?

Objection: The Nescience of the Vedânta is inexplicable nonsense.

23. Now arises the question whether this Nescience is, or is not, a product. If a product, what is its cause? Nescience or Brahman ? Not Nescience; for the vice of self-dependence follows on Nescience being produced by Nescience. If recourse be had to a second Nescience (as a cause of this Nescience), an infinite regress and the other vices result. Nor can Brahman be the cause; because causality does not pertain to Brahman, and because emancipation would become impossible (on the assumption of Brahman being the cause of Nescience, since the eternal Brahman as cause would ever bring about Nescience).

*illusory manifestation* (vivartta) of the cause: the rope, lying on the road at night, *appears to be* a snake. The world is an illusory manifestation of Brahman, the only Real, due to Māyā the *inexplicable* power of Brahman.

For ārambha-, pariṇāma-vādin and cognate terms *vide* Pandit Vol. VIII p. 488. Panchadaśī, note, also Cap. XIII śl 6 *et seq.* of the latter.

* cf. Nyāyasūtravṛitti p. 261.

द्वितीये त्वनादिभावस्याऽनिवृत्तिप्रसङ्गो ब्रह्मवत् । नच कल्पितत्वाकल्पितत्वाभ्यां विशेषः कल्पनासामग्र्यभावेन कल्पनानुपपत्तेः नचानादिरयमध्यासः अध्यासत्वासिद्धेः विद्याबाध्यत्वात्तत्सिद्धिरिति चेन्न अन्योन्याश्रयात् । नचैते दोषावस्तुनो वस्तुत्वापहारकाः कल्पितस्य चाज्ञानस्य किमेते कुर्युः स्वत एव तस्य वस्तुत्वाभावात् अत एवोक्तमलङ्कारोह्ययमस्माकं यद्युक्तिप्रमाणाभ्यां दुर्घटत्वं सुघटत्वे कल्पितत्वं दुर्घटं भवेदितिवाच्यं कल्पितत्वस्यैवाद्याप्यसिद्धत्वात् धर्मिण एवासिद्धेः ।

Again, if this Nescience is not a product, then, as in the case of Brahman, there would be no cessation of this positive entity (bhāvasya), eternal ab ante. And it cannot be urged that there is a difference between Nescience and Brahman, in that the forme is falsely surmised (*i. e.* is unreal). For erroneous surmisal is mpossible, in the absence of certain means whereby the surmisa is effected * Nor (to escape the difficulty can it be urged that) this false surmisal is eternal ab ante, for the fact of there being false surmisal at all is not established. It is proved (the Vedantin may urge), because true knowledge proves the surmisal to be false. Not so; for this involves a logical see-saw, (sc. if there be false surmisal, it is proved false by true knowledge ; and, if it be proved false by true knowledge, it is false surmisal). Nor can it be urged (by the Vedantin) that these logical fallacies serve to disprove the reality (vastutva) of the thing under discussion (vastunaḥ) and can effect nothing in regard to Nescience which is falsely surmised; for Nescience itself is not real: hence it has been declared (the Vedantin continues) that what we Vedantins prize highly in our system is this, viz, that Nescience is hard to prove by argument and pramāṇa : if by these it were proved easily, the falsity (kalpitatva)of Nescience would be hard to prove. The above argument is to be rejected, because the unreality of Nescience is not yet proved, since there is no *proof* for the *subject* itself (sc. Nescience, in which the *attribute* of unreality may be supposed to reside).

* The means are (*a*) similarity of two things of which one is mistaken for the other; (*b*) a previous mental retentum by which one

ननु केयं सिद्धिः उत्पत्तिर्ज्ञप्तिर्वा नाद्यः अनादेस्तदभावस्येष्टत्वात् न द्वितीयः साक्षिसिद्धत्वेन तदभावात् । मैवम् अज्ञानस्य साक्षिसिद्धत्वे साक्षिणो ऽसङ्गत्वभङ्गप्रसङ्गात् सम्बन्धं विना चाऽप्रकाशकत्वात् । नच परमार्थिकसम्बन्धाभावे ऽपि कल्पितः सम्बन्धो ऽस्त्येवेति वाच्यं सम्बन्धसम्बन्धिनामन्यतमस्य कल्पकत्वे आत्माश्रयान्योन्याश्रयकूटस्थत्वहान्यसङ्गत्वक्षतिमोक्षाभावप्रसङ्गानां यथायथं प्राप्तेः ।

(The Vedantin again interposes with the question) What do you mean by *proof*? Production (sc. the production of an effect from a cause)? Or cognition (implying pramāṇa, instrument of cognition)? The first meaning will not serve your purpose; for, in regard to a thing eternal ab ante (as Nescience is) the absence of proof *i. e.* of *production* (tat) is precisely what I am prepared to admit. Nor the second meaning; for there is absence of proof *i. e* of cognition (tat) because Nescience is proved by the Witness (and not by any pramāṇa). Again, no, (replies the opponent.) For if Nescience is proved by the Witness, the unrelated character of the Witness is overthrown; and because the Witness could not make known (lit. illumine) Nescience without entering into relation with it. Nor may the Vedantin urge that though a *real* relation (between the two) is impossible, a relation may be falsely surmised. For either the relation or the related things must be the surmiser of such surmisal; and thus would follow, in order, the faults of self-dependence, logical see-saw, loss to the Witness of its unchanging charater and overthrow of its unrelated character, and the impossiblity of final emancipation.

---

of the two things is now recollected; (*c*) some defect either in the object or in the instrument of knowledge. The gloss continues:—न चात्माज्ञानयोः सादृश्यमस्ति निरवयवत्वात् । नवा पूर्वसंस्कारो दोषो वास्ति तयोरज्ञानपूर्वकत्वेन अज्ञानात्मागसिद्धेरित्यर्थः । Both (*b*) and (*c*) presuppose Nescience.

नचाविद्याऽध्यासवत् तत्सम्बन्धाऽध्यासस्याप्यनादित्वेना-विद्यादिहेत्वजन्यत्वे ऽपि तदन्ततया तन्निवृत्तौ निवृत्तिः स्यादिति वाच्यं तस्यानादेरुत्पत्तौ निरपेक्षस्य साक्ष्यधीनज्ञानस्याज्ञानानपेक्षतया तदन्तत्वानुपपत्तेः नच सम्बन्धिज्ञानाधीनं सम्बन्धज्ञानं लोके दृष्टमिति वाच्यं तस्य प्रत्यक्षादिसिद्धस्य तत्सापेक्षत्वेपीह सम्बन्धिनो-प्यज्ञानस्य साक्षिसम्बन्धसापेक्षस्फूर्तिकत्वेन वैपरीत्यात् नच सम्बन्धः स्वस्थित्यर्थं सम्बन्धिनमपेक्षते इति वाच्यं लब्धसत्तास्फूर्तिकस्यैव स्थित्यपेक्षणात् हेत्वनपेक्षत्वे इतरानपेक्षस्थितिकत्वाच्च

Nor may the Vedantin urge that just as that erroneous surmisal which is itself Nescience is eternal ab ante, so if an erroneous surmisal of connexion with Nescience be regarded as eternal ab ante, then although this surmisal of connexion is not the product of Nescience &c as the cause, yet by being dependent on Nescience (tat) it will come to an end on the cessation of Nescienc (tat). For this erroneous surmisal of connexion which is eternal ab ante, sc. independent of production (*i. e.* of a producing cause), and a knowledge of which depends on the Witness, could not be dependent on Nescience (tat) as in no way standing in need of Nescience. Nor may be urge that the common fact of experience is that the knowledge of a relation depends on the knowledge of the things related. For although the knowledge of a relation as given by perception &c. depends on a knowledge of the things related (tat), yet here the reverse is the case, since Nescience, though it is one of the related things, must be in relation with the Witness in order to be known at all Nor may it be urged that for the sake of its own persistence a relation demands some related thing. For only that which exists and is present in consciousness needs to persist. And because that which is indepedent of a cause does persist independent of aught else (The Vedantin assumed above that the sambandhādhyāsa was uncaused).

नचाज्ञानस्य ग्रहप्रागभावरूपस्य ग्रहानुपलम्भादुपलम्भ इति वाच्यं नित्योपलम्भरूपस्यात्मनोनुपलम्भानुपपत्तेः भावरूपजगदुपादानस्य चाज्ञानस्याभावरूपत्वानुपपत्तेश्च तथा चाज्ञानस्यैवाभावात् कथं तज्जगत्कारणत्वेनोपन्यस्यत इति ।

मैवम् ।

प्रश्नस्य ज्ञानपूर्वकत्वादाक्षेपे प्रतियोगिधीः ।
अवश्यं भाविनी पूर्वा विरोधः स्यादितोन्यथा ॥ ३९ ॥

कथमज्ञानसिद्धिरितिवदन्प्रष्टव्यः किमयमज्ञानस्वरूपविषयकः प्रश्नः किं वा तत्स्वरूपाऽऽक्षेपः तत्स्वरूपसाधकप्रमाणप्रश्न एववा अयम् । आद्ये अज्ञाते स्वरूपे प्रश्नानुपपत्तेः प्रश्नात्पूर्वज्ञानस्वरूपसिद्धेरवश्यंभावात्तवैवाज्ञानस्वरूपसिद्धमिति कोच प्रश्नः ।

Nor may it be urged that Nescience, which is the antecedent* negation of knowledge, is known through the non-perception* of knowledge. For there can be no non-perception of the Self, which is itself eternal perception. Nor can Nescience, which is the material cause of a *positive* entity, sc. the world, have itself a *negative* character.

And thus since Nescience does not indeed exist, how was it declared to be the cause of the world?

Not so (replies the Vedantin): Because knowledge must precede a question; and for a negation a previous knowledge of the thing denied is essential. Otherwise contradiction follows from question and negation (itah)......XXXIX.

Met: Nescience, though inexplicable by any pramāṇa is vouched for by the Self or eternal Witness

The opponent who puts the question, How is Nescience proved? must be asked whether his question concerns the nature of Nescience, or is a denial of Nescience, or asks for the evidence (pramāṇa) which proves Nescience. In the first case, if the nature of Nescience were unknown, his question would be impossible; for since a knowledge of the nature of Nescience is necessary previous to the question, that nature is known already to the opponent (tava) and therefore the question is unnecessary.

* For *prāgabhāva* and *anupalabdhi* (or the sixth pramāṇa of the Vedantins) cf. Ved. paribh Pandit Vol. VII. pp. 318 326.

नच सामान्यज्ञानाद्विशेषजिज्ञासा युक्ता उक्तदोषात् नचाक्षेपो युक्तो ऽभावज्ञानस्य प्रतियोगिज्ञानपूर्वकत्वनियमेनाज्ञानस्वरूपसिद्धेः पूर्वमेव वृत्तत्वात् नच भ्रमोपस्थितस्याज्ञानस्याक्षेपो न्याय्यः यतः केन कुत्र भ्रम इति पृष्टे परोक्तशब्दाभासेनाज्ञानविषयक इत्येवोत्तरं तथा च भ्रमस्य स्वसमानविषयकाज्ञानोपपादकत्वादज्ञानविषयकापराज्ञानस्वीकारेऽनवस्था दुर्वारा । हन्त तर्हि एकाज्ञानासहिष्णुतया ऽऽक्षेपं प्रयुञ्जानस्यानेकाज्ञानस्वीकरणे मदोन्मत्तस्य स्वव्याघातगौरववैयर्थ्यादिदोषमपश्यतः स्वपक्षनिर्वाहो व्याहत एव ।

And he may not reply that the desire for special knowledge, following on general knowledge, is proper; for the fault mentioned above (sc. the desire is unnecessary) applies here. Nor is a denial of Nescience proper; for, in accordance with the rule that the knowledge of a negation must be preceded by a knowledge of the counter-entity (or thing denied), a knowledge of the nature of Nescience (the thing now denied) must have existed previous (to the denia of Nescience). And he may not reply that of Nescience as something known through error (*i. e.* false) a denial is proper. For when asked the question,—By what, and in regard to what, is this error effected?—his only reply will be, This error relates to Nescience and is effected by means of the false words uttered by some one else. And thus since the error is effected through Nescience which relates to itself, a second Nescience relating to the first Nescience is admitted, which gives rise to an inevitable regressus in infinitum. Alas then for the opponent who denies Nescience and, because of his impatience of (our thory of) a single Nescience, assumes a plurality of Nesciences, and in his pride fails to see the defects of this view sc. contradiction, cumbrousness &c.—the free course of his view is indeed overthrown!

नचैवं क्वचित्तत्रापि प्रश्नाक्षेपयोः सत्वात्तुल्यः पर्यनुयोग इति वाच्यम् अज्ञाततया साक्षिसिद्धेऽज्ञाननिवृत्त्यर्थं प्रमाणप्रश्नस्य प्रमाणाद-र्शनेन स्वरूपतिरस्काररूपस्य चाक्षेपस्य कर्तुं सुकरत्वात् । अस्तु तर्हि ममापि साक्षिसिद्धे ऽज्ञाने प्रमाणप्रश्नः समञ्जसः एवं तर्ह्यज्ञानसा-क्षिणोः सम्बन्धो ऽपि वाच्यः अन्यथा साक्षिणः साधकत्वानुपपत्तेः तथा ऽज्ञानतत्सम्बन्धयोरनादित्वमपि वाच्यम् अन्यथा पूर्वमुक्तस्येदानीं संसारोपलम्भः स्यात् नच पूर्वमप्यज्ञानान्तरमेवेति वाच्यम् अज्ञानपर-म्परातः एकस्यैव लघुत्वात्

Nor may he retort that thus a similar objection will apply to any question or denial of ours in regard to anything whatever. For we may well put a question in regard to an object, which as something unknown is vouched for by the Witness, in order to destroy the Nescience investing that object; or we may make a denial, *i. e.* a rejection of the reality (svarūpa) of that object because no pramāṇa for the said object is observed to exist. Well then (replies the opponent) my question as to the pramāṇa for Nescience, which is vouched for by the Witness, may be considered to the point also. Very well then (we reply), you must admit a relation between Nescience and the Witness: otherwise the Witness could not be a voucher for Nescience. Likewise you must admit that Nescience and the relation of the Witness with it are eternal *ab ante:* if not, a soul emancipated previous to this relation being formed would now be conscious of the world. Nor can it be said that even previous to this relation there was another Nescience (which as cause brought about a connexion between the second Nescience and the Witness); for it is easier to assume a single Nescience rather than a series of Nesciences.

*(To be continued.)* A. V.

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

*(Continued from page 672. Vol. XI.)*

वाक्यप्राप्तसिक्तभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ।

सू॰ द्रव्यादेशे तद्द्रव्यश्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ ५ ॥

यदिदं कर्मान्तरं तत्किं पुरोडाशद्रव्यकम्? उत तुषनिष्कासद्रव्यक? मिति विचारः, तत्रावभृथ—शब्देन प्रत्यक्षेण पुरोडाशादिधर्मप्राप्तेस्तद्विशिष्टकर्मविधिपरेण च तुषनिष्कासस्य वाक्यभेदाद्विधातुमशक्तेः पुरोडाश एव द्रव्यं स्यात्, "अपूर्वकर्मविधिनाऽनेकेषामपि चोदना । अन्यथा तुषनिष्कासपदानर्थक्यद्दोषतः । तद्विशिष्टविधिस्तेन पुरोडाशस्य बाधनं श्रुत्या हि तुषनिष्कासं विशेषेण च चोद्यते, अवभृथ—शब्देन तु गौणत्वेन सर्वावभृथधर्मसाधारणेन च पुरोडाशस्य प्राप्तिस्तस्मात्तस्य बाधः ॥

वैष्णवशब्दादातिथ्यै धर्मानतिदेशाधिकरणम् ।

सू॰ गुणविधिस्तु न गृह्णीयात्समत्वात् ॥ ६ ॥

"आतिथ्यायां वैष्णवो नवकपालो भवती"ति श्रूयते तत्राश्वबालादयः केचिद्धर्मा विहिताः राजसूये वैष्णवस्त्रिकपाल इति श्रुते[१] वैष्णव—शब्दः किमातिथ्यादिधर्मानतिदिशति? न? ेति संशयेऽग्निहोत्रन्यायेनातिदेशं मन्वानस्योत्तरं "श्रुत्या वैष्णव—शब्दोऽयं देवताया विधायकः । न गौणवृत्तिमाश्रित्य धर्मानतिदिशत्यतः ॥

निर्मन्थ्यादिशब्दैर्धर्मानतिदेशाधिकरणम् ।

सू॰ निर्मन्थ्यादिषु चैवम् ॥ ७ ॥

१ श्रुतौ वैष्णवशब्द इति पा॰ ।

"निर्मन्थ्येनेष्टकाः पचन्ति बर्हिषा यूपावटमवस्तृणाति आज्येन यूपमनक्ती"ति बर्हिराज्यनिर्मन्थ्य-शब्दाः पाशुकस्य निर्मन्थ्यस्य दार्शपौर्णमासिकयोश्च बर्हिराज्ययोर्धर्मानतिदिशेयुर्न? ति संशये, वैष्णव-शब्दस्यानतिदेशकत्वेऽपीष्टित्वेन दर्शपूर्णमासधर्मलाभात् युक्तमनतिदेशकत्वं, बर्हिरादिशब्दानां त्वनतिदेशकत्वे ऽन्यतो धर्माधर्मालाभात्साकाङ्क्षाविधयः स्युः, तस्मादतिदेशका इति विशेष।[1]काङ्क्षा लोकतो ऽपि मन्थनादिप्रकारलाभाच्च श्रुत्यर्थविधिसंभवे गौणत्वं न्याय्यम् ॥

द्वयोः प्रणयन्ति इत्यनेन सौमिकधर्मानतिदेशाधिकरणम् ।

सू० सौमिकं तु प्रणयनमवाच्यं हीनत्वात् ॥ ८ ॥

चातुर्मास्येषु चत्वारि पर्वाणि, तत्र श्रूयते "द्वयोः प्रणयन्ती"ति तस्माद् द्वाभ्यामेतीति तत्र भाष्यकारः सौमिकं तु प्रणयनमित्यादिभिः सप्तभिः सूत्रैरधिकरणद्वयं व्याचख्यौ, प्रथमं तावदिदं चिन्त्यते किं सौमिकमिदं प्रणयन? मुत प्राकृत? मिति तत्र प्राकृतस्य चोदकप्राप्तत्वेन वचनानर्थक्यात्प्रणयनमात्रवचनोऽपि शब्दोऽर्थवत्त्वाय सौमिकधर्मवति प्रणयने लक्षणया वर्त्तते, तस्मात्सौमिकमिति प्राप्ते ब्रूमः प्राकृतं स्यान्न हि प्रणयति-शब्द. सौमिकस्य नामधेयं, येन तदुपस्थापयेत्, प्रणयनमात्रं तु ब्रूते तच्च चोदकेन एव प्राप्तं, तस्मात्प्राकृतस्यैवायमनुवादः स किमर्थः परिसंख्यार्थो वा द्वयोः प्रणयन्ति न चतुर्ष्विति, गुणविधानार्थो वा परिसंख्यायास्त्रिदोषत्वात् अर्थवादार्थो वा, तस्माद् द्वाभ्यामेतीति गुणश्रवणादर्थवादस्य प्रयोजनमुत्तराधिकरणे वक्ष्यामः ॥

द्वयोः प्रणयन्ति इत्यनेन मध्यमयोर्द्वयोः प्रणयनाधिकरणम् ।

सू० प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥ ९ ॥

तत्रैवं चिन्त्यते कतरयोर्द्वयोरिदं प्रणयनं? किमनियम? उत प्रथमोत्तमयो? रुत मध्यमयो? रिति विशेषाभावादनियमः, न "वैश्वदेवमुत्तरवेदिमुपवपन्ति न शुनासीरीय इति उत्तरवेदिप्रतिषेधस्य प्रथमोत्तमयोर्दर्शनात्

[1] विशेषाशङ्केति पा०।

तयोरेवेदं प्रणयनं प्रणयनाङ्गमुत्तरवेदिः, यद्यपि प्रथमोत्तमयोरिदं प्रणयनं स्यात्ततस्तयोरुत्तरवेदिः प्राप्नोति प्राप्तौ सत्यां प्रतिषेधो घटते नान्यथा, तस्मात्प्रथमोत्तमयोरिति प्राप्तेऽभिधीयते मध्यमयोः स्याद् गत्यर्थवादवाक्यशेषात्, तस्माद् द्वाभ्यामेतीति गतिसाधनभूतयोरिदं प्रणयनमिति गम्यते, गतिसाधनत्वं च मध्यमयोः पर्वणोरुरुसंस्तवादवगतं, तस्मान्मध्यमयोरिदम्, एतदर्थवादस्य प्रयोजनं, तद्वशेन हि मध्यमयोः प्रणयनं व्यवतिष्ठते, भवतु व्यवस्थानं किमर्थं तु प्राप्तस्य प्रणयनस्य मध्यमयोरनुकीर्त्तनं, गुणार्थमिति ब्रूमः, अस्मिन् हि प्रणयने उत्तरवेद्यामग्निं निदधातीति श्रुतं यदा चैतदर्थवादवशान्मध्यमयोः प्रणयनं व्यवस्थापितं तदोत्तरवेद्यामग्निं निदधातीति एतदपि मध्यमयोरेव स्यात् अन्यथा चतुर्ष्वपि स्यात्, तस्मादुत्तरवेदिं मध्यमयोरुपसंहर्त्तुं सार्थवादकस्य प्रणयनस्य पुनःश्रवणम् यत्तु "न वैश्वदेवे उत्तरवेदिमुपवपन्ति न शुनासीरीये" इति तदुपावपन्तीति वचनान्तरेणाविशेषविहितोत्तरवेदेः प्रथमोत्तमयोः प्रतिषेधायेति न किञ्चिदनर्थकम् । इदं तु व्याख्यानं वार्तिककारो नानुमेने यतावद्गुणमर्थवादार्थो पुनः श्रुतिरिति, तन्न नाविधीयमानेऽर्थवादः सम्भवति "विधिना त्वेकवाक्यत्वादि"ति न्यायादविधिशेषस्यानर्थक्यात् चोत्तरवेद्युपसंहारः प्रयोजनं तदसम्भवात्, सत्यपि हि द्वयोः पर्वणोः सार्थवादप्राकृतप्रणयनानुवादे वाक्यान्तरेणाभिधानानुवादेन विनियुज्यमानोत्तरवेदिश्चतुर्ष्वपि चोदकप्राप्ताग्निविधानसम्भवात्सर्वेषु स्यात्, अपि चोपावपन्तीत्ययमुत्तरवेद्युत्पत्तिविधिरनारभ्याधीतोऽपि न वैश्वदेवे उत्तरवेदिमुपवपन्ति न शुनासीरीये इत्यनेन प्रथमोत्तमाभ्यां पर्युदस्तो मध्यमयोरेव व्यवस्थितः, उत्पत्त्यपेक्षत्वे विनियोग इति उत्तरवेद्यामग्निं निदधातीत्ययमपि विधिर्मध्यमयोरेव व्यवतिष्ठत इति नार्थो द्वयोः प्रणयन्तीत्यस्य यत्तु प्रणयनान्तरमिदं प्रकृत्यर्थवादं समर्थयते तस्यापि तुल्यमेवानर्थक्यं, यत्तु न वैश्वदेवे उत्तरवेदिमुपवपन्ति इत्येवं प्रतिषेधः पर्युदासो वा न सम्भवतीति प्रलप्यते तदज्ञानसंमोहनमात्रत्वादुपेक्षणीयं, यदि च कथञ्चिद् द्वयोः प्रणयन्तीत्यनेनोत्तरवेद्युपसंहारः सिध्यति तत उपावपतीत्ययमपि विनियो-

गापेतत्वाद्विनियोगव्यवस्थया मध्यमयोरेव व्यवतिष्ठते न प्रथमोत्तमयोः, ततश्च न वैश्वदेव उत्तरवेदिमिति वचनमनर्थकं स्यात्, अस्त्विति चेन्न "औत्तरवेदिकोऽनारभ्यवादप्रतिषेध" इति सूत्रविरोधात्, इदं हि तत्प्रयोजनकथनार्थं सूत्रं, तस्मात्सर्वमिदमेकमधिकरणमेव वर्णयितव्यं "द्वयोः प्रणयन्ती"ति किम्प्राकृतं प्रणयन? मुत सौमिक? मुतापूर्वमिति त्रिधा संशयः, तत्र प्रणयनमात्रश्रवणात्तस्य चातिदेशतः प्राप्तेस्तस्यैवेयं पुनःश्रुतिः परिसंख्यार्था गुणार्था अर्थवादार्था वा परिसंख्याद्यसम्भवात् आनर्थक्यपरिजिहीर्षया सामान्यवचनोऽपि प्रणयन-शब्दः सधर्मकं सौमिकं प्रणयनं लक्षणया प्रतिपादयति तथा चोत्तरवेदिप्रतिषेधोऽवकल्पते न वैश्वदेव इति, न चायमुपावत्रयन्तीत्यस्य प्रतिषेधः, तस्याग्रान्तरप्रकरणेन केवलवरुणप्रघासविषयत्वात्प्रथमोत्तमयोरप्राप्तेः प्रतिषेधानर्थक्यात्, अस्मिंश्च पक्षे प्रथमोत्तमयोरिदं सौमिकं प्रणयनमुत्तरवेदिप्रतिषेधस्य तद्विषयत्वाद्यदि च मध्यमयोः स्यात् ततस्तद्दर्शनेनैव मध्यमयोरुत्तरवेदिसिद्धेरुपावत्रयन्तीति अयं प्रथमोत्तमविषय एव स्यात्, तयोरेव च प्रतिषेध इति व्याघातः स्यात्तस्मात्प्रथमोत्तमयोः, सौमिकं प्रणयनं पर्युदस्तोत्तरवेदिकं विधीयत इति प्राप्तेऽभिधीयते, "न हि प्रणयन्तीत्येतत्सौमिकस्याभिधायकम् । प्राकृतस्यानुवादे च वचनं स्यादनर्थकं, तस्मात्प्रणयन्तीत्येतदप्राकृतमसौमिकम् अपूर्वमग्नेर्नयनं वदत्याहवनीयतः" । यद्यपि प्रणयनमात्रं श्रुतं तथाऽपि शाखान्तरे आहवनीयाद् द्वावग्नी प्रणयत इति वचनात्तदेकार्थत्वादनेन वचनेन प्राकृतप्रणयनोत्तरकालमाहवनीयादन्यन्तरप्रणयनं पशुवन्धवद्विधीयते, तच्च गत्यर्थवादवशात्मध्यमयोः पर्वणोर्भवति परिसंख्यार्थमित्यादि सूत्रत्रयं यथायामपि पूर्वार्णं यथाक्रमेण प्रयोजनकथनार्थम् उत्तरवेदिप्रतिषेधस्तूपावत्रयन्तीत्यस्य सामान्यविषयस्य पर्युदासार्थः, सामान्यविषयत्वं चास्य भाष्य एव दर्शितम् ॥

स्वरसामादिशब्देन धर्मातिदेशाधिकरणम् ।

सू० स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् ॥ १० ॥

गवामयने स्वरसामान उक्थ्याः सप्तदश स्वरसामान इति, अन्यत्रापि श्रूयते "पृष्ठः षडहो द्वौ स्वरसामानौ"विति, किमेतौ स्वरसामानाविति गवामयनिकस्वरसामविकारौ? उत न, तथा वैश्वदेवे पर्वणि वैश्वदेव्यामिक्षा द्यावापृथिव्य एककपालः" अन्यत्रापि मैत्रावरुण्यामिक्षा वारुण एककपाल इत्यादावेककपालामिक्षा वैश्वदेविकैककपालामिक्षाविकारौ? उत ने? ति संशये स्वरसामादिशब्दानां गुणविधित्वाद्वैष्णवशब्दवद्धर्मातिदेशकत्वात् न तद्विकारत्वमिति प्राप्ते ब्रूमः अनन्यगतिभ्यो लिङ्गेभ्यः स्वरसामादिचोदनाशब्दोपबृंहितेभ्यस्तद्विकारत्वं, लिङ्गानि भाष्य एव दर्शितानि ॥

वासो ददातीत्यादौ वासआदिशब्दानामाकृतिनिमित्ताधिकरणम् ।

सू० कर्मजे कर्मयूपवत् ॥ ११ ॥

कर्मनामधेयानामग्निहोत्रादीनामुक्तमतिदेशकत्वं यौगिकानां प्रायणीयादिशब्दानां गुणविधीनां च वैष्णवादिशब्दानां लिङ्गविशेषशून्यानां नास्त्यतिदेशनिमित्तत्वमित्युक्तं कर्मनामवदेव संस्कारनाम्नां यूपादीनां सिद्धमेवातिदेशकत्वम्, इदानीं वासःप्रभृतीनां संस्कारनिमित्तत्वमेवास्ति नास्तीति चिन्त्यते, वासो ददाति अनो ददातीति किं वाऽनन्तवर्णं च कृत्वा वासोऽनश्च निष्पाद्यैव दातव्य? मुत यथा सिद्धमेव दातव्य? मिति संशयः, तत्र वा न ततक्रियायां सत्यां शब्दप्रयोगात् क्रियानिमित्तौ वासः-शब्दो ऽनः-शब्दश्च क्रियामेव दानार्हतया विधत्तः, तस्मात्साऽनुष्ठेया दानं कुर्वता, एवं प्राप्ते ब्रूमः जातिशब्दावेतौ जात्यन्वयव्यतिरेकानुविधानाज्जातिस्तु क्रियाऽभिव्यङ्क्ते ति तदुत्तरकाले,शब्दप्रयोगो न तु शब्दः क्रियावाची, तस्माच्च क्रियातिदेशकत्वं शब्दयोः ॥

गर्गत्रिरात्रे लौकिकोऽग्नेरुपनिधानाधिकरणम् ।

सू० विशये लौकिकः स्यात्सर्वार्थत्वात् ॥ १२ ॥

वैदिकमर्थनिर्देशात् "अग्निमुपनिधाय स्तुवीते"ति किमाधानसंस्कृतोऽग्निराहवनीयादिरुपविधेय? उत लौकिक? इति संशये संस्कृतस्य

प्रयोजनापेतत्वात्सामान्यवचनोऽप्यग्नि-शब्दस्तद्विषयत्वेन गम्यमानः संस्कारमुपनिधानाद्गुत्वेनातिदिशतीति प्राप्ते ब्रूमः "वह्निमात्राभिधायित्वान्न संस्कारातिदेशनम् । होमादिभिः फलापेता संस्कारानां निवर्त्तिता" यदाहवनीये जुहोति गार्हपत्ये हवींषि श्रपयतीत्यादिभिराहत्य प्रयोजननिर्द्देशाच्च प्रयोजनान्तरमाहवनीयादयोऽपेतन्ते, अग्नि-शब्दोऽपि जातिमात्रवचनत्वात्तज्जातीयं यत्किञ्चिदग्निपत् लोकसिद्धमेवोपादाय फलार्थी न संस्कृतमपेक्षते, तस्माल्लौकिक उपनिधेयः ॥

उपशये यूपो भवति इत्यादौ यूपशब्दस्य संस्कारप्रयोजकताधिकरणम् ।

सू० संस्कृतं स्यात्तच्छब्दत्वात् ॥ १३ ॥

"उपशयो यूपो भवती"त्यत्र संशयः किमुपशये यूपसंस्काराः परिव्याणादयः कार्या नेति, तत्र यूप-शब्दः उपशये प्रयुज्यमानस्तानतिदिशेत्सत्यं, यदि यूपत्वं विधीयते विधायकाभावाद् वर्त्तमानाप[1]देशोऽयं यूपो भवतीति, तस्मादनुवादोऽयमुपशयस्तुत्यर्थोन संस्कृतिमपेक्षते, तस्माल्लौकिका यूपधर्माः केचिच्छेदनादय उपशये वचनादनुष्ठीयन्ते तेन निमित्तेन गौणोऽयं वादः ॥

पृष्ठैरुपतिष्ठन्ते इत्यादौ पृष्ठशब्दस्य कर्मद्रव्यवाचिताधिकरणम् ।

सू० कर्मणः पृष्ठशब्दः स्यात् तथाभूतोपदेशात् ॥ १४ ॥

अग्नौ श्रूयते पृष्ठैरुपतिष्ठन इति किं पृष्ठ-शब्दो ज्योतिष्टोमिकपृष्ठधर्मातिदेशकः पृष्ठधर्मकाणि कर्माणि कुर्यादि?ति तानि पृष्ठसादृश्यादेव स्तुत्यात्मकानि भवन्ति? उत पृष्ठसाधनेषु रथन्तरादिषु पृष्ठ-शब्दस्तरग्नेरभिधान चोद्यत इति, तत्र "उपतिष्ठतिना तावद्गपूर्वं कर्म चोद्यते। पृष्ठ-शब्दोऽपि तस्यैव विधत्ते पृष्ठतुल्यताम् । उपतिष्ठतिधातुः समीपस्थितिवचनः प्रत्ययो भावनावाचकः; तदयमर्थः अग्निसमीपे तिष्ठन् पृष्ठसदृशैः कर्मभिः कुर्यादि त, यदि त्वभिधानं विधीयते तदा उपतिष्ठतिः समीपस्थितिवचनः सन्नभिधानं लक्षयेत्, पृष्ठ-शब्दोऽपि तत्साधनमित्युभयोर्लक्षणा स्यात् । अस्मत्पक्षे पुनः पृष्ठ-शब्द एव धर्मलक्षणेति ज्यायानयं पक्षः । उच्यते "जघन्यवृत्तिता पृष्ठशब्दस्येहोभयोः समा । उपतिष्ठति-

[1] वर्तमानापदेशोऽयमिति पा० ।

धातुश्च समीपस्थितिवाचकः" । न वयं धातुनाऽभिधानं लक्षयामः किन्तु समीपस्थितिरेव धातुनाऽभिधीयते, सा तु समीपस्थितिरभिधानार्थेति ब्रूमहे, कथं मन्त्र[1]करणेऽर्थे वर्त्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदं भवति, समीपस्थितिश्चानेनाऽभिधीयते, न यथा समीपस्थितो मन्त्रः करणं तथा यतितव्यं, न चाभिधानादन्यत्र साक्षान्मन्त्रः करणं, तद्यदीयं समीपस्थितिरभिधानार्था स्यात्ततोऽस्याः करणं मन्त्रः सम्पद्यते, प्रधानाधीनं हि तदङ्गानुष्ठानं भवति अतोऽभिधानार्थत्वं समीपस्थानं कुर्वन्मन्त्रः समीपस्थितेः करणमिति शक्यं वक्तुम्, अतोऽभिधानाय समीपस्थितिं वदन् उपतिष्ठतिर्मन्त्रकरणार्थो भवन्नात्मनेपदं लभेतेत्यात्मनेपददर्शनादुपस्थान प्रयोजनभूतमभिधानमनुमीयते । तदयमर्थः पृष्ठसाधनैरथन्तरादिभिः समीपे स्थित्वाऽग्निमभिदध्यादिति, तस्मादभिधानचोदनेति सिद्धम् ॥

इति शास्त्रदीपिकायां सप्तमस्य तृतीयः पादः ॥ ३ ॥

## अथ शास्त्रदीपिकायां सप्तमाध्यायस्य चतुर्थः पाद आरभ्यते ॥

अथ सौर्ये चरौ इति कर्त्तव्यतावत्त्वाधिकरणम् ।

सू० इतिकर्त्तव्यता विधेर्यजतेः पूर्ववत्त्वम् ॥ १ ॥

गतो नामातिदेशः, इदानीमानुमानिकेन वचनेनातिदेश उच्यते "सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम" इत्याद्युदाहरणं, तत्र प्रथमं तावदिदं चिन्त्यते—किमत्र कुतश्चिद्धर्माः प्रदिश्यन्ते? नेति प्रमाणाभावान्नातिदेशः, उच्यते यागेन भावयेद् ब्रह्मवर्चसमिति भावनामितिकर्त्तव्यतापेक्षामुपदिश्य श्रुत्याद्युपदेशेन तस्या इतिकर्त्तव्यताया असमर्पणान्नूनमन्यतः सिद्धेतिकर्त्तव्यता ऽत्र शास्त्रेणाङ्गीकृतेति निश्चीयते, अस्ति चाप्यत्र लौकिके पार्वणस्थालीपाकादौ वैदिके च दर्शपूर्णमासादौ तयोरन्यतराविह प्रदिश्यते इति स्थिते इह चिन्त्यते "लौकिकी वैदिकी वेति वैदिकी हि निबद्धत्वा-

[1] करणेऽर्थे वर्त्तमानादिति पा० ।

नेतुं नान्यत्र शक्यते । लौकिकी त्वनिबद्धत्वात्सर्वत्रैवानुषज्यते वैदिकीति-कर्त्तव्यता प्रत्यक्षेण शास्त्रेण दर्शपूर्णमासादिषु निबद्धा नान्येन संबन्द्धुं शक्यते, न हि श्रुतमिति कर्त्तव्यता ब्राह्मणं दर्शपूर्णमासयोरितिकर्त्तव्यतां विधाय पुनः सौर्यादावपि विदधातीति संभवति । न च साधारण्येन विधानं प्रकरणेन व्यवस्थितत्वाद्विधानस्य, न च शास्त्रमन्तरेणेतिकर्त्तव्यतान्वयः सम्भवति, तस्माच्च वैदिकी, लौकिकी तु पार्वणाष्टकादिषु बहुष्वनुवृत्तासाधारणं शास्त्रमनुमापयति तेन सैव सौर्यादिषु स्यात्, प्रयाजादिदर्शनं तु यत्र नित्यानुवादवचनानीत्येवं परिहृतं, तस्माल्लौकिकीति प्राप्त उच्यते "वैदिकी वैदिकत्वेन सामान्येनोपतिष्ठते । लौकिकी त्वसमानत्वाच्चोपस्थास्यत्यपेक्षिता । वैदिकस्य तु कर्मणः कथंभावापेक्षायां वैदिक एवेत्थं-भावः शीघ्रमुपतिष्ठते तदतिक्रमेणानुपस्थितलौकिकग्रहणमयुक्तं, यच्चाप्यनुमिताद्वेदाल्लौकिकोऽपि तु वैदिकः प्रत्यक्षवेदविरहाच्चिरासौ सदृशो मतः । ननु सोऽपि वेदः केषांचित्प्रत्यक्ष एव नित्यानुमेयमूलनिराकरणात् । सत्यं, तथाऽप्यसदृश एव कथं वैतानिककर्माधिकारे हि त्रयी प्रवर्त्तते तन्मध्ये तु प्रसङ्गादवैतानिकं किञ्चिदुच्यते, तेन दर्शपूर्णमासादीनां सौर्यादीनां च तदधिकारेण त्रयीप्रवृत्तेर्नामभावान्तरसादृश्यमस्तीति वैदिकस्योपस्थानम् । किञ्च सौर्यादीनि वैतानिकेऽग्नौ प्रवर्त्तन्ते लौकिकीत्वितिकर्त्तव्यता चाराद्रोपासने कर्त्तव्या, तत्र प्रधानवैदेश्यमङ्गानामापद्येत तस्मादपि वैदिकी । न च निबद्धत्वादसौ नान्यत्र नेतुं शक्येति मन्तव्यं, समानविधानत्वे ह्ययं दोषः स्यात्, अतिदेशेन त्वन्यत्र गतौ निबद्धत्वं गुण एव, न हि क्वचिदनिबद्धान्यत्रातिदेष्टुं शक्यन्ते, न चानुमानेन लौकिकी शक्या कल्पयितुं गार्हपत्यादिषु तदभावेनानैकान्तिकत्वात् । तस्माद्वैदिक इत्थंभावः सौर्यादिष्वतिदिश्यते, स चावघातप्रयाजादिपदार्थजन्यदृष्टादृष्टोपकारवर्गरूपितस्तेषामुपकाराणां पदार्थानां च प्रापको भवति, तद्विधायि च शास्त्रमर्थात्सौर्यादिवाक्यशेषत्वमुपगतं भवतीत्यनेनाभिप्रायेण विध्यन्तो वा प्रवर्तेत चोदनायामित्युक्तम्, अस्तु वा विध्यन्तस्यैवात्रातिदेशस्तथाऽपि प्रकृतसंबन्धितया निरूपितरूपस्यातिदेशो न तु यथापाठमेव शास्त्रं

प्रकृतिवद्विकृतेरपि सम्भवति, यत्र ऊहबाधौ न स्यातामिति चोद्येत, यत्रापि ब्राह्मणमेव साक्षादतिदिष्टम् "एतद् ब्राह्मणान्येव पञ्चहवींषी"ति तत्राप्यन्यसंबन्धिनः सतस्तेनैव रूपेणातिदेशादूहाद्यसिद्धिः। यदि "अग्नये जुष्टं निर्वपामी"त्यनेन रूपेण सौर्यं प्राप्यते ततोऽग्निपदस्य देवतापदस्य च संप्रतिपत्तरूपत्वादेव देवतापदविवक्षयैव तत्पठितमग्निपदं रूपं त्वविवक्षितमिति न शक्यमास्थातुम्। अग्निपदरूपमेव विवक्षितमित्यापद्येत, ततो न सूर्यपदं प्रक्षिप्येत, नाग्निपदं बाध्येत, अतो नोहः सिध्येन्न बाधः। यदि तु प्रकृतौ निरूपितरूपस्य शास्त्रस्य विकृतिसम्बन्धस्तदा प्रकृतावग्निपदस्य देवतापदरूपसंप्रतिपत्तेर्देवतापदरूपमात्रं विवक्षितं दृष्टार्थत्वाच्चाग्निपदरूपम्, अदृष्टार्थत्वाद्देवतापदादिजिज्ञासया नान्तरीयकत्वादग्निपदमधीतमिति निश्चीयते, तत्र सौर्ये तादृग्रूपमन्त्रातिदेशादग्निपदस्य चातद्रूपत्वात्स्वरूपस्य चाविवक्षितत्वात्तन्निवृत्तौ सत्यां देवतावाचिनः सूर्यपदस्य प्रक्षेपादूहबाधौ सिद्धौ भवतः, तस्माद्वैदिकातिदेशः ॥

गवामयने ऐकाहिकेतिकर्तव्यतानुष्ठानाधिकरणम् ।

सू० द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात्तदाख्यं स्यादेकाहवत् ॥ २ ॥

इदानीमानुमानिकवचननामधेययोर्बलाबलं चिन्त्यते, गवामयने ज्योतिर्गोरायुरित्यादिसंज्ञा युक्ता यागा उक्तास्तेषां गणान्तःपातित्वात् गणेषु द्वादशाहस्येति द्वादशाहविध्यन्तः प्राप्तः, नामधेयाच्च ज्योतिरायैकाहविध्यन्तः, तत्राविरुद्धा द्वयेऽपि क्रियन्ते, विरुद्धेषु किं द्वादशाहिकाः कर्तव्याश्चोदकोबलवान् उत नामबलीयस्त्वादैकाहिका? इति संशये, विशेषाभावादनियमः। अथवा चोदकोबलवान्फलसम्बन्धोत्तरका चेतिकर्तव्यताकाङ्क्षा, प्रयोगवाक्ये च फलसम्बन्धात्तु तत्र नामानि श्रूयन्ते यान्यपेक्षितविध्यन्तमतिदिशेयुः, गणसामान्यात्तु द्वादशाहिकधर्मातिदेश एव तत्रावगम्यते। यासु तूत्पत्तिचोदनासु नामानि श्रुतानि तत्रालब्धफलत्वादसत्यामित्यंसम्भावापेक्षायां नातिदेशः, फलसंम्बन्धं तु प्रतीक्ष्य पश्चा-

दतिदिशदपि नामधेयं पूर्वावगतगणधर्माविरोधेन प्रवर्त्तते, तस्माच्चोदको बलीयानिति प्राप्तेऽभिधीयते "प्रत्यक्षं श्रूयते नाम चोदकस्त्वानुमानिकः । न प्रत्यक्षविरुद्धार्थमनुमानं प्रवर्तते । यद्यपि फलसम्बन्धाधीनेतिकर्तव्यताऽऽकाङ्क्षा प्रयोगवाक्ये प्रस्तूयते, तथाऽपि प्रयोगवाक्यमुत्पत्तिचोदनावगतरूपाणि कर्माणि आलोच्य फले विनियुङ्क्ते तानि चालोच्यमानानि संज्ञाविशिष्टान्येवालोच्यन्ते इति तन्निमित्तातिदेशः प्रत्यक्षनिमित्तत्वाच्छीघ्रं गम्यते किं चोत्पत्तिवाक्येष्वपि भावनास्वाभाव्यज्जायत एवापेक्षा, तस्मान्नाम बलीयः, वचनादभिधानतस्तथा विहितं कृत्स्नमिहातिदेशनम् । अनुमावचसाऽपि सत्तया भविता तस्य विशेषचिन्तनम् ॥

इति शास्त्रदीपिकायां सप्तमस्य चतुर्थः पादः समाप्तः ॥

समाप्तोऽयमध्यायश्च ॥

(शेषमग्रे)

---

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम् ।

श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम् ।

तत्र प्रथमाध्यायस्यावशेषः ।

(Continued from page 638. Vol. XI.)

मू० यद्यपि मन्दपुण्यानां जीवानां कामाज्जगत्सृष्टिः. अतिशयितानन्दयोगोऽभयाभयहेतुत्वमित्यादि न सम्भवति तथाऽपि विलक्षणपुण्यानामादित्येन्द्रप्रजापतिप्रभृतीनां सम्भवत्येवेतीमामाशङ्कां निराकरोति—

टी० "यद्यपी"ति, कारणवादिवाक्यानां परमात्मपरत्वं हि निरूप्यते कारणवाक्यत्वाभावेऽपि कथमन्तरादित्यविद्या निरूप्यत ? इति चेत्

उच्यते, आनन्दमयाधिकरणशेषतयेति कथमुपनिषद्भेदे सत्यपि तच्छेषतया निरूपणम्? इत्थम्—आनन्दवल्ल्यां "स यश्चायं यश्चासावादित्ये स एक" इत्यानन्दमयस्यैवादित्यमण्डलवर्तित्वमुक्तं छान्दोग्यप्रतिपादितस्य आदित्यान्तर्वर्तिनो देहसम्बन्धेन जीवानतिरेके सत्यानन्दवल्ल्यामपि जीवानतिरिक्त आदित्यान्तर्वर्तिपुरुष उक्तः स्यादित्यानन्दमयो जीव एवेति शङ्कायां तच्छेषत्वेन उत्तराधिकरणारम्भ इति अधिकरणभेद उक्तन्यायाविषयभूतोपनिषद्भेदहेतुकः। ननु "तस्यैष एव शारीर आत्मे"ति वाक्यप्रतिपन्नशरीरसम्बन्धस्य परिहृतत्वाच्छारीरत्वाश्रवणहेतुकजीवत्वशङ्का नोत्पद्यत इति चेत् उच्यते तत्र अन्नमयादीनां शरीरत्वमुक्तं, न हि ते प्रत्येकं करणादिसंस्थानवन्तः तैस्सम्बन्धश्चाधिष्ठानाधिष्ठेयभावलक्षणश्शेषशेषिभावलक्षणो वा येन केनापि प्रकारेणोपपद्यते, अत्र तु हिरण्यश्मश्रुर्हिरण्यकेश इत्यादिना करचरणादिसंस्थानकं शरीरं श्रूयते तस्य च कर्मकृतत्वं लोकप्रसिद्धम्, अतः उपकरणोपकरणिभावलक्षणसम्बन्धश्चार्थसिद्धः। ननु तत्राप्यान[1]न्दमयस्यात्मत्वश्रवणादात्मप्रतिसम्बन्धिनश्शरीरस्य करचरणादिमत्त्वात् तत्कृतजीवशङ्काऽपि तत्रैव निरस्तेति चेत् न प्राणमयादीनां करचरणादिमत्त्वाभावात्, अन्नमयस्य तु तथाविधत्वे सत्यपि तं प्रति विज्ञानमयस्यैव शरीरित्वाद्विज्ञानमयं प्रति शरीरिण आनन्दमयस्य करचरणादिमच्छरीरकत्वाभावात्, शरीरमात्रेण सम्बन्धमात्रनिबन्धनशङ्कैव तत्र निरस्ता, अत्र त्वानन्दमयस्यैवादित्यान्तर्वर्तिनः करचरणादिमत्त्वं प्रतीयते अतः पूर्वाधिकरणे शरीरमात्रेण सम्बन्धमात्रश्रवणादुत्थितायां जीवत्वशङ्कायां निरस्तायां पुनः करचरणादिसंस्थानकदेहविशेषेण उपकरणोपकरणित्वलक्षणसम्बन्धविशेषावगमेन जीवत्वशङ्का स्यादिति तन्निरासार्थम् आनन्दमयाधिकरणशेषत्वेन एतदधिकरणारम्भ इति, अयमर्थो यद्यपीत्यादिसङ्गतिग्रन्थेनाभिप्रेतः।

अन्तरादित्याधिकरणम्। अन्तरधिकरणमिति वा।

सू० अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

---

[1] तत्राप्यन्नमयस्येति पा०।

सू० इदमाम्नायते छान्दोग्ये "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः

टी० "अन्तस्तद्धर्मोपदेशात्" विषयं दर्शयति "इदमि"ति, य एष इति प्रसिद्धवन्निर्देशाच्चानुवादरूपत्वशङ्का, अस्यार्थस्य प्रमाणान्तराप्राप्तत्वात् यदाग्नेयोऽष्टाकपाल इतिवत्, आदित्यशब्दो दित्यदित्यादित्यपत्युत्तरपदाद् ण्य"इत्यण्यप्रत्ययान्तो मण्डलवाची "य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्निति" बृहदारण्यके "य एतस्मिन्मण्डलेऽर्चिषि पुरुष"इति तैत्तिरीयके च पुरुषस्य मण्डलवर्त्तित्वश्रवणात्, हिरण्मयशब्दो रमणीयत्वपरः हिरण्मय इति रूपसामान्याच्चन्द्रमुखवदिति हि वाक्यकारः दृश्यते–योगिभिरित्यर्थः "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरि"ति, श्रुत्यैकार्थ्यात् "य एवं वेदे"त्युत्तरत्रोपासनविधानादुपासनार्थमारोपितरूपपरमिदं वाक्यमिति नाशङ्कनीयम् "न सन्दृशे तिष्ठति रूपमस्ये"त्युक्त्वा "हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ती"ति, "यदा पश्यः पश्यते रुक्मवर्णमि"ति, प्रकरणे "मनसा तु विशुद्धेने"ति, विशुद्धमनोग्राह्यत्वोक्तेः अत आरोपिताकारो दुष्टमनोग्राह्यः न च रूपमस्येति स्वरूपमुच्यते षष्ठीस्वारस्यभङ्गप्रसङ्गात्, अतो विग्रहविशिष्टस्य विशिष्टमनोग्राह्यत्वात् विग्रहपारमार्थ्यम् । किंच दृश्यत इति वर्त्तमानव्यपदेशाच्च उपासनाया आरोपितत्वमयुक्तम्, आत्मन्यारोप्यमाणं हि गरुडत्वं न ततः पूर्वं केनाप्यवगम्यते, इह तूपासनविधानात्प्रागेव विद्यमानताऽनेन वर्त्तमानव्यपदेशेन प्रतीयते, अतो, वास्तवत्वं दृश्यत इत्यनेन पूर्वपूर्वोपासकप्रवाहैरारोपेणानुसन्धीयमानत्वमुच्यत इति चेत् न अशब्दत्वात्, न ह्यारोप्यं दृश्यत इति श्रूयते दृश्यत्वमेवारोपितत्वमिति चेत् न व्युत्पत्तिविरोधात् "दृश्यते त्वग्र्यया बुद्ध्ये"ति, दृश्यतयोक्तपरमात्मस्वरूपस्याप्यवास्तवत्वप्रसङ्गाच्च तन्मिथ्यात्वं प्रमाणविरुद्धमिति चेत्

तुल्यम् "आदित्यवर्णन्तमसः परस्तादि"ति, तमसः परस्तात् स्थितस्य विग्रहस्य स्वरूपस्यैव मिथ्यात्वं हि प्रमाणविरुद्धम् अतो वास्तवत्वसिद्धिरशरीरत्वश्रुतेरेवकारो वक्ष्यते "तस्य यथेत्य"स्य वाक्यस्य भाष्य[1]कारेण बहुधाः पूर्वपक्षतया सिद्धान्तत्वेन चोक्ताः, तत्रार्थत्रयस्य पूर्वपक्षत्वं तत्स्वभावादेवावगतं कपिरादित्यः "कपृ चलन"इति धातोर्निष्पन्नः कपि-शब्दः क पिबतीति च, कपिर्विभस्तितेजनमिति च वैदिकप्रयोगः, तस्यासं मण्डलं यथाऽऽदित्यमण्डलं हृदयपुण्डरीकं च परमात्मन उपासनस्थानं तथा तस्योपासकस्याक्षिणी अप्युपासनस्थानमित्येकोऽर्थः

मू० उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद तस्य ऋक् च साम च गेष्णावित्यधिदैवतम्, अथाध्यात्म अपि अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते

टी० अयं नोपपद्यते तथा हि ,अग्निश्चेन्द्रश्चेर्निवद्पवादक च-शब्दाद्यभावेऽपि समानविभक्त्यन्तयोः पदयोः स्वतःप्राप्तसामानाधिकरण्यस्वारस्यभङ्गः पुण्डरीकसदृशे पुण्डरीकशब्दो गौणः स्यात् हृदयपुण्डरीकमिति प्रयोगस्तु पुरुषव्याघ्र इतिवदुपमितं व्याघ्रादिभिस्सामान्याप्रयोग इति सूत्रविहितसमासत्वादुपमानोपमेयवाचकशब्दसद्भावाच्च मुख्य एव अत्र तु तदभावाद्गौणत्वमवर्जनीयम् उपासनस्थानमिति प्रथमान्तपदाध्याहारः उपासकस्येति षष्ठ्यन्तपदाध्याहारश्च तत्परिहाराय तस्येत्युपासकपरत्वे सत्यप्रकृतपरामर्शित्वमनन्तरवाक्यस्यषष्ठ्यन्तशब्दविरुद्धार्थता च स्यात् द्विर्थ्याद्रूपवर्णनप्रकरणानौचित्यञ्च नामविधिवाक्यात्पूर्वं रूपकथनं ह्युचितं य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्निति दक्षिणस्याक्ष्णः उपासनस्थानत्वश्रवणादक्षिणी इति द्विवचनविरोधश्च, ऊर्ध्वमक्षिविद्याया उक्तत्वादिह तदुक्त्यनपेक्षत्वादस्य वाक्यस्य पुनरुक्तिश्च, अन्तरादित्यविद्यायां य एषोऽन्तरादित्य इति स्थानस्योक्तत्वात् अक्षिविद्यायां च य एषोऽन्तरक्षिणीति स्थानस्योक्तत्वादुभयत्र स्थान-

[1] वांष्यकारेणेति पा० ।

विध्यपेक्षा नास्तीत्यनाकाङ्क्षितत्वादिदं वाक्यम् अनन्वितं स्यात्, अन्तरादित्य इत्यादित्यमण्डलस्य स्थानतया विहितत्वादेवमक्षिणीत्यक्ष्णः स्थानत्वे विहिते सति स्थानभेदाद्रूपभेदेन विद्याभेदादेकवाक्येन विद्याद्वयस्य विधातुमशक्यत्वाच्च वाक्यभेदः स्यात्, स चैकवाक्यत्वे सम्भवति नोपपद्यते, कप्यासम्पुण्डरीकस्य दृष्टान्ततयाऽनूद्य एवमक्षिणि इत्यक्ष्णः स्थानत्वस्य विधेयत्वङ्गम्यत इति चेत् तथा चान्तरादित्य इत्युपक्रमविरोधः, उपक्रमे आदित्यमण्डलस्यानुवाद इति चेत्तथा सति इयमक्षिविद्यैव स्यात् तथा चान्तरादित्यविद्येत्याख्याविरोधः अक्षिविद्यायामेतद्विद्योक्तरूपाद्यतिदेशानुपपत्तिश्च न केवलं कप्यासवाक्यमात्रस्य अपि तु कृत्स्नाया अन्तरादित्यविद्यायाः पुनरुक्तिश्च स्यात् उभयोरप्यक्षिविद्यात्वाविशेषात् रूपादिवैषम्याभावाच्च, तस्मादस्य वाक्यस्य उपासनस्थानविधिपरत्वमनुपपन्नं कपिर्मर्कटः तस्यासं जघनप्रदेशः मर्कटपृष्ठभाग्य मुच्यत इति यावत्, तदप्ययुक्तं मर्कटपृष्ठम्पुण्डरीकञ्च किमुपमानद्वयम् उतैकोपमा तत्रोपमाद्वित्वमयुक्तं स्वतःप्राप्तसामानाधिकरण्यपरित्यागप्रसङ्गात् श्लाघ्यार्थतया निर्वाहे सम्भवत्यपि हीनोपमाश्रयणायोगाच्च, यद्येकोपमा तथा सति मर्कटपृष्ठसदृशपुण्डरीकसदृशे इत्युक्तं स्यात् तदा कप्यासपदस्य गौणता स्यादिति कप्यासमीषद्विकसितमित्यपरोऽर्थः तत्राप्यन्तार्थानौचित्यञ्चास्त्येव तथाप्यवयवशक्त्या वा रूढ्या वा ईषद्विकासपरत्वन्नास्तीति सोऽप्ययुक्तः एवं शब्दार्थस्वभावपर्यालोचनायामिदमर्थत्रयं पूर्वपक्षतया वाक्यकाराभिप्रेतमित्यवगतम् । अर्थान्तरत्रयन्तूपपन्नं कम्पिबतीति कपिरादित्यः तेनास्यते क्षिप्यते विकस्यत इति कप्यासन्तथाह वाक्यकारः "आदित्यक्षिप्तं वा श्रीमत्त्वा"दिति, कम्पिबतीति कपीनालं तस्मिन्नास्त इति कप्यासम्, अपचितावपि पङ्कजात् नालस्थस्य शोभातिशयोऽस्तीति सोऽत्र विवक्षितः, कं जलम् आस उपवेशन इति धातुरपिपूर्वकः वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरिति वचनादपेरकारलोपः कप्यासं सलिलस्थमित्युक्तं भवति । एवमस्यार्थत्रयस्योपपन्नतया वाक्यकारेण सिद्धान्ततयोक्तत्वमभिप्रेत्य हि भगवता भाष्यकारेण वेदार्थसङ्-

यद्दे ऽभिहितं—गम्भीराम्भस्समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षण इति, गेष्णौ—गानविशेषौ, अधिदैवतं—देवतायामुपासनम्, अध्यात्मम्—आत्मन्युपासनम् अध्यात्मशब्दो देहवचनः अमुष्य—आदित्यस्यस्य आदित्यतद्धर्मोपदेशादिति वा अक्षिणि तद्धर्मोपदेशादिति वा न सूत्रितम्, अपि त्वन्तच्छब्दस्सूत्रकारेण प्रयुक्तः अन्तश्शब्दस्य अन्तर-

भू० सैवर्क्तत्साम च तदुक्थ्यं तद्यजुः तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नामे"ति तत्र सन्दिह्यते किमयमक्ष्यादित्यमण्डलान्तरवर्त्ती पुरुषः पुण्योपचयनिमित्तैश्वर्य आदित्यादिशब्दाभिलप्यो जीव एव एषः? आहोस्वित्तदतिरिक्तः परमात्मे?ति किं युक्तम्? ।

दित्ये ·अन्तरक्षिणीत्युभयत्र श्रवणाद्विद्याद्वितयमपि सङ्गृहीतमित्यभिप्रायेणाक्षिविद्यावाक्यमप्युदाहृतं, संशयं दर्शयति "तत्रे"ति, शरीरसम्बन्धापहतपाप्मत्वादियोगात्संशयः आदित्यादिशब्दाभिलपनीयो जीव एवेति । यत्र यत्र प्रकरणेषु करणकलेवरावस्थशरीरसम्बन्धेन जीवत्वशङ्का तेषाम्प्रकरणानां सर्वेषां परमात्मप्रदर्शनार्थमयम् अधिकरणारम्भ इत्याभिप्रायेणादिशब्दः प्रयुक्तः, अत एव हिरण्यगर्भादिजीवेभ्योऽन्य इति अधिकरणोपसंहारे मध्ये चादित्यादिजीवव्यावृत्तय इति चोक्तं, वेदान्तवेद्यङ्कारणं ब्रह्म किं प्रकृष्टगुणयो जीव? उत नेति विचारः, तदर्थमानन्दमयः किं जीव? उत परमात्मे?ति, तदर्थमन्तरादित्येऽन्तरक्षिणि च वर्त्तमानः किं जीवः? उत परमात्मा? तदर्थं सशरीरत्वं जीवस्यैव? उत परमात्मनोऽपि सम्भवती?ति तदर्थं शरीरसंबन्धस्यैच्छिकत्वं सम्भवति नेति तदर्थमपापमोदितत्वादिश्रुतिः अजायमानः इत्यादिश्रुतिरादित्यवर्णत्वादिश्रुतिश्च कथमैच्छिकत्वं ज्ञापयति ने?ति तदर्थमिह पाप्म—शब्दः किं पापमात्रपर? उत पुण्यपापरूपकर्मपरः? अपहतशब्दः प्रध्वंसपरः? उतात्यन्ताभावपरः? अजत्वादिश्रुतिः

किं कर्मकृतजन्मविषयतया व्यवस्थापयितुं शक्यते? नेति आदित्यवर्णत्वादि-श्रुतिः विग्रहस्य प्रकृति प्रकृतादिविलक्षणत्वज्ञापिका न वे? ति चतुर्धा संशयः अत्र पूर्वे कल्पाः पूर्वपक्षाः, अपरे तु सिद्धान्ता यदा पाप्म—शब्दः पापमात्रपरः अपहृतिः प्रध्वंसः जन्मनिषेधश्च न कर्ममूलजन्मविषयः, विग्रहश्च न प्राकृतविलक्षणः तदानीं विग्रह[1]मात्रस्येच्छामूलत्वासम्भवेन कर्मनिबन्धनतया परस्मिन्नसम्भवे जीवासाधारण्यादादित्यादिवर्तिपुरुषो जीव इत्यन्तरादित्यवाक्यैकार्थ्यादानन्दवल्लीवाक्येऽपि जीवस्य प्रतिपाद्यत्वात्सर्वाणि कारणवाक्यानि प्रकृष्टपुण्योपचयजीवपराणीति पूर्वः पक्षः, यदा पाप्म-शब्दः कर्ममात्रपरः अपहत—शब्दोऽत्यन्ताभावपरः, जन्मनिषेधश्च कर्ममूलजन्मविषयः, विग्रहश्च प्राकृतविलक्षणः ।

पू० उपचितपुण्यो जीव एवेति, कुतः सशरीरत्वश्रवणात्, शरीरसम्बन्धो हि जीवानामेव सम्भवति कर्मानुगुणप्रियाप्रिययोगाय हि शरीरसम्बन्धः, अत एव हि कर्मसम्बन्धरहितस्य मोक्षस्य प्राप्यत्वम् अशरीरत्वेनोच्यते "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तन्न प्रियाप्रिये स्पृशत" इति, सम्भवति च पुण्यातिशयात् ज्ञानाधिक्यं शक्त्याधिक्यञ्च, अत एव लोककामेशत्वादि तस्यैवोपपद्यते, तत एव चोपास्यत्वं फलदायित्वं च पापक्षपणकरत्वेन, मोक्षोपयोगित्वञ्च मनुष्येष्वप्युपचितपुण्याः केचित् ज्ञानशक्त्यादिभिरधिकतरा दृश्यन्ते, ततश्च सिद्धगन्धर्वादयः ततश्च देवास्ततश्चेन्द्रादयः,

टी० तदानीं विग्रहस्येच्छतया तस्य जीवात्परस्मिन्नसम्भवाच्चादित्यादिन्यान्तर्वर्तिपुरुषपर इति तदैकार्थ्यादानन्दवल्लीप्रतिपाद्यपरमात्मत्वम-

[1] विग्रहसम्बन्धस्येच्छामूलत्वासम्भावे नेति पा० ।

विचार्यमिति तदेकपठ्यात्सर्वाणि कारणवाक्यानि परमात्मपराणीति सिद्धान्तफलमिति भावः । पूर्वपक्षमाह "उपचिते"ति, जीवानामेव शरीरसंबन्धमुपपादयति "कर्मानुगुणे"ति, कर्मकृतप्रियाप्रियेयोगार्थत्व व्यतिरेकेणोपपादयति "अत एव ही"ति, अत एव—शरीरसम्बन्धस्य कर्ममूलप्रियाप्रियेयोगार्थत्वादेव हि कर्मसम्बन्धरहितो मोक्षो ऽशरीरतया प्राप्यतयोच्यत इत्यर्थः, ज्ञानशक्त्यादिकं लोककामेशितृत्वञ्च कथं जीवस्य स्यादि ?- त्यत्राह "सम्भवति चे"ति, तथा दर्शयति "मनुष्येष्वि"ति, अत्र स एको मानुष आनन्द इत्याद्यभिप्रेतम्, आदित्येन्द्रप्रजापतिप्रभृतीनां सर्वेषाङ्कारणत्वश्रवणात्कागतिः ? स्यात् पुण्यहेतुत्वात् तयित्वञ्च स्यादित्यत्राह—

सू० अतो ऽब्रह्मादिष्वन्यतम एव एवैकैकस्मिन्कल्पे पुण्यविशेषेणैवं प्रभूनमैश्वर्य्यं प्राप्तो जगत्सृष्ट्याद्यपि करोतीति जगत्कारणत्वजगदन्तरात्मत्वादिवाक्यमस्मिन्नेवोपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते, अतो न जीवातिरिक्तः परमात्मा नाम कश्चिदस्ति । एवं च सत्यस्थूलमनण्वह्रस्वमित्यादयो जीवात्मन एव स्वरूपाभिप्राया भवन्ति, मोक्षशास्त्राण्यपि तत्स्वरूपतत्प्राप्त्युपायोपदेशपराणीत्येवं प्राप्तेऽभिधीयते

## "अन्तस्तद्धर्मोपदेशात्"

सू० अन्तरादित्ये अन्तरक्षिणि च यः पुरुषः प्रतीयते स जीवादन्यः परमात्मैव, कुतः तद्धर्मोपदेशात्- जीवेष्वसम्भवँस्तदतिरिक्तस्यैव परमात्मनो धर्मोऽयमपहतपाप्मत्वादिः स एष सर्वेभ्य पाप्मभ्य उदित इत्यादिनोपदिश्यते, अपहतपाप्मत्वं हि अपहतकर्मत्वं कर्मवश्यतागन्धरहितत्वमित्यर्थः ।

टी० "अतो ब्रह्मादिष्वि"ति, सर्वविधिवाक्यानां जीवपरत्वमाह "जगद्धि"त्यादिना, अपहतपाप्मत्वादिश्रुतयो नाकर्मवश्यतां वदन्ति अपि तु केवलपुण्यहेतुकशरीरवतः पापराहित्यं पापहेतुकम्पुण्यहेतुकं मिश्रहेतुकञ्चेति त्रिविधं शरीरमित्यभिप्रायेण उपचितपुण्यविशेष इत्युक्तं, मोक्षशास्त्राणि उपायपराण्युपेयपराणि चेत्यर्थः । राद्धान्ते सौत्रं प्रतिज्ञापरमन्तः-शब्दं व्याचष्टे "अन्तरादित्य"इति, द्वितीयसूत्रस्यान्य-शब्दान्वयलब्धं साध्यधर्ममाह "स जीवादन्य"इति, तेन फलितमाह "परमात्मे"ति, हेत्वंशमवतार्य व्याचष्टे "कुत इत्यादि"ना, तद्धर्मोपदेशादिति तच्छब्दपरमात्मपरः परमात्मनि सिद्धे तद्धर्मोपदेशः तद्धर्मोपदेशात्परमात्मत्वसिद्धिरिति परस्पराश्रयशङ्कायामाह "जीवेष्वसम्भवाच्चे"ति, जीवेष्वसम्भवन्नयं धर्मो जीवातिरिक्तस्वाश्रयप्रतिपादकत्वं श्रुतेर्निश्चाययति योग्यतापरामर्शसहकृतेयं श्रुतिः परमात्मानमभिधत्त इत्यर्थः यद्यपि सर्वेभ्यः पाप्मभ्य उदित इति विषयवाक्यन्तथाप्यपहतपाप्म-शब्दप्रयोगश्रुत्यन्तरस्मरणार्थः, अपहतकर्मत्वमिति पाप्मभ्य इति पाप्मा-शब्दः पुण्यपापरूपोभयविधकर्मपर इत्यर्थः, हि-शब्दः परमात्मप्रकरणेषु पाप-शब्दस्य पुण्यपापपरत्व प्रसिद्धं सूचयति "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानो ऽतो निवर्त्तन्ते इति न साधुना कर्मणा भूयान्नो एवासाधुना कनीयाच्च कर्मणा वर्धते नो कनीयानि"त्यादिश्रुतयोऽस्मिन्नर्थे प्रमाणं स्युः,पाप्मानः कालजरामृत्युशोकादयस्सङ्घातत्वादिति वाक्यकारवचः लौकिकत्वे सत्यनिष्टफलसाधनत्वरूपप्रवृत्तिनिमित्तयोगादुपपन्नं च पुण्यस्यापि पाप-शब्दाभिधेयत्वं मुमुक्षपेक्षया स्वर्गादीनामनिष्टफलत्वं अमूनि यानि स्थानानि देवानां परमात्मनः इत्यारभ्य एते वै निरयास्तात ? स्थानस्य परमात्मन इति, नाकपृष्ठगमनं पुनरावृत्तिलक्षणं क्व जपोवासुदेवेति मुक्तिबीजमनुत्तममिति च,

सू० कर्माधीनसुखदुःखभागित्वेन कर्मवश्या हि जीवा अतोऽपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः ॥

टी० पाप्मशब्दव्याख्यानमुखेन शब्दव्यावृत्तिरुक्ता । अथापहत शब्दव्याख्यानमुखेन मुक्तव्यावृत्तिमाह "कर्मे"ति, जीवव्यावृत्तिं स्फुटयति "कर्माधीने"ति, । अपहतपाप्म–शब्दोऽसङ्कोचात्स्वस्मिन् परत्र च पाप्मनामपघा[1]तकत्वं स्वतस्सिद्धं वदतीति हेयप्रत्यनीकत्वसिद्धिः । नन्वपहत–शब्दः प्रध्वंसपरः उत्पन्नस्यैव प्रध्वंसः, अतः प्रध्वस्तपाप्मत्वश्रवणात्परमात्मनः कर्मसम्बन्धस्य प्राग्विद्यमानत्वङ्गम्यते, अतश्च परस्य प्रध्वस्तपाप्मनः परमात्मनो मुक्तादवैलक्षण्यं स्यात् यदि नित्यासंस्पृष्टपाप्मत्वं विवक्षितं तदत्यन्तमशाब्दम्परस्य कुर्वतोऽकुर्वतो वा पाप्मासंस्पृष्टत्वं प्रथमे व्याघातः कर्तृसमवेतत्वात्क्रियायाः, द्वितीये त्वस्मदादेरवैलक्षण्यं, न ह्यकृतेन कर्मणा कश्चिल्लिप्यत इति, उच्यते, परस्य तावत्पाप्माभावपराणि वाक्यानि विविधानि श्रूयन्ते "सर्वेभ्यः पाप्मभ्य उदित" इति पाप्मभ्य उदयः श्रूयते, अपहतपाप्मेति पाप्मनामपहतिः श्रुता, "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्त्तन्त" इति तरतेः प्राप्तिवाचित्वादप्राप्तिर्निवृत्तिश्च श्रूयते "स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानि"ति कर्मफलास्पर्श उच्यते, तत्र प्रथममुदित–शब्दस्य मुख्यार्थो ऽनुपपन्नः विभोः परस्य पापान्वितदेशाद्दूरगमनायोगात्तस्मादश्लेषलक्षणा युक्ता, तत्राकृतकर्माश्लेषस्य सर्वसाधारणस्य प्रतिपादनवैयर्थ्यं स्यात् अतः कृतानामपि कर्मणामश्लेषपरत्वं तस्य वाक्यस्याभ्युपगन्तव्यं क्रियायाः कर्तृसमवेतत्वेन स्वरूपासंश्लेषस्य व्याघातादेव फलासंश्लेषपरत्वमाश्रयणीयं तत्र हेत्वकथनात्तिरोधानाविर्भावयोः निष्प्रामाणिकत्वाच्च तस्य स्वाभाविकत्वं नित्याविर्भूतत्वञ्च सिद्धम्, अपहत–शब्दस्य हिंसारूपधात्वर्थासम्भवाद्विनाशं लक्षयन् क्रियास्वरूपस्य नश्वरतया स्वरूपनाशनप्रतिपादनवैयर्थ्यात् फलजननशक्तिविशिष्टरूपेण नाशं प्रतिपादयति, यथा "सर्वमेकपदे नष्टं दानमश्रोत्रिये यथे"ति नाश–शब्दो दानस्य फलजननशक्तिहानिं प्रतिपादयति तद्वत् अत ईश्वरेण कृतानि पुण्यपापसजातीयानि कर्माणि न शुभाशुभफलजननशक्तानि स्युः, ईदृशम् अपहतपाप्मत्वञ्च पूर्वोक्तन्यायाविरुपा-

१ अपघातकत्वमिति द्राविडः पाठः ।

धिकत्वित्याविर्भूतस्त्वाभ्युपगन्तव्यं "स न साधुना कर्मणेत्यत्राप्यसाधुकर्मफलास्पर्शस्तत्प्रायश्चित्तरूपसाधुकर्मनिबन्धन इति शङ्का च साधुकर्मप्रतिषेधेनैव निरस्ता। न च साधुकर्महतिस्तस्यापि निवर्त्तकविद्याबलादिति शङ्कनीयं ध्यानकर्तृत्वानुक्तेः, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेति तस्य ध्येयत्वश्रवणाच्च साधुकर्मनिषेधादेव ध्यानकर्तृत्वमपि निषिद्धम्भवति यज्ञादिकमुपासनात्मकञ्च कर्म हि साधुकर्मशब्दाभिलापार्हमतः प्रायश्चित्तादिभिर्विनैव कर्मफलाश्लेष इत्यपहतपाप्मशब्दस्यो हन्तिधातुश्च हानिपरः, न च प्रध्वंसपर, नैतं सेतुमित्यत्रापि कृतानामेव कर्मणां फल जननशक्तिमत्त्वविशेषेण प्राप्त्यभाव उच्यते, अतो निरुपाधिकमपहतपाप्मत्वन्नाम कर्मवश्यतागन्धरहितत्वं, न च परमात्मनि फलजननासमर्थस्य तत्कृतकर्मणस्तं प्रति न पाप्मत्वमिति श्रुतिवाक्यस्यपाप्म-शब्दस्य अमुख्यत्वमिति वाच्यम् अनन्तख्यातिनिर्वीर्यं जरयामास तद्विषं जपन्विषधरो हर इत्यादिषु निर्गीर्णजीर्णविषानीश्वरादीन् प्रति विषशब्दस्येव मुख्यत्वोपपत्तेः, तत्रत्रेषु प्रत्यवायकरपापसजातीयानाङ्कर्मणां स्वलीलाकृतानामपि फलजननशक्तिप्रतिभटत्वन्नाम कश्चिदयमीश्वरस्य स्वभावविशेषः, परिशुद्धात्मस्वरूपविषय स्याप्यपहतपाप्मशब्दस्यायमेवार्थः स तु तस्य तिरोधानार्हः प्रतिबन्धनिवृत्तावाविर्भवति, ईश्वरस्य तु तिरोधानानर्हानित्याविर्भूत इति विशेषः अतोऽपहतपाप्मत्वविषयश्रुतीनां यथोक्त एवार्थ इति तेन धर्मणान्तरादित्येऽवस्थितस्य भगवतो जीववैलक्षण्यसिद्धिः, । गुणान्तराणामपि जीवेष्वसम्भवं दर्शयति— (शेषमग्रे)

---

## खण्डनखण्डखाद्यम्।

(*Continued from page* 651. Vol. XI.)

मू० "तदेतदपेशलं, किं तदनुगुणं प्रमेयान्तरं यदनभ्युपगमे विरोधमुद्भावयेदित्युच्यते द्वयमभ्युपगम्यं सम्भवति एकं तावद्यदनभ्युपगमे कथैव प्रवर्तयितुमशक्या यथा प्रमा-

णादि सर्वकथकासिद्धम्, इतरत्तु प्रतिदर्शनमिदं किञ्चि-द्यथा क्षणभङ्गेश्वरादि तच्च यदि प्रथममभ्युपगम्यैव कथाप्रवृत्तिरिति तत्स्वीकारे पश्चात्तदनङ्गीकारेपसिद्धान्तः तन्न([1]) स्वव्याघातकत्वेन तस्य([2]) भवद्भिरेव जातित्वाङ्गीकारात् ॥

टी० ॥ तदिदमाचार्यमतं खण्डयति— ""तदेतदि"ति । सर्वतन्त्रसिद्धान्तो हि प्रमाणं धर्मादिवत्तदनभ्युपगमेप्यपसिद्धान्तो न भवेत् किन्तु जात्युत्तरमेव स्यात् प्रमाणानभ्युपगमे स्वपक्षसाधकानुमानप्रयोगो व्याहतः धर्म्यनभ्युपगमे च कुत्र धर्मिणि स्वहेतुं प्रयुञ्जीतान्ततोसाधकतासाधकानुमानमपि प्रमाणमेव तत्रापि च धर्म्यपेक्षैवेति स्वव्याघातकत्वाज्जात्युत्तरमेतदित्यर्थः । यद्यपि नैतज्जात्युत्तरं प्रमाणं नास्ति धर्मी वा नास्तीत्येतावन्मात्राभिधानस्य चतुर्विंशतौ जातिष्वनन्तर्भावात् तथापि प्रमाणं नास्तीतिवाक्यमात्मानमपि शब्दरूपं प्रमाणं व्याहन्त्येवेति जातिसामान्यलक्षणाक्रान्ततया आकृतिगणत्वेनाभ्युपगतायामनुपपत्तिसमायां जातावन्तर्भाव एव अत एव तत्र महाविद्यानुमानानामन्तर्भावः ॥ एवं धर्मी नास्तीतिवाक्यमात्मानमेव धर्मिभूतं व्याहन्तीति जात्युत्तरमेव

मू० [a]जातेश्च निरनुयोज्यानुयोगे निवेशात्([3]) नापि द्वितीयः दर्शनभेदनियतं हि क्षणभङ्गादि यत्कथारम्भेभ्युपगन्तव्यं तत्किं [b]तदभ्युपगमस्य प्रकृतसाध्यापोहाद्युपायतया([4]) उत तन्नान्तरीयकतया [c]न प्रथमः क्षणभङ्गसाधनप्रस्तावेऽपोहादिपरित्यजतः सौगतस्यापसिद्धान्ताभावापत्तेः तदभ्युपगमस्य तदनुपायत्वात् [d]* अन्योन्याभ्युपगमोपायत्वे चा-

(१) सर्वं तन्त्रसिद्धान्तसिद्ध प्रमाणाद्यनभ्युपगमेप्यपसिद्धान्तो न भवेत् किन्तु जात्युत्तरमेवेत्याह-स्वेति-

(२) प्रमाणाद्यनभ्युपगमस्येत्यर्थः ।

(३) अत्र 'नापसिद्धान्तत्वम्'-इति पूरणीयम्-।

(४) अपोहलक्षणप्रकृतसाध्याभ्युपायतयेत्यर्थः ।

न्योन्यविचारस्य निष्पत्तिरेव न स्यात्(१) विचारे सति प्रमाणिकत्वप्रतीतौ तदभ्युपगमः तदभ्युपगमे च विचार इति [c] अभ्युपगतोपायत्यागविषय एवापसिद्धान्तो नान्य च? *—इति चेन्न,

टी० ॥ ननु जातेरपि निग्रहस्थानतयापसिद्धान्ते एव निग्रहे तदन्तर्भावोऽस्त्वित्यत आह—। [a] "जाते"रिति ॥ [b] "तदभ्युपगमस्ये"ति । क्षणभङ्गाभ्युपगमापोहयोरुपायोपेयभावो वा क्षणभङ्गाभ्युपगमापोहयोः व्याप्यव्यापकभावो वेति विकल्पार्थः । तन्नान्तरीयकं यस्येति बहुव्रीहिः ॥ [c] "न प्रथम"इति । क्षणभङ्गाभ्युपगमस्योपायत्वं यद्यपोहे साध्ये तदा क्षणभङ्गं साधयतः सौगतस्यापोहत्यागेऽपसिद्धान्तो न भवेत् अपोहाभ्युपगमस्य क्षणभङ्गासाधकत्वादित्यर्थः । क्षणभङ्गापोहाभ्युपगमयोरन्योन्यसिद्धुपायतायां दोषमाह—। [d] "अन्योन्ये"ति । नन्वन्योन्यविचारेऽन्योन्याभ्युपगमापेक्षायामन्योन्याश्रयो नतु • स्वस्वसूत्रकारवचनप्रामाण्यादभ्युपगमे तथाच तादृशत्यागे स्यादेवापसिद्धान्त इत्याह—। [e] "अभ्युपगते"ति ॥

मू० [a] यो हि यदुपायस्तमभ्युपगम्य विचारः प्रवर्त्तयितव्य इत्येतदुक्तः [b] तस्योपायतया तेन विचारः प्रवर्तते इत्येव युक्तं नतु तदभ्युपगमोपि तावता तदुपायः स्यात्तस्य च तदभ्युपगमस्य च पृथक्कारणत्वाभ्युपगमे प्रमाणस्योपदर्शयितुमशक्यत्वात् [c] शक्यत्वेपि वा तच स्वाभ्युपगमः किमित्यभ्युपेयो वैयर्थ्यात् [d] दुपायत्वादेव परस्य तथाप्रतीत्युपपत्तेः * अत्रोच्यते—

टी० ॥ स्वरूपसत एवोपायत्वं नत्वभ्युपगमोपि पृथगुपायो येन कथावसरे तदभ्युपगमः प्रयोजकः स्यादित्याह—। [a] "यो ही"ति ॥ ननु

(१) अत्र 'अन्योन्याश्रयात्"—इति हेतुः पूरणीयः । क्वचित्पुस्तके त्वन्योन्यविचारस्य निष्पत्तिरेव स्यादिति पाठस्तत्र त्वन्योन्यविचारस्य=अन्योन्याश्रयस्येत्यर्थोऽनुसन्धेयः ।

तदभ्युपगमोऽप्युपाय एवेत्यत आह–। [b]"सस्वे"ति ॥ नन्वभ्युपगमस्याप्युपायत्वं व्यवस्थाप्यं यत्र तत्र तदनभ्युपगमेऽपसिद्धान्तः स्यादित्यत आह–। [c]"शक्यत्वे"इति । तत्रापि सूत्रकाराभ्युपगम एव तथास्यात्तथाच कथाकाले तदभ्युपगमस्त्वेव न तन्त्रमित्यर्थः । तथाच तत्स्वीकारे पश्चात्तदनभ्युपगमेऽपसिद्धान्त इति लक्षणं तत्र न गतमेवेति भावः ॥ ननु(१) तस्योपायत्वं कथाकाले तदभ्युपगममन्तरेण कथं परो बोधनीय इति तदा तदभ्युपगम आवश्यक इत्यत आह–। [d]"उपायत्वादेवे"ति । तत्कालीनतदभ्युपगममन्तरेणापि परस्य तदुपायत्वप्रतीतिसम्भवादित्यर्थः ॥

मू०· [a]उपेयमुपायेन साधयतोऽपेयवदुपायस्यापि सत्त्वमभ्युपगन्तव्यमिति पश्चात्तदनभ्युपगमेऽपसिद्धान्तोपन्यासः सावकाशः ? *–[b]असत उपायत्वानुपपत्तेः [c]तद्धि्युपायत्वेनोपन्यसना(२)त्तत्सत्त्वाभ्युपगमस्तस्य साक्षादश्रुतोऽप्यसत्त्वेनाभ्युपगम्यमानस्योपायत्वस्वीकारानुपपत्त्या कल्पनीयः कल्पितेन तेन श्रूयमाण(३)तत्सत्त्वानभ्युपगमविरोधादपसिद्धान्तो ऽभिधेयः [d]एवं च सति सत्त्वानभ्युपगमे एवो(४)पायत्वानुपपत्तिप्रसङ्गो दूषणमुच्यतामुपजीव्यत्वात् [e]तदुपन्यासमन्तरेण(५)श्रूयमाणतदीयाभ्युपगमस्य दर्शयितुमशक्यत्वात् कृतं तदुपजीविना पश्चात्तनेनापसिद्धान्तेन [f]अत एव न द्वितीयः तन्त्रान्तरीयकाभ्युपगमो हि तत्सत्तानभ्युपगमे साध्यस्याभावापत्त्यानुमन्तव्यः तथाच [g]सैव तद्दूषणमस्त्वनभ्युपगमे कृतं [h]तयाभ्युपगमं परिकल्प्य [i]तेनानभ्युपगमविरोधाद्-

(१) ननु कथाकाले तदभ्युपगममन्तरेण तस्योपायत्वं (प्रति) परः कथं बोधनीय इत्यन्वयः ।

(२) तद्धि्युपायत्वेनोपन्यसनात्तस्य साक्षादश्रुतोऽपि तत्सत्त्वाभ्युपगमः कल्पनीय इत्यन्वयः ।

(३) श्रूयमाणेत्यस्याऽनभ्युपगमपदार्थेनान्वयः ।

(४) एवकारः प्रसङ्ग इत्यस्यानन्तरं द्रष्टव्यः उपायत्वानुपपत्तिप्रसङ्ग एवेति ।

(५) तदुपन्यासमन्तरेण, उपायत्वानुपपत्तिप्रसङ्गलक्षणदूषणोपन्यासमन्तरेणेत्यर्थः ।

पसिद्धान्तोपन्यासेनेति [j] एवं निग्रहान्तरखण्डनमूहनीयम् ॥

इति श्रीश्रीहर्षमिश्रविरचितानिर्वचनीयसर्वस्वे खण्डनखाद्ये निग्रहानिरुक्तिर्द्वितीयः परिच्छेदः ॥

टी० ॥ ननूपायत्वान्यथानुपपत्त्या कथाकाले वादिनस्तदभ्युपगमः कल्पनीयस्तथाच पश्चात्तदनङ्गीकारे स्यादेवापसिद्धान्तस्तच्च निग्रहस्थानान्तरं साङ्कर्याभावादित्याशङ्कते—। [a] "उपेयमि"ति । [b] "असत"इति । सत्त्वेनानभ्युपगम्यमानस्येत्यर्थः ॥ [c] "तर्ही"ति । अश्रूयमाणः कथाकालीनस्तदुपायत्वाभ्युपगम उपायत्वान्यथानुपपत्त्या कल्पनीयस्तदुपायत्वानभ्युपगमे चापसिद्धान्तो निग्रहो भवेत् तथाचानभ्युपगमेन तदुपायत्वभङ्गः क्षणमेवानिष्टमापाद्यतां किमपसिद्धान्तोपन्यासेनेत्यर्थः । अनभ्युपगमश्रूयमाणोऽभ्युपगमश्च कल्पनीय इति तयोरभ्युपगमानभ्युपगमयोर्विरोधोपसिद्धान्तस्तथाच सत्त्वानभ्युपगमात्तदुपायत्वक्षतिरित्येव दूषणमुचितमित्याह—। [d] "एवं चे"ति । उपजीव्यत्वमेवाह—। [e] "तदुपन्यासमि"ति ॥ तन्नान्तरीयकतया वेति यद्विकल्पितं तद्दूषयति—। [f] "अत एवे"ति । यदि क्षणभङ्गसत्तानाभ्युपेयते त्वया तदा तद्व्याप्यस्या(१)पोहस्यैव सिद्धिर्न स्यादिति व्यापकनिवृत्त्या व्याप्यनिवृत्तिरेव दोषो नत्वपसिद्धान्त इत्यर्थः । [g] "सैवे"ति । साध्याभावापत्तिरेवेत्यर्थः तयेति साध्याभावापत्त्येत्यर्थः ॥ [h] "तेने"ति । कल्पिताभ्युपगमेन सहेत्यर्थः । यद्यसौ क्षणभङ्गं नाङ्गीकुर्यात्तदापोहलक्षणं साध्यमेव न सिद्ध्येदिति क्षणभङ्गाभ्युपगमेन कल्पितेन [i] तदनभ्युपगमविरोधोपसिद्धान्तः स्यात्तथाच साध्यानुपपत्तिरेव दोषोऽस्तु किमपसिद्धान्तेनेति भावः ॥ [j] "एवमि"ति । सामान्यशब्दानां यत्किञ्चिद्विशेषमादाय पर्यवसानात्सर्वनामपदानां चाविशेषकत्वादव्याप्त्यतिव्याप्त्यसम्भवा यथायथमूहनीया इत्यर्थः ॥

इति श्रीखण्डनखाद्यटीकायां द्वितीयः परिच्छेदः समाप्तः ॥ (शेषमग्रे)

(१) सा=क्षणभङ्गसत्ता व्याप्या यस्यापोहस्य तस्यैव सिद्धिः प्रमितिर्न स्यात् तथा चाप्रमितस्य तस्यापोहलक्षणस्य व्यापकस्य निवृत्त्याऽभावापत्त्या तद्व्याप्यस्य क्षणभङ्गस्याप्यभावापत्तिरेव स्यादित्यर्थः । अधिकं तु न तद्धानिरिति न्यायादग्रेऽभिधास्यमानसाध्याभावापत्तेरपि दूषणत्वं न विरुद्धम् ।

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

(*Continued from page* 11. VOL XII.)

"अस्मदो द्वयोश्च" ॥ अस्मद इत्यभिधेयसम्बन्धेन षष्ठीत्याह । 'अस्मदो योर्थ इति' । पञ्चम्यां तु तत्र वर्त्तमानस्य तिङन्तस्य न स्यादिति भावः । 'एकत्वे द्वित्वे चेति' । ननु चास्मच्छब्दः प्रत्यगात्मनि वर्त्तते स चैकस्तस्य कथं द्वित्वयोगः, एकत्वमपि तस्यायुक्तं विशेषणमव्यभिचारात् । उच्यते । यदा ऽन्यत्रात्मत्वमध्यारोप्यते ऽयं मे द्वितीय आत्मेति यदा वा 'त्यदादीनि सर्वैर्नित्य' मिति एकशेषः क्रियते तदा सम्भवत्यनेकार्थत्वम् । अथ यत्रैवास्मच्छब्दो बहुवचनान्तः प्रयुज्यते तत्र कथं द्वित्वैकत्वविशेषावसायः, प्रकरणादाराच्छब्दस्येव दूरान्तिकयोः । 'अहमिति' । 'ङेप्रथमयोरम्' · 'त्वाहौ सौ' । 'वयमिति' · । 'मपर्यन्तस्य' 'यूयवयौ जसि' 'शेषे लोपः' । 'आवामिति' । 'युवावौ द्विवचने' प्रथमायाश्च द्विवचनइत्यात्वम् । 'सविशेषणस्येति' । त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नता इत्यत्रोन्नतत्वमेव विधीयते न च विधेयोर्थो विशेषणमिति अतिदेशो भवत्येव । 'युष्मदीति' । भाष्यवार्तिकयोरपठितमपि शिष्टप्रयोगदर्शनात्पठितम् ॥

"फल्गुनीप्रोष्ठपदानां च नक्षत्रे" ॥ 'चकार इत्यादि' । के चिदाहुः, ज्योतिषामाावस्थिकी नक्षत्रता चन्द्रयोगे सति भवति अन्यदा तु ज्योतिष्ट्वमेव चन्द्रयोगश्च द्वयोः समुदितयोरिति द्वयोरेव बहुवचने सिद्धे चकारेण द्वयोरित्यनुकर्षन्नाचार्यो ज्ञापयति नक्षत्रग्रहणं ज्योतिष उपलक्षणमिति, उपलक्षितज्योतिष्ट्वमेकैकस्याप्यस्तीति एकनिवृत्त्यर्थं द्वयोरित्यनुकर्षणीयमिति । तदेोच्यते । सत्यप्येकैकस्य ज्योतिष्ट्वे न तत्र फल्गुनीशब्दो वर्तते एवं प्रोष्ठपदादिशब्द, अनुगतावयवभेदः समुदाय एव ताभ्यामुच्यते, 'अत एव' 'छन्दसि पुनर्वस्वोरेकवचनं' 'विशाखयोश्चे' ति

सूत्रारम्भः नक्षत्रशब्दश्च निघण्टुषु तारकापर्याय एव पठितः, वेदे ऽपि 'नक्षत्रेभिः पितरो द्यामपंशन्' त्वं नक्षत्राणां मेध्यसि चित्रं, नक्षत्रमुदगात्पुरस्तादित्यादौ ज्योतिर्मात्रवचन एव नक्षत्रशब्दः, 'नक्षत्रेण युक्तः काल' इत्यत्र वृत्तिकारो वक्ष्यति कथं पुनर्नक्षत्रेण पुष्यादिना कालो युज्यतइति तदप्यनुपपन्नमावश्यिके नक्षत्ररूपे पुष्यादिभिर्योगस्य कादाचित्कत्वात्, तिष्यपुनर्वस्वोरित्यत्र च उदितौ तिष्यपुनर्वसू दृश्येते इत्यं चन्द्रयोगेप्युदाहरिष्यते प्रत्युदाहरणे च ज्योतिःस्वभावमेवार्थं दर्शयति तिष्यपुनर्वसवो माणवका इति, तस्मान्नायं वृत्तिकारस्य पक्ष आवश्यिकी नक्षत्रतेति। ज्योतिर्मात्रवचन एवायं चकारेण द्वयोरित्यस्यानुकर्षणमपि उद्भूतावयवभेदः समुदायो ऽभिधीयते न त्वेकैकं ज्योतिरिति प्रदर्शनार्थं, प्रोष्ठपदानामिति सप्तम्यर्थं षष्ठी नक्षत्रइति वा षष्ठ्यर्थे सप्तमीत्याह । 'फल्गुन्यो द्वयोरित्यादि' 'नक्षत्रयोरिति"। प्रत्येकमभिसम्बध्यते सूत्रे तु व्यत्ययेनैकवचनम्। अत्राप्यर्थस्य बहुत्वातिदेशं इति विशेषणस्यापि भवति। 'पूर्वे फल्गुन्याविति'। फल्गुनीभ्यां फल्गुनीभिर्वा युक्तः काल इति अण् 'लुबविशेषे' 'लुपि युक्तवद्व्यक्तिवचने'। 'फल्गुन्यौ माणविके इति'। फल्गुन्योर्जाते 'फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ' विति टिड्ढाणञिति ङीप्॥

"छन्दसि पुनर्वस्वोरेकवचनम्" ॥ 'द्वयोर्द्विवचने प्राप्तइति'। पूर्वसूत्रे चानुकृष्टस्य द्वयोरित्यस्येहाननुवृत्तावपि पुनर्वसुशब्देनोद्भूतावयवभेदस्य ज्योतिर्द्वयस्य समुदायस्याभिधानाद् द्वयोरेवायं विधिरिति दर्शयति॥

"विशाखयोश्च" ॥ किमर्थो योगविभागः, इह चकारेण छन्दसीत्यनुवर्तयिष्यामीति तेनोत्तरत्र छन्दसीति नानुवर्तते ।

तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥ तिष्यपुनर्वस्वोरित्यनेनैव सूत्रेण द्विवचनापेक्षया सप्तमी द्विवचनं नक्षत्रद्वन्द्व इति सत्सप्तमी, नक्षत्रद्वन्द्वे सति तिष्यपुनर्वस्वोरर्थयोर्द्वयोरिवोक्तिर्भवतीति द्वन्द्वापेक्षया षष्ठीद्विवचनं वा । 'तेषां द्वन्द्वइति' ? अत्र तच्छब्दाद् द्विवचनं न भवति वाक्यस्य प्रस्तुतत्वाद्द्वन्द्वार्थेऽवृत्तित्वाद्, अत्र पारिभाषिकयोर्द्विवचनबहुवचनयोर्ग्रहणे बहुवच-

तस्य द्विवचनमादेशः स्यात् तत्र जसादेशे प्रथमाद्विवचने 'जसि चे' ति गुणः स्यात् विशेषणानां च न स्यादिति मत्वाह । 'बहुवचनस्य ऽसङ्गइति' । बहूनामर्थानामुक्तिप्रसङ्ग इत्यर्थः । 'द्विवचनं भवति' । द्वयो- रिवोक्तिर्भवतीत्यर्थः । 'तिष्यपुनर्वसवो माणवका इति' । तिष्यपुनर्वसु शब्दाभ्यां नक्षत्राणो लुपि जातार्थे सन्धिवेलादिसूत्रेणाण् तस्य श्रविष्ठा- फल्गुन्यनुराधेत्यादिना लुक्, नात्र द्वन्द्वो नक्षत्रे वर्त्तते किं तर्हि माणवकेषु तत्रापि न गौणो योगपरम्परया वृत्तिः । 'पर्यायाणामपीति' । पुनर्नक्षत्र- ग्रहणसामर्थ्यादर्थस्यैवायमनपेक्षितोपात्तशब्दस्यातिदेशो भवति तेन पर्या- याणामपि ग्रहणं सिद्ध्यति । 'द्वन्द्वइति किमिति' । तिष्यश्च पुनर्वसू चेति वाक्ये समासेप्युत्तरपदार्थप्रधाने बहुत्वं न सम्भवति तादृशः समा- सश्च न सुलभः बहुव्रीहिश्च न सम्भवति व्यधिकरणत्वात् सङ्ख्यापूर्व्वो द्विगुरप्यपूर्वो ऽव्ययपूर्वो ऽव्ययीभावश्चासम्भाव्य एवेति द्वन्द्व एव भवि ष्यतीति मन्यते । 'यत्तिष्य इत्यादि' । अवयवेन विग्रहउद्भूता- वयवभेदः समुदायः समासार्थः । ननु मुग्धाः पुरुषास्तदाह । 'तिष्यादय एवेति' । क्वचित्तु इमे तिष्यपुनर्वसवो मुग्धा इति पठ्यते, तत्रापि वैक्लव्य- वचनान्मुहेः कर्त्तरि क्तः, अविविक्ता इत्यर्थः । ऋतवो मुह्यन्तीति यथा, 'नक्षत्रसमासएवायमिति' । समुदायसमुदायिनोरभेदादिति भावः । 'सर्वो द्वन्द्व इति' । ननु च एकवद्भावप्रकरणे प्राण्यङ्गादीनां समाहार एव द्वन्द्वः दधिपयआदीनामितरेतरयोग एवेति नियम आश्रितः, ततश्च तस्मिन् प्रकरणे ऽनुपात्तानां 'चार्थे द्वन्द्व' इत्येव समाहारेतरेतरयोगयोर्द्वन्द्वसिद्धिः किं ज्ञापकोपन्यासेन । सत्यं, विपरितोपि नियमः सूत्रे सम्भाव्येत प्राण्यङ्गादीनामेव समाहार इति तस्माद्बहुवचनग्रहणेन, प्राण्यङ्गादीनां नियमस्त्वं ज्ञाप्यते वृत्तादिविभाषाप्रयोजनं तत्रैव वक्ष्यामः ॥

"सरूपाणामेक शेष एकविभक्तौ" ॥ 'समानं रूपं येषामिति सरूपा इति ज्योतिर्जनपदेत्यादिना समानस्य सभावः सह रूपेण वर्तन्त इति सरूपा इति तु न भवति, व्यभिचाराभावात् । रूपशब्दश्चेह श्रोत्र- ग्राह्ये शब्दसम्बन्धिनि स्वरूपे वर्त्तते न चक्षुर्ग्राह्ये शुक्लादौ, शब्दानुशासन-

प्रस्तावात्तदाह । 'सरूपाणां शब्दानामिति' । निर्धारणे चैषा षष्ठी समुदायापेक्ष[1]या वा । अत्र पञ्च पक्षाः सम्भवन्ति । समानपर्याय एकशब्द 'स्तेनैकदिगि' तिवत्समानत्वं च भेदाधिष्ठानमिति पृथक् सर्वेभ्यः समानायां विभक्तौ परत एकः शिष्यत इति प्रथमः । द्वन्द्व इति वर्तते तत्र विरूपेषु सावकाशमपि द्वन्द्वमेकशेषो न बाधते निमित्तत्वात् सरूपाणां द्वन्द्वे कृते समासादेकस्यां विभक्तौ परत इति द्वितीयः । अत्र पक्षे सङ्ख्यावाच्येकशब्दः । ह्रस्वो नपुंसक इत्यतः प्रातिपदिकस्येति वर्त्तते एकविभक्ताविति साङ्ख्योपलक्षणम् । एकविभक्तौ यानि सरूपाणि दृष्टानि तेषां प्रातिपदिकानामेवानैमित्तिक एकशेष इति तृतीयः । विभक्तिशब्दः कारकशक्तिवचनः, विभज्यतेऽनया प्रातिपदिकार्थ इति कृत्वा, एकस्मिन्कारके विवक्षिते यानि सरूपाणि तेषामेकशेषः, कारकं च विवक्षितं स्वनिमित्तां विभक्तिं प्रसूत इति पृथग् विभक्त्यन्तानामेकशेष इति चतुर्थः । सरूपसमुदायादेकस्यां विभक्तौ परत इति पञ्चमः । तत्राद्ये पक्षे वृक्षस् वृक्षस् वृक्षस् इति स्थिते पूर्वयो[2]र्निवृत्तौ स् स् वृक्षस् इति स्थिते मध्यसम्बन्धिनः सोर्हल्ङ्यादिलोपे तदितरयोः श्रवणप्रसङ्गः, एवमाद्यन्तयोरपि निवृत्तौ द्रष्टव्य, परयोर्द्वयोर्निवृत्तावपि शिष्यमाणसम्बन्धिनो लोपासिद्धिरेव, गोदौ वरणा इत्यादौ च पृथक् द्विवचनयोः परत एकशेषे तयोः श्रवणप्रसङ्गः, यत्र हि प्रत्ययनिमित्ता प्रकृतिनिवृत्तिस्तत्र केवलस्यापि प्रत्ययस्य प्रयोगो भवत्येव यथा इयानिति, द्वितीये तु । अश्व अश्व औ इति स्थिते विभक्त्यपेक्षाच्छे[3]षात्पूर्वमन्तरङ्गत्वात्समासान्तोदात्तत्वे कृते यदि पूर्वशेषः सर्वानुदात्तं पदं स्यात् परशेषे तु अश्वशब्दोन्तोदात्तः स्यात्, इह च स्रक् च स्रक् च स्रजौ अन्तरङ्गत्वाद्दृक्पूरब्धूरिति समासान्ते कृते विभक्तेरकारेण व्यवधानाचैकशेषः स्यात्समासान्तो हि समासग्रहणेन गृह्यमाणस्तमेव न व्यवदध्यात् सरूपं तु व्यवदधात्येव, इकग्रहणं वानर्थकं नहि द्वन्द्वाद्युगपदनेका विभक्तिः

१ पेक्षिकेति पा० २ ।
२ पूर्वमध्यमयोरिति पा० २ ।
३ एकशेषाच्चिति पा० २ ।

सम्भवति, यदि पुनरेकविभक्ताविन्येतदकृत्वा द्वन्द्वक्रियानन्तरमेवैकशेष इत्युच्येत एवमपि पादौ पादा इत्यादौ द्विवचनबहुवचने न स्यातां प्राण्यङ्गादीनां समाहार एव द्वन्द्व इति नियमात् । तृतीये तु पक्षे जननीवचनो यो मातृशब्दो यश्च माङ् मान इत्यस्मात्तृचि धान्यमातृवचनः तयोरपि माता मातृभ्याम् इति क्वचिद्विभक्तौ सरूपत्वात्सर्वत्रैकशेषप्रसङ्गः, तथा हरितशब्दाद्वर्णादनुदात्तादिति ङीब्नकारयोर्या हरिणीशब्दः सम्पद्यते यश्च हरिणशब्दाज्जातिलक्षणे ङीषि तयोर्न स्यात् ङ्यन्तयोः सारूप्येऽपि प्रातिपदिकावस्थायामसारूप्यात्, चतुर्थे तु निवर्त्तमानः शब्दो यद्यपि सह विभक्त्या निवर्त्तते शिष्यमाणस्य त्वेकवचनश्रवणप्रसङ्गः, अतः पञ्चमं पक्षमाश्रित्याह । 'सरूपाणां शब्दानामेकविभक्तौ परत इति' । सरूपसमुदायादेकस्यां विभक्तौ परत इत्यर्थः । ननु ङ्याप्प्रातिपदिकादित्येकवचनान्तानां द्वन्द्वस्तत्र चैकत्वं विवक्षितं तत्कथं प्रातिपदिकसमुदायाद्विभक्तिरस्तु प्रत्येकं प्रातिपदिकत्वं समुदायेऽपि त्वर्थवत्त्वात्प्रातिपदिकं, कः पुनः समुदायस्यार्थः परस्परसम्बन्धः, एकैकेन विशकलितोऽर्थ उच्यते समुदायेन तु सम्बन्धः तुल्यजातीयस्य चार्थवत्समुदायस्य समासग्रहणेन निवृत्तिः कश्च तुल्यजातीयः यत्र पूर्वो भागः पदं न चात्रैवमिति समुदायाद्विभक्तिरविरुद्धा सा त्वनुद्भूतावयवभेदत्वाद् द्विवचनं बहुवचनं वा न त्वेकवचनं नावौ जनावौ कर्तारावित्यादावपरत्वादाबादिष्वपि कृतेषु विरूपाणामपि समानार्थत्वादेकशेषः, शेषशब्दोऽयं नागराजे अनन्ते अप्रधाने उपयुक्तादन्यत्र च न वर्त्तते किं तर्हि निवृत्तिमदवस्थान इत्याह । 'एकः शिष्यते इतरे निवर्त्तन्ते इति' । नन्वस्मिन् पक्षे एकग्रहणमनर्थकं नहि समुदायाद्युगपदनेका विभक्तिः सम्भवति, उच्यते । असत्येकग्रहणे पृथक् सर्वेभ्यो विभक्तौ परत इति प्रथमोऽपि पक्षः सम्भाव्येत, अतो यत्र पक्ष एकैव विभक्तिः सरूपाणां सम्भवति स एवैकग्रहणादाश्रीयते । अथ वा चतुर्थे पक्षे ग्रन्थः, कथं तर्हि विभक्तौ परत इति नहि कारकशक्त्या शब्दानां पौर्वापर्यं भवति, उच्यते, इष्टवाची परशब्दः एकस्यां विभक्ताविष्टायां एकस्मिन्कारके विवक्षित इति यावत् । ननु चोक्तं शिष्यमाणस्यैकवचन-

श्रवणप्रसङ्ग इति न वेदानीं निवर्त्तमानसङ्ख्याविशेषादुपजायमाने द्वित्व-बहुत्वे द्विवचनबहुवचने उपजनयितुमुत्सहेते प्रत्ययान्तत्वेनाप्रातिपदिकत्वात्, नैष दोषः, सहविवक्षायामेकशेषः का पुनः सहविवक्षा, उक्तमत्र

अनुद्भूतेव भेदानामेका प्रख्योपजायते ।
यदा सहविवक्षां तामाहुर्द्वन्द्वैकशेषयोः ॥

इति । अयमर्थः । यदा बहवोऽर्था एकस्यां बुद्धौ उपारूढा यथा पुरोऽवस्थितस्य हस्तस्य पञ्चाङ्गुलयः ते चैकस्मिन्गुणे क्रियायां वा तथैव विनियुज्यन्ते शोभना इति वा दृश्यन्त इति वा, तदा सहविवक्षा, तथाहि । आत्मनो या बुद्धिस्तां परत्र संक्रमयितुं प्रयोक्त्रा शब्दः प्रयुज्यतइति । यदि चावयवाः पृथक् पृथगवधारिताः स्युः यथा वातायनगतेन क्रमेण गच्छन्तः ततो भिन्नैरेव शब्दैः प्रत्येकं पर्यवसायिभिरेकवचनान्तैरभिधीयेरन् समुदायाकारा त्वनुस्यूतावयवभेदैका बुद्धिस्तां परत्र सङ्क्रमयितुमिच्छता तदनुरूपं शब्दः प्रयोक्तव्यः, न च तादृशस्य समुदायस्यासाधारणः कश्चिच्छब्दोऽस्तीत्यवयवशब्दैरेवासौ प्रतिपाद्यः, उपपद्यते चावयवशब्दैरेवाभिधानं समुदायसमुदायिनोरभेदात् स चैकैक एवावयवशब्द उद्भूतावयवभेदसमुदायप्रतिपादनाद् द्विवचनान्तो बहुवचनान्तश्च प्रवर्ततइति नैकवचनश्रवणप्रसङ्गः। यद्येवमेकेनैवावयवशब्देन तादृशस्य समुदायस्याभिधातुं शक्यत्वाच्च यावदवयवशब्दप्रयोगप्रसङ्गः । अथ मतम्, अन्योन्यसन्निधावेव समुदायरूपार्थाभिधानशक्तिः प्रादुर्भवति कथं तर्हि एकशेषारम्भे एकस्य सा भवति नहि सतोऽसती शक्तिरेकशेषवचनेन कर्तुं शक्यते । उच्यते। विरूपेष्वन्योन्यसंनिधाने समुदायार्थाभिधानशक्तिः प्रादुर्भवति, पटुगुप्तावित्यत्रापि ह्युद्भूतावयवभेदं समुदायं प्रतिपादयितुमवयवशब्द एव प्रत्येकं द्विवचनान्तः प्रवर्त्तते ऽन्यथा द्विवचनबहुवचनायोगात्स्वार्थमात्रपर्यवसायिभिरवयवशब्दैः क्रमेणैवोच्चरणादर्थोऽपि प्रतीयते क्रमेण चानेकार्थप्रतीतौ द्विवचनबहुवचने न भवतः, समुच्चयश्च भवति तद्यथा वाक्ये पटुश्च गुप्तश्चेति,

१ प्रतिपादनशक्तिरिति पा० २ ।

अतो विरूपेष्वेवं दर्शनात्सरूपेष्वपि द्वन्द्वाशङ्कायां सरूपेष्वेकस्यैवानेकार्थप्रतिपादनशक्तिरस्तीति वचनेन व्युत्पाद्यते। अन्ये तु तृतीयमपि पक्षं सन्यारूढं वर्णयन्ति, सरूपाणां शब्दानामेकविभक्तौ परत एकशेषो भवति एकविभक्तौ परतः सरूपाणामित्यन्वयो न त्वेकशेषइति, एकस्मिन्कारके विवक्षिते एकविभक्तौ वा परतो ये सरूपा दृष्टाः शब्दास्तेषामित्यर्थः । तत्र च शिष्यमाण एव निवर्त्तमानस्याप्यर्थमाचष्टे अग्निचिदिति प्रत्ययनिवृत्तौ प्रकृतिवदिति द्विवचनबहुवचने यथायोगं भवतः, तत्र[1] यदुक्तं हरितहरिणयोर्ङ्यन्तयोर्न स्यादिति, तच्च, प्रातिपदिकग्रहणं नानुवर्त्तते तेन ङ्यन्तयोरेव सारूप्याद् भविष्यति, यदप्युक्तं मातृशब्दयोः प्रसङ्ग इति अर्थविप्रतिषेधाच्च भविष्यति कृते ह्येकशेषे ताभिरित्यनुप्रयोगे पुमर्थो न गम्यते तैरित्युक्ते स्त्र्यर्थः, वक्ष्यमाणस्य वा एवकारस्येहानुकर्षणादेकविभक्तौ यानि सरूपाण्येवेत्याश्रयणात्परिक्लेतृवाचिनश्चाप्तृन्तृजिति सर्वनामस्थाने दीर्घविधानादसारूप्यादेकशेषाभावः । अत्र पक्षे एकग्रहणं चिन्त्यप्रयोजनं तदेव पक्षेषु पक्षेषु त्रयः स्वीकृताः । 'वृक्षश्च वृक्षश्चेति' । अनैमित्तिक एकशेष इति पक्षे विभक्तौ सारूप्यं दर्शयितुं विभक्त्यन्तेन विग्रहः, कथं पुनर्विग्रहः यावता एकशेषवृत्तिर्नित्या नैतद्वृत्त्यासमानार्थवाक्य प्रत्येकमत्र विवक्षा अतश्च प्रत्येकं यतोत्र भेदनिबन्धेन समुच्चयश्चशब्देन द्योत्यते भिन्नार्थमपि किञ्चिन्मात्रसाधर्म्याद्वाक्यं भवत्येव समानार्थन्तु बाध्यतएव, यथा वृक्षौ च वृक्षौ च वृक्षा वृक्षाश्च वृक्षाश्च वृक्षा इति, ननु यद्येतावदेकार्थाभिनिवेशिनः शब्दा आकाशद्रव्यत्वगोत्वादयो न तेषु द्विवचनबहुवचनेनाप्येकशेषः, ये त्वनेकार्थाभिनिवेशिनः गोः शुक्लः पाचक इत्यादयस्तेष्वनुस्यूतं किञ्चिदद्योतमेकं गोत्वादिनिमित्तं वक्तव्यम्, अन्यथा सम्बन्धग्रहणासम्भवाच्च गवादिषु तद्गुणतो जातिर्निमित्तं न यथा शुक्लादिष्वपि गुणमात्रनिष्ठेषु गुणिनिष्ठेषु तु स्वगतया जात्या एकीभूतो गुणः, एवं पाचकादिष्वपि गोत्वाश्वत्वे सामान्ये निःसाम्यानि सामान्यानी-

---

१ तत्रेति नास्ति ३ पुस्तके ।

त्यत्र भिन्नेष्वभिन्नप्रत्ययहेतुत्वं तावेतावित्यादौ परोक्तत्वप्रत्यक्षत्वादिकम् । अभावाश्चत्वार इत्यत्र निरूपाख्यत्वमित्यादि सर्वत्र द्रष्टव्यं, निमित्त-तद्वतोश्च तादात्म्यं सर्वं हि वस्तु एकं नाना च गवादिरूपेणैकं खण्ड-मुण्डादि प्रातिपदिकरूपेण नाना, एवं स्थिते यदि तावज्जातिरेव शब्दा-र्थस्तदा तस्या एकत्वान्नानेकशब्दप्रसङ्गः, अथाप्युभयम्, एवमपि जातिरूपे-णैव शब्दो द्रव्यमभिधत्ते न प्रातिस्विकेनाकारेणेति नास्त्यनेकशब्दप्रसङ्गः, केवलद्रव्यपदार्थपक्षेपि अस्मिन्विषये ऽनेकार्थाभिधानसामर्थ्यं शब्दस्य द्व्यादिपदवदभ्युपगन्तव्यम्, अन्यथा सत्यप्येकशेषे तन्न स्यादिति सिद्ध-मेकशब्दत्वं द्रव्यगतसङ्ख्याप्रतिपादनाय द्विवचनबहुवचने भविष्यतो नार्थ एतेनेत्याशङ्क्याह । 'प्रत्यर्थमित्यादि' । एकैकस्मिन्नर्थे यस्माच्छब्दानां निवेश-स्ततोऽनेकेन शब्देनानेकस्याभिधानं सिद्ध्यति तत्रैवं स्थिते ऽनेकार्थाभिधाने कर्त्तव्ये यावन्तस्तेऽर्थास्तावतां शब्दानां प्रयोगः प्राप्नोति इष्यते चैकशब्दत्वं तस्मादेकशेष आरभ्यते । अयमभिप्रायः । केवलं जातिपक्षे अक्षाः पादा माषा इत्यादौ अनेकशब्दत्वं स्यान्न हि बिभीतकदेवनशकटाक्षेष्वनु-स्यूतं किञ्चित्सामान्यमस्ति, अत एव तत्र व्युत्पत्तिर्भेदेनापेक्ष्यते एवमुभय-पक्षेपि, केवलद्रव्यपक्षेपि वृक्षश्चेति वाक्ये ऽनेकशब्ददर्शनाद्विरूपेषु द्वन्द्व-दर्शनाच्चारम्भणीयमेतदिति । 'रूपग्रहणं किमिति । अन्तरङ्गत्वादद्वे-यत्वादुपदेशानपेक्षत्वाच्च रूपकृतमेव समानत्वं ग्रहीष्यतइति प्रश्नः । प्रतिपत्तिलाघवं च समानानामित्युच्यमाने भवति रूढिशब्दत्वेन[1] रूढि-रिति तुल्यार्थावगमात् रूपग्रहणे तु वर्तिपदार्थमवगम्यान्यपदार्थोवगन्तव्य इति गौरवं भवति । 'भिन्नेप्यर्थे इति' । स्वं रूपमित्यत्र रूपग्रहणेन ज्ञापितं शास्त्रे रूपवदर्थोपि तन्त्रमिति, ततश्चार्थरूपाभ्यां समानत्वं ग्रहीष्यतेति भावः । 'एकग्रहणं किमिति' । शेष इत्येकत्वं विवक्ष्यतइति प्रश्नः । 'द्विबहूरिति' । द्वित्वबहुत्वविषयस्यानेकस्य शब्दस्येत्यर्थः । ननु द्वयो-र्बहूनां चेति बहुवचनप्रसङ्गाद् इह शेषविधानद्वारेण संस्क्रियमाणत्वा-च्छिष्यमाणं प्रधानं प्रधाने च सङ्ख्या न विवक्ष्यते यथा ग्रहं संमार्ष्टीति,

१ रूढिरिति पा० २ ।

विषम उपन्यासः । संमार्गे विधौ द्वितीयानिर्देशात् ग्रहाः प्रधानभूताः संमार्गस्तु तेषां संस्कारः संस्कारो नाम तस्य भवति यच्छास्त्रान्तरे प्रयोजनवत्यां क्रियायां साधनत्वेन विनियुक्तं संस्कृतस्य वा यस्य विनियोगो द्रव्यमात्रस्य रूपसंस्कारोऽनर्थकः स्यात् यदिह संमार्गसंस्कारो विधीयमानः शास्त्रान्तरे विनियुक्तं ग्रहमपेक्षते तत्र नव सङ्ख्या ग्रहाः श्रुता इति तदपेक्षः[1] संमार्गविधिर्नवानामपि भवितुमर्हति, ग्रहमित्येकवचनं तु कर्मत्वमात्रमभिधायकतार्थं भविष्यति, इह तु शेषस्य वाक्यान्तरे ऽनवधारणादिदमेवोत्पत्तिवाक्यमिति विवक्षणीया सङ्ख्या पशुमालभेतेतिवत् सत्यम् । इदमेवैकग्रहणं ज्ञापकं शास्त्रान्तरानवगतेऽपि प्रधाने सङ्ख्या न विवक्ष्यत इति तेन कर्त्तुरीप्सिततममित्यत्र ईप्सिततमस्य सङ्ख्याया अविवक्षा सिद्धा भवति । 'शेषग्रहणं किमिति' । साध्वनुशासनप्रक्रमात्सरूपाणामेकः साधुर्भवतीति विज्ञास्यत इति भावः । 'आदेशो माभूदिति' । असति हि शेषग्रहणे 'षष्ठी स्थानेयोगे' ति वचनात् स्थानषष्ठी स्यात् ततश्चादेशः स्याद् अस्तु शब्दतोऽर्थतश्चान्तरतमो भविष्यति, नैवं शक्यं, स्वरे हि दोषः स्याद् द्वयोरश्वशब्दयोः समुदायः स्थानी तत्र च द्वावुदात्ताविति द्व्युदात्त आदेशः स्यादेतेन द्व्यनुदात्तत्वं व्याख्यातम् 'एकविभक्ताविति किमिति' । नानाविभक्तौ वैरूप्यमवश्यंभावीति भावः । 'पयः पय इति' । एकविभक्तावित्यस्मिन्नसति सरूपाणां सर्वत्र सह प्रयोगो न स्याद् अथ क्रियमाणेऽप्यस्मिन्नैमित्तिकपक्षे कस्मादेवात्र न भवति एतदपि ह्येकस्यां विभक्तौ परतः सरूपं दृष्टमेव । नैष दोषः । एकग्रहणमस्मिन्पक्षे अतिरिच्यत इत्युक्तम्, तत्सामर्थ्यादेकस्यामेव विभक्तौ विषयभूतायां भविष्यति अत्र तु सत्येकशेषे पर्यायेण भिन्ना विभक्तिः स्यात्, अथ वा किं न एतेन पक्षेण क्लिश्यता व्याख्येयेन सन्तां द्वावेव पक्षौ इह एकश्चेति सङ्ख्याशब्दानामेकशेषो न भवति अनभिधानाद् विंशत्यादीनां तु भवत्येव ॥

"वृद्धो यूना तल्लक्षणश्चेदेव विशेषः" ॥ वृद्धशब्दोऽयं लोके चरमे

१ संस्काराविधिरिति पा॰ २ ।

वयसि प्रसिद्धो युवशब्दो द्वितीये तयोरिह ग्रहणे तरुणश्च वृद्धश्च युवा च स्थविरश्चेत्यादौ स्यात्। 'वृद्धिर्यस्याचामादिस्तद्वृद्धं' 'जीवति तु वंश्ये युवा' अनयोः शास्त्रीययोर्ग्रहणे औपगवश्चानन्तर औपगविश्च युवेत्यादावपि स्यादतो युवशब्दस्य तावत्कृत्रिमस्य व्यवहितापत्यवाचिनोत्र ग्रहणं तत्साहचर्याद्वृद्धशब्दस्यापि व्यवहितापत्यवाचिनः शास्त्रान्तरे प्रसिद्धस्य[1] ग्रहणमित्याह। 'वृद्धशब्द इत्यादि'। गोत्रग्रहणे त्वपत्याधिकारादन्यत्र लौकिकस्य ग्रहणमित्यपत्यमात्रस्य ग्रहणं स्यात्. क्व चित्पुनरधिकोपि ग्रन्थः पठ्यते, यूनेति सहयोगएषा तृतीयेति स इदानीन्तनैः प्रक्षिप्तः यूना सह वचन इति, सहशब्द प्रयुञ्जानः सूत्रे सहयोगे तृतीयेति दर्शयति, अत एव ज्ञाप्यते सहविवक्षायामेकशेष इति। 'विशेषो वैरूप्यमिति'। शब्दस्य वृद्धयुवनिमित्तस्य ग्रहणात्तान्य इति भावः। पदार्थं दर्शयित्वा तदयमर्थ इत्याह। 'वृद्धयुवनिमित्तकमेवेत्यादि'। 'समानायामाकृताविति'। आकृतिः शब्दस्य प्रवृत्तिनिमित्तं गर्गापत्यत्वादि, क्व चित्तु प्रकृताविति पाठः, प्रकृतिर्मूलप्रकृतिर्गर्गशब्दादिः। 'गार्ग्यश्चेत्यादि'। गर्गवत्सशब्दाभ्यां गर्गादित्वाद्यञन्ताभ्यां यूनि 'यञिञोश्चेति' फक्। 'गार्ग्याविति'। प्रकरणादिनात्र जीवद्वंश्यतावसायः, शब्दस्य गोत्रद्वयस्यापि साधारणत्वाद्, यद्येवं गार्ग्यश्च गार्ग्यश्चेति गोत्रशब्दयोरेव पूर्वेणैकशेषोस्ति प्रकरणादिनैव युवत्वमन्यतरस्य गंस्यते यूनो हि द्वावाकारौ जीवद्वंश्यत्वं पौत्रप्रभृत्यपत्यत्वं च, तत्र विशेषाविवक्षायां सामान्यशब्दो न निवर्तते यथा वस्तुनो भूतानद्यतनेपि अभूवपो विबुधसख इति लुङ् भवति, तस्मावार्थ एतेन। उच्यते। प्रकरणानपेक्षया शब्देन जीवद्वंश्यत्व प्रतिपादयितुकामो द्वन्द्वं प्रयुञ्जीत गार्ग्यगार्ग्यायणाविति, अतो द्वन्द्वनिवृत्त्यर्थं वचनं प्रत्युदाहरणे तु सर्वत्र द्वन्द्वो भवति गार्ग्यवात्स्यायनाविति। नन्वत्र विशेषान्तरसद्भावेपि तल्लक्षणो विशेषो विवक्षित इति स्यादेकशेषः। नैव दोषः। एवमर्थवचनं व्यज्यते योसौ विशेषो

१ प्रसिद्धं तस्येति पा० २।

यस्य सद्भावात्पूर्वेणाप्राप्तिः स तल्लक्षणश्चेदिति एवं च यावदुद्देश्य विधेय-सम्बन्धात् सूत्रारम्भहेतुभूतस्य कृत्स्नस्य विशेषस्य तल्लक्षणत्वविधानात् कुतोऽत्र प्रसङ्गः, इह तु प्राग्रति भागवित्तिभागवित्तिकाविति कृत्स्नस्य विशेषस्य तल्लक्षणत्वा,देवकारेण तु व्यावर्त्यते, नह्यत्र तल्लक्षण एव विशेषस्तदाह। 'कुत्सा सौवीरत्वं चापरो विशेष इति'। विशेषहेतु-रित्यर्थः॥

"स्त्री पुंवच्च"॥ स्त्रीत्वस्य वैरूप्यकारणस्याधिक्याद्वचनम्। पुंव-च्चेति वक्ष्यामीति च अत्र स्त्रीशब्दस्य स्वरितत्वे स्त्र्यधिकारविहितानां टाबादीनां ग्रहणादयमर्थो भवति पुंवत् स्त्रीप्रत्ययो न भवति। यथा पुंवद्रस्यास्तनविन्यभावातिदेशस्तद्वत् ततश्च स्त्रीत्वस्यानिवृत्तत्वात् गार्ग्यश्च स्त्रियो गार्ग्यायणश्च गर्गा इत्यत्र 'यञञोश्चे' ति लुङ् न स्यात् अस्त्रियामित्यधिकारात् प्रसज्यप्रतिषेधेयन्दोषः पर्युदासे तु शिष्यमाणस्य निवर्त्तमानार्थाभिधायित्वादस्ति स्त्रीसदृशोऽर्थ इति सिद्ध्यति, इह तु गर्गान्पश्येति स्त्रीत्वस्यानिवृत्तत्वाच्चायं पुंसां बहुत्वे शस् उत्पन्न इति नत्वं न स्यात्, स्त्र्यर्थवृत्तेः शब्दस्य तु ग्रहणे स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवतीत्यर्थः स्यात् स्त्रीत्वं त्वनुवृत्तमेव तत्र यद्यपि गर्गा इति बहुषु पुंशब्दस्य रूपमिति तस्मिन्नतिदिष्टे जसादिषु न दोषो नत्वं तु विभक्ति-कार्यं न स्यादेवं स्त्र्यर्थग्रहणे तु पुमर्थातिदेशात्तत्प्रतिबद्धानां कार्याणां सिद्धिरिति न कश्चिद् दोषः, स्त्रीति चोक्ते अर्थ एव प्रतीयते शब्दानामर्थपर-त्वात्स्वरूपग्रहणन्त्वनाशङ्क्यमेव वृद्धो यूनेत्यनुवर्त्तनाद् अतोऽर्थस्यैव ग्रहण-मित्याह। 'स्त्र्यर्थः पुमर्थवद्भवतीति'। 'गार्गी चेत्यादि'। गार्ग्यवात्स्य शब्दाभ्यां 'यञश्चेति' ङीप्। 'दाक्षीति'। 'इतो मनुष्यजातेः' दाक्षी इति ङीषि निवृत्ते इञन्ताद् द्विवचने प्रथमयोरिति दीर्घः। इदमपि द्वन्द्व निवृत्त्यर्थमेव वचनम्॥

(शेषमये)

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

श्रीगणेशाय नमः ।

(*Continued from page* 18. Vol. XII.)

अविरोधे हेत्वन्तरमाह—

स्मर्य्यमाणो विरुद्धोऽपि साम्येनाऽथ विवक्षितः ।

अङ्गिन्यऽङ्गत्वमाप्तौ यौ, तौ न दुष्टौ परस्परम् ॥ ६५ ॥

तत्र स्मर्य्यमाणत्वेनाविरोधो यथा—

अयं स रशनो(क)त्कर्षी पीनस्तनविमर्दनः ।

नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

समरभुवि निपतितं भूरिश्रवसो हस्तं समालोक्य तद्वधूनामिदं वचनम्· तथाच शृङ्गाराङ्गमपि पूर्वावस्था स्मर्य्यमाणतयोद्दीपनविभावत्वेन करुणपरिपोषिकेत्यदोषः ॥

साम्यविवक्षया यथा—

दन्तक्षतानि करजैश्च विपाटितानि

प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।

दत्तानि रक्तमनसा मृगराजवध्वा

जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥

एकत्राङ्गिनि विरुद्धयोरङ्गत्वं द्विधा, तुल्यकक्षतया ऽङ्गाङ्गिभावेन वा, साक्षात्परस्याङ्गभावमापद्य वा· तत्राद्येनाविरोधो यथा—

(क) रशनेति क्वचित्· परम्, काञ्चीवचनः 'श'मध्यः प्रयुक्तो ऽस्ति नतु समध्यः ।

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव, गलद्बाष्पाम्बुधौताननाः, ।
भीत्या भर्तृकरावलम्बितकरा,स्त्वद्वैरिनार्य्यो(क), ऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥

अत्र चाटुके या राजविषया रति,स्तत्र करुणशृङ्गारावुभावपि साक्षादङ्गमिति तन्निर्वाहणैकध्याकुलयोस्तयोरेकराजकार्य्योद्यतयोरिव भृत्ययोः सहजतो विरोधोपि न दोषाय.(ख) यथा—

एहि, गच्छ, पतो,त्तिष्ठ, वद, मौनं समाचर, ।
एवमाशायहयस्तैः क्रीडन्ति धनिनो ऽर्थिभिः ॥—

इत्यत्र प्रधानक्रीडायामङ्गभावेन भावाभावयोरपि न विरोधः· एहीति क्रीडतीतिप्रकारेण द्वयोरप्यङ्गत्वात्· तस्माद्विधेययोरिव विरोधो दोषाय,नत्वनूद्यमानयोरपीति परमार्थः· प्रकृतोदाहरणे च पुनरप्युद्यद्विवाहा इवेत्युत्प्रेक्षा· तेन "एहि गच्छे"तिवत् प्रतापे द्वयोरपि साक्षादेवाङ्गत्वम्, तादृशोयं प्रभावो, येनाऽऽसां पुनर्विवाह उत्प्रेक्ष्यत इति प्रतीतिपर्य्यवसानात् । अङ्गाङ्गिभावेन पराङ्गतयाऽविरोधो यथा—

क्षिप्तो हस्तावलग्नः, प्रसभमभिहतो ऽप्याददानोंऽशुकान्तं,
गृह्णन्केशेष्वपास्त,श्चरणनिपतितो नेक्षितः संभ्रमेण, ।
आलिङ्गन् यो ऽवधूतस्त्रिपुरयुवतिभिः साश्र(ग)नेत्रोत्पलाभिः,
कामीवाऽऽर्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥

अत्र त्रिपुररिपुप्रभावातिशयस्य करुणोङ्गं, तस्य तु शृङ्गारः· नन्वेवं करुणस्य प्राधान्ये तत्रैव विश्रान्तेरुभयोरङ्गत्वासम्भवे कथमुदाहरणत्वमिति न वाच्यं, शृङ्गारापेक्षया हि तस्य प्रधान्येपि न तत्रैव विश्रान्तिरिति तस्यापि प्रभावं प्रत्यङ्गत्वैव, यतः, यथा पूर्वं कामुकः करावलम्बादिकमऽकार्षी,त्तथा सम्प्रति शराग्निरित्युपमानतया शृङ्गारपरिपोषितेन करुणेन प्रभा-

(क) त्वच्छत्रु—इति, तद्वैरि—इति च क्वचित्पाठः ।
(ख) दोष इति पा· ।
(ग) साम्बु—इति पा· ।

यातिशय एव प्रकर्षमानीयते· नचाङ्गाङ्गस्य कथमङ्गत्वमिति वाच्यम्, तदुपकृतस्याङ्गस्योपकारविशेषाधायकतया तस्याप्युपकारकत्वात्· यदुक्तं

"गुणकृतात्मसंस्कारं प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्त्तते" ॥

इति· ननु प्राक्प्रतिपादितरूपवेद्यान्तरसंपर्कशून्यरसस्य न रसान्तरेण विरोधो, नाप्यङ्गाङ्गिभाव इत्यसम्बद्धमेवैतत्सर्वमिति चेन्न, रसशब्देनात्र प्रकरणे भावस्याभिधानाद्, रस्यत इतिव्युत्पत्तेः ॥ ६५ ॥

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे सप्तम उल्लासः[क] ॥

## ॥ अथाऽष्टम उल्लासः ॥

एवं दोषे निरूपिते गुणालङ्कारौ प्राप्तावसरौ· तयोर्गुणस्यान्तरङ्गतया प्राथम्यम्· विप्रतिपद्यन्ते तु केचिद्गुणालङ्कारयोर्भेदे· किञ्च, सामान्यतो-लक्षिते विशेषलक्षण[ख]मुचितमिति कारिकाद्वयेन तयोःस्वरूपप्रदर्शन [ग] मुखेन भेदकं लक्षणमाह–

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतव,स्ते स्युरचलस्थितयो गुणाः ॥ ६६ ॥

अङ्गिनः शरीरेष्वात्मवत् काव्ये प्राधान्येन स्थितस्य रसस्य धर्माः साक्षात्तदाश्रिता·इत्यर्थः· अचलस्थितय इत्यऽपृथक्स्थितयः, अव्यभिचारिस्थितय इति यावत्· अव्यभिचारश्च रसेन तदुपकारेण च· तेन रसं विना ये नावतिष्ठन्ते, ऽवतिष्ठमानाश्चाऽवश्यं रसमुपकुर्वन्तीत्यर्थः· अत एवा नयोर्व्यतिरेकमलङ्कारे वक्ष्यति· एवं च रसस्योत्कर्षहेतुत्वे सति रसधर्मत्वं, तथात्वे सति रसाव्यभिचारिस्थितित्वम्, अयोगव्यवच्छेदेन रसोपकारकत्वं चेति लक्षणत्रयं गुणानां द्रष्टव्यम्· अलङ्कारमात्रभेदकं तु सत्यन्तभागवि·

---

(क) सप्तमोल्लासइति पु· ।
(ख) विशेषतोलक्षणमिति पा· ।
(ग) स्वरूपदर्शनेति पु· ।

मुत्कमिदमेव ग्राह्यम्, अन्यथा विशेषणवैयर्थ्यात्· चण्डीदासस्तु-रस-धर्मत्वमात्रं लक्षणम्· उत्कर्षहेतुत्वं तु गुणशब्दप्रवृत्तिबीजमित्याह· तद-युक्तम्. शृङ्गारत्वादौ धर्मेऽतिव्याप्तेः· ननु रसधर्मत्वमेषामसिद्धम्· कथ-मन्यथा नीरसेऽपि सुकुमारादिवर्णशालिनि मधुरादिव्यवहारो, रसवत्यपि ईदृग्वर्णाभावेऽमधुरादिव्यवहार इति· उच्यते,-शौर्यादयस्तावदात्मन एव धर्मा इत्यविवादम्· दृश्यते तु क्वचिदशूरेऽप्याकारमहत्त्वादियोगिनि शूरव्यवहारः, शूरेऽप्याकारलाघवादियोगिन्यशूरव्यवहारश्च·तत्कस्य हेतोः? अथ क्वचिच्छूरव्यवहारविषये विततोकृतिदर्शना,'आकार एवास्य शूर' इत्यौ-पचारिकव्यवहाराच्चाऽभियुक्तानां'माकार एवैतादृशः शूरपदवाच्य' इति-विपर्य्यासादऽदूरदर्शिनस्तथा व्यवहरन्ति· तत्त्वज्ञास्तु क्वचिदुपचारत इति वक्तव्यम्· हन्तैवं,(क)मधुरादिरसंयोगिनि सुकुमारादिवर्णयुक्ते मधुरादिव्यव-हारा वर्ण एवायं मधुरादि' रित्यौपचारिकव्यपदेशाच्चाभियुक्तानां 'वर्ण एवै-तादृशो माधुर्य्यभा'गिति विपर्य्ययाद्रसपर्य्यन्तावगाहिबुद्धिविधुरा व्यवहर-न्ति· तत्त्वालोचिनस्तु क्वचिदुपचारादिति तुल्यमेतत्· ननु शौर्य्यादेरात्म-वृत्तित्ववन्मधुरत्वादीनां रसवृत्तित्वव्यवस्थितावेवं स्यात्· सैव त्वऽसिद्धा, विनिगमकाभावादिति चेन्, मैवं, भवत्येव विनिगमकाभावो, यदि त्वया वर्णमात्राश्रया गुणाः स्वीकर्त्तुं शक्यन्ते, नत्वेवम्, अविशेषेण रचनायामपि तदभ्युपगमात्· तथाच रसमात्रवृत्तित्वे लाघवं, वर्णरचनोभयवृत्तित्वे तु गौरवम्· यतश्चैवम्, अत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णादिभि-र्व्यज्यन्त इत्येव सम्यक्··व्यञ्जकत्व चैशां यथा, तथोदाहरिष्यत इति नातिप्रसङ्गशङ्का(ख)॥ ६६ ॥

उपकुर्वन्ति तं सन्तं ये ऽङ्गद्वारेण जातुचित् ।

हारादिवदलङ्कारास्ते ऽनुप्रासोपमादयः ॥ ६७ ॥

अङ्गिनो रसस्याङ्गभूतौ शब्दार्थौ तद्द्वारेण तदतिशयाधानमुखेन ये

(क) हन्तैवमित्येकत्र नास्ति ।

(ख) "यद्यपि दोषालङ्कारे तथाच, तथापि असाधुत्वादीनां रसवृत्तित्वमस-म्भावितमिति"-एतावन्मात्रमत्र स्थाने एकस्मिन्नधिकं वर्तते ।

धर्मा रसमुपकुर्वन्ति तेऽलङ्काराः· तत्र शब्दद्वारेणानुप्रासादादयः, अर्थद्वारेणोपमादयः· यथा कण्ठाद्यङ्गोत्कर्षद्वारेण शरीरिणोऽप्युपकारका हारादयः· सन्तमिति, यत्र रसस्य सम्भव,स्तत्र तमुपकुर्वन्ति· यत्र तस्याऽसम्भव,स्तत्रोक्तिवैचित्र्यमात्रपर्य्यवसिता इति भावः· जातुचित्, नतु नियमेन· तथाच सन्तमपि रसं क्वचिन्नोपकुर्वन्तीत्यर्थः· एतावता रसावृत्तित्वं चलस्थितित्वं च दर्शितम्· तथाच रसोपकारकत्वे सति तदवृत्तित्वं, तथात्वे सति रसव्यभिचारित्वम्, अनियमेन रसोपकारकत्वं चेति सामान्यलक्षणत्रयमलङ्काराणाम्· गुणमात्रभेदकं तु सत्यन्तभागरहितं तद्बोद्धव्यम्, अन्यथा व्यर्थविशेषणत्वात्· तत्र शब्दद्वारेण रसोपकारकत्वं यथा—

अपसारय घनसारं, कुरु हारं दूर एव, किं कमलैः, ।
अलमऽलमालि! मृणालैरिति वदति दिवानिशं बाला ॥

अत्र रेफानुप्रासः शब्दमलङ्कुर्वन् विप्रलम्भशृङ्गारमुपकरोति,रेफस्य शृङ्गारव्यञ्जकत्वात् । अर्थद्वारेण यथा—

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं,
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव, ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति, नचाम्बा, न भवती ॥

अत्र विषमिवेत्यादिरुपमा· साचार्थमलङ्कुर्वाणा रसमुत्कर्षयति· विषमिवेत्युपमावशेन विसर्पणादेरतिशयप्राप्त्या विप्रलम्भोत्कर्षात्· एवमनुप्रासेपि· रसं विनाप्यलङ्कारसम्भवो यथा—"स्वच्छन्दोच्छलदच्छ"त्यादौ चित्रभेदे । सत्यपि रसे तदनुपकारकत्वं शब्दालङ्कारस्य यथा—

चित्ते विहुट्टदि ण खिज्जदि(क) सा गुणेसु
सेज्जासु लोट्टदि विसट्टदि दिम्मुहेसु ।
बोल्लम्मि वट्टदि पवट्टदि कव्वबन्धे
धाणे ण तुट्टदि चिरं तरुणी तरट्टी ॥

(क) चित्ते विहट्टदि ण टुट्टदि इति पुस्तकान्तरम्, 'खिज्जदि' स्थाने 'खिज्जन्ति' इति च ।

अत्रानुप्रासेन शब्दमात्रमलङ्क्रियते, नतु सत्यपि विप्रलम्भशृङ्गारः, टवर्गस्य तत्प्रतिकूलत्वात्· अत्र च प्रतिकूलवर्णत्वं न दोषः, प्रकृतस्य गुणप्रधानत्वात्· अस्य च तदनभिव्यञ्जकत्वादिति कश्चित्· वस्तुतस्तु, सत्यपि प्रतिकूलवर्णत्वे रसस्य नानुत्पत्तिरेव, अनुभवविरोधात्, किन्त्वपकर्षमात्रम्· नचापकृष्टेपि विद्यमाने तस्मिंष्टवर्गानुप्रासस्योपकारकतेति सारम् । सत्यपि रसे तदनुपकारकत्वमर्थालङ्कारस्य यथा—

मित्रे क्वापि गते, सरोरुहवने बद्धानने ताम्यति,
क्रन्दत्सु भ्रमरेषु, वीक्ष्य दयितासन्नं(क) पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता,
कण्ठे केवलमर्गलेव निहिता(ख)जीवस्य निर्गच्छतः ॥

अत्रोपमा ऽर्थालङ्कारः· नचासौ प्रकृतस्य शृङ्गारस्योपकारिका विप्रलम्भे हि जीवनिर्गमोपि वर्ण्यते, तदुत्कर्षाधायकत्वादिति तन्निरोधे हेतूपादानमनुचितं, प्रत्युत स्नेहाभावे पर्य्यवस्येत्· तदेतदुक्तम्—'अत्र बिसलता जीवं निरोद्धुमशक्तेति प्रकृताननुगुणोपमे'ति· अशक्तत्वं चानुचितत्वमिति प्राञ्चः· वस्तुतस्तु, तदन्यथा व्याख्येयम्—बिसलता जीवं निरोद्धुमशक्तेत्युपमा प्रकृताननुगुणा· प्रकृते विषये अनुगुणारहिता उपमाया अनुगुणं यत्सादृश्यं तच्छून्या· तस्मादत्रोपमा नालङ्कारः, किंतूत्प्रेक्षा· नच तस्यामपि तद्दोषतादवस्थ्यम्, सम्भावितेनापि सादृश्येन तत्प्रवृत्तेः, नतूपमावद्वस्तुसत्तैव· जीवरोधकत्वरूपं सादृश्यमपि विषये उत्प्रेक्षणीयकोटावेवान्तर्भूतं यथोच्यते "बोधकमिव विहित"मिति· तर्हि कथमिदं प्रकृतोदाहरणमिति चेत्, उत्प्रेक्षातो रसातिशयाप्रतीतेः, प्रत्युत तादृशोत्प्रेक्षाया उपमोक्तन्यायेनापकर्षपर्य्यवसानादिति· एष एव गुणालङ्कारविभागो विचारसहो नान्यः, तदेवं गुणालङ्कारयोर्भेदे व्यवस्थिते यत्तु कैश्चिदुक्तं—लौकिकयोर्गुणालङ्कारयोः शौर्य्याहारादिकयोः समवेतत्वसंयोगित्वाभ्यां भेदः सम्भवति· अलौकिकयोर्माधुर्यादनुप्रासोपमादेश्चोभयोरपि समवेतत्वादनुपपन्नो भेद,स्तस्मात्त-

(क) दयितासक्तमिति पा· ।
(ख) विहितेति क्वचित् ।

योर्भेदाभिधानं गड्डुलिकाप्रवाहन्यायेन· तथाहि, गड्डुलिका मेषी काचिदेका केनचिद्धेतुना पुरो गच्छति, इतरास्तु विनैव निमित्तविचारं तामनुगच्छन्ति, तथा केनाप्यालङ्कारिकेण गुणालङ्कारौ केनचिदभिप्रायेण भिन्नतयोक्तौ, इतरे तु हेतुविचारं विनैव तदनुसारेण तद्भेदं वदन्तीति· तदसम्यग्वेदितव्यम्· यदप्युक्तं वामनेन–काव्यशोभा काव्यव्यवहारनिमित्तं कश्चिदतिशयः, तद्धेतवो गुणा,स्तदतिशयहेतवस्त्वलङ्कारा इति तयोर्भेद इति· तदप्ययुक्तम्, यतः, शोभाहेतवो गुणा इत्युक्तम्, तत्र, समग्रैर्गुणैः काव्ये शोभोत्पत्ति,रुत येन केनापि· आद्ये, पाञ्चाली गौडीया च रीतिः कथं काव्यस्यात्मा, माधुर्य्याद्यभावेन समस्तगुणाभावाच्छोभानुत्पत्तेः· अन्त्ये, "अद्रावत्र प्रज्वलत्यग्निरुच्चैः, प्राज्यः प्रोद्यन्नुल्लसत्येष धूम"इत्यादावोजः-प्रसादगुणसत्त्वात् काव्यव्यवहारप्रसङ्गः· नहि मन्मत इव तन्मतेऽपि तद्व्यवहारोऽलङ्कारापेक्षः, तेन गुणमात्रेणैव काव्यव्यवहारस्वीकारात्· यदपि शोभातिशयहेतवोऽलङ्कारा इति· तदप्ययुक्तम्,

"स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनि ! ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥–

इत्यत्र पूर्वार्द्धे विशेषोक्तिः, 'एकगुणहानिकल्पनया शेषगुणदार्ढ्यकल्पना विशेषोक्ति'रिति वामनलक्षणात्· उत्तरार्द्धे व्यतिरेकः, 'उपमेयस्य गुणातिरेकित्वं व्यतिरेक' इति तल्लक्षणात्· एतौ च गुण(क)मनपेक्ष्यैव काव्यव्यवहारहेतुशोभाजनकौ· एवमन्यत्राऽप्यूह्यम्· नन्वत्रापि प्रसादादेर्विद्यमानत्वात् कथं 'गुणानपेक्षत्वमलङ्कारयोः· किंच, निर्गुणत्वे कथं त्वन्मतेऽपि काव्यव्यवहारः, सगुणत्व(ख)विशेषणाभावादिति चेत्, अस्त्येवात्र गुण,स्तथाज्ञानं च· परंतु, किंचिद्गुणवत्त्वस्य शोभाहेतुत्वेऽतिप्रसङ्गात् समस्तगुणवत्त्वं तथा वक्तव्यम्· नचात्र तत्सामस्त्यम्· तथाच गुणजन्यां शोभामनपेक्ष्यैवालङ्काराभ्यां शोभासम्पत्तिरिति तात्पर्य्यम्· ॥ ६७ ॥

(क) गुणलक्षणमिति पु· ।
(ख) सगुणेति पु· ।

इदानीं(क) गुणानामलङ्कारभेदे सिद्धे दशविधत्वव्युदासाय तद्भेदमाह—

माधुर्य्यौजःप्रसादाख्यास्त्रयस्ते, न पुनर्दश ।

विभागक्रमेणैषां लक्षणमाह—

आह्लादकत्वं माधुर्य्यं, शृङ्गारे द्रुतिकारणम् ॥ ६८ ॥

आह्लादकत्वं यद्यानन्दहेतुत्वं, तर्हि न शृङ्गारस्यापि, तस्यैव सुखात्मत्वेनाऽतज्जनकत्वात्· आनन्दस्वरूपत्वं चे,त्तर्हि सर्वेषामेव रसानामित्यत आह—द्रुतिकारणमिति· द्रुतिश्चेतसो गलितत्वमिव(ख) द्वेषादिजन्यकाठिन्याभावः· तथाच, यद्वशेन श्रोतुर्निर्मनस्कतेव सम्पद्यते, तदाह्लादकत्वस्वरूपं माधुर्य्यमित्यर्थः· यदुक्तं—

"गलितत्वमिवाह्लादपदव्या हृदये ददत् ।
माधुर्य्यं नाम शृङ्गारे प्रोहं गाहते गुणः ॥"

इति· क्वासावित्यतआह—शृङ्गारेइति· शृङ्गारपदं संभोगपरं, विप्रलम्भेतिशयस्य वक्तव्यत्वात्· भास्करस्तु—श्रव्यत्वं माधुर्य्यस्य लक्षणमाह स्म· तदयुक्तम्, ओजःप्रसादयोरपि तत्सत्त्वेनातिव्याप्तेः, शब्दनिष्ठत्वाच्च ॥ ६८ ॥

तत् किं संभोग एव माधुर्य्यम्· नेत्याह—

करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।

सम्भोगात् करुणे, तस्माद् विप्रलम्भे,ततोपि शान्तेऽतिशयितं माधुर्य्यम्, हांभ्यादेरप्यपगमेनाऽतिद्रुतिहेतुत्वात्· इयांस्तु विशेषः—सम्भोगविप्रलम्भयोस्त्विःसपक्षं, शान्ते तु जुगुप्साद्यन्वयादोजोलेशानुविद्धमिति ॥ ऽ ॥

दीप्त्यात्मविस्तृतेर्हेतुरोजो, वीररसस्थिति ॥ ६९ ॥

दीप्तिस्वरूपस्यात्मनो मनसो विस्तृतिर्ज्वलितत्वमिव· तथाच, यद्वशाज्ज्वलितमिव मनो जायते, तदोज इत्यर्थः क्वेदमित्यत आह—वीररसस्थिति ॥ ६९ ॥

(क) 'इदानी' मिति पुस्तकान्तरे नास्ति ।
(ख) ०"मिति· चेतसो गलितत्वमिव· गलितत्वमपो"ति पु· ।

अस्याधिकरणान्तरमाह—

बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण तु[क]।

वीराद्बीभत्से, ततोऽपि रौद्रे चित्तदीप्तेः कार्य्यायास्सातिशयतया कारणमोजः क्रमेणोत्कर्षवत्· तदेतद् वीररौद्रयोर्निष्प्रतिपक्षं, बीभत्से तु माधुर्य्यलवानुविद्धमिति विशेषः· प्राधान्येन माधुर्य्यौजसोरेकैकविधानमत्र प्रक्रान्त,· मतो हास्याद्भुतभयानकेषु न किञ्चिद्विहितं, तेषूभयगुणप्राधान्यात् ॥ ८ ॥

शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः ॥ ७० ॥
व्याप्नोत्यन्यत् प्रसादोऽसौ, सर्वत्र विहितस्थितिः ।

ओजसि वीररौद्रादिरसे शुष्केन्धनाग्निवद्, माधुर्य्ये शृङ्गारकरुणादिरसे[ख]स्वच्छशर्करावस्त्रादिसम्बन्धि[ग]जलवद्यो गुणो ऽन्यद्व्याप्यस्वित्तं झटित्येव रसेन व्याप्नोति,स प्रसादः· करुणस्यापि स्वातन्त्र्यविवक्षया य इति निर्देशः· अयं च सर्वेषु रसेष्वाधेयतया, सर्वासु रचनासु व्यङ्ग्यतया स्थित इति तन्त्रेणाह—सर्वत्र विहितस्थितिरिति ॥ ८ ॥

कथं तर्हि तत्त्ववेदिनामपि शब्दार्थयोर्मधुरादिव्यवहार इत्यत आह—

गुणवृत्त्या पुनस्तेषां वृत्तिः[घ] शब्दार्थयोर्मता ॥ ७१ ॥

गुणवृत्तिः, उपचारः· आकारे शौर्य्यस्येव व्यञ्जके सुकुमारवर्णादौ तदुपचार इत्यर्थः· तेषाम्, गुणानाम् ॥ ७१ ॥

ननूक्तलक्षणाः श्लेषादयोऽपि दश दुरपह्नवा,स्तत् कुतस्त्रय एव, न पुनर्मद्युक्ता अपि दशेत्यत आह—

केचिदन्तर्भवन्त्येषु, दोषत्यागात् परे श्रिताः, ।
अन्ये भजन्ति दोषत्वं कुत्रचि,न्न ततो दश ॥ ७२ ॥

(क) तोः स्थाने चः क्वचिल्लभ्यते ।
(ख) ओजसि शुष्केन्धनाग्निव,न्माधुर्ये—इति पु· ।
(ग) 'सम्बन्धि' पदमन्यत्र नास्ति ।
(घ) वृत्तिरित्यस्य स्थाने स्थितिरिति क्वचित् ।

एषु, मदुक्तलक्षणेषु माधुर्य्यादिषु· इदं चोपलक्षणम्, अलङ्कारध्वन्योरप्यन्तर्भावस्य दर्शयिष्यमाणत्वात्· उक्तान्तर्भावादिहेतुत्रयोपादानमप्युपलक्षणम्, वैचित्र्यमात्रपर्य्यवसानस्यापि दर्शयिष्यमाणत्वात्· दोषत्यागादिति· दोषाभावस्वरूपत्वात्तज्ज्ञापकतया वा· दोषत्वं कुत्रचिदिति· दोषस्वभावस्य गुणस्वभावत्वानौचित्यात्, स्वभावभङ्गप्रसङ्गात्· तथाहि, श्लेषस्तन्मते बहूनामपि पदानामेकवद्भासनम्· समाधिस्त्वारोहावरोहयोः क्रमः· स चोत्कर्षापकर्षयोर्वैरस्यानाधायको विन्यासः· उदारत्वं विकटाक्षरत्वम्· तच्च नृत्यद्भिरिव पदैर्य्या घटना, तत्त्वम्· प्रसाद ओजोमिश्रितं शैथिल्यम्, सर्वशैथिल्यस्य दोषत्वात्· तदेतच्चतुष्टयमोजस्यन्तर्भूतम्· यद्यपि दीप्तिजनकत्वरूपे रसनिष्ठ ओजसि नैषामन्तर्भावसम्भव, स्तथापि तत्स्वीकारेण स्वीकृते तद्व्यञ्जके गाढबन्धलक्षणे तदन्तर्भाव इत्यर्थः· एवमर्थेपि· पृथक्पदत्वरूपं तु माधुर्य्यं भङ्ग्या साक्षादेवोपात्तम्, यथोक्तमाधुर्य्यव्यञ्जकत्वेनाऽसमासस्य विधानात्· अर्थव्यक्तिस्तु झटित्यर्थसमर्पकता या, सा च प्रसादपदेनैवोपात्ता, यथोक्तप्रसादस्य तद्व्यञ्जकत्वात्· समता त्वारब्धवैदर्भ्यादिमार्गापरित्यागः· सा च क्वचिद्दोष एव, यथा "मातङ्गाः किमु वल्गितै"-रित्यादौ· प्रारब्धस्य मसृणवर्णत्वस्य सिंहाभिधाने ऽप्यत्यागो दोषाय, तत्परित्यागस्तु प्रत्युत गुण इत्युक्तम्· नच दोषस्वभावस्य गुणत्वम्, स्वभावभङ्गप्रसङ्गात्· सुकुमारत्वं त्वनिष्ठुराक्षरप्रायत्वम्· तच्च कष्टत्वरूपदोषाभावपर्य्यवसन्नम्· कान्तिस्तूज्ज्वलता· उज्ज्वलत्वन्तु ग्राम्यपदाघटितत्वमिति· सापि ग्राम्यत्वरूपदोषाभावपर्य्यवसन्नैव· [संयोगपरह्रस्वप्राचुर्यरूपं गाढत्वमोजः·] (क)

एवं दश शब्दगुणा न पृथग्वक्तव्याः ॥ अर्थगुणा अप्येवम्· तथाहि, अर्थस्यौजः प्रौढिः· सा च

पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥—

(क) अङ्कचिह्नितमात्रमेकत्र पुस्तके ऽधिकमास्ते ।

इतिप्रतिपादितपञ्चप्रभेदाः तेष्वाद्यभेदचतुष्टयमुक्तिवैचित्र्यमात्रं, न गुणा,स्तैर्विनापि काव्यव्यवहारा, न्माधुर्य्यादिनिरपेक्षेण च तेन तद्व्यवहाराप्रवर्तनात्· अन्त्यस्तुभेदो ऽपुष्टार्थत्वरूपदोषाभावपर्य्यवसन्नः, एवं प्रसादोऽर्थनैर्मल्यम्, प्रयोजकमात्रार्थपरिग्रह इति यावत्· सोऽप्यधिकपदरूपदोषपरित्यागादेवान्यथासिद्धः· सन्निधिमाधुर्य्यन्तूक्तिवैचित्र्यं नवीकृतत्वरूपम्· तच्चानवीकृतत्वरूपदोषाभावरूपम्· सौकुमार्यं पुनरपारुष्यम्, पदपेष्यर्थं ऽपरुषशब्दाभिधानमिति यावत्· तच्चाऽमाङ्गल्यरूपाश्लीलत्वपरित्यागेनैव सिध्यति· उदारता त्वर्थस्याग्राम्यत्वम्· तच्च ग्राम्यत्वरूपदोषाभाव एवेति· अर्थव्यक्तिस्तु वस्तुस्वभावस्य स्फुटता, सा च स्वभावोक्त्यन्तर्भूता· कान्तिस्तु दीप्तरसत्वम्, सा च रसध्वनौ रसवदलङ्कारे गुणीभूतव्यङ्ग्ये वान्तर्भूता· श्लेषस्तु क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटना· अस्यार्थः, क्रमकौटिल्यमतिक्रम,स्तस्यानुल्बणत्वमस्फुटता, तत्रोपपत्तिर्युक्ति,स्तस्य योग इति· यथा "दृष्ट्वैकासने"त्यादि· अत्र पिहितनयनामतिक्रम्याऽन्याचुम्बनादतिक्रम,स्तस्यास्फुटत्व,मनया तदज्ञानात्· तत्रोपपत्ति'रेवं कृते अनया न ज्ञातव्य'मिति· केचित्तु क्रमकौटिल्यं क्रमस्यातिक्रम,स्स चात्र व्यक्त एव, एकदैवोभयानुरञ्जनात्· स एष श्लेष उक्तिवैचित्र्यमात्रं, न गुणः. अनन्यसाधारणरसोपकारित्वातिशयविरहात्· समता तु वैषम्याभावो ऽर्थस्य· स च क्रमाभेदरूप इति क्रमभेदरूपदोषाभाव एव· दोषत्वं तद्व्यतिरेकस्य कथमिति चेद्, यतो न खल्वनुन्मत्तो ऽन्यप्रस्तावे ऽन्यदभिधत्त इति· समाधिः पुनरर्थदर्शनम्· नचासौ गुणः, काव्यशरीरत्वात्· स्वयंदृष्टस्यान्यच्छायासिद्धस्य वा ऽर्थस्य यदि न दर्शनं,(क) कथं तर्हि काव्यशरीरनिष्पत्तिः· असाधरणशोभाधायकं हि गुणं ब्रुवन्ति, नच काव्यशरीरनिर्वर्त्तकमिति·(ख) ॥ ७२.॥

उक्तयुक्तीर्बुद्धिस्थीकृत्याह—

**तेन नार्थगुणा वाच्याः—**

---

(क) स्वयंदृष्टस्यान्यच्छायासिद्धस्यार्थस्य यदि न दर्शनमिति पु· ।

(ख) निवर्त्तकमिति पुस्तकान्तरन्तु न युक्तम् ।

परिङ्गीकृता अर्थगुणा,स्तेन उक्तयुक्त्या, न पृथग्वक्तुमर्हाः[क] ॥

—प्रोक्ताः शब्दगुणास्तु ये,[ख] ।

वर्णाः समासो रचनास्तेषां[ग] व्यञ्जकतामिताः ॥ ७२ ॥

ये तु त्रय उपचारेणाऽन्यैः शब्दगुणाः प्रोक्ता वस्तुतो रसगुणा एव [ते], वर्णादयस्तेषां व्यञ्जकत्वं गताः ॥ ७३ ॥

के कस्य व्यञ्जका इत्याकाङ्क्षायामाह—

मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा, रणौ लघू, ।

अवृत्तिर्मध्यवृत्तिर्वा, माधुर्य्ये, घटना तथा ॥ ७४ ॥

माधुर्य्ये व्यङ्ग्ये टवर्गवर्जिताः कादिमान्ता रेफणकारौ चेति वर्णाः· तत्र कादयो मूर्ध्नि स्वस्ववर्गान्त्यवर्णगताः, यथा 'कुञ्ज' इत्यादि· रेफणकारौ तु ह्रस्वस्वरान्तरितौ· वृत्तिः समास,स्तस्य चाभाव एव, मध्यमता वेति समासः· घटना तथेति· सौकुमार्य्यवती पदान्तरयोगेन रचना चेति· वर्णसौकुमार्य्यवती रचना वर्णसौकुमार्य्यादेव·लब्धेति पदान्तरयोगे सौकुमार्य्यलाभाय 'घटना तथे'त्युक्तमिति· उदा०—

अनङ्गरङ्गप्रतिमन्तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः, ।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरिचिन्तितानि[घ] ॥ ७४ ॥

योग आद्यतृतीयाभ्यामन्त्ययो, रेण, तुल्ययोः, ।

टादिः, शषौ,[ङ] वृत्तिदैर्घ्यं, गुम्फ उद्धत, ओजसि ॥ ७५ ॥

ओजसि व्यङ्ग्ये वर्गप्रथमतृतीयाभ्यां सह तदन्त्ययोर्द्वितीयचतुर्थयोर्योगः, यथा 'कच्छपुच्छे'त्यादि· तथा रेफेणाध, उपरि, उभयत्र वा यस्य कस्यापि योगः, यथा'वक्रार्कनिर्ह्राद'ादयः· तथा, तुल्ययोः कयोश्चिद् योगः, यथा'चित्तवित्ता'दौ· तथा टादिचतुष्टयं, शषौ.चेति वर्णाः· समासस्तु दीर्घः· गुम्फो रचना, सा चोद्धता विकटेति· उदा०—"मूर्द्धामुद्वृत्तकृत्त"त्यादि ॥ ७५ ॥ (शेषमग्रे)

(क) परिङ्गीकृता अर्थास्तेनोक्तमुक्त्या न पृथग्वक्तुमर्हन्तीति पुस्तकान्तरम् ।
(ख) शब्दगुणाश्च ये--इति क्वचित् ।
(ग) रचना तेषामिति क्वचित्क्वचित् ।
(घ) शान्तापरिचिन्तनानीति पा० ।
(ङ) टादिः शष इति पाठस्तु दुर्बोधनिबन्धनः ।

॥ श्रीः ॥

श्रीं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम् ।

श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम् ।

तत्र प्रथमाध्यायस्यावशेषः ।

(*Continued from page* 52. VOL. XII.)

मू० तत्पूर्वकं स्वरूपोपाधिकं लोककामेशत्वं सत्यसङ्कल्पत्वादिकं सर्वभूतान्तरात्मत्वञ्च तस्यैव धर्मः, यथाह "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको ऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प" इति,

टी० "तत्पूर्वकं स्वरूपोपाधिकमि"ति, अपहतपाप्मत्वपूर्वकत्वात् स्वरूपोपाधिकं स्वाभाविकमित्यर्थः, एवं प्रसिद्धाप्रसिद्धयोरर्थयोरेकनिमित्तसम्भवे प्रसिद्धवाचिनैकेनैव शब्देनोपादानार्हत्वमिह व्युत्पादितम्, आदित्यान्तर्वर्त्तिनोऽपहतपाप्मत्वगुणयोगेन आनन्दवल्ली-दहरविद्या-सुबालोपनिषत्प्रतिपाद्यस्येह प्रत्यभिज्ञानात्तत्र तत्रोक्ता गुणा अप्यस्यैव हिरण्मयपुरुषस्य धर्मा इत्यभिप्रायेण सत्यसङ्कल्पत्वादिकं सर्वभूतान्तरात्मत्वञ्चेत्युक्तम् अपहतपाप्मत्वपूर्वकसत्यसङ्कल्पत्वादौ श्रुतिं दर्शयति "एष आत्मे"ति, तत्पूर्वकसर्वभूतान्तरात्मत्वे श्रुतिमुदाहरति-

मू० तथा "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इति, "सोऽकामयत बहु स्यां प्रजायेये"त्यादि सत्यसङ्कल्पत्वपूर्वकसमस्तचिदचिद्वस्तुसृष्टियोगो निरुपाधिकभयाभयहेतुत्वं वाङ्मनसपरिमितिरहितपरिच्छेदरहितानवधिकातिशयानन्दयोग इत्यादयोऽकर्मसम्पाद्याः स्वाभाविका धर्माः जीवस्य न सम्भवन्ति । यत्तु

शरीरसम्बन्धान्न जीवातिरिक्त इत्युक्तं, तदयुक्तं न हि सशरीरत्वङ्कर्मवश्यतां साधयति, सत्यसङ्कल्पस्येच्छयाऽपि शरीरसम्बन्धसम्भवात् । अथोच्येत शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूपभूतसंघातः, तत्सम्बन्धश्चापहतपाप्मनः सत्यसङ्कल्पस्य पुरुषस्येच्छया न सम्भवति, अपुरुषार्थत्वात्, कर्मवश्यस्य तु स्वस्वरूपानभिज्ञस्य कर्मानुगुणफलोपभोगायानिच्छतोऽपि तत्सम्बन्धोऽवर्जनीय इति,

टी० "एष सर्वभूतान्तरात्मे"ति, तत्तदन्तरत्वेन आत्मत्वव्याख्यानपरस्यानन्दवल्लीवाक्यस्य नारायणपरत्वज्ञापनार्थं च, एष सर्वभूतान्तरात्मेति वाक्योपादानं,केषुचिद्वाक्येषु अपहतपाप्मत्वपूर्वकगुणविधानात्सर्वशाखाप्रत्ययन्यायेन वाक्यान्तरेष्वपि तत्पूर्वकत्वं विवक्षितमित्यभिप्रायेणाह "सोऽकामयते 'ति, जगत्कारणत्वमेवं वेदान्तवेद्यस्य ब्रह्मणो लक्षणं कारणञ्चेत्सत्यसङ्कल्पं सत्यसङ्कल्पत्वं चेदपहतपाप्मत्वपूर्वकं तच्च नारायणप्रत्यभिज्ञापकं च सुबालोपनिषदैकार्थ्यादिति भावः । वाङ्मनसेति परिच्छेदकासिद्धिमाह, पूर्वपक्षमनुवदति "तन्वि'ति, परिहरति "तदस"दिति, शास्त्रैकप्रमाणके वस्तुनि लोकदृष्टव्याप्तिमूलस्तर्को न कर्मवश्यत्वसाधक इत्यभिप्रायेणाह "न ही"ति, कल्पकस्यान्यथासिद्धिमाह 'सत्यसङ्कल्पस्ये"ति, सत्यसङ्कल्पत्वस्य कर्मनैरपेक्ष्यमपहतपाप्मत्वपूर्वकसत्यसङ्कल्पत्वश्रुत्युपपादनेन समर्थितम् । अत एव "स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च स एष ये चै तस्मादर्वाञ्चो लोकास्तेषाञ्चेष्टे मनुष्यकामानामित्यादित्याक्षिपुरुषविषयवाक्यद्वयेन प्रतिपन्नमैश्वर्यम् अनवच्छिन्नं, तदवच्छेदे शङ्क्यमानेऽपि सोऽवच्छेदोऽप्यैच्छिकतया ऽन्यथासिद्ध इति फलितत्वाच कण्ठोक्तम् । विग्रहविषयाया इच्छाया असम्भवं शङ्कते "अथोच्येते"ति, हेयत्वसूचकस्त्रिगुणात्मक-शब्दः "सत्त्वं लघुप्रकाशकमिष्टमुपष्टम्भकञ्चलञ्च रजः गुरुवरणकमेव तमः" इत्युक्तेः, इच्छाया अभा-

वेऽपि कर्मपारवश्याज्जीवस्य तत्सम्बन्धसम्भवमभिप्रेत्याह "कर्मे"ति कर्माचरणहेतुस्वरूपानभिज्ञस्येति विशेषणं, परिहरति—

मू० स्यादेतदेवं, यदि त्रिगुणमयः प्राकृतोऽस्य देहस्स्यात् स तु स्वाभिमतः स्वानुरूपोऽप्राकृत एवेति सर्वमुपपन्नम् । एतदुक्तम्भवति, परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणगणाश्च सन्ति, तद्वदेव स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणगणनिधिदिव्यरूपमपि स्वाभाविकमस्ति

टी० "स्यादि"ति, स्वाभिमतेत्युक्तेऽभिमतत्वमयोग्यत्वेऽपि सम्भवतीति तद्व्यावृत्त्यर्थमाह "अनुरूपे"ति, कुत इत्यत्राह "अप्राकृत" इति, परमात्मस्वरूपं हि निरतिशयमानन्दरूपं सर्वज्ञत्वाच्च तच्च जानात्येवेति स्वस्वरूपादन्यत्र भोग्यत्वज्ञानं न वक्तुं युक्तम्, अतस्सर्वज्ञस्य तस्य विग्रहे स्पृहणीये स्वरूपस्य भोग्यतावैकल्यं स्यादित्यत्राह "सर्वमुपपन्नमि"ति, कथमुपपन्नमित्यत्राह "एतदुक्तमि"ति स्वतस्सर्वज्ञस्य सर्वशक्तेर्ज्ञानार्थं प्रवृत्त्यर्थञ्च करणानपेक्षत्वात् न देहापेक्षा रूपादिमत्त्वे प्राकृतं स्यात्, नित्यत्वे चानित्यबहुरूपतायाऽसम्भवः तिर्यगादिरूपपरिग्रहे "वाचकैः पक्षिमृगतामित्या"दिप्रकारेण तन्मूलकर्मसम्बन्धः स्यादिति शङ्कापरिहारार्थञ्चैतदुक्तमित्यारम्भः यथा परस्य ब्रह्मणो धर्मिस्वरूपं स्वभाविका गुणाश्च प्रामाणिकत्वादङ्गीक्रियन्ते तथा विलक्षणशरीरमभ्युपगन्तव्यमित्यभिप्रायेणाह "परस्यैवेति, स्वाभिमतेति करणानपेक्षज्ञानक्रियस्यापि परस्य भोगार्थो विग्रहः, निरतिशयानन्दस्यापि तस्य प्रीतिविशेषापेक्षा घटते प्रभूतानन्दानामप्यानन्दान्तरापेक्षादर्शनादिति भावः । "एकरूपे"ति, हेयप्रतिभटत्वमङ्गलाकारत्वाद्याकारैरैकरूप्यं शरीरत्वादस्मदादिशरीरवत्

दुःखावहमित्यादि तर्कागोचरत्वमभिप्रयन्नाह "अचिन्त्ये"ति, अचिन्त्यत्वे हेतुमाह "दिव्ये"ति, अनेन दिव्य-शब्देन विलक्षणद्रव्यत्वमुक्तं रूपादिमत्त्वात् प्राकृतत्वं धर्मिग्राहकमानबाधितमिति भावः । द्वितीयेन दिव्य-शब्देन विलक्षणसन्निवेशत्वं यथा तद्विश्वरूप वैरूप्यं रूपमन्यद्धरेर्महदिति अद्भुतत्वं प्रतिक्षणमभिनवत्वं नित्येति सावयवत्वादनित्यमित्याद्यनुमानं धर्मिग्राहकप्रमाणबाधितमिति भावः । कल्याणाकरत्वेऽपि हेयमिश्रत्वशङ्काव्युदासार्थो निरवद्य शब्दः, निरतिशया वक्ष्यमाणसर्वगुणाः आदि-शब्देन पराक्रमादयो विवक्षिताः । नित्यत्वे कथमनित्यबहूवतारसम्भवः? कथञ्च निकृष्टदेवादिसाजात्य? मित्यत्राह—

सू० तदेवोपासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानङ्करोति अपारकारुण्यसौशील्यवात्सल्यौदार्य्यैश्वर्य्यजलधिर्निरस्तनिखिलहेयगन्धोऽपहतपाप्मा परमात्मा परब्रह्मपुरुषोत्तमो नारायण इति, "यतो वा इमानि, भूतानि जायन्ते" "सदेव सोम्येदमग्र आसीदा" "त्मावा इदमेक एवाग्र आसीत्" "एको ह वै नारायण आसीत् न ब्रह्मा नेशान" इत्यादिषु निखिलजगदेककारणतयाऽवगतस्य परस्य ब्रह्मणः "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्मे' त्यादिषु एवम्भूतं स्वरूपमित्यवगम्यते, निर्गुणं निरञ्जनम् अपहतपाप्मा विजरो विमृत्यु विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" "न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च "तमीश्वराणां परमं महेश्वरं" "तं दैवतानां परमञ्च दैवतं स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः

सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते वेदाहमेतं पुरुषं महान्तम्–

टी० "तद्देवे"ति, तद्देवाप्रच्युतसन्निवेशमेवेत्यर्थः संस्थानाशैथिल्येऽपि देवाद्यनेकदेहोत्पादकत्वं चतुर्मुखदेहे दृष्टं परमात्मविग्रहे युज्यत इति भावः । नित्यालिङ्गयास्वभावसंसिद्धिरिन्द्रियाकाराङ्गप्रत्यङ्गव्यञ्जनवती उज्जहारात्मनः केशौ सितकृष्णौ अंशांशेनावतीर्याभ्यां समस्तशक्तिरूपाणि तत्करोति जनेश्वर कल्पे कल्पे जायमानःस्वमूर्त्या सोंऽशो विष्णुमयस्थानमित्याद्यनुसन्धेयम् । उपासकानुग्रहोपयुक्ता गुणा उच्यन्ते "अपारे"ति, कारुण्य–परदुःखासहिष्णुत्वं, सौशील्यं–महतामन्दैस्सह नीरन्ध्रेण संश्लेषस्वभावत्वं वात्सल्यं दोषानादरे हेतुः स्नेहः यथा मातुः पुत्रे, औदार्यं–दातृप्रतिग्रहीतृविभागबुद्धिरहितं दातृत्वम्, एते सौलभ्योपयुक्तगुणाः । अथ परत्वमुच्यते "निरस्ते"ति, परत्वसौलभ्ये अप्युपास्यत्वोपयोगिनी मनुष्यादिसाजात्येऽपि तत्प्रयुक्तशोकमोहाद्यस्पृष्टत्वमभिप्रयन्नाह "निरस्ते"ति, जीवानुप्रवेशेषु शोकादयो जीवांशगताः साक्षादवतारेष्वभिनयमात्रं, निखिल–शब्देन चिदचिद्गता दोषा विवक्षिताः शोकाद्यस्पर्शहेतुमाह "अपहते"ति, अत्रावीनात्मव्यावृत्त्यर्थः परमात्मशब्दः प्रधानव्यावृत्त्यर्थः तत्समानाधिकृतः परब्रह्मशब्दः, पुरुषोत्तमशब्दो वैलक्षण्यपरः नारायण–शब्दो घटकः यथा परमात्मपरब्रह्मशब्दौ सामान्यशब्दावेकविषयौ यथा पुरुषोत्तमनारायणशब्दौ विशेषशब्दावेकविषयौ, तथा सामान्यविशेषशब्दाः एकविषया इति भावः । अत्र स्वरूपस्य भोग्यत्ववैकल्यशङ्का च परिहृता भवति स्वसम्बन्धिभोग्यत्वं स्वस्य न भोग्यताविरोधि अपि तु स्वभोग्यत्वातिशयावहं, यथा स्वसम्बन्धिगुणगणभोग्यत्वं, न हि स्वसम्बन्धिनामप्यामोदकत्वस्य कस्तूरिकादेरामोदवैकल्यमपि तु तत्पोष्कल्यमेव, तथा स्वसम्बन्धिविग्रहभोग्यत्वमपि स्वभोग्यत्वातिशयावहमिति अथोक्तार्थप्रमाणान्याह "यतोवा इमानीत्या"ति, जगत्कारणत्वधर्म्मिस्वरूपविषयप्रमाणोपन्यासो दृष्टान्तार्थः, गुणविभागकथनं वादिविवादशमनार्थं दृष्टान्तार्थं च विद्युतः–विद्युद्वर्णात्

सू० "आदित्यवर्णन्तमसः परस्तात्" सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी"त्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान् प्राकृतहेयदेहसम्बन्धं तन्मूलकर्मवश्यतासंबन्धं च प्रतिषिध्य कल्याणगुणान् कल्याणरूपञ्च वदन्ति, तदिदं स्वाभाविकमेवरूपमुपासकानुग्रहेणतत्प्रतिपत्त्यनुगुणाकार देवमनुष्यादिसंस्थानं करोति स्वेच्छयैव परमकारुणिको भगवान्, तदिदमाह श्रुतिः "अजायमानोबहुधा–

टी० आदित्यवर्णं रुक्मवर्णमिति वाक्यसरूपार्थस्वीकारस्यौचितत्वात्, आदित्यवर्णो विग्रहश्च न प्राकृतः तमसः परस्तादिति श्रुतेः, अतिसूक्ष्मप्रकृतिर्हि तमः अतस्तत्कार्यवैलक्षण्यसिद्धिः, अन्यथा स्वरूपस्य तमसोऽन्यत्वकथनं स्यात्, तदानीं परस्तादित्यस्तातिप्रत्ययस्यादित्यवर्णतोक्तेश्च वैयर्थ्यं स्यात्, अतो विग्रहविशिष्टस्यैव तमः स्पर्शाभावोक्तिरिति विग्रहवैलक्षण्यसिद्धिः, प्राकृतहेयेति क्वचित्सतां हि क्वचिन्निषेधः, अतो निषेध्यहेयगुणानां प्रकृतितत्संश्लिष्टजीवेषु विद्यमानत्वं प्राकृतेत्यादिना शब्देन दर्शितं, विग्रहविशेषविधानदर्शनाद्विग्रहसामान्यनिषेधस्तद्व्यतिरिक्तविषयः न हिंस्यादितिवत्, निर्गुणमितिवच्च विशेषनिषेधदर्शनाद्गुणसामान्यनिषेधो विशेषे पर्यवस्यति पशुना यजेतेति पशुशब्दवन्निर्गुणशब्दवच्चेति तात्पर्यं पूर्वोक्तमर्थं वक्ष्यमाणवचनस्यैतदर्थविषयताज्ञापनार्थमनुवदन् पूर्वोक्तसंस्थानशब्दं विवृणोति "तदिदमि"ति, परमकारुणिक इति देवादिसाजात्यञ्च कर्मनिबन्धनमुपासकानुग्रहार्थत्वादित्यर्थः । श्रुतिं दर्शयति "तदिदमि"ति, अजायमान इति कर्महेतुकसुखाद्यर्थप्राकृतदेहसङ्गतिरूपजन्मनिषेधः ।

सू० विजायत" इति, स्मृतिश्च "अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायये"ति "परित्राणाय साधूनां विनाशाय च दुष्कृतामिति

साधवोह्युपासकास्तत्परित्राणमेवोद्देश्यम् आनुषङ्गिको[1] दुष्कृतां विनाशः, सङ्कल्पमात्रेणापि तदुपपत्तेः, प्रकृतिं स्वामिति प्रकृतिः,-स्वभावः स्वमेव स्वभावमास्थाय न संसारिणां स्वभावमित्यर्थः । आत्ममाययेति स्वसङ्कल्परूपेण ज्ञानेनेत्यर्थः, माया वयुनं ज्ञानमिति ज्ञानपर्य्यायमपि माया-शब्दं नैघण्टुका अधीयते ।

टी० विजायत इति चेच्छाहेतुकजगद्रक्षणार्थः प्राकृतविग्रहाधिष्ठानरूपजन्मविधि । ननु अजायमान इति परमार्थजन्मनिषेधः बहुधा विजायत इत्यपरमार्थजन्मविधिः स्यात्, न कृत्स्नमिथ्यात्ववादिपक्ष प्रयोजनाभावात्, प्रपञ्चमिथ्या-त्ववचनेनैवेश्वरजन्ममिथ्यात्वमपि हि सिद्धं, किं विशेषतोऽभिधानेन, विहितस्य निषेधायोगाच्चायुक्तं मानन्तरागोचरं जन्माभिधाय तदेव कथं निषिध्यते, स्वरूपस्याजस्य शरीरद्वारा बहुभवनं चोच्यत इति चेत् न स्वरूपनित्यत्वद्देहद्वारकजन्मनो जीवानामपि समानतया "तस्य धीराः परिजानन्ति योनि"मिति अनन्तरवाक्यप्रतिपन्नवैलक्षण्यानुपपत्तेः सर्वसाधारणलोकविदितजन्मप्रकारवैजात्ये सत्येव ह्येवं वक्तुं युक्तं, न हि देवदत्तस्य जन्म धीररेव परिज्ञायत इति वक्तव्यं यज्ञदत्तजन्मनो वैलक्षण्याभावात्, स्वरूपेणाजस्य विचित्रसमस्तजगद्रूपेण बहुभवनमुच्यते तद्धि जीवेषु न सम्भवतीति चेत् न 'सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाभिवदन्यदास्ते" इति पूर्वानुवाकेऽभिधाय तस्य, स्रष्टा विश्वरूपक्तेतोत्यस्मिन्नप्यनुवाके जगद्रूपेण बहुभवनस्योक्तत्वात्, एवमर्थान्तरपरत्वे सत्यानर्थक्यप्रसङ्गात्तत्परिहारायास्याः श्रुतेरवतारपरत्वमभ्युपगन्तव्यं तथाऽस्याः श्रुतेरवतारविषयत्वे सत्येवाजोऽपि सन्नित्याद्युपबृंहणैकार्थ्यं सिध्येत्, अतोऽस्य वाक्यस्य यथोक्त एवार्थः उपबृंहणैकार्थ्यं दर्शयति "स्मृतिश्चे"ति, अजोऽपि सन् सम्भवामीति विधिनिषेधयोरपि यथोक्त एवार्थः, उपासकानुग्रहा-

[1] आनुषङ्गिकस्त्विति ।

र्थत्वं कथमत्रावगम्यत? इत्यत्राह "साधव" इति आनुषङ्गिक इति विनाशाय च दुष्कृतामिति च-शब्दोऽन्वाचयपर इति भावः, समुच्चयस्समप्रधानयोः, अन्वाचयः प्रधानानुषङ्गिकयोः, दुष्कृद्विनाशस्यानुषङ्गिकत्वमुपपादयति "सङ्कल्पे"ति, प्रकृतिसम्बन्धभ्रमनिवृत्त्यर्थं व्याचष्टे "प्रकृतिं स्वामि"-तीति, स्वभावो-निरुपाधिकधर्मः अनेन विग्रहश्च स्वाभाविक इत्युक्तम्भवति। अपारमार्थिकत्वभ्रमनिवृत्त्यर्थं व्याचष्टे "आत्ममायये"ति, नैघण्टुकाः-वेदनिघण्टुकाराः, तन्मूलभूतप्रयोगश्च "यावन्तः पांसवो भूमेः सङ्ख्याता देवमायये"ति, । स्वोक्तार्थे वैद्यार्थमाह-

भू० आह च भगवान् पराशरः "समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः। तद्विश्वरूप वैरूप्यं रूपमन्यद्धरेर्महत्। समस्तशक्तिरूपाणि तत्करोति जनेश्वर? देवतिर्यङ्मनुष्याख्य-चेष्टावन्ति स्वलीलया। जगतामुपकाराय न सा कर्मनिमित्तजेति, महाभारतेऽपि अवताररूपस्याप्यप्राकृतत्वमुच्यते-"न भूतसंघसंस्थानो देहोऽस्य परमात्मनः" इति, अतः परस्यैव ब्रह्मणः एवंरूपंरूपवत्त्वादयमपि तस्यैव धर्मः अत आदित्यमण्डलाक्ष्यधिकरण आदित्यादिजीवव्यतिरिक्तः परमात्मैव॥

सू० भेदव्यपदेशाच्चान्यः॥ २२॥

भू० आदित्यादिजीवेभ्यो भेदो व्यपदिश्यते अस्य परमात्मनः "य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति

टी० "आह चे"ति, अयमपि तस्यैव धर्मः एवंरूपरूपमपि जीवाद्न्यत्वसाधकमित्यर्थः, तद्धर्मापदेशादिति सौत्रधर्म्मशब्दे मैवं रूपरूपवत्त्वमपि विवक्षितमिति भावः। सूत्रार्थमुपसंहरति "अत" इति, हेत्वन्तरमाह सू॰ भेदव्यपदेशाच्चान्यः अयमन्य-शब्दः पूर्वापरसूत्रेष्वप्यन्वेतव्य । आदित्याख्यजीवाद्भेदव्यपदेशे श्रुतिमाह "य आदित्य" इति, आदित्यपर्यायोपादानं प्रकरणस्थजीवान्तरविषयपर्यायाणां प्रदर्शनार्थम्, आदित्यादीन्यत्रादि-शब्दोपात्तदेवताविशेषेभ्यो भेदव्यपदेशश्चात एव दर्शितो भवति तत्र हि प्रकरणे यस्सर्वेषु देवेषु तिष्ठन्निति पर्याये सर्वदेवताभ्यो भेदो व्यपदिश्यते आसान्देवतानाम्मुक्तावस्थायामपि ताभ्यः परमात्मनो भेदज्ञापनार्थंचिच्छष्टात्मनः परमात्मनियाम्यत्वादिप्रतिपादकं पर्यायमुदाहरति "य आत्मनी"ति, कारणावस्थामपि भेदज्ञापनार्थमाह–

मू० यस्याक्षरं शरीरं यमक्षरन्न वेद यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यम्मृत्युर्न वेद एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण इति, चास्यापहतपाप्मनः परमात्मनः सर्वान् जीवान् शरीरत्वेन व्यपदिश्य-तेषामन्तरात्मत्वेनैनं व्यपदिशति, अतः सर्वेभ्य एवा[1]दित्यादिजीवेभ्यो ऽन्य एव परमात्मेति सिद्धम्॥ अन्तरधिकरणं समाप्तम्॥ यतो वा इमानि भूतानि जायन्त इति जगत्कारणं ब्रह्म इत्यवगम्यते किं तज्जगत्कारण? मित्यपेक्षायां सदेव सौम्येदमग्रआसी तत्तेजोऽसृत आत्मा वा इदमेक एवाग्रआसीत्स इमाँल्लोकानसृजत तस्माद्वा एतस्मादात्मन

[1] हिरण्यगर्भादिजीवेभ्य इति पा॰ ।

आकाशः सम्भूत इति साधारणैश्शब्दैर्जगत्कारणे निर्दिष्टे ईक्षणविशेषानन्दविशेषरूपविशेषार्थस्वभावात्प्रधानक्षेत्रज्ञादिव्यतिरिक्तं ब्रह्मेत्युक्तम्, इदानीमाकाशादिविशेषशब्दैर्निर्दिश्य जगत्कारणत्वजगदैश्वर्य्यादिवादेऽप्याकाशादिशब्दाभिधेयतया प्रसिद्धचिदचिद्वस्तुनोऽर्थान्तरमुक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यते आकाशस्तल्लिङ्गात् इत्यादिना पादशेषेण, ।

टी० "यस्याक्षरमि' ति, अक्षरम्–अचित्समष्टिसंसृष्टा पुरुषसंसृष्टिः मृत्युश्चित्समष्टिसंसृष्टाचित्समष्टिः, देवकामानां वेष्ट इति वाक्यमस्य सूत्रस्य विषयतयोपात्तं यादवप्रकाशैः तच्चात्यन्तोचितम् इन्द्रादीनामपि स्वावरदेवकामनिष्पादकत्वसम्भवेन क्षेत्रज्ञवैलक्षण्यसाधकत्वाभावात्, देवकामेशनस्य आदित्यपुरस्कारेणोत्थिते पूर्वपक्षे तमादित्यकण्ठोक्त्या निर्दिश्य तदितरदेवतानान्तस्य च नियाम्यत्वं व्याप्यत्वमज्ञत्वं चोक्त्वा नियन्तृत्वव्यापित्वसार्वज्ञ्यैः परमात्मनस्तेभ्यः स्फुटतरभेदव्यपदेशपरप्रकरणस्य विषयतयोदाहरणं ह्यन्ततोचितं शरीरसम्बन्धावच्छिन्नैश्वर्यश्रवणात्सद्व कर्मवश्यत्वाल्लोककामेशत्वादीनां सुकृतप्रकर्षेणोपपत्तेः पाप्मोदयश्रवणस्य पापसम्बन्धनिवर्तकत्वेन पुण्यसम्बन्धनिवर्तकत्वाभावाच्च पूर्वः पक्षः, मोक्षप्रकरणेषूभयकर्मविषयपाप्म–शब्दप्रयोग–श्रुत्यन्तरैकार्थ्यप्रवृत्तिनिमित्तयोगैः पाप्म–शब्दस्योभयपरत्वेन कर्मवश्यत्वनिषेधात्तत्पूर्वकगुणान्तराणामपि जीवेष्वसम्भवाद्धेतुतः फलतो द्रष्टव्यतश्च–

टी० विलक्षणविषययोगस्य जीववैलक्षण्यसाधकत्वादादित्यादिजीवेभ्योभेदव्यपदेशाच्च परमात्मेति राद्धान्तः । अधिकरणार्थमुपसंहरति "अत" इति, समाप्तमन्तरधिकरणम् ॥

(शेषमग्रे)

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या।

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

(*Continued from page* 42. Vol. XII.)

## अथ शास्त्रदीपिकायां अष्टमाध्यायस्य प्रथमः पाद आरभ्यते ॥

अथ प्रतिज्ञाधिकरणम् । सू० अथ विशेषलक्षणम् ॥ १ ॥

विध्यन्ताधिकरणे सौर्यादिषु आनुमानिकेन वचनेन वैदिकीतिकर्तव्यताऽस्तीत्युक्तम् । तस्यैवेदानीं विशेष उच्यते, कस्य विध्यन्तः ? क्व प्रवर्त्तत इति ? प्रथमं तावदिदं चिन्त्यते किमेकस्मिन्कर्मणि सर्वधर्मातिदेश ? उतने ? ति । ननु विध्यन्ताधिकरण एव लौकिकवैदिकविध्यन्तसमुच्चयमाशङ्क्य मिथो विप्रतिषेधा¹दित्यनेन सूत्रेण कथम्भावापेक्षायामेकेनैवेत्यम्भावपूरणान्न द्वयोः सह प्रवृत्तिरित्युक्तं, तेन गतमेतत्सत्यं समुच्चयस्तत्र निराकृतः, इह तु सर्वविध्यन्तानामेकत्र विकल्पेन प्राप्तिरिति पूर्वः पक्षः उत्तरस्तु नियत एव एकस्मिन्नेकः प्रवर्त्तते, न्यथा ह्यव्यवस्थितः शास्त्रार्थः स्यात्तस्मान्नियमेनैकस्यैव दर्शपूर्णमासादेर्विध्यन्त एकस्मिन्सौर्यादौ प्रवर्त्तते सत्यमेवं युक्तं, कथन्त्विदमवगम्यतेऽस्य विध्यन्तोऽत्र प्रवर्त्ततेऽस्य • नेति, तदभिधीयते—

विशेषकर्मणोधर्मातिदेशाधिकरणम् । सू० यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥

यस्य कर्मणो लिङ्गं चिह्नमुपस्थापकं शब्दगतमर्थगतं वा यस्यां विकृतौ दृश्यते तस्य विध्यन्तस्तस्यां प्रवर्त्तते यथाऽऽग्नेयस्य सौर्ये, तथा हि

---

१ प्रतिषेधः स्यादित्यनेनेति पा० ।

निर्वपतिस्तद्धितेन देवतानिर्देश एकदेवत्यत्वमोषधद्रव्यकत्वमित्याग्नेयचोदनया दृष्टसम्बन्धीनि सौर्यवाक्ये विध्यन्तापेक्षे दृश्यमानानि तामुपस्थापयन्ति, सा च स्वार्थं, त्र्यंशा च भावना तस्याः स्वार्थे, ततःसाध्यसाधनांशाविहानपेक्षितत्वादनादृत्य तृतीयोंऽश इत्थम्भावरूपोऽपेक्षासन्निधियोग्यत्वैर्वाक्यशेषत्वेनात्र सम्बध्यते, तदयमर्थः यथाऽऽग्नेयेन स्वर्गः कृतः तथा सौर्येण ब्रह्मवर्चसमिति, एवमनेकदेवतेष्वग्नीषोमीयैन्द्राग्नविध्यन्त आज्यद्रव्यकेषूपांशुयाजस्य पयोदध्यामिक्षादिषु दैक्षपशौ च सान्नाय्यस्य पश्वन्तरेषु दैक्षस्य एकादशिनेषु सवनीयस्य, पशुगणान्तरेषु ऐकादशिनस्य, अध्वरेषु सोमस्य, अहर्गणेषु सत्रेषु अहीनेषु च द्वादशाहस्य संवत्सरादिषु गवामयनिकस्येत्यादि द्रष्टव्यम्, एवमिह विशेषातिदेश उत्तरस्त्वस्यैव प्रपञ्चः।

सोमे ऐष्टिकधर्मानतिदेशाधिकरणम्। **सू० प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात् ॥ ३ ॥**

अग्निहोत्रे दर्शपौर्णमासयोः ज्योतिष्टोमे च दोहनावघाताभिषवादीनि दृष्टार्थान्यङ्गानि निराकाङ्क्षीकरणसमर्थानि तैश्च निराकाङ्क्षत्वादतिदेशो नास्ति तथाऽपि सोमे दर्शपौर्णमासिकधर्मातिदेशं केनचिद्धेतुना शङ्कमानं निराकर्तुमिदमधिकरणं कः पुनरसौ हेतुर्दीक्षणीयादिष्ववभृथपर्यन्तास्विष्टिषु पशुषु च दर्शपौर्णमासविध्यन्तोऽतिदेशेन प्राप्यमाणो मनसि विपरिवर्तते तन्मध्यवर्तित्वाच्च सोमस्य तत्रापि तदन्वयं शङ्कते "तस्यैकशतं प्रयाजानुयाजा" इति च दर्शनमवकल्पते, तस्मादिष्टिः सोमे प्रवर्ततेति सोऽयं निराक्रियते नानपेक्षे प्रवृत्तिर्युक्ता प्रयाजादिकं तु दीक्षणीयाद्यङ्गवर्ति वाजपेययूपन्यायेनैकशतसङ्ख्यां प्राप्तामनूद्यत इति नास्ति सोमेऽतिदेशः ॥

ऐन्द्राग्नादौ ऐष्टिकधर्मातिदेशाधिकरणम्। **सू० इष्टिषु दर्शपौर्णमासयोः प्रवृत्तिः स्यात् ॥ ४ ॥**

"सौर्यं चरुं निर्वपे"दित्यादिषु इष्टिषु निर्वपत्यादिसामान्येन दर्शपौर्णमासविध्यन्तोपस्थापनात्तस्यातिदेशः। इदं च यस्य लिङ्गमित्यस्य प्रपञ्च इति नातीव पूर्वपक्षे यतितव्यम् उत्तरत्रापि सर्वत्र ॥

आग्नीषोमीयपशौ दार्शपौर्णमासिक धर्मातिदेशाधिकरणम् ।

सू० पशौ च लिङ्गदर्शनात् ॥ ५ ॥

पशावप्याग्नीषोमीये तद्धितेन देवतानिर्देशः, आलभतिश्च दर्शपौर्णमाससादृश्यम् इष्टावप्यालभतिर्विद्यते ऐषामालभेतेति, दृश्यते च पशोरालम्भनादिदृष्टार्थाङ्गसिद्धयेऽतिदेशापेक्षा, तस्मात्तत्रैष्टिकोविध्यन्तः ॥

सवनीयादिपशौ आग्नीषोमीयधर्मातिदेशाधिकरणम् ।

सू० द्वैत्तस्य चेतरेषु ॥ ६ ॥

इतरेषु सवनीयनिरूढादिषु पशुषु प्राणिद्रव्यकत्वसा[1]म्याद्विशसनादिद्रव्यसंस्कारलाभाच्च द्वैतस्याग्नीषोमीयस्य विध्यन्तः ॥

ऐकादशिनपशौ सवनधर्मातिदेशाधिकरणम् ।

सू० ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् ॥ ७ ॥

ऐकादशिनेषु पशुषु सु याकालत्वसामान्यातिरेकाद् द्वैरशन्यदर्शनाच्च द्वे द्वे रशने यूपमृच्छत इति सवनीयस्य विध्यन्तः ॥

पशुगणेषु ऐकादशिनधर्मातिदेशाधिकरणम् ।

सू० तत्प्रवृत्तिर्गणेषु स्यात् प्रतिपशु दर्शनात् ॥ ८ ॥

यूपसौत्रामण्यादिषु पशुगणेषु गणत्वसामान्याधिक्यादैकादशिनविध्यन्तः ॥

अव्यक्तयजतौ सौमिकधर्मातिदेशाधिकरणम् ।

सू० अव्यक्तासु तु सोमस्य ॥ ९ ॥

"विश्वजिता यजेत" त्यादिष्वेकाहादिषु द्वादशाहे च किं दर्शपौर्णमासिको विध्यन्तः? उत सौमिकः? इति संशये विशेषाभावादनियमे प्राप्ते उच्यते सौमिकः स्यादव्यक्तत्वसामान्यात्कैयमव्यक्तता, यागार्थतया विनियुक्तदेवताविरहः, यत्र तद्धितचतुर्थी मन्त्रवर्णैर्यागार्थेनयैव देवताविनियुक्तास्तद्व्यक्तम् इतरत्त्वव्यक्तं तथा च विश्वजिदादयः सोमश्च ननु ऐन्द्रवायवं गृह्णातीति तद्धितेनैव देवताऽपि सोमे विहिता न याग देवताऽनेन विधीयते, किन्तु ग्रहणे तद्गतायास्तु पश्चाद्दार्थिको यागसम्बन्धोन तु प्रथममेव यागान्वय इत्यव्यक्तत्वम्, अतः सौमविध्यन्तो विश्वजिदादिषु ॥

---

[1] सादृश्यादिति पा० ।

अहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ।

**सू० गणेषु द्वादशाहस्य ॥ १० ॥**

द्विरात्रादिष्वहर्गणेषु अव्यक्तत्वं गणत्वं चाधिकं विद्यते तस्माद् द्वादशाहविध्यन्तः, एवञ्च पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते इत्यादयो गणधर्मा लभ्यन्ते ।

संवत्सरसत्रेषु गवामयनिकधर्मातिदेशाधिकरणम् ।

**सू० गव्यस्य च तदादिषु ॥ ११ ॥**

संवत्सरसत्रेष्वादित्यानामयनप्रभृतिषु संवत्सरसत्रत्वसामान्यात्संवत्सरनियमलिप्सया च गवामयनविध्यन्तः ।

निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम् ।

**सू० निकायिनां तु पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥ १२ ॥**

साहस्राः साद्यस्का इत्येकसंज्ञया युगपत्प्रस्तुत्य पश्चात्क्रमेण विहिता यागा निकायिन इत्युच्यन्ते तेषां प्रथमोधर्मवानुत्तरेषु किन्तो धर्माः प्रवर्त्तन्ते? उत सौमिका इति? संशये अव्यक्तत्वात् सौमिका इति प्राप्ते एकनिकायवर्त्तित्वमेकनामकत्वञ्चावान्तरसामान्यमधिकमस्तीति पूर्वविध्यन्त उत्तरेषु तथा यावदस्य साहस्रस्येत्यादिसाहस्रादिधर्मदर्शनं पूर्वधर्मप्राप्तिं दर्शयति ॥

फलाद्यैनामनतिदेशाधिकरणम् ।

**सू० कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तदन्धनत्वात् ॥ १३ ॥**

फलं स्वर्गः, नियमो यावज्जीवकता, कर्ता स्वर्गकामः समुदाय आग्नेयादीनां षण्णां मिथः साहित्यं किमेते विकृतिषु सौर्यादिषु मिथः प्रदिश्यन्ते ने?ति संदेहः, तत्र प्रकृतिसम्बन्धाद्विकृतावतिदेशनं प्रयाजादिवदेतेषामिति प्राप्तेऽभिधीयते । "प्रकृत्यैव निबद्धत्वाद्विकृत्या सह नान्वयः । न चातिदेशतः प्राप्तिरित्थंभावान्वयादृते" ॥ कथं भावापेक्षा हि विकृतिभावना यदेव प्रकृतावित्थंभावेन गृहीत तदेवापेक्षते, न च फलादीनामित्थंभावान्वयः फलनियमयोः पुरुषार्थत्वात्स्वर्गकामोऽपि न कर्मार्थः कर्मैव तदर्थमित्युक्तं स्वर्गकामाधिकरणे, तथाऽग्नेयादीनि षडपि

तुल्यवत्फलं प्रति करणत्वेनोपदिष्टानि नान्योन्यस्याङ्गं तेनैकस्योपकारेऽन्यानि प्रवर्त्तन्ते, न चाप्रवर्त्तमानेषु तत्साहित्यं भवति तस्मान्न फलादीनामतिदेशः, माभूदित्थंभावांशेनातिदेशः फलापेक्षयैव विश्वजिदादिष्वश्रुतफलेषु फलमतिदिश्यतामिति चेन्नैवं, तद्धि फलं विकृतावतिदेशेन विधीयमानमङ्गमेव स्यात् न च फलं विकृतिं प्रति विधीयते फलमेव प्राकृतं यथावस्थितमुद्दिश्य विकृतिर्विधीयतामिति चेन्न तस्य विकृतिः साधनं भवितुमर्हति प्रकृत्यैव स्ववाक्यावगतयाऽवरुद्धत्वात्तस्माच्च विकृतेः प्रकृति[1]फलसम्बन्धः ॥

गुणकामानां गोदोहनादीनामनतिदेशाधिकरणम् ।

सू० गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात् ॥ १४ ॥

इह सगुणफलानि "गोदोहनेन पशुकामस्य प्रणये" इत्येवमादीनि तत्साधनभूताश्च गोदोहनादयः किं विकृतिषु प्रवर्त्तन्ते नेति संशयः तत्र प्रधानफलं प्रधाननिबन्धनत्वात्तस्यं च विकृतिष्वप्रवृत्तेर्मा नाम प्रवर्त्तिष्ट गुणफलं तु गुणप्रवृत्त्या प्रवर्त्तितुमर्हति । तथा हि प्रणयनं तावदतिदिश्यते तत्साधनभूतश्च गोदोहनमनङ्गमपि साधनत्वाच्चमसवत्प्रवर्त्तते तत्प्रवृत्त्या च तत्साध्यं फलमपि प्रवर्त्तेत यथा प्रधानाश्रितदध्यादिसाध्यमिन्द्रियादि दध्यादेर्होमसाधनत्वेन विकृतिषु प्रवृत्तेः प्रवर्त्तते, उच्यते "न हि गोदोहनादीनामित्थंभावेन संग्रहः । इत्थंभावातिदेशेन तेषां नातोतिदेशधीः[2] ॥ न हि यत्किञ्चिद्यथाकथञ्चिदपि प्रकृतेः साधनं, तत्सर्वमतिदिश्यते कथंभावापेक्षा हि विकृतिचोदना सादृश्योपस्थापितां प्रकृतिचोदनामालोच्य तस्याश्चाङ्गांशायाः साध्यसाधनांशावनाकाङ्क्षितत्वादनादृत्य तृतीयमित्थंभावांशं वाक्यशेषत्वेन गृह्णाति, तत्र यत्प्राकृत्यां चोदनायाम् इत्थंभावरूपेणागृहीतं प्रमाणान्तरेण कथंचित्साधनभावमुपनीतं गोदोहनादि तस्य कः प्रसङ्गो विकृतौ माभूदतिदेशः प्रणयनस्य त्वाश्रयभूतस्य विकृतावपि सद्भावात् तदाश्रितं गोदोहनमपि पुरुषः काम

१ प्राकृतफलसम्बन्ध इति पा० ।
२ दधिगोदोहनादीति पा० ।

नावशास्त्रयुक्तमिति चेन्न वैगुण्यात् अतिदिष्टस्याङ्गभूतस्य चमसस्य विना शास्त्रेण पुरुषेच्छामात्रेण युक्तो बाधः, तद्बाधे हि वैगुण्यं स्यात् अवैगुण्ये तु भवतु कामस्यापि प्रवृत्तिः, यथाह भाष्यकारः "तस्मिंश्च प्रवर्तमाने कामोऽपि प्रवर्तत" इति, किञ्च यद्दर्शपौर्णमासापूर्वसाधनभूतं प्रणयनं तदेवाश्रयस्तादृशस्यैव प्रकृतत्वात्, न च विकृतौ तादृगस्ति, तस्मादाश्रयाभावादपि न गोदोहनतत्फलयोः प्रवृत्तिः ॥

सौर्ये चरावभिमर्शनद्वयस्य विकल्पाधिकरणम् ।

सू० एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ १५ ॥

सौर्यं आग्नेयविकार इति वक्ष्यते आग्नेयश्च पौर्णमास्यमावास्याकालयोरुत्पन्न उभयसन्नः, तेन चतुर्होत्रा पञ्चहोत्रा च तस्य कालद्वयेऽभिमर्शनं तत्र सौर्ये मन्त्रद्वयं किं पौर्णमास्यमावास्याकालयोर्व्यवस्थया प्रयोक्तव्य? मुताव्यवस्थये?ति "व्यवस्था प्रकृतौ दृष्टा प्राप्यते विकृतावपि । प्रकृतावार्थिकी त्वेषा विकृतौ नातिदिश्यते" । चतुर्होत्रा पौर्णमासी पञ्चहोत्रामावास्यामिति समुदायद्वारेण मन्त्रयोरुपदेश प्रकृतत्वाच्च कालद्वारेण तस्याप्रकृतत्वात्, अतः समुदायद्वयवर्त्तिन आग्नेयस्यैव मन्त्रावङ्गम्, एकार्थत्वाच्च विकल्पेन तत्र पौर्णमासीकाले पौर्णमासिकैर्हविरन्तरैः सहाभिमृश्यमानमाग्नेयमविरोधाच्चतुर्होत्राभिमृष्टम, एवममावास्याकाले पञ्चहोत्रा न तु कालकृता व्यवस्था तत्र शास्त्रार्थः, तस्माद्विकृतावव्यवस्था ॥

सौर्ये चरावाग्नेयधर्मातिदेशाधिकरणम् ।

सू० लिङ्गसाधारण्याद्विकल्पः स्यात् ॥ १६ ॥

इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरित्युक्तं, तत्र षण्णामाग्नेयादीनां कस्य क्व प्रवृत्ति? विशेषाभावादनियमः सादृश्यविशेषात्त्वेकदेवत्ये सौर्यादावेकदैवत्यस्याग्नेयस्य प्रवृत्तिः, अनेकदैवतेषु आग्नीषोमीयैन्द्राग्नयोराज्यादिद्रव्यकेषु उपांशुयाजादेः कथं पुनरेकदेवत्यत्वमाग्नेयसौर्ययोर्वाक्यशेषादिति दर्शितं भाष्ये ॥

हविर्देवतयोः सन्निपाते हविःसामान्यस्य बलीयस्त्वाधिकरणम् ।

सू० विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ १७ ॥

ऐन्द्रे पुरोडाशे किं देवतासामान्यात् सान्नाय्यविध्यन्तः ? उत हविः-सामान्यादौषधविध्यन्त ? इति संशये तथाऽऽग्नेये पयसि देवतासामान्यादौ-षधस्य हविःसामान्याद्वा सान्नाय्यस्येति देवतासामान्यहविःसामान्ययोः किं बलीय इति चिन्त्यते, विशेषभावादनियमः, प्रथमश्रुतत्वप्राधान्याभ्यां वा देवतायाः प्राबल्यं मन्वानस्योत्तरं हविषस्त्वाज्यमानत्वात्प्रत्यासत्तिर्हि कर्मणि । उद्देश्यमात्ररूपत्वाद्देवता ऽऽराद्दुपस्थिता । यच्च प्रत्यासन्नत्तेनैवो-पस्थितं विध्यन्तमासाद्य निराकाङ्क्षं कर्म न बहिरङ्गभूतदेवतोपस्थापित-मपेक्षते । यद्यपि प्रातिपदिकार्थत्वाद्देवता मुख्या तथाऽपि तत्स्वरूपत्रे-लायामाकाङ्क्षाविरहादनतिदेशः, कर्मविध्युत्तरकालं तु प्रत्यासत्तेर्हविःसा-मान्यं बलीयः प्राधान्यन्तु देवताया नवमे निराकरिष्यते, किं चौषधे सान्ना-य्यधर्मास्तत्र चौषधधर्माः सर्वे बाध्येरन्, असम्भवाद्यथायथन्तु प्राप्तौ न कस्यचिद्बाधः, तस्माद्धविःसामान्यं बलीयः ॥

शतकृष्णलाख्यहिरण्ये औषधधर्मातिदेशाधिकरणम् । सू० हिरण्यमाज्यधर्मस्तेजस्त्वात् ॥ १८ ॥

कृष्णलचरौ आज्यौषधयोः कस्य विध्यन्तः स्यात् उज्ज्वलसामा-न्यादाज्यस्य विशदत्वादौषधवाचिचरुशब्दसंयोगाच्च तद्धर्माः[1] ॥

मधूदके च उपांशुयाजोमा-ज्यधर्मातिदेशाधिकरणम् । सू० मधूदके द्रव्यत्वसामान्यात्पयो-विकारः स्यात् ॥ १९ ॥

दधिमधुघृतं धानाः तण्डुला उदकमित्यत्र मधूदकयोः पयः प्रव-र्त्ततेताज्य ? मिति संदेहे स्वाभाविकद्रवत्वसामान्यात्पयः, नैवम् असत्यपि च स्वाभाविकद्रवत्वेऽग्निसंयोगादाज्येऽपि द्रवत्वसद्भावाद्गुणसामान्याधि-क्यात्पयोधर्माणां च दोहनादीनामसम्भवादुत्पवनादीनाञ्च सम्भवात् आज्यविध्यन्तः "वर्णसाम्यस्य चाधिक्याद् द्रवत्वस्याविशेषतः । अनुग्रहाच्च धर्माणामाज्यधर्ममधूदकम् ॥

इति शास्त्रदीपिकायामष्टमस्य प्रथमः पादः ॥ १ ॥

१ औषधधर्माः ।

## अथ द्वितीयः पाद आरभ्यते ॥

ऐष्टिकसौत्रामण्योरैष्टिकधर्म्मातिदेशाधिकरणम् ।

सू० वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥

वाजिनयागे सौत्रामण्यङ्गभूतेषु चाश्विनादिग्रहेषु किं सौमिको विध्यन्तः? उतैष्टिकः? इति संदेहे "सोमो वै वाजिनं सुरासोम इत्यसोमे सोम-शब्दस्तद्धर्मातिदेशार्थोऽग्निहोत्र-शब्दवत्तस्मात्सौमिकः, प्रशंसार्थस्त्वयं सोम-शब्दो न विधानार्थः, विध्यश्रवणात् तद्धविःसामान्यादैष्टिको वाजिने पयोविध्यन्तः सुराग्रहेषु चौषधः ॥

पशौ सांनाय्यधर्मातिदेशाधिकरणम् ।

सू० पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् ॥ २ ॥

पशावग्नीषोमीये दर्शपौर्णमासयोः प्रवृत्तिरित्युक्तं, तत्र देवतासामान्यादग्नीषोमीये पुरोडाशः प्रवर्त्तते हविःसामान्यमपि पुरोडाशे नैव विद्यते द्वयोरपि घनत्वात् सान्नाय्यं वा प्रवर्त्तते हविःसामान्यात्सान्नाय्यं हि पशुतः प्रभवति, पशुरपि पशुप्रभवः संबन्धित्वाच्च पशुसान्नाय्ययोः पशुः प्रतीतः सान्नाय्यमुपस्थापयति, सान्नाय्यपात्रं चोखा पशौ दृश्यमाना तत्प्रकृतित्वं सूचयति ॥

पशौ पयोधर्म्मातिदेशाधिकरणम् ।

सू० दध्नः स्यान्मूर्त्तिसामान्यात् ॥ ३ ॥

तत्रापि दध्नो विकारः स्याद्घनत्वसामान्यात् पयसो वा, तद्धि साक्षात्पशुप्रभवं, दधि तु तद्व्यपेतं, पशुरपि साक्षात्पशुप्रभवः गतिमत्त्वं च पशुपयसोस्तुल्यं तदधिकं दधितः पयसः ॥

आमिक्षायां पयोधर्म्मातिदेशाधिकरणम् ।

सू० आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ ४ ॥

आमिक्षायागः सांनाय्यविकारः इत्यसंदिग्धं दध्नः पयसो वेति चिन्त्यते "दधि क्षीरं च संसृष्टमामिक्षेत्यभिधीयते। उभयोश्च रसस्तस्यां दृश्यतेऽतो द्वयात्मिका। विशेषाग्रहणात्तस्मादुभयोर्विकृतिर्भवेत्। तप्ते पयसि वाक्ये तु सप्तम्या गुणतः पयः। दधि द्वितीयानिर्देशात्प्रधानत्वेन सा पदं दध्येव प्रतिनिर्दिश्य तेन बध्नाति देवतां। दध्येवातो हविस्तस्मात्सायं दोह-विकारता। पयसस्तु प्रधानत्वं तत्र कर्मसमाप्तितः। दध्ना हि नीयमानेन तदेव व्याप्यते पयः। कर्मतोऽपि प्रधानत्वं तस्य स्यात्संप्रदानवत्। सर्व-नाम्ना परामर्शस्तस्यैवातोऽवकल्पते। यदेव दधिसंयोगाद्घनीभूतमतो हविः॥ तस्यैव देवतायोग आमिक्षाऽपि तदेव नः॥ प्रातर्दोहविकारत्व-मामिक्षायास्ततः स्थितम्॥

द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणम्।

सू० सत्रमहीनस्य द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात्॥ ५॥

गणेषु द्वादशाहस्येत्युक्तं, द्विविधाश्च गणाः सत्राण्यहीनाश्च द्वाद-शाहोऽप्युभयात्मा तस्योभयविधस्याप्यनियतात्मना सर्वत्र प्रवृत्तिविशेषा-भावात्, "सत्रस्यैव तु सत्रेषु प्रवृत्तिः सत्रसाम्यतः॥ तथाऽहीनेष्वहीनस्य सुसदृक्त्वादिति स्थितम्॥

पञ्चदशरात्रादिषु सत्रधर्मातिदेशाधिकरणम्।

सू० अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्या-हीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्व-हीनत्वदर्शनात्॥ ६॥

पञ्चदशरात्रस्य कुण्डपायिनामयनस्य च किं सत्रविकारत्व? मुता-हीनविकारत्व? मिति चिन्त्यते तदर्थं च किमनयोरहीनत्व? मुत सत्रत्व-मिति? विचार्यते, तत्रापर्यतिरात्रत्वाद् द्विरात्रादिवदेतयोः अहीनत्वम्भवे-देवमासनोपायचोदनात्। सत्रसंज्ञातकाण्डे च समाम्नातमिदं द्वयं तस्मा-त्सत्रमतः सत्रविधन्तोऽत्र प्रवर्तते॥

इति शास्त्रदीपिकायामष्टमस्य द्वितीयः पादः॥ २॥

## अथ तृतीयः पाद आरभ्यते ॥

शुचिदेवते आग्नेयस्याग्नावैष्णवे च आग्नीषोमीयस्य धर्मातिदेशाधिकरणम् ।

सू० हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥

आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्सारस्वतीमाज्यस्य चरुबार्हस्पत्यं चरुमिति तत्र सन्देहः । किं प्रथमस्याग्नेयविध्यन्तस्तृतीयस्याग्नीषोमीयविध्यन्त ? उत विपरीत ? मिति स्थानसामान्यात् प्रथमतृतीययोः प्रथमतृतीयविध्यन्तप्राप्तौ उच्यते–प्रथमस्य द्विदेवत्यत्वादाग्नीषोमीयविध्यन्तः तृतीयस्य चैकदैवत्यत्वादाग्नेयविध्यन्तः देवतासामान्यमुत्पत्तिवेलायामेव शीघ्रं गम्यते स्थानसामान्यं तु न्यायापेतत्वाद्विलम्बितत्वाद् दुर्बलं, तस्माद्दैवतासामान्यात्प्रथमतृतीययोस्तृतीयस्य प्रथमविध्यन्तः ॥

जनकसप्तरात्रे त्रिवृत्स्वहः सु द्वादशाहधर्मातिदेशाधिकरणम् ।

सू० गणचोदनायां यस्य लिङ्गन्तदा वृत्तिः प्रतीयेताग्नेयवत् ॥ २ ॥

जनकसप्तरात्रे श्रूयते चत्वारि त्रिवृत्यहान्यग्निष्टोममुखानीति तत्र किमेषु पार्ष्णिकस्याद्यस्याह्नस्त्रिवृतो विध्यन्तश्चतुर्ष्वप्यावर्तते ? उत त्रिवृदादीनां चतुर्णामपि प्रवृत्तिश्चतुर्षु क्रमेणेति संशये पूर्ववत्संघातसामान्यस्य च दुर्बलत्वात् त्रिवृत्त्वसामान्येनैवाद्यस्यैव प्रवृत्तिः, नैवमिह सह चोदितानां संघातोऽपि शाब्दस्त्रिवृत्त्वमपि तत्र संघातसामान्यं प्रधानगतं तदङ्गभूतस्तोत्रीयागतात् त्रिवृत्त्वाद्बलीय इति तद्वशेन चतुर्णामपि पृष्ठ्याद्यानां चतुर्षु प्रवृत्तिरेवं चाग्निष्टोममुखानीत्येव वादो युज्यते, अन्यथा सर्वेषामग्निष्टोमत्वं स्यात्, आद्यस्याग्निष्टोमत्वात्तत्राग्निष्टोममुखानीति न घटते ॥

षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ।

सू० कालाभ्यासे[1] च बादरिः कर्मभेदात् ॥ ३ ॥

१ कालाभ्यासेऽपि इति पा० ।

षड्त्रिंशद्रात्रे श्रूयते "षडहा भवन्ति चत्वारो भवन्ती"ति तत्र विचार्यते किमेतेषु चतुर्विंशत्यामहःसु द्वादशाहिकस्य दशरात्रविध्यन्तस्य प्रवृत्तिः? उत षडहस्यैव च तुरावृत्ति? रिति. तत्र "चतुर्विंशतिरेतानि चत्वारः षडहा इति। चोद्यन्ते ऽहानि तेनैषु द्वादशाहः प्रवर्त्तते। उच्यते चतुर्विंशति-संख्योऽत्र गणः साक्षान्न चोद्यते। चतुःसंख्यैस्तु षडहैरनुमानेन गम्यते। चतुः-संख्यास्तु षडहाः प्रत्यक्षेणैव चोदिताः। तस्मात्षडहविध्यन्तः शीघ्रमत्रा-वगम्यते॥

संस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम्।

सू॰ संस्था गणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात्॥ ४॥

शतोक्थ्यं भवति शता[1]त्रिरात्रं भवति, इति श्रुतं तत्र संशयः किं ज्योतिष्टोमस्य शतकृत्वोऽभ्यासः? उत द्वादशाहप्रवृत्ति? रिति तत्रोक्थ्या-दिशब्दानां ज्योतिष्टोमनामत्वं मन्वानस्तमेव दूरस्थमप्यनूद्य शताभ्यास उपादेयो गुणो विधीयते इति मन्वानस्तस्यैवाभ्यासमाह "संस्थानिमित्ता-स्त्वेतेन कृताः कस्यापि वाचकाः। सन्निध्यभावतः संस्थाविशिष्टगण-चोदना। तस्माद्द्वादशाहविध्यन्तः॥

शतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्रोपचयाधिकरणम्।

सू॰ गणादुपचयस्तत्प्रकृतित्वात्॥ ५॥

"शतोक्थ्यं भवती"त्यत्र द्वादशाहिको दशरात्रो दशकृत्वः प्रवर्तेत इत्युक्तं, तस्मिंश्च दशरात्रे ऽभितो द्वावग्निष्टोमौ तत्र शतोक्थ्ये प्रतिदशकं द्वौ द्वावग्निष्टोमौ उक्थ्यसंस्थया वर्द्धयितव्यौ तत्रागम्यमानेषूक्थ्य-स्तोत्रेषु संशयः, किं द्वादशाहिकोक्थ्यस्तोत्रविकारास्तेषु हि केचिद्विशेषाः प्राकृतेभ्यः स्तोत्रेभ्यो विद्यन्ते? उत ज्योतिष्टोमोक्थ्यविकारा? इति तत्र द्वादशाहविकारत्वादस्य गणस्य तदीयेषूक्थ्याहस्सु यान्युक्थ्यस्तोत्राणि तद्विकारत्वमेवास्मिन्वागन्तूनामुक्थ्यस्तोत्राणां युक्तं, नैतद्युक्तं ज्योतिष्टोमे-ष्युक्थ्यस्तोत्राणामुत्पत्तिः, द्वादशाहे त्वतिदेशप्राप्तानां तेषामेव विशेषा

१ शतातिरात्रमिति।

विहिताः । यत्र चोत्पत्तिस्तत्र एवागमनं युक्तं न यत्रातिदिष्टानि, न हि भिक्षुकोभिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके, तस्माज्ज्योतिष्टोमिकानामेवोक्थ्यादीनां प्रवृत्तिः ॥

गायत्रमेतदहर्भवति इत्यादावुत्पत्तिगायत्रीणामागमाधिकरणम् ।

सू० गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात्संख्यात्वादग्निष्टोमवद्व्यतिरेकात्तदाख्यत्वम् ॥ ६ ॥

बृहस्पतिसवे प्रकृतितो गायत्र त्रैष्टुभादिषु नानाछन्दस्सु प्राप्तेषु छन्दोऽन्तराणि व्युदस्य गायत्री नियतागायत्रमेतदहर्भवतीति तत्र संशयः किं त्रिष्टुबादिष्वेव चोदकप्राप्तेषु अक्षरलोपं कृत्वा गायत्री संपादयितव्या? उत दाशतयीभ्य उत्पत्तिगायत्र्य आनेतव्या? इति तत्र संख्यामात्रवाचकत्वात् गायत्री-शब्दस्य प्राकृतीष्वेव चोदकप्राप्तास्वक्षरलोपो न विरुध्यते, तस्मात्तास्वेवाक्षरलोपः । तथा तिस्रोऽनुष्टुभश्चतस्रो गायत्र्य इत्याद्युपपद्यते, अत्रोच्यते-संख्यामात्राभिधायित्वे सर्वत्रैव प्रसज्यते । मन्त्रान्तरे घटादौ च तस्मात्संख्यान्वितामृचम् । अष्टाक्षरैस्त्रिभिः पादैर्युक्ताम-भिदधात्यसौ । तिस्रोऽनुष्टुभ इत्यत्र गौणः शब्दो न मुख्यतः, । तस्मादुत्पत्तिगायत्र्य आनेयाः । पूर्वाधिकरणे उपचयश्चिन्तितः, तत्प्रसङ्गादपचयोऽयं चिन्तितः ॥

इति शास्त्रदीपिकायामष्टमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## अथ चतुर्थः पाद आरभ्यते ॥

---

दर्विहोम-शब्दस्य कर्मनामधेयताधिकरणम् ।

सू० दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥

प्रपञ्चितेऽतिदेशे ह्यपवादविवक्षया दर्विहोमा इहयमागताः, तत्प्रसङ्गेन च यदेकया जुहुयाद्दर्विहोमं कुर्यादित्यर्थवादगतो दर्विहोम-शब्दो

हृदयमागतः किं गुणविधिर्नामधेयं वा, नामापि किं लौकिकानामेवोत वैदिकानामपि? किं यज्युत्पत्तीनामपि कि वा जुहोत्युत्पत्तीनामेवे? ति प्रसङ्गाच्चिन्त्यते तत्र होम-शब्दसंयोगात्तस्य च कर्मवचनत्वात्तत्प्रधानत्वाच्च समासस्य कर्मनामत्वं तत्र लौकिकानां स्थालीपाकादीनां कर्त्तरि दर्विहोमिकशब्दप्रयोगात्तेषां नाम स्यात्, वैदिकेऽपि वाऽस्तु होमे प्रयोगाद्धोमत्वाविशेष च वैदिकानामपि तत्र यज्युत्पत्तीनामपि "चतुरवत्तं जुहोति"- त्यादिना होमत्वापत्तेस्तेषामपि न यागस्य होमत्वापत्तिः, यागात् कर्मान्तरं प्रोक्षणादिद्रव्यसंस्काररूपं विधीयते अतो जुहोत्युत्पत्तीनामेवाग्निहोत्रादीनां नाम स्यात् । यत्तु गुणविधित्वमाशङ्कितं तच्चोद्यमात्रं तत्प्रख्यन्यायसिद्धमेवोत्तरमुपसंहृतम् ॥

दर्विहोमशब्दस्यापूर्वताधिकरणम् ।

सू० तस्मिन्सोमः प्रवर्त्तेताव्यक्तत्वात् ॥ २ ॥

प्रासङ्गिकं परिसमाप्य किं दर्विहोमाः पूर्ववन्तः? उतापूर्वा? इति विचार्यते, तत्राश्रुतेतिकर्तव्यताकत्वादव्यक्तत्वाच्च सौमिको विध्यन्तः प्रवर्तेत यागहोमत्वेनात्यन्तविसदृशत्वाद्धोमानामेवाग्निहोत्रनारिष्टादीनां धर्मवतां सद्भावाच्च तदतिक्रमेण सोमयागनाश्रयणं युक्तम् । अस्तु तर्हि तत्प्रकृतित्वमेव नैकं नारिष्टाङ्गभूतानामिध्मादीनां त्र्यम्बकहोमेष्वभावहेतुदर्शनाल्लिङ्गान्तराणि च दर्शितानि दर्विहोमानामपूर्वत्वं सूचयन्ति, तस्मादपूर्वाः । सत्तेपविस्तारकः सापवादः सदृक्त्वानुमाद्यात्तथा नामधेयात् । अधीताश्च वाक्यात्प्रसिद्धोऽतिदेशः कथयिष्यामहेऽतः परन्तूहचिन्ताः ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायाम् अष्टमस्य चतुर्थः पादः समाप्तः ॥ ४ ॥

( शेषमर्थे )

# सिद्धान्तमुक्तावली

## प्रकाशानन्दविरचिता ।

(*Continued from page* 32 Vol XII)

तच्च यद्येन विना ऽनुपपन्नं तत्सर्वं सम्बन्धित्वमनादित्वमनिर्वचनीयत्व भावरूपत्व विचित्रशक्तिकत्वमेकत्वमन्यद्वा यत्किञ्चिदपेक्षितं स्वोपपादकत्वेन सर्वं कल्पयतं त्यपि वाच्यम् तथाच प्रमाणप्रश्नो अनर्थक एवाज्ञानस्य साक्षिणैव सिद्धत्वात् नचाज्ञानविषयाज्ञाननिवृत्त्यर्थं प्रमाणप्रश्नो युक्त इति वाच्यं तदभावात् अज्ञानस्य प्रमाणेन ज्ञातुमशक्यत्वाच्च तेन तस्य विरोधात् । तदय तमोदीपन्यायः तथाहि ।

अज्ञानं ज्ञातुमिच्छेद्यो मानेनात्यन्तमूढधीः ।

स तु नूनं तमः पश्येद्दीपेनोत्तमतेजसा ॥

Hence also it must be granted that Nescience which cannot be accounted for save through something else, such as through relation (of Nescience with the Witness) its own eternal-ness *ab ante*, its inexplicability, its character as a positive entity and as a unity possessing manifold powers, or through any other character which may be necessary to account for Nescience (sva), leads us to infer (kalpayati) all these characteristics.

Thus the question whether there is any pramāna for Nescience is quite useless, since Nescience is vouched for only by the Witness. Nor can it be urged that the question whether a pramāna for Nescience exists may be rightly put with a view to destroy the Nescience relating to Nescience. For there is no such thing as Nescience relating to Nescience, and because Nescience cannot be cognised through a pramāṇa, since Nescience and pramāna are contradictory, so ajñāna is put an end to (nivarttya) by pramāṇa (nivarttaka). Hence the well known illustration of darkness and the lamp —thus, 'That dullest of dull-heads who would cognise Nescience by means of a pramāna, would forsooth go looking for darkness with a brilliant lamp!'

तथा चाज्ञानं कथमिति प्रष्टैवात्माज्ञानमुपपादनीयमिति स्वानुभवसिद्धे कथंताऽनुपपत्तिरेव । कुतस्तर्हि मे मुक्तिः कर्तृत्वाद्यशेषानर्थव्रातप्रसवबीजस्यात्माज्ञानस्य स्वानुभवसिद्धत्वात् तत्त्वमस्यादिवाक्यजन्यापरोक्षब्रह्मात्मसाक्षात्कारेणाज्ञानबाधादेवेति गृहाण ।

२४ ननु को ऽयं बाधः तत्र पूर्वप्रत्ययस्य व्यधिकरणप्रकारकत्वनिश्चय इत्यन्ये तन्न अन्यथाख्यात्यनङ्गीकारात् अज्ञानस्याबाधापत्तेश्च । सविलासाज्ञाननिवृत्तिरित्यस्मदीयाः केचित् तदप्यापातरमणीयं प्रत्येकसमुदायाभ्यामव्याप्तेः ।

Well then, (some one may ask) how is Nescience proved? The questioner himself must prove the Nescience which relates to his Self: thus the question of *How* is impossible in regard to Nescience which is proved by one's own consciousness. Whence then emancipation for me (he may ask), since my own consciousness is a proof of that Nescience which relates to Self, and which is the seed whence grows all that complex of evils beginning with (the false notion of) agency &c? Know then (we reply) that emancipation follows on the destruction of Nescience through an intuition of the identity of Self with the immediately presented Brahman—(intuition effected) by means of the passage 'that thou art'

24. What is this *destruction* of Nescience? Some teachers (Naiyāyikas) define it as the conviction that a previous cognition had (as its predicate portion) a predicate which (really) belonged to another subject. This definition we reject because we do not admit the technical *anyathākhyāti* or mistaken cognition; and because it would follow on this view that there was no destruction of Nescience.

Bādha, destruction of error, explained according to the Vedantic anirvachanīya-khyāti, to the rejection of other current views, e. g. akhyāti, asatkhyāti &c

Some of us Vedantins* hold that it is the cessation of Nescience together with its products. This view too commends itself at first sight only, for the definition fails to apply to Nescience and its products, if these are taken singly or together.

* The view of the Panchapādikāvivaraṇa:—'अज्ञानस्य स्वकार्येण वर्त्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाधः' ।

किञ्च केयं निवृत्तिः ध्वंसमात्रं वा ज्ञानसाध्यः स एव वा पदार्थान्तरमेव वा आत्मस्वरूपं वा । नाद्यः मुद्गराद्याघातजन्यघटादिध्वंसे तदव्यवहारात् । न द्वितीयः उत्तरज्ञानसाध्यपूर्वज्ञानध्वंसे तथात्वापत्तेः ज्ञानमात्रध्वंसे ऽतिव्याप्तेश्च । न तृतीयः तद्ध्वंसाव्यापनात् तदनिवृत्तावद्वैतक्षतेः । न चतुर्थः तस्य नित्यसिद्धत्वेन ज्ञानवैयर्थ्यापत्तेः । तस्माद्बाधस्यैव निर्वक्तुमशक्यत्वात् कथमज्ञानतत्कार्यबाधान्मोक्ष इति ।

अत्र ब्रूमः ।

साक्षात्कृते त्वधिष्ठाने समनन्तरनिश्चितिः ।
अध्यस्यमानं नास्तीति बाध इत्युच्यते बुधैः ॥ ४० ॥

Further, what is meant by this cessation? Is it to be defined as destruction merely? Or as destruction effected by knowledge? Or as something else? Or as the Self? Not as the first; for in regard to the destruction of a jar effected by the strokes of a pestle the word bādha (tat) is not applied. Nor the second; for then bādha would apply to the destruction of the earlier cognition effected by the later cognition, and because the definition extends too far to destruction of cognition merely. Not as the third; for the definition will not apply to the destruction of that (something else supposed to be destruction, since a thing cannot be its own destruction): and if there is no destruction of this something else, Vedantic Monism is overthrown. Not the fourth; for since Self is eternally established, it follows that knowledge (in regard to Self) is unnecessary.

Hence, since the very term bādha cannot be explained, how is it possible that emancipation should follow on bādha of Nescience and all its products!

To this objection we reply:—

The wise have declared that bādha is conviction, expressed in 'the falsely surmised object *is not*', following immediately on an intuition of the substrate) in which the thing was surmised)... XL.

शुद्धेऽधिष्ठाने विपरीतमध्यस्य प्रवर्त्तमानस्य निवर्त्तमानस्य वा यदधिष्ठानविषयकं बाधकज्ञानं परोक्षमपरोक्षं वोत्पन्नं तदनन्तरमिदमिहकालत्रयेऽपि नास्तीति योऽयं निश्चयः स एव बाध इति सर्वजनानुभवसिद्धम् । नचान्यथाख्यातिवादेऽप्यस्यार्थस्यार्थात् पर्यवसानमस्तीति वाच्यं तत्राध्यस्यमानस्यान्यत्र सत्वाभ्युपगमात् एवं ब्रह्मात्मसाक्षात्कारे जाते अज्ञानं तत्कार्यं च सर्वं यावत् किञ्चित्तत्राध्यस्तं तत्सर्वं तत्र कालत्रयेऽपि नास्तीति योऽनिश्चयः स्वानुभवसिद्धः स एव तस्य तत्र बाध इत्युच्यते अत एव प्रतिपन्नोपाधौ निषेधप्रतियोगित्वमनिर्वचनीयत्वमिति सम्प्रदायविदां लक्षणमपि समञ्जसम् ।

If after a man has falsely surmised something in regard to an unrelated substrate, whether he energise or not in regard to the surmised object, there arises for him a knowledge, be it mediate or immediate, concerning the substrate and destructive of the surmised object, then after this knowledge there comes to him the conviction—this surmised object *is not* in time present, past and future,—which conviction is what the word bādha means, as vouched for by the common experience of men.

And it cannot be urged that this meaning (of the word bādha) applies also to the anyathākhyāti view as shown by the context. For this view holds that the surmised thing (e.g. silver) exists elsewhere (while it is being surmised in the nacre—which the Vedantin denies).

Thus, when intuition of the identity of Brahman and the Self has been attained, there arises the conviction, vouched for by one's own consciousness, that Nescience and its products, absolutely everything surmised to exist in Brahman (tatra) as substrate, do not exist in Brahman even in trinal time—this conviction is termed the bādha of Nescience (tasya) in regard to Brahman the substract (tatra). Hence also the definition of *inexplicability* given by those who know the traditional teaching is adequate: it runs thus:—inexplicability consists in the being the counterentity to a negation made in regard to the substrate of that which is erroneously surmised.*

*cf. Chitsukhī. Pandit Vol. IV. p. 484: Ved. paribh Vol. V. p. 660

नचोत्तरकालीननिषेधप्रतियोगित्वेपि वर्त्तमानातीतकालयोः सत्वान्न त्रैकालिकनिषेधप्रतियोगित्वमनिर्वचीयत्वमिति वाच्यं अनिर्वचनीयत्वापरिज्ञानात् नहि कादाचित्कत्वमात्रेणानिर्वचनीयत्वं भवति पराभिमतसत्यस्यापि घटादेस्तथात्वात् नचाविद्यकत्वेन विशेषः कारणस्य नामान्तरकरणापत्तेः नच ज्ञानबाध्यत्वेन विशेषः तस्यापि सतो नास्तित्वप्रमित्यनुपपत्तेः नच सकलकार्यकारणबाधरूपस्य नास्तीतिप्रत्ययस्य बाधान्तरं मृग्यमन्यथा ऽद्वैतक्षतिरिति वाच्यम्

Nor can it be urged that in the above definition the negation cannot hold as to *trinal* time; for, although the negation concerns future time, the surmised object did exist in time past and present. This objection is due to a misunderstanding of the term *inexplicability*. For *inexplicability* is not constituted merely by the *temporary character* (of the object), since temporary character (tathātva) belongs to jars and like objects, although such objects are regarded by non-Vedantins (para) as real things. Nor can it be urged that (between real objects like jars &c., and unreal objects like the snake and silver of the stock example) there is a difference, constituted by the qualification of *being products of Nescience* (in the case of the snake and silver). For what follows from this objection is that a new name, sc. Nescience, has been given to the cause (of things). Nor is there a difference (between these two classes of things) constituted by the fact of the (latter class) being destroyed by knowledge. For it would follow that in regard to this difference also (tasyāpi), if it were something real, the certain knowledge of its non-existence could not arise. Nor can it be urged that some further destruction must be sought for this conviction of the non-existence (of the world)—which conviction (the Vedantins teach) is destruction of all causes and effects: otherwise (sc. if this conviction be admitted as real, sat) Vedantic Monism is overthrown (*i. e.* there would in this case be two realities, viz. Brahman and the conviction that the world is false).

ब्रह्मातिरिक्तसर्वबाधरूपस्य तस्य स्वान्तर्भावेनैव तथात्वात् नच ब्रह्मातिरिक्तमस्ति नास्ति वेतिविकल्पावकाशः अनिर्वचनीयत्वेन परिहृतत्वात् । अख्यात्यात्मख्यात्यसत्ख्यातिवादेषु भ्रमबाधव्यवस्थानुपपत्तेः अन्यथाख्यातिवादिनैव दर्शितत्वात् नेह यत्यते ग्रन्थगौरवभयात् अनात्मविचारत्वाच्च

For this conviction (tasya) consisting in the destruction of *all that is not Brahman* is destruction inasmuch as it includes itself * (within the *all*). Nor is there room for the doubt whether the (world as) distinct from Brahman *is* or *is not;* for we have overthrown this doubt by showing the *inexplicability* of the world (cf. pp. 38,39.)

And because the holder of the anyathākhyāti view has shown that neither error nor the destruction of it can be satisfactorily accounted for on the views of akhyāti, ātmakhyāti or asatkhyāti, † no attempt has been made here to discuss these views for fear of extending our book; and because this discussion does not directly treat of the Self.

* ब्रह्मण्यध्यस्यमानं सर्वं कालत्रये नास्तीतिनिश्चयस्य अस्ति रूपद्वयमेकं बाधात्मकम् अपरमध्यस्यमानत्वम् । तत्राध्यस्यमानत्वेन रूपेण स्वविषयत्वम् । बाधत्वेन विषयित्वमिति नात्माश्रय इत्यर्थः तथा च नाद्वैतक्षतिरितिभावः । N.D's gloss.

† Nānādikshita thus states and refutes these views, borrowing sometimes even the words of the Bhāmatī (Biblio: Ind: pp 11-18): —

नन्वविविक्तव्यवहारप्रमज्ञकं स्मरणादगृहीतभेदं ग्रहणमेव भ्रमत्वेन व्यवह्रियते न च तद्विषयोऽनिर्वचनीयः पुरोवर्त्तिनः सत्यत्वात् । कथा नेदं रजतम् इतिबाधप्रत्ययोऽपि व्यवहारमात्रं बाधते न भ्रमविषयस्य कालत्रयाभावं बोधयति । तत्कथमनिर्वचनीयवाद इत्यख्यातिवादिनो मन्यन्ते । "The holders of the akhyāti view maintain as follows: —that same perceptive cognition, whose difference from recollected knowledge is not cognised, and which brings about the indiscriminate experience—'*this* (nacre) *is silver*'—where the knowledge of nacre is not discriminated from that of silver—is commonly regarded as *erroneous cognition.* And the object declared by this cognition is not (what the Vedantins technically term) anirvachanīya, *inexplicable*; for the object lying before us does exist. And so too the knowledge of destruction conveyed in *this is not silver* puts an end to the activity merely (which followed on the earlier cognition—sc. *this is silver*—) but does not (as the Vedantins declare) certify to the non-

existence, in time present, past and future, of the object (sc. silver) made known in the erroneous cognition (—this is silver—). Hence the anirvachanīyakhyāti view of the Vedantins; so that, at the time of error, anirvachanīya, or unreal, silver is produced, is untenable."

The akhyāti view of the Prābhākaras, it may be remarked, follows from their siddhānta that all cognition, jñāna as being self-luminous, self-evidencing, svaprakāśa, is true, yathārtha. Thus the consciousness expressed in idam rajatam is not (as is commonly supposed) erroneous cognition, bhrama, for both its factors, the one perceptional and embracing the idam, the other memorial and embracing the rajatam, are true. But there is here akhyāti, non-discrimination of the two factors as distinct. Such non-discrimination is of course due to some defect (dosha) visual or otherwise, and to the co-operation of the similarity between śukti and rajata which awakens the mental retentum, saṃskāra, of the rajata previously cognised. Cf. Bhāmati, p. 15.

He continues अख्यातौ तावद् ग्रहणमेव स्मरणादगृहीतभेदं बाध्याभेदव्यवहारप्रसञ्जकत्वात् भ्रम इति व्यवस्थापितम् । तदसत् । ग्रहणस्मरणे भासेते न वा । न चेत्तर्हि न स्तः । त्वन्मते ज्ञानस्य स्वप्रकाशत्वादभासने स्वरूपाभावनियमात् । भासेते चेत् कथं तर्हि तयोर्भेदाग्रहो भेदस्य स्वरूपत्वात् । अत एव न अभेदव्यवहारप्रसञ्जकत्वम् । ततः कथं भ्रमव्यवस्थापनम् । तथा बाधव्यवस्थापनमप्यनुपपन्नम् । यत्र त्यक्तपणस्य व्यवहार एव नोदेति तत्र नेदं रजतम् इतिज्ञानस्य बाधकत्वं न स्यात् । तस्मादख्यातौ भ्रमबाधव्यवस्थापनानुपपत्तिरिति । On the akhyāti view error is thus accounted for: *perceptional* cognition, whose difference from *memorial* cognition has not been perceived, is error, in that it leads to the experience of the thing hereafter to be rejected, sc. silver, as identical with the thing perceived, sc. nacre. This is wrong. Do the two, sc. the perceptional and memorial cognitions, appear in consciousness or not? If not, they exist not. For since you hold that knowledge is self-luminous (self-evidencing), it follows necessarily that when knowledge shines not, it exists not (svarūpa = sattā). If both the above cognitions shine forth in consciousness, then non-perception of the difference between them is impossible; for this difference does exist as cognition (svarūpatvāt = jñānātmakatvāt). Hence also (to the perceptional cognition) does not belong (as you maintain) the power of bringing about the experience of *identity* (of silver and nacre). Therefore it is impossible, on this view, to account for *error*. So too your grounding of bādha, or destruction of error, is contradictory. For where, in the case of a desireless man, no activity follows (on his error in regard to the nacre), the cognition expressed in 'this is not silver' would not be

the destroyer of his error (because you hold that this cognition destroys only the activity in regard to the silver; and therefore this man, having no desire for silver, would remain inactive and still continue to regard the nacre as silver). Hence, on the akhyāti view, neither error nor the destruction of it can be satisfactorily accounted for."

आत्मख्यातिवादिनोऽपि न रजतमध्यस्तम् इत्याहुः किं तु संप्रयोगमन्तरेण अपरोक्षत्वात् संविदात्मकत्वेनान्तरस्य रजतस्य बहिष्ट्वेन प्रतीतिर्भ्रमः । नेदं रजतम् इतिबाधोऽपि न रजतासत्त्वमावेदयति किं तु तत्र इदंताऽपरपर्यायं बहिष्ट्वं प्रतिषेधति धर्मिधर्मोभयनिषेधापेक्षया धर्ममात्रनिषेधे लाघवात् इत्येवं संगिरन्ते । "The holders of the ātmakhyāti view also declare that the silver is not erroneously surmised (as the Vedantins hold), but that since the silver is immediately perceived without any intercourse (of sense-organs &c. with it), it consists of knowledge (samvit = vijñāna): that of this *internal* silver (as thus constituted) there is a cognition under the form of externality: that *this* cognition is false. Further that the bādha, expressed in 'this is not silver', does not certify to the non-existence of silver but denies in regard to silver (tatra) externality, which externality is another synonym for *this ness;* because the denial of the attribute, sc. this ness or externality, is, in accordance with the law of parsimony, preferable to the denial of both the subject, sc. the silver and the attribute, sc. its externality."

आत्मख्यातावपि किं ज्ञानाकारता बाह्ये अध्यस्यते ज्ञानात्मनि रजते वा बहिष्ट्वम् । नाद्यः विज्ञानवादिमते बाह्यस्य अलीकत्वादसत्त्वेन अधिष्ठानत्वानुपपत्तेः । तथात्वे वा इदं रजतमसत् इतिप्रतीतिः स्यात् । ननु सत इत्युल्लेखाभावात् असदेव इति चेन्न । तथात्वे रजतार्थिनः प्रवृत्तिर्न स्यात् । अथ रजते बहिष्ट्वं समारोप्यते । तर्हि तस्याप्यसत्वात् तद्विषयज्ञानस्य अपरोक्षता न स्यात् । असत्ख्यात्यापत्तेश्च । रजतस्य ज्ञानाकारत्वे प्रमाणाभावाच्च । न च नेदं रजतम् इतिबाधस्यैव लाघवानुगृहीतो रजतस्य बाह्यत्वनिषेधेन अर्थादान्तरत्वमावेदयति इतिसाम्प्रतम् । इदंत्वं हि संनिहितत्वम् । तच्चेन्निषिद्धं तर्हि असंनिहितमेव रजतं स्यात् तस्य प्रतिपत्त्रात्मकं संनिहिततमत्वं कुतस्त्यम् । न च संप्रयोगमन्तरेण अपरोक्षत्वात् तस्य ज्ञानात्मकत्वम् । दोषवशाद्देशान्तरवर्त्तिन एव रजतस्य इन्द्रियसंनिकर्षोपपत्तेः । संप्रयोगमन्तरेण इतिविशेषणासिद्धेः । यत्तु नेदं रजतम् इतिबाधो बाह्यमिदंत्वं निषेधति न रजतम् इति तच्च । बाधो नोभयमपि निषेधति किं तु तयोस्तादात्म्यम् । तस्मिंश्च निषिद्धे इदंत्वं पुरोवर्त्तिनि स्थास्यति रजतं रजतत्वं च देशान्तरे रजते च इति तन्मते भ्रमबाधव्यवस्थापनमनुचितमेव । "According to the ātmakhyāti view also, either the form of knowledge is erroneously imposed on external (silver), or externality is imposed on the silver which really consists of knowledge? Not the first alternative; for since according to vijñānavāda (sensa-

tionalism) no external object exists, it is impossible to regard the silver as a substrate (in which something might be surmised), for it exists not. Or even if the former alternative be admitted, our perception ought to take the form 'this silver is unreal' (and this form it does not take). And against this it cannot be argued that since the term *real* is not applied (to the silver under discussion) the silver must of course be *unreal*. For if this were the case, one would not attempt to grasp the (unreal) silver. Then, the other alternative remains, sc. externality is imposed on the silver (which is nothing more than a sensation). In this case, since externality also exists not, the knowledge of it could not be perceptional (for perception deals with satvishaya or an existing object); and because on this view would follow asatkhyāti or perception of blank non-entity; and because there is no evidence to prove that the silver consists of jnāna sc. is a sensation. Nor is it correct to say that the knowledge of bādha conveyed in 'this is not silver,' accepted in accordance with the law of parcimony, declares by implication the *internal* character of the silver, in denying its externality. For *this ness is nearness* (*this* represents the object immediate, *most nearly* perceived): and if *this ness* be denied (of the silver, cf supra), then the silver must be something distant: however then could that maximum of nearness, which constitutes the knower, pertain to silver (which the vijnānavādin declares to be *internal*)? Nor does the silver consist in knowledge, because it is immediately perceived without any intercourse of sense-organs &c.; for the qualification *without any intercourse* &c. is unproved, since intercourse with sense-organs (--though of the alaukika kind, technically termed jnānalakshaṇā-pratyāsatti) due to some defect visual or otherwise, must be admitted in regard to silver existing elsewhere.

Nor is *it* correct to say that the bādha expressed in 'this is not silver' denies external *this-ness* and not the silver. The bādha denies neither, but it does deny the identity of the two. And when this identity is denied, the *this-ness* will continue to exist in the presented object, sc. the nacre, and the silver and the silver-ness will exist in some other place and in some silver respectively. Hence the grounding of error and its destruction according to the ātmakhyāti view is quite untenable."

It would appear from Bhāmatī p. 15, that the ātmakhyāti view belongs to both the Sautrāntikas as well as to the Vijnānavādins.

असत्ख्यातिवादिनोऽपि न अनिर्वचनीयं रजतम् इत्याहुः किं तु निस्तत्त्वमसदेव

तस्माद्बाधकप्रत्ययोत्तरमध्यस्तस्य त्रैकालिकासत्त्वनिश्चयो बाध इति सिद्धम् । तथा च सुरेश्वरः ।

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्यासहकार्येण नासीदस्ति भविष्यति ॥

It has therefore been proved that bādha is the conviction as to the non-existence in trinal time of that which was surmised, consequent on the knowledge of a bādhaka, or destroyer of the surmisal. And thus Sureśvara declares:—'Nescience with its products was not, is not, nor will be, whenever perfect knowledge is produced from sentences as 'that thou art.'*

Brihad Up bhāshya vārtika. III 183.

(To be continued.) A. V.

रजतम् । ज्ञानादेवासत्प्रकाशनसमर्थादजतं भासते अतएव बाधोऽपि रजतासत्त्वमेव बोधयति नेदं रजतमिति । The asatkhyātivādins (Śūnyavādins or Mādhyamikas) also maintain that the silver is not anirvachaniya but a blank non entity. That the silver appears to consciousness is due solely to cognition, which can *illumine* (*i.e.* make known) non entity. Hence even bādha makes known the non-existence of silver thus—'this is not silver.'"

यत्तु असत्ख्यातौ असदेव असत्प्रकाशनसमर्थं ज्ञानं भासयति इति तदप्यसत् । असतो ऽपरोक्षप्रतीत्यदर्शनात् । सामर्थ्यस्य च कुत्र सामर्थ्यम् इति विषयसापेक्षत्वेन विषयस्य असतश्च कार्यत्वज्ञाप्यत्वविकल्पासहत्वात् असतो एव असत्ख्यातिः । यदपि बाधो रजतासत्त्वमेवावेदयति इतितदप्यन्यथाख्यातिवादिमते पूर्वमेवात्मख्यातिनिराकरणप्रसङ्ग एव परिहृतम् । ततो न ख्यात्यन्तरं युक्तमित्यर्थः ।

'Then also the statement, on the asatkhyāti view, that cognition which can illumine non entity, makes the non-existent silver shine forth in consciousness, is incorrect. For immediate perception of a non entity is unknown. And since power implies an object—thus, power in regard to what?—and since in regard to a *non-existent object* it cannot be affirmed either that it is an existing effect (kārya) or logical effect (jnāpya sc. something made known, it follows that the asatkhyāti view is wholly erroneous. And the statement that bādha declares the non-existence of silver has been already refuted by the anyathākhyātivādin, when treating of the ātmakhyāti view."

* The verse runs thus:—

कल्याविद्यैव मत्पक्षे साचानुभवसंश्रया ।
तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ॥

Sansk Coll. MS. 9. fol. verso.

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी।

(*Continued from page 67. Vol. XII.*)

"पुमान् स्त्रिया" ॥ 'स्त्रीपुंसलक्षणश्चेदेव विशेष इति'। पदान्तरगम्येपि तल्लक्षणे विशेषे भवति यथा गौरचायं गौश्चेयमिति एतौ गावौ चरत इति, एवं कथाखुड्डकवाकुयामणीखलपूपप्रभृतिषु पुंसः शेषो वेदितव्यः। इह कस्मान्न भवति हंसश्च वरटा च कच्छपश्च डुलिश्च ऋश्यश्च रोहिच्च अश्वश्च वडवा च पुरुषश्च योषिच्चेति सर्वत्राप्यत्र स्त्रीपुंसकृत एव विशेषः, सरूपाणामिति वर्त्तते तेन समानायां प्रकृतौ यत्र स्त्रीपुंसकृत एव विशेषस्तत्रैव भवति, इह तु ब्राह्मणवत्सश्च ब्राह्मणीवत्सा चेत्यत्र प्राप्नोति, नैष दोषः। स्त्रीपुंसयोः सहविवक्षायामेकशेषः सा च प्रधानयोरेव भवतीति यत्र प्रधानस्त्रीपुंसकृत एव विशेषस्तत्रैवैकशेषः, इह त्वप्रधानकृतोपीत्येकशेषाभावः, इहापि मृगक्षीरादिवज्जातिविवक्षायां कुक्कुटाविव्यादि सिद्धं द्वन्द्वनिवृत्त्यर्थन्तु वचनम्। 'प्रागित्यव्ययमिति'। प्रपूर्वादञ्चतेः क्विबन्तादस्ताते 'रञ्चेर्लुगिति' लुकि 'तद्धितश्चासर्वविभक्ति' रित्यव्ययत्वं सत्त्वासत्त्वयोर्द्वन्द्वैकशेषौ चिन्त्यौ ॥

"भ्रातृपुत्रौ स्वसृदुहितृभ्याम्" ॥ इदमपि द्वन्द्वनिवृत्त्यर्थं वचनम्। स्वसृशब्दस्य ह्येकापत्यत्वं निमित्तं दुहितृशब्दस्यापत्यत्वमेव भ्रातृपुत्रशब्दयोः स्त्रीत्वं पुंस्त्वं चोभयत्र विशेषस्तत्र भ्रातरौ पुत्रौ इति स्त्रीपुंस्त्वाविवक्षायां सिद्धं स्वसृदुहित्रोरभिधानमेकशेषारम्भेप्ययमेव निर्वाहः ॥

"नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" ॥ शुक्ला च शुक्लं चेति विभक्तौ विभक्त्यन्तयोश्चासारूप्यादप्राप्त एकशेषः, शुक्लं च शुक्लश्चेति विभक्त्यन्तयोरसारूप्यं विभक्तौ सारूप्येपि पुंनपुंसकयोः पर्यायः स्यादिति वचनम् एकवद्भावार्थं च। 'तल्लक्षणश्चेदेव विशेष इति वर्त्ततइति'। शुक्लं च कृष्णश्चे

त्यत्र मा भूद् एवकारस्तु हिमहिमान्यौ अरण्यारण्यान्यावित्यत्र माभूदिति, अत्र हिमारण्ययोर्महत्त्वइति महत्त्वमपरो विशेषः, अन्यतरस्यांग्रहणमानन्तर्यादेकवच्चेत्यनेन सम्बध्यते न त्वेकशेषेण चेत्याह । 'एकवच्चेत्यादि' । अस्यग्रहणमेकवच्चेत्यस्योत्तरत्रानुवृत्तिर्मा भूदिति, इह शुक्लेन च वस्त्रेण शुक्लेन च कम्बलेन तेनानेन शुक्लेनेति तल्लक्षणविशेषाभावादेकशेषो न प्राप्नोति सामान्यविवक्षायामेकशब्दत्वमेकवचनं नपुंसकत्वं च भविष्यति, यद्येवं तदिदं शुक्लमित्यत्राप्येवमेव भविष्यति नार्थ एतेन, द्वन्द्वनिवृत्त्यर्थं तु वचनम् । 'अनपुंसकेनेति किमिति' । नपुंसकेनापि सहवचने सरूपाणामित्येकशेषेण भवितव्यमिति प्रश्नः, तेन यथा स्यादनेन मा भूदिति प्रत्युत्तरं, कोन्वत्र विशेष इत्यत आह । 'एकवच्चेति' ॥

'पिता मात्रा" ॥ 'मातापितराविति' । अभ्यर्हितत्वान्मातुः पूर्वनिपातः, पितुर्दशगुणं माता गौरवेणातिरिच्यते, पितरावित्यभिधाने जनयितृत्वमात्रविवक्षायां लिङ्गाविवक्षायां समर्थनीयम्, एकशेषारम्भेऽपि द्वन्द्वस्त्विष्यतएवेति नार्थ एतेन ॥

"श्वशुरः श्वश्र्वा" । पितृश्वशुरौ मातृश्वश्रूभ्यामिति नोक्तं लाघवार्थं, श्वश्रूशब्दोऽव्युत्पन्नं प्रातिपदिकं श्वशुरस्योकाराकारलोपश्चेत्यूङन्तत्वे प्रत्ययान्तत्वाद् ब्रह्मबन्धूरित्यादिवदेकादेशाभावाच्चाप्रातिपदिकत्वेपि श्वश्र्वेत्यस्मादेव निर्देशाल्लिङ्गात् सुपस्तद्धिताश्च भवन्ति । 'श्वश्रूश्वशुराविति' । अभ्यर्हितत्वादेव पूर्वनिपातः, श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः, अत्रापि दम्पत्योर्जनयितृत्वमात्रविवक्षायां लिङ्गाविवक्षायां समर्थनीयमनारम्भपक्षेपि, श्वश्रूश्वशुरावित्यभिधाने द्वन्द्वस्त्विष्यतएवेति नार्थ एतेन ॥

"त्यदादीनि सर्वैर्नित्यम्" ॥ सर्वशब्दस्यार्थमाह । 'त्यदादिभिरन्यैश्चेति' । एतदेव प्रकटयति । 'सर्वग्रहणमिति' । 'त्यदादिभिरन्यैश्चेति' । यदिदं साकल्यमुक्तं तदर्थमित्यर्थः, अन्यथा प्रत्यासत्तेस्तल्लक्षणश्चेदेव

विशेष इत्यधिकाराद्वा त्यदादिभिरेव सहवचने स्यादिति भावः । 'स च देवदत्तश्चेति' । ननु देवदत्तोऽपि सामान्यविवक्षायां तच्छब्देनैव निर्देष्टुं शक्यते ततश्च सरूपाणामित्येव सिद्धं, न चारब्धेऽपि सूत्रे वृत्तौ विशेषोऽन्तर्भावयितुं शक्य', तावित्यस्य सरूपसाधारणत्वाद्विरूपाणां च नानाविधत्वात्, सत्यं, तद्देवदत्तावित्यादिद्वन्द्वनिवृत्त्यर्थं वचनम्, अन्यथा तत्पुत्रस्तदीय इत्यादिवृत्त्यन्तरवद् द्वन्द्वोऽपि स्यात् । 'यद्यत्परमिति' । त्यदादिपाठे शब्दपरविप्रतिषेधाश्रयणादिति भावः । 'स च यश्च याविन्त्यादि' । भाष्ये तु पूर्वशेषः खल्वपि दृश्यते स च यश्च तावित्युक्तम्, इह चाहं च भवांश्चावामिति भवतीत्याहुः । 'त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि'। आद्यादित्वात्तसिः, त्यदादीनां शेषे सह विवक्षितो योऽर्थः पुमान् यच्च नपुंसकं तद्वशेन लिङ्गवचनानि भवन्तीत्यर्थः, स च देवदत्ता च तौ, सा च देवदत्तश्च तौ, तच्च देवदत्ता च ते, पुंनपुंसकयोस्तु सहविवक्षायां परत्वान्नपुंसकवशेन व्यवस्था, तच्च देवदत्तश्च ते, इह स च कुक्कुटः सा च मयूरी कुक्कुटमयूर्यावेते, अर्द्धपिप्पल्यास्तद् अर्द्धपिप्पली च सा अर्द्धपिप्पल्यौ ते इति परवल्लिङ्गमिति समासार्थस्य लिङ्गातिदेशात्तद्विशेषणस्यापि सर्वनाम्नस्तदेव लिङ्गं भवति ॥

"ग्राम्यपशुसङ्घेषु तरुणेष्वस्त्री" ॥ ग्रामे भवा ग्राम्याः 'ग्रामाद्यखञौ'। 'पुंसः शेषे प्राप्तइति' । 'पुमान् स्त्रिये' त्यनेन । 'सामर्थ्यादिति' प्रधानस्य संघस्य तारुण्यातारुण्ये न सम्भवत इत्यस्मात्सामर्थ्याद्गुणभूतानामपि पशूनां विशेषणमित्यर्थः । 'एतौ गावाविति' । यद्यपि द्वयोरपि संघो भवत्येव तथापीह संघग्रहणसामर्थ्याद्बहूनां संघो गृह्यते ऽन्यथा शेषस्यानेकविषयत्वाद् अनर्थकं तत्स्यात् । 'अनेकशफेष्विति'। शफा खुराः, उष्ट्राणां त्वारण्यत्वादेकशेषाभावः ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां प्रथमस्याध्यायस्य द्वितीयः पादः समाप्तः ॥

"भूवादयो धातवः" ॥ भू इत्येवमादयः शब्दा इत्यनेन पाठनिबन्धनेयं संज्ञेति दर्शयति। यदि त्वनादृत्य पाठं क्रियावचनो धातुरित्युच्येत तत[1] आणवेदु इत्यादिष्वपि स्यात्, कथं पुनरपभ्रंशानामनुशासनमाशङ्क्यते, कुतो नु खल्वेतद् आणवेदित्यादयोऽपभ्रंशा इति, यावता ये शास्त्रेणानुगम्यन्ते ते साधवः, अवश्य चानुबन्धादिविशिष्टं रूपं पाठेनैव दर्शनीयं नहि तद्रूपं प्रयोगे सम्भवति, अतोऽन्यार्थः सन् गणपाठ एवाश्रितो भवतीति धातुत्वे सति लङ् भवति, एधते स्पर्द्धत इत्यनुदात्तेतौ, यदि पाठमात्रनिबन्धनेय संज्ञा यावादिवशब्दानां सर्वनामाविकल्पस्वर्गवाचिनां समानशब्दानामपि प्रसङ्गः, न च प्रापणादिरर्थो नियामको, ऽनार्षत्वाद् अभियुक्तैरुत्तरकालनिर्दिष्टत्वाद् अनेकार्थत्वाभ्युपगमाच्च सत्यं, संज्ञायां को दोषः, न तावद्धातुप्रत्ययानां लडादीनां प्रसङ्गः, कर्त्रादीनामभावात्। उच्यते, याः पश्येति 'आतो धातो' रिति लोपः स्यात्। नन्वधातुरिति निषेधाद् अप्रातिपदिकत्वाद्विभक्तिरेव न स्यात्, नैतदस्ति, विभक्तावुत्पन्नायां त्यदाद्यत्वे टापि च यारूपत्वे सति धातुत्वं सुबुत्पत्तिदशायां तु यदित्यस्य नास्ति धातुत्वं, वाशब्दात्तु सुबेव न स्यादेव दिवशब्दादपि, न च 'दिव औ' दित्येतद्धातुत्वाभावे लिङ्गं, क्विबन्तस्य दीव्यतेः सुपि सम्भवात्, सानुबन्धकत्वेपि तस्यैव ग्रहणं स्याद्, अतः समानशब्दानां प्रतिषेधो वक्तव्य इत्यत आह। 'धातुशब्द इत्यादि'। क्वचित्तु भू इत्येवमादयः शब्दा इत्यस्यानन्तरं क्रियावाचिन इति पठ्यते तस्मिन् पक्षे यास्य यन्यस्य शङ्का सा तस्य द्रष्टव्या, अस्य तु कथं पुनः सूत्रेऽनुपात्तः क्रियावचन इत्ययं विशेषो लभ्यते अत आह। 'धातुशब्दः पूर्वाचार्यसंज्ञेति'। ततः किमित्याह। 'ते चेति'। ततोपि किमित्याह। 'तदिहापीति'। महत्याः पूर्वाचार्यसंज्ञाया आश्रयणं तदीयोपाधिपरिग्रहार्थमेवेति भावः॥

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते॥

१ आणवयतीति पा॰ २।

सिद्धं वा भवत्वसिद्धं वा शब्देन तु यद्वस्तु साध्यत्वेनाभिधीयते सा क्रिया साध्यत्वे चाश्रितक्रमरूपत्वात् पूर्वापरीभूतावयवत्वं विततरूपत्वं यत्तद्रूपमभिधीयते तस्यैकस्मिन् क्षणे ऽनवस्थानं, यदाह, 'क्रियानामेयम् अत्यन्तापरिदृष्टा ऽशक्या च सा पिण्डीभूता निदर्शयितुमिति'। एकैकस्य क्रियाक्षणस्य प्रत्यक्षत्वेपि समूहरूपा धातुवाच्या क्रिया न प्रत्यक्षेत्यर्थः। क्रमवन्त एव क्षणा एकफलोद्देशेन संपाद्यमानत्वात् ऐक्यमिवापन्ना धातुवाच्याः, तद्यथा पचतीत्यधिश्रयणादयोधःश्रयणान्ताः क्लेदनफलावच्छिन्नाः, एवमपचदित्यत्रापि क्रिया साध्यैव, तादृशस्यैव हि रूपस्य तत्रात्ययः प्रतीयते यत्पूर्वापरीभूतं क्रियते, घट इत्यत्र तु घटशब्देन चक्रादुद्गतोपि घटः सिद्धरूप उच्यते, एकस्मिन्नेव क्षणे यद्दर्शनयोग्यं रूपं तेन रूपेणेत्यर्थः, तदेव क्रियावचनो धातुरित्याश्रयणादतिप्रसङ्गो नास्तीति स्थितम्। इह भूरादिर्येषामिति बहुव्रीहौ यणादेशे कृते भ्वादय इत्यनुपपन्नो निर्देश इत्यत आह। 'भूवादीनां वकारोयं मङ्गलार्थ इति'। अभिधानधर्मस्याप्यभिधेये उपचारः, यथा भ्रमरे द्विरेफ इति, भूवादीनां संज्ञिनां सम्बन्धी यो वकारस्तदभिधायिनि भूवादिशब्दे स्थितो ऽयं प्रयुज्यते, लक्षणेनाप्राप्तो निपात्यतइत्यर्थः। स च मङ्गलार्थः, अपूर्वस्य लाभो मङ्गलं दध्यादिलाभ इव, अस्य वशब्दस्यापूर्वस्य लाभायेत्यर्थः, धर्मो वा मङ्गलं, साधुशब्दप्रयोगे ऽपि धर्मो भवति भूवादिशब्दश्च साधुः, किं च वकारे सत्यविकृतो भूशब्दो व्याहृत्यादि स्मारयतीत्यपि धर्मो भवतीति। प्रकारान्तरमाह। 'भुवो वार्थं वदन्तीति,। भुवो धातोरर्थं वदन्तीति वा, भूवादय इति निर्देश इत्यर्थः। अर्थकथनं चैतद्, व्युत्पत्तिस्तु भवनं भूः क्रियासामान्यभुवं वदन्तीत्यौणादिकोयं, 'वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञि'ति कर्तरि वदेः इञ् प्रत्ययः, यदि क्रियासामान्यं ये वदन्ति ते संज्ञिनः, अस्तिभवतिविद्यतीनामेव स्याद् न पचत्यादीनां विशेषवाचिनां, घञ्विधिवद्भविष्यति, तद्यथा 'भाव' इति सामान्योपादानेन विधीयमानो घञ् विशेषवाचिभ्योपि भवति पाकस्त्याग इति, तत्क-

स्य हेतोः विशेषेष्वपि सामान्यस्य सम्भवाद् विशेषाश्रयनिषेधाभावाच्च, तद्वदिहापि । अस्मिन्पक्षे गणपाठसामर्थ्यात् सोऽप्यङ्गीक्रियते ऽन्यथा शब्विकरणा ये सेटो निरनुबन्धका अन्तर्गणकार्यवर्जिता भूप्रभृतयस्तेषां पाठोनर्थकः स्याद्, बहुव्रीहेस्तु भूत्वादिशब्दस्य पृषोदरादित्वात्साधुत्वं, तृतीयं प्रकारमाह । 'भ्वर्था वा वादयः स्मृता इति' । भवनं भूः सोऽर्थो येषां ते भ्वर्थाः, एवं भूता वादयो वात्र संज्ञिनः स्मृता इत्यर्थः । किमिदं वादय इति, वा गतिगन्धनयोः वा आदिर्येषां ते वादयः, वा गतीत्यारभ्या चुरादिसमाप्तेः, तथा च भ्वादयो वादयः भूप्रभृतय आ वागतिगन्धनयोरित्यस्मा,द्वादयश्च वादयश्च बहुव्रीहितत्पुरुषयोः सह विवक्षायां स्वरभिन्नानां यस्योत्तरः स्वरविधिरिति बहुव्रीहेः शेषः, ततो भुवो वादय इति वाच्यवाचकसम्बन्धे शेषषष्ठीसमासः, अस्मिन्पक्षे पाठविशेषोऽर्थश्चेत्युभयं सूत्राक्षरैरेवोपात्तं भवति ॥

"उपदेशे ऽजनुनासिक इत्" ॥ 'उपदिश्यते तेनेत्युपदेश इति' । अकर्त्तरि च कारकइति करणे घञ् । ननु च नेयं संज्ञा परत्वाच्च करणाधिकरणयोरिति ल्युट् प्राप्नोति 'हलश्चे' त्यत्रापि संज्ञायामित्येव, ल्युट् तावच्च भवति 'कृत्यल्युटो बहुल' मिति अकर्त्तरि चेत्यत्र चकारो भिन्नक्रमः संज्ञायां चेति, तेन क्व चिदसंज्ञायामपि भवति, अथोपदिश्यते ऽनेनेत्युच्चारोपदिशः, ,कोर्थः, विधानं, यद्येवं लण् एध वृद्धौ, इत्यादौ न स्यात्, नह्यत्र किञ्चिद्विधीयते । अथानिर्ज्ञातस्वरूपस्य स्वरूपज्ञापनं तत्, आचारेवगल्भक्लीबहोडेभ्यः क्विबित्यत्र गल्भाद्यकारस्य न स्यात्, नहि गल्भादीनां स्वरूपज्ञापनार्थमुच्चारणं पञ्चमीनिर्द्देशेन क्विपो विधानात्, यद्येवं क्विबनेनानिर्ज्ञातरूपो ज्ञाप्यते तत्र चायं भवत्यकार इति भविष्यति शास्त्रवाक्यानीति, लण् एध स्पर्द्धेत्यादीनामपि विशिष्टप्रयोजनपरत्वेनोच्चारणाद् वाक्यत्वम्, अस्यैव विवरणं सूत्रपाठ इति, खिलपाठो धातुपाठः, प्रातिपदिकपाठो वाक्यपाठश्च, तत्र सूत्रे मतुबादेरकारो धातुषु एधाद्यकारः प्रातिपदिकेषु भवच्छब्दस्योकारो वाक्ये गल्भाद्यकारः । ननु च सर्वत्रात्र

शुद्धोऽच् पठ्यते नानुनासिक इत्यत आह । 'प्रतिज्ञानुनासिक्या इति' । प्रतिज्ञामात्रेण समधिगम्यमानुनासिक्यं येषां ते तथोक्ताः, प्रतिज्ञानुनासिका इति तु प्रसिद्धः पाठस्तत्र प्रतिज्ञासमधिगम्यत्वाद् अनुनासिके प्रतिज्ञाशब्दो द्रष्टव्यः, ततः समानाधिकरणपदो बहुव्रीहिः, तच्च प्रतिज्ञानं नानियमेन भवति किं तर्हि यत्राचार्याः स्मरन्ति तत्रैव सूत्रकारेण तावद्विवक्षिता. सर्वेनुनासिकाः पठिता दुर्लभत्वं प्राप्ताविति वत्, लेखकैस्तु संकीर्णा लिखिताः, तत्र स्मृतिपरम्परया निर्णय इत्यर्थः । 'अभ्र आँ अप इति' । नायं सूत्रादिषु स्वरूपेणोच्चरितो ऽनुनासिकः किं तर्हि 'आङो ऽनुनासिकश्छन्दसी' त्यनुनासिकशब्देन विहितः । अथ क्रियमाणेप्युपदेशग्रहणे 'उञः' 'ऊँ' इत्यत्र कस्मान्न भवति, विधानसामर्थ्याद्. इत्संज्ञायां हि 'तस्य लोप' इति लोपः स्यात् । यद्येवमत्रापि विधानसामर्थ्यादेव न भविष्यति, एवं तर्हि उदाहरणादिगियं दर्शिता, इदं तत्रोदाहरणमणोऽप्रगृह्यस्यानुनासिकः दधीच्छति ब्राह्मणकुलमिति क्यजन्तात्क्विपि अल्लोपे वलि लोपे नपुंसकह्रस्वत्वं दधिं इति, यद्यत्रेत्संज्ञा स्यात् 'इदितो नुम् धातो' रिति नुम् स्यात् । अत्राप्यनुनासिकविधानसामर्थ्यादेवेत्संज्ञा न भविष्यति । ननु च यत्रेत्संज्ञायां सत्यां प्रयोजनं न सम्भवति यथा दधि मध्विति प्रातिपदिकेषु तत्रेत्संज्ञाया अभावः, अत्रानुनासिकविधानमर्थवत् । नैतदेवं. लोपस्येत्कार्यस्य सर्वत्र सम्भवात् तस्मादणोऽप्रगृह्यस्य इत्संज्ञायामेव विधीयमानायामनुनासिकविधानसामर्थ्यादेवात्र लोपो न भविष्यति, एवं तर्ह्युत्तरार्थमवश्यमुपदेशइति वक्तव्यं तदिहापि विस्पष्टार्थं भविष्यतीति मन्यते । 'आतो मनिन्निति' । अत्र मकारस्येत्संज्ञा न भवति यदि स्याद् 'अन्येभ्योपि दृश्यन्त' इति हलन्त्येऽन्त्यादचः परः स्यात् । 'सर्वस्येति' । दरिद्राप्रभृतिसम्बन्धिनोपि ॥

"हलन्त्यम्" ॥ अन्तशब्दोत्र समाप्तौ वर्त्तते नावयवे ऽसम्भवात् न समीपे ऽतिप्रसङ्गात् येन समाप्यते समुदायस्तदन्ते भवमन्त्यं, दिगादित्वाद्यत्, हलन्त्ये सर्वप्रसङ्गः, सर्वस्य हलः संज्ञा प्राप्नोति सर्वो हि हल् तं तमवधिं प्रत्यन्तो भवति, अन्त्यग्रहणं त्वादिनिवृत्त्यर्थं स्याद्, अत

आह । 'धात्वादेरिति' । आदिशब्देन सूत्रप्रातिपदिकप्रत्ययनिपातागमादेशानां ग्रहणं, शीङ् लण् नदट् सन् आङ् 'त्रपुजतुनो षुक्' 'चक्षिङः ख्याञ्' इति योऽयं धात्वादिरूपः समुदायस्तदर्थः स उपदेशो न तु नान्तरीयकावान्तरसमुदायार्थं, इत्यन्त्यस्य समुदायापेक्षायां प्राधान्याद्धात्वादेरेव ग्रहणमिति भावः । 'अग्निचिदिति' । अत्रेत्संज्ञायां लोपः स्यात् । न च तुको वैयर्थ्यम्, आगत्येत्यादौ चरितार्थत्वात् । न च क्विपः पित्त्वस्य वैयर्थ्यं,मग्निचितावित्यादौ चरितार्थत्वात् । यद्यप्यत्रोभयत्रापि तावतोवधेस्तकारोन्त्यस्तथापि मुख्यसमुदायस्य नान्त्य इति नास्ति प्रसङ्गः, इह च दण्डिचिति नकारस्येत्संज्ञायां सत्यां 'न ङिसंबुद्ध्यो'रिति निषेधाल्लोपाभावेऽपि समुदायस्य नित्त्वादाद्युदात्तत्वप्रसङ्गः, यथा श्रोत्रियशब्दे वाक्यार्थे पदवचनमिति पक्षे, अथोपदेशानुवृत्तावपि सनुतरित्यस्य रेफस्य कस्मान्न भवति स्वरादिष्वन्तोदात्तपाठसामर्थ्यात् । इह 'शषसर्' 'हलि'ति यो लकारस्तस्येत्संज्ञायां सत्यां हलित्ययं प्रत्याहार उपपद्यते सति च प्रत्याहारे लणित्यत्र लकारस्य हल्त्वात्तस्यैव शषसर्हल् इत्यत्रान्ते निर्दिष्टत्वादित्संज्ञा तदाश्रयश्च प्रत्याहार इति इतरेतराश्रयत्वात् प्रत्याहारो नोपपन्नः, ततश्च सर्वेषामेव णकारादीनामित्संज्ञा न स्यादिति सर्व एव प्रत्याहारव्यवहारोनुपपन्नः, आदिरन्त्येनेत्येतस्यापि वैयर्थ्यं, स्यादेतत् । हलित्यत्र हकारात् पर लकारस्तस्य लकारस्यैकादेशो लपरः तस्योपदेशेऽनुनासिक इति इत्संज्ञा स एव हलन्त्यमित्यत्राप्येकादेशेन लपरेण निर्दिष्ट इति, एवमपीतरेतराश्रयमेव, लकारस्य सत्यामित्संज्ञायां हलिति प्रत्याहारः, सति च प्रत्याहारे 'ऐऔजि'ति चकारस्येत्सञ्ज्ञा तस्यां सत्यामजिति प्रत्याहारः, अजिति प्रत्याहारे सति लकारस्येत्संज्ञेति तस्माद्वक्तव्योऽत्र परिहारस्तमाह । 'हस्य ल् हलित्यादि' । साधारणं भवेत्तन्त्रं यथा तुल्यकक्ष्ययोर्भुञ्जानयोः प्रदीपः स चेह प्रयत्नविशेषः यथा श्वेतो धावतीत्यत्र साधारणेनैकेनैव प्रयत्नेन द्वयोर्वाक्ययोरुच्चारितयोः फलं सम्पद्यते तथेहाप्येकेन तन्त्रेण प्रयत्नेन द्वितीयं हल्ग्रहणमुपात्तं परिगृहीतं वेदितव्यं, तस्य द्वितीयस्यार्थमाह । 'हस्येति' ।

समीपसमीपिसम्बन्धे षष्ठीसमास इत्यर्थः । ततः किमित्याह । 'तेनेत्यादि' । एतद्दर्शयति हकारसमीपवर्तिनो लकारस्य न प्रत्याहारसमाश्रयणेनेत्संज्ञा किं तर्हि साक्षादुपादानेनेति, प्रत्याहारपाठो ऽक्षरसमाम्नायः । 'तथा चेत्यादि' । गतार्थं किं पुनस्तन्त्रे प्रमाणम् । अगृह्यमाणविशेषत्वमेव, ननु गृह्यते विशेषः, कृत्रिमाकृत्रिमयोः कृत्रिमस्य ग्रहणमिति कृत्रिमो हि प्रत्याहार, सत्य स एवासति तन्त्रे ऽनुपपन्न इति त्वयैवोक्तम् ॥

"न विभक्तौ तुस्माः" ॥ वृत्तादिति तकारस्येत्संज्ञायां 'तित् स्वरितं' स्यात् । ननु चादेशस्योत्तरकालं स्थानिवद्भावेनास्य विभक्तिसंज्ञा उपदेशानन्तरमेवेत्संज्ञा प्राप्नोति, सत्य, प्रतिषेधसामर्थ्यात्तु भाविन्यपि विभक्तित्वे प्रतिषेधो भविष्यति । वर्गग्रहणं किम्, वृत्तानित्यत्रापि यथा स्यात्, क्व पुनरुपदेशे नकारोयमन्त्यो न तावत्तस्य संघातस्य क्व चिदुपदेशः 'शसो न' इत्यत्र त्वकारो नकारस्येत्संज्ञापरित्राणार्थ इति शक्यं वक्तुम्, इह तर्हि 'ज्ञस्य रन्' पचेरन्निति । 'ब्राह्मणा इति' । रूपोदाहरणमेतत् । कार्योदाहरणं तु 'भवन इति' । अत्र 'सिति चे'ति पदत्वे जश्त्वं स्यात्, पचतः पचथ इत्यत्र प्रयोजनाभावादेव न भविष्यतीति शक्यं वक्तुम् । 'अपचतामित्यादि' । तामादयस्तसादीनामन्त्यादचः परे स्युः 'किमोदि'त्यस्य 'प्राग् दिशो विभक्ति'रिति विभक्तित्वम् । 'इटोदि' त्यस्यापि स्थानिवद्भावेनेति तयोरपि प्रतिषेधः प्राप्नोति तत्राह । 'किमोदित्यादि' । अनित्यत्वे तु 'इदम स्थमु'रिति थमोरुकारोनुबन्धाद्विज्ञायते, क्व चित्तु वृत्तावेव 'इदेमस्थमु'' रित्युकारानुबन्धनिर्देशादनित्यत्वमुपलक्ष्यतइति पठ्यते । 'इदानीं तदानीमिति' । दानीमस्तु प्रतिषेधो भवत्येव अनित्यत्वं हि ज्ञापितं न पुनः प्राग्दिशीयेष्वेस्याप्रवृत्तिः ॥

'आदिर्ञिटुडवः' ॥ आदिशब्दः प्रत्येकमभिसंबध्यते तेनैकवचनमुपपद्यते इति भावः । अत्र टु इति न टवर्गस्य ग्रहणम् । उकारस्याननुनासिकत्वेनानुदित्त्वात् 'चुटू' इत्युत्तरत्र वर्गग्रहणाद् ञिडुभ्यां साहचर्याच्च । 'भिन्न इति' । 'आदितश्च' रदाभ्यां निष्ठातो नः । 'वेपथुरिति' । द्वितो-

युच् । 'उप्तिममिति' । 'ड्वितः क्त्रिः' 'क्त्रेर्म्मम् नित्यं' यजादित्वात्सम्प्रसारणम् । 'पटूयतीति' । पृष्वादिषु टुशब्दस्योपदेशः, अत्रेत्संज्ञायां सत्यामत्र यवे ऽकृतं लिङ्गं समुदायस्य विशेषकमिति समुदायात् युच्प्रसङ्गः केवलस्यानुदाहरणत्वमित्कार्याभावात् । 'कण्डूयतीति' । ननु चायं दीर्घान्तः कण्ड्वादिषूपश्यते एवं तर्हि कण्डुमिच्छतीति क्यजन्तात् क्विपि कण्डु ब्राह्मणकुलन्तादिच्छतीति पुनः क्यपि द्रष्टव्यं, तत्रेत्संज्ञायामन्तरङ्गत्वादकृतएव दीर्घे भवत्यय डुशब्दः गणपठितश्च कण्डूशब्द एकदेशविकृत इति स्यात् प्रसङ्गः, 'त्रिकारीयतीति'। नायं समुदायः क्व चिदुपदिष्टः ॥

"षः प्रत्ययस्य" ॥ 'रजकीति' । षिद्गौरादिभ्यश्चे' ति ङीष्, कथं पुनरत्रोपधालोपः, यावता 'अनिदितां हल उधायाः क्ङिती' त्युच्यते- ज्ञापकात्सिद्धं, यदयं जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति मित्सञ्ज्ञां शास्ति तज्ज्ञापयति रञ्जेरकृङित्यपि क्व चिदुपधालोपो भवतीति। 'षोड इति' । षड् दन्ता अस्य 'वयसि दन्तस्य दतृ' 'षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वम्'। षषोन्त्यस्योत्वमुत्तरपदादेर्डकारः षोडन्तमाचष्टइति णिचि टिलोपे पचाद्यचि णिलोपः । 'षण्ड इति' । षणु दाने 'जमन्ताड्डः' 'उणादयो बहुलम्' इति बहुलवचनात् इत्संज्ञासत्व[1]योरभावः । 'षडिक इति' । अनुकम्पितः षडङ्गुलिः 'बह्वचो मनुष्यनाम्नष्ठज् वा' ठाजादावूर्द्ध्वं द्वितीयादच इति ङ्गुलिशब्दस्य लोपः, यस्येतिलोपस्य स्थानिवद्भावात् षकारान्ते ऽवधौ भसंज्ञाया अभावादन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाज्जश्त्वम् । अत्रेत्संज्ञायां स्त्रीविवक्षायां ङीष्प्रसङ्गः, यद्यप्येते समुदाया न क्वाप्युपदिश्यन्ते षकारस्तु षष उत्वं, षणु दानइत्युपदेशस्थो भवति । 'अविषो महिष इति'। "अविमह्योष्टिषच्' । नन्वत्र प्रयोजनाभावादेव षकारस्येत्संज्ञा न भविष्यति इकारस्य टित्त्वादेव सिद्धेः । न च पक्षे ङीषर्थः षकारः, ङीपोपि चितः परस्योदात्तनिवृत्तिस्वरेणोदात्तत्वात्, सत्यम् । अन्यतरस्यैव श्रवणार्थ उपदेशः स्यादिति टकारस्यापि शङ्क्येत ॥ (शेषमग्रे)

१ सत्वेति १ । २ पुस्तकयोर्नास्ति ।

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

श्रीगणेशाय नमः ।

*(Continued from page 79 Vol. XII)*

श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत्, ।
साधारणः समग्राणां, स प्रसादो गुणो मतः ॥ ७६ ॥

येन शब्देन, समासेन वा, यया रचनया वा, श्रुतिमात्रेण शब्दादर्थप्रत्ययः, स प्रसादव्यञ्जक इत्यर्थः· उदा०–

परिम्लानं पीनस्तनजघनसङ्गादुभयत,-
स्तनोर्मध्यस्यान्तःपरिमिलनमप्राप्य हरितम्, ।
इदं व्यस्तन्यासं श्लथभुजलता(क)क्षेपवलनैः,
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥

अन्येषां तु वर्णानामुदासीनत्वमिति तदुपादाने तु पुराणच्छायेत्युच्यते ॥ ७६ ॥

नचैवं माधुर्य्यसदावुद्धतादयो रचनाद्याः सर्वत्र विरुद्धाः स्युरिति वाच्यम्, यतो, यद्यपि गुणपरतन्त्रा रचनादय,स्तथापि

वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित् ।
रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥ ७७ ॥

अन्यथात्वम्, गुणपारतन्त्र्याभावः, वक्तृवाच्यप्रबन्धौचित्यविरह एव

(क) प्रशिथिलभुजेति पाठान्तरं तु नातियुक्तम् ।

गुणपारतन्त्र्यस्वीकारात्, तत्रापि वक्तृक्रोधाभिव्यक्तावुपयोगात्· तत्र क्वचि-द्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः· यथा–

मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः,
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः, ।
कृष्णाक्रोधाग्रदूतः, कुरुकुलनिधनोत्पातनिर्घातवातः,
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽसौ(क) ॥

अत्र न वाच्यं क्रोधादिदीप्तरसव्यञ्जकम्, प्रश्नरूपत्वात्· प्रबन्धश्च नाटकात्मा ऽभिनेय इति दीर्घसमासत्वं प्रतिकूलं यद्यपि, तथापि वक्ता भीमसेन इति तदौचित्यादुद्धता रचनात्र· अतस्तदुद्धतत्वादिव्यक्तावेवोप-युज्यते· क्वचित्तु वक्तृप्रबन्धौचित्यानपेक्षया वाच्यौचित्यादेव रचनादयः· यथा–

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥

अत्र वक्ता वैतालिकः, प्रबन्धश्चाभिनेयात्मेति दीर्घसमासानौचि-त्येपि वाच्यस्य कुम्भकर्णोत्तमाङ्गस्य भीमत्वेनौजस्वित्वादुद्धता रचनादयः· क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव रचनादयः· तथाहि, आख्यायिकायां हि शृङ्गारेपि शब्दोऽनुद्धतेपि वक्तरि नातिमसृणा वर्णादयः· प्रत्युत विकट-बन्धत्वेनैव च्छायावत्त्वात्· विप्रलम्भकरुणयोस्तु तस्यामपि दीर्घसमासप-रिहारः, तयोरतिसौकुमार्यात्· कथायां तु रौद्रेपि नात्यन्तमुद्धटा· वर्णादयः, वर्णनीयमहापुरुषसुखसमर्पणस्योद्देश्यत्वात्· नाटकादावभिनेये तु रौद्रेपि न दीर्घसमासादयो, विच्छेदेनाभिनयसौकर्यात्· एवं मुक्तकाद्यौचित्यमनु-सरणीयम्, तथाहि, एकैकच्छन्दसि वाच्यसमाप्तिर्मुक्तकम्, द्वयोः सन्दानित-कम्, त्रिषु विशेषकम्, चतुर्षु कलापकम्, पञ्चादिचतुर्दशान्तेषु कुलकम्·

---

(क) समो दुन्दुभिस्ताड्यते ऽसावेति पा· ताड्यते ऽयं, ताडितो ऽयमिति च।

तत्र मुक्तकेषु कवेरसम्बन्धाभिनिवेशितत्वे रसाश्रयमौचित्यम्, यथा "शून्यं वासगृह"मित्यादौ· रसनिवेशाभावे तु कामचारः· सन्दानितकादिषु काव्यपरिसमाप्तेर्वैकल्यन्दीर्घमध्यसमासता च· प्रबन्धगतेषु पुनस्तेषु प्रबन्धोचिता एव रचनादय इत्यादि ज्ञेयम् ॥ ७७ ॥

इति महामहोपाध्यायगोविन्दप्रणीते काव्यप्रदीपे ऽष्टमोल्लासः ॥ * ॥

## ॥ अथ नवमोल्लासः ॥

एवं गुणे निरूपिते ऽलङ्कारा विवेचनीयाः· तत्र सामान्यलक्षणं गुणविवेचन एवोक्तम्· शब्दालङ्कारार्थालङ्कारोभयालङ्काररूपविशेषलक्षणत्रयं चार्थलभ्यमिति तेषां विशेषलक्षणेषु वक्तव्येषु काव्यलक्षणे शब्दस्य प्राथम्यात्तदलङ्कारविशेषलक्षणे वक्तव्ये प्रथमं वक्रोक्तिं लक्षयति–

यदुक्तमन्यथा वाक्य,मन्यथा ऽन्येन योज्यते ।
श्लेषेण काक्वा वा, ज्ञेया सा 'वक्रोक्ति,स्तथा द्विधा ॥ ७८ ॥

वक्त्रा ऽन्याभिप्रायेणोक्तमन्येनान्यार्थकतया योज्यते सङ्गम्यते, सा वक्रोक्तिरित्यर्थः· 'श्लेषेण काक्वा वे'ति योजनाहेतुमुखेन विशेषलक्षणद्वयम्· 'तथा द्विधे'ति विभागः, श्लेषवक्रोक्तिः काकुवक्रोक्तिश्चेति द्विधेत्यर्थः· श्लेषश्च द्विधा सभङ्गपदो ऽभङ्गपदश्च· तत्र सभङ्गश्लेषेण यथा–

नारीणामनुकूलमाचरसि चे,ज्जानासि, कश्चेतनो
वामानां हितमातनोति·(क) हितकृच्चैवाबलानां भवान्· ।
युक्तं किं हितकर्त्तनं ननु लवाभावप्रसिद्धात्मनः·
सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः ॥

अत्र नारीणामिति पदं स्त्रीणामित्यभिप्रायेणोक्तं, श्रोता तद्भङ्क्त्वा न शत्रूणामित्यर्थतया योजयित्वाऽऽह–'कश्चेतन'इत्यादि· अत्र वामाना मिति शत्रूणामित्यर्थोऽभिप्रेतः, स्त्रीणामित्यर्थतया योजयित्वा ऽन्यआह–'हितकृ'दित्यादि·अथा ऽन्यो ऽबलानामिति दुर्बलार्थतया हितकृदिति

(क) हितमादधातीति प्रियमादधातीति च पा· ।

हितकर्त्तनार्थतया योजयित्वाह– 'युक्तं कि'मित्यादि· अथान्यो बलाभावप्रसिद्धात्मपदमिन्द्रार्थतया योजयित्वाह–'सामर्थ्य'मित्यादि· अत्र नारीणामबलानामिति पदे सभङ्गे । अभङ्गमात्रपदेन श्लेषेण यथा–

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्नतु दारुमयी क्वचित् ॥

अत्र दारुणेति क्रूरेत्यर्थकत्वेन वक्तुरभिप्रेतम्, काष्ठेनेत्यर्थेनान्यो योजितवान् । काकुवक्रोक्तिर्यथा–

गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते सखि! नैष्यति सुरभिसमये ऽसौ ॥

अत्र नैष्यतीति नायिकया निषेधाभिप्रायेणोक्तम्, सख्या तु नैष्यत्य, ऽपित्वेष्यत्येवेत्यर्थकतया काक्वा योज्यते· इयं च न वाकोवाक्यमात्रे, किन्तु स्वतो ऽप्यन्येनोक्तस्यान्यथायोजनमात्रे, न्यायसाम्यात्· यथा मम–

कृष्णो वैरिविमर्द्दने, हरिपदप्रीत्य ऽर्जने त्वर्जुनः,
पीतः पङ्कजलोचनाभिरभितो नेत्राञ्चलैश्चञ्चलैः, ।
रक्तः सज्जनसङ्गमेषु करुणश्रेणीमणे श्रीधर!
स्थाने वर्णचतुष्टयस्य भुवने भर्त्ता भवान् गीयते ॥

अत्र 'वर्णचतुष्टयस्य भर्त्ता श्रीधर' इति सार्वलौकिकं वाक्यमन्यथा श्लेषादिना ऽस्माभिः समर्थितम्· एवमन्यदप्यूह्यम् ॥ ६८ ॥

अथावृत्तिनिबन्धनेष्वलङ्कारेषु रसानुगुणतया ऽनुप्रासः प्रथमं लक्षणीयः· स द्विधा, वर्णानुप्रासः पदानुप्रासश्च· तत्राद्यो ऽवाचकवर्णमात्रावृत्तौ· द्वितीयस्तु वाचकपदावृत्ताविति वस्तुगतिः· तत्राद्यं लक्षयति–

**वर्णसाम्यमनुप्रासः**–

अव्यवधानेन वर्णमात्रविन्यासो वर्णानुप्रास इत्यर्थः· शब्दसाम्यं त्वनुप्राससामान्यलक्षणमित्यर्थाल्लभ्यते· वर्णपदं व्यञ्जनपरम्· अतो व्यञ्जनवैसादृश्ये विरिञ्चिपदादौ ना ऽव्याप्तिः· नचेष्टैव सा, तत्रानुप्रासशब्दार्थस्याभावात्· रसादिभिरनुगतः प्रकृष्ट आसो न्यासो ह्यनुप्रासशब्दार्थः· नच स्वरमात्रसादृश्ये रसानुगमो, नवा सहृदयहृदयावर्जकत्वलक्षणः प्रकर्षः ॥

तं विभजते—

—छेकवृत्तिगतो द्विधा ।

छेकगतो विदग्धाश्रितः, तैश्च प्रचुरमेतत्प्रयोगात्· वृत्तिगतो वृत्त्याश्रितः, तदुपोद्बलकत्वात्· वृत्तिश्च मधुरादिरसानुगुणो नियतमसृणादिवर्णगतो रसविषयो व्यापारो व्यञ्जनाख्यः ॥ ऽ ॥

तयोर्लक्षणमाह—

सोऽनेकस्य सकृत् पूर्वः—

अनेकस्य व्यञ्जनस्य, सकृदेकवारं साम्यं, पूर्वश्छेकानुप्रासः· उदा०—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥

अत्र 'न्द,ण्ड'योः ॥

द्वितीयं लक्षयति—

—एकस्याप्यसकृत्परः ॥ ७९ ॥

अपिशब्दादनेकस्यापि· असकृद्विर्बहुकृत्वो वा· वस्तुतस्तु,छेकानुप्रासभिन्नं लक्षणम्,[क] अन्यथैकस्य सकृदावृत्तेरसंग्रहापत्तेः· एव चैकस्य वर्णस्य सकृदसकृद्वा, ऽनेकस्य त्वसकृत् सादृश्यं वृत्त्यनुप्रास इति पर्यवसन्नम् ॥७९॥

तत्र—

माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।

यथा—"अनङ्गरङ्गप्रतिम"मित्यादि ॥

ओजःप्रकाशकैस्तैश्च परुषा—

यथा "मूर्ध्नामुद्वृत्ते"ति ॥

—कोमला ऽपरैः ॥ ८० ॥

ओजोमाधुर्यव्यञ्जकातिरिक्तैः प्रसादवद्भिरक्षरैः· एतामेव केचिदतिशयितकान्तिराहित्येन ग्राम्यस्त्रीसाम्याद् ग्राम्येति वदन्ति· उदा०—"अपसारये" त्यादि ॥ ८० ॥

केषांचिदेता वैदर्भीप्रमुखा रीतयो मताः ।

(क) लक्ष्यमिति पु० ।

वामनादीनां मत एता एव यथाक्रमं वैदर्भीगौडीपाञ्चाल्यो रीतय उच्यन्ते ॥ ऽ ॥

शब्दानुप्रासमाह–

**शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥ ८१ ॥**

शब्दनाख्यव्यापारवाञ् शब्दः प्रतिपादिकादि,स्तद्गतः शाब्दः· भेद इति· तात्पर्य्यमन्वयभेद, स्तन्मात्राद्भेदे, न तु स्वरूपादर्थाद्वा· तथाच भिन्नतात्पर्यतुल्यार्थशब्दसादृश्यं शब्दानुप्रास·, स तु लाटानुप्रास उच्यत इत्यर्थः· 'तु'शब्दो वर्णानुप्रासस्य लाटीयत्वव्यवच्छेदकः· यत्तु पुनरुक्तत्वव्यवच्छेदाय भेदे तात्पर्यमात्रत इत्युक्तमिति व्याख्यानम्, तदसत्, मात्रशब्दस्याप्रयोजकतापत्तेः· एष एव कैश्चित्पदानुप्रास उच्यते ॥·८१ ॥

सोयं पदस्य नाम्नो वेति द्विविधः· तत्र सविभक्तिकस्य यत्रावृत्तिः, स आद्यः· अन्यादृशस्तु द्वितीयः· तयोराद्यो ऽनेकस्य पदस्यैकस्यैव वा पदस्येति द्विविधः· अन्त्यश्च त्रिविध, आवृत्तरभिन्नसमासस्थतया, भिन्नसमासस्थतया, एकस्याः समासस्थत्वे सत्यऽपरस्या असमासस्थतया च, समासं विनास्यासम्भवादिति पञ्च भेदा इति कारिकया प्रतिपादितम्· तत्राद्यमाह–

**पदानां सः–**

पदानामिति बहुवचनमनेकोपलक्षणम्, अन्यथा द्वयोः पदयोरावृत्तौ षष्ठभेदापत्तेः· उदा०–

यस्य न सविधे दयिता, दवदहनस्तुहिनदीधितिस्तस्य, ।
यस्य च सविधे दयिता, दवदहनस्तुहिनदीधितिस्तस्य ॥

अत्र यद्यपि पूर्वार्द्धे दवदहनशब्दस्य परार्द्धे तुहिनदीधितिशब्दस्यार्थान्तरसङ्क्रमितवाच्यत्वात्तात्पर्यभेद,स्तथापि शक्यार्थमात्रेणोदाहरणम्· यद्वा, अवशिष्टपदावृत्तेरेवोदाहरणं द्रष्टव्यम् ॥

द्वितीयभेदमाह–

**–पदस्यापि–**

अपिशब्देन 'स'इति समुच्चीयते। यथा—

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः,।
सुधाकरः क्व नु पुनः कलङ्करहितो भवेत् ॥

नाम्नः प्रकारत्रयमाह—

—वृत्तावन्यत्र तत्र वा।

नाम्नः स वृत्त्यवृत्त्योश्च—

वृत्तिनिरूपितप्रकारत्रये नाम्न एव लाटानुप्रास इत्यर्थः। उदा०—

सितकरकररुचिरविभा विभाकराकार धरणिधर! कीर्त्तिः।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥

पौरुषकमला पौरुषलक्ष्मीर्लक्ष्मीश्च तवैवेत्यर्थः। यत्तु पौरुषं कमलमाश्रयो यस्याः, सा पौरुषकमलेति व्याख्यानम् तदयुक्तम्, अर्थभेदेनानुदाहरणत्वापत्तेः। अत्र करकरेत्येकस्समासो, विभा विभेति भिन्नौ समासौ, कमला कमलेति पूर्वस्य समास उत्तरस्यासमास इति त्रयाणामुदाहरणम् ॥

—तदेवं पञ्चधा मतः ॥ ८२ ॥

व्याख्यातम् ॥ ८२ ॥

अर्थे सत्य ऽर्थभिन्नानां वर्णानां सा पुनःश्रुतिः।

यमकम्—

अर्थभिन्नानां भिन्नार्थानामित्यर्थः। एतच्च लाटानुप्रासे ऽतिव्याप्तिवारणाय। एतन्मात्रे च कृते 'समरसमरसोय'मित्यादौ द्वितीयात्रस्यार्थाभावादव्याप्तिः स्यादत उक्तमर्थे सतीति। यद्यर्थस्तदा भिन्न इत्यर्थः। वर्णानामिति बहुवचनमविवक्षितं, द्वयोरपि यमकव्यवहारात्। सेति पूर्वेणैव क्रमेण स्थितेत्यर्थः। अतः 'सरो रस' इत्यादौ नातिप्रसङ्गः। एवं च, समानार्थत्वाभाववत्समानानुपूर्वीकानेकवर्णावृत्तिर्यमकमिति लक्षणं द्रष्टव्यम् ॥

तदेतद्विभजते—

—पादतद्भागवृत्ति तद्यात्यनेकताम् ॥ ८३ ॥

प्रथमपादो यदि द्वितीयपादे यम्यते, तदा मुखं नाम यमकम्· तृतीये चेत्, तदा सन्दंशः· चतुर्थे चेत्, तदाऽऽवृत्तिः· एवं, द्वितीयपादश्चेत्तृतीये, तदा गर्भः· चतुर्थे चेत्, तदा सन्दष्टकम्·(क) तृतीयश्चेच्चतुर्थे, तदा पुच्छम्· प्रथमस्त्रिषु चेत्, तदा पङ्क्तिः, महायमकमिति केचित्· पादत्रयमकं तु न चमत्कारि,(ख) अतो न प्रयुक्तमित्येकैकपादावृत्तौ सप्तभेदाः· प्रथमो द्वितीये, तृतीयश्चतुर्थे चेत्, तदा युग्मकम्· प्रथमश्चतुर्थे, द्वितीयस्तृतीये चेत्, तदा परिवृत्तिरित्यर्द्धाभ्यासमृते पादद्वयावृत्तौ द्वयमिति नव भेदाः· अर्द्धावृत्तिस्तु समुद्गः· श्लोकावृत्तिर्महायमकम्· तदुभयमपि पादावृत्तिविशेष एवेत्येकादश पादयमकभेदाः· पादभागावृत्ति बहुभेदम्· तथाहि, द्विधा विभक्तेषु पादेषु प्रथमादिपादानामाद्यभागाः पूर्ववद्द्वितीयादिपादेष्वाद्यभागेष्वेव यदि यम्यन्ते, तदा पूर्ववन्मुखादयो दश भेदाः· श्लोकान्तरे भागावृत्तिर्न स्वदत इति श्लोकावृत्तिस्थानीय एकादशो भेदो भागावृत्तौ नास्ति· एवं, प्रथमादिपादानामन्त्यभागस्य द्वितीयादिपादान्त्य(ग)भागेष्वेव यमने पूर्ववद्दश भेदाः· एवं, द्विखण्डीकृतेषु पादेषु विंशतिस्त्रिखण्डीकृतेषु त्रिंशच्चतुःखण्डीकृतेषु चत्वारिंशद्भेदाः स्थानापरिवर्तिनो भवन्ति· अथ स्थानपरिवर्त्तनभेदाः — प्रथमादिपादानामन्तादिभागा द्वितीयादिपादानामाद्यादिभागेषु यम्यन्त इत्याद्यन्वर्थतानुसारेणान्ताद्यादियमकादयः प्रभेदा भवन्ति· तथाहि, द्विखण्डे(घ) प्रथमपादस्यान्त्यमर्धं द्वितीयपादस्याद्यार्द्धे चेद्यम्यते, तदाऽन्तादियमकम्·(ङ) प्रथमभाग एव चेदन्त्यभागे तदाद्यन्तयमकम्· एवं, प्रथमपादस्याद्यान्त्यभागौ द्वितीयस्यान्तादिभागयोर्यदि यम्येते, तदाद्यन्तान्तादियमकयोः समुच्चयः· अत्र त्रिखण्डचतुःखण्डयोः पूर्वपादमध्यभाग उत्तरपादस्यादिभागे यदि यम्यते, तदा मध्यादियमकम्· पूर्वस्यादिभागश्चेत्तदुत्तरपादस्य मध्यभागे, तदादिमध्ययमकम्· पूर्वस्य मध्यादिभागौ चेत्तदुत्त-

(क) संदृष्टमित्यन्यत्र ।
(ख) चमत्कारकारीति पु॰ ।
(ग) अत्र यमकप्रकरणे अन्तान्त्यशब्दयोः पुस्तकेष्वव्यवस्थितः प्रयोगः ।
(घ) द्विखण्डे यथेति पु॰ ।
(ङ) तदा अन्तादिः यमकमिति पु॰ ।

रस्याद्यमध्ययो,स्तदा मध्याद्यादिमध्ययोः समुच्चयः· एवं, प्रथमस्यान्त्यभागो द्वितीयस्य मध्यभागे चे त्तदान्त्यमध्यम्· पूर्वस्य मध्यभागश्चेद्द्वितीयस्यान्तभागे, तदा मध्यान्तकम्·(क) पूर्वस्यान्त्यमध्यभागौ चेद् द्वितीयस्य मध्यान्तभागयो,स्तदाऽन्त्यमध्यमध्यान्तयोः समुच्चयः· यद्यपि पूर्वस्यादिभाग उत्तरस्यान्त्यभागे चे,त्तदाद्यन्तकम्,(ख) अन्त्यभागस्त्वाद्यभागे, तदान्तादिकमित्यादि प्रकारद्वयं सम्भवति, तथापि द्विखण्डान्तर्गतमेव तदिति पृथङ्न गण्यते· सर्वेषां चेत्रामपरः समुच्चय इति भिन्नवादे यमने प्रभेदाः· एवं तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेष्वावृत्तौ भेदा द्रष्टव्याः· सर्वं चैते नियतस्थानविवक्षया स्थानयमकभेदाः, नियतेषु स्थानेष्वाऽऽवृत्तेरिति, अस्थानयमकभेदा अपि बहवो भवन्तीति प्रभूततमभेदं यमकम्· तदेतत्काव्ये गडु(ग)भूतमिति नास्य लक्षणं कृतम्· दिङ्मात्रं तूदाह्रियते· तत्रैकपादाभ्यासेषु सन्दशो यथा—

सञ्चारीभरणोमायमाराध्य विधुशेखरम् ।
सञ्चारीभरणोऽमायस्ततस्त्वं पृथिवीं जय [ पा· आ· ]

द्विपादाभ्यासे यमकं यथा—

विना ऽयमेनो नयताऽसुखादिना
विना यमेनोनयता सुखादिना ।
महाजनो ऽदीयत मानसादरम्
महाजनोदीयतमानसादरम् ॥ [ अ· आ· ]

श्लोकाभ्यासे महायमक यथा—

सत्वारम्भरतो ऽवश्यमवलम्बिततारवम् ।
सर्वदारणमानैषीदवानलसमस्थितः ॥ [ श्लो· आ· ]

पुनः श्लोकः·(घ) द्विखण्डेषु भिन्नपादपादभागाभ्यासेषु द्वितीयपादान्तभागस्य चतुर्थपादान्तभागे यमने सन्दष्टकं यथा—

---

(क) मध्यान्तिकमिति पा· ।

(ख) तदाद्यन्त्यकमिति पा· ।

(ग) प्रहेति, ग्रन्थाति च पा· ।

(घ) अपरत्र तु पुनर्न्यस्तं एवास्ते श्लोकः· ०"भवतं विततारव"मिति श्लोकश्च विज्ञेयम् ।

अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम् ।
या च मातेव भजते प्रणते मानवे दयाम् ॥

अस्मिन्नेवाद्यन्तकमेकपादे यथा—

यदानतोऽयदानतो नयात्ययं न यात्ययम् ।
शिवे हितां शिवैर्हितां स्मरामितां स्मरामि ताम् ॥

प्रथमपादाद्यभागस्य द्वितीयादिपादानामन्ताद्यभागेषु यमने पूर्वार्द्धे आद्यन्तकम्, उत्तरार्द्धे आद्यन्तान्ताद्ययोः समुच्चयो यथा—

सर स्वतिप्रसादं मे स्थितिं चित्तसरस्वति ।
सरस्वति कुरु क्षेत्र कुरुक्षेत्र सरस्वति ॥

द्वयोराद्यन्तकयोः समुच्चयो यथा—

ससार साकं दर्पेण कन्दर्पेण ससारसा ।
शरन्नवाना बिभ्राणा नाबिभ्राणा शरन्नवा ॥

चतुःखण्डे पादे द्वितीयभागस्य तृतीयभागे यमनं यथा—

मधुपराजिपराजितमानिनीजनमनस्सुमनस्सुरभि श्रियम् ।
अभृत वारितवारिजविप्लवं स्फुटिततामततामवणं जगत् ॥

एवं वैचित्र्यसहस्रैः स्थितमन्यदप्यूह्यम् ॥ ८३ ॥

वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः ।
श्लिष्यन्ति शब्दाः, श्लेषोऽसावक्षरादिभिरष्टधा ॥ ८४ ॥

'अर्थभेदेन शब्दभेद' इतिनयेन भिन्नाः शब्दाः, 'काव्यमार्गे स्वरो न गण्यत' इतिनयेन युगपदुच्चारणविषयतया यच्छ्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते, एकवृन्तगतफलद्वयन्यायेन यत्रार्थद्वयप्रतीतिः स श्लेष इत्यर्थः। अक्षरादिभिरिति वर्ण,पद,लिङ्ग,भाषा,प्रकृति,प्रत्यय,विभक्ति,वचनभेदादष्टधा श्लेष इत्यर्थः। अत्र वर्णश्लेषो यथा—

(शेषमग्रे)

॥ श्रीः ॥

श्रों नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम् ।

## श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम् ।

### तत्र प्रथमाध्यायस्यावशेषः ।

---

(Continued from page 89. VOL XII.)

आकाशाधिकरणम् । सू० आकाशस्तल्लिङ्गात् ॥ २२ ॥

भा० इदमाम्नायते छान्दोग्ये "अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह

अथ चिदचिद्विलक्षणस्य वस्तुनो वेदान्तवेद्यत्वनिर्णयात्तदुत्तराधिकरणमनारम्भणीयमिति शङ्कां परिहरन् प्रौढिकामेव-तत्सङ्गतिमाह "यतो वा इमानीत्यादि"ना, सद्ब्रह्मात्मादिसाधारणशब्दानां जगत्कारणवाचिनामर्थस्वभावादभिमतविशेषपर्यवसानं कृत वस्त्वन्तरविशेषासाधारणत्वेन व्युत्पन्नैरपि शब्दैर्जगत्कारणे निर्दिष्टे तेषामप्यर्थस्वभावादभिमतविशेषपर्यवसानं क्रियत इत्यर्थः, पूर्वं संशयव्युदासः कृतः, अथ विपर्ययव्युदासः क्रियत इति यावत्, लिङ्गाच्छ्रुतेर्बलीयस्त्वात् कारणविशेषे आकाशादिपदश्रुत्या निश्चिते सति लिङ्गात्तद्विरुद्धविशेषनिश्चयोऽनुपपन्न इति पूर्वपक्षोत्थानादधिकरणस्यारम्भणीयत्वं सिद्धमिति भावः, । पादशेषेणेति पादशेषोऽधिकरणचतुष्टयात्मकः, तत्र प्रथमे वस्त्वन्तरप्रसिद्धशब्दविशेषेण प्रत्यवस्थानम्, अर्थविरोधेन परिहारः, अर्थाविरोधशङ्कया प्रत्यवस्थानं द्वितीये विरोधोद्घाटनमुखेन परिहारः, विरोधिलिङ्गाभावेनाल्पानुकूललिङ्गसद्भावेन च प्रत्यवस्थानम्, तृतीये स्ववाक्ये विरोधिलिङ्गाभावेऽप्युपक्रमवाक्यस्थविरोधिलिङ्गप्रदर्शनेन सिद्धान्तः उपक्रम एवानुकूललिङ्गभूयस्त्वेन प्रत्यवस्थानं चतुर्थे तन्निरासेन सिद्धान्त इति भिदा, अनेनाधिकरणसङ्गतिश्च कलिता । आकाशस्तल्लिङ्गात् सिद्धान्ते कारणत्वानुवादस्य वक्ष्यमाण-

स्वादिधेयं किमित्यपेक्षायां विधेयार्थज्ञापनार्थमस्य लोकस्य का गतिरि त्यादिकमुपात्तं गतिः—प्राप्यं, संशयमाह "तत्रे"ति, भूताकाशे प्रसिद्धाति-शयपरायणत्वाद्यनुपपत्तिभ्यां संशयः, भूताकाशे परमात्मनि च आका-श—शब्दप्रयोगात्संशय इत्युक्तं परैः, तदयुक्तम् अश्रुतवेदान्तस्य सर्वाणि ह वा

सू० वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैतेभ्यो भूतेभ्यो ज्यायानाकाशः पराय-ण"मिति, तत्र सन्देहः किं प्रसिद्धाकाशमेवाकाशश-ब्देनाभिधीयते? उतोक्तलक्षणमेव ब्रह्मे? ति किं प्राप्तं प्रसिद्धाकाश इति, कुतः शब्दैकसमधिगम्ये वस्तुनि य एवार्थो व्युत्पत्तिसिद्धः शब्देन प्रतीयते स एव ग्रही-तव्यः ।

टी० इमानि भूतानीति वाक्यस्थाकाशशब्दवत् "आकाशो ह वै नामरूपयोर्निर्वहितेत्यादिवाक्यस्थाकाश—शब्दस्य च परमात्मविषयत्वा-प्रतिपत्तेः श्रुतवेदान्तस्य संशयाभावाच्च, चिदचिद्विलक्षणकारणास्तित्वा-योगव्यवच्छेदो हि प्रथमपादसाध्यः न त्वन्ययोगव्यवच्छेदः, स त्रिपादी-साध्य एव, इतः पूर्वैरधिकरणैरयोगव्यवच्छेदस्सिद्ध इति तच्च सदेव ब्रह्म-त्रिदाग्रेति आत्मन आकाशस्सम्भूतः इत्यादिषु कारणविषयाणां सद्ब्र-ह्मादिशब्दानां साधारणानाम् आकाशप्राणेन्द्रादिविशेषपर्यवसाने सति चिदचिद्विलक्षणकारणास्तित्वासिद्धेराकाशादिपदानामीक्षणानन्दविशेष-योगानुगुणतया नेयत्वे सत्येव तत्सिद्धेश्च, अतो यथोक्तहेतुनिबन्धनसंशयः जगत्कारणशब्दवाक्यप्रतिपाद्यं वस्तु किमाकाश? उत परमात्मे? ति वि-चारः, तदर्थम् अस्य लोकस्य का गति? राकाश इत्यत्र आकाशः किं प्रसिद्धः? उत परः? तदर्थं किमाकाश—शब्दो रूढ्या वर्त्तते? उतावयवशक्त्या? तदर्थं ज्यायस्त्वादिगुणाः किं मुख्यतया नेयाः? उत न तदर्थमात्मन आकाशस्स-म्भूत इत्यात्म—शब्दः किं कारणाकाशपरः? उत परमात्मपरः? तदर्थं कि-

मयमात्म-शब्दः स्वरूपपरः? उत देहप्रतिसम्बन्धिपरः? इति विचारः, यदि स्वरूपपरः तदात्मन आकाशत इत्यत्रात्म-शब्दकारणाकाशपरतया ज्यायस्त्वादिगुणानामपि कथंचिच्चेयत्वेन रूढिशक्तेः स्थितत्वाद्विषयवाक्यस्याकाश-शब्दः प्रसिद्धाकाशपर इति वेदान्तवेद्यं वस्तु प्रसिद्धाकाशपर इति पूर्वपक्षे फलफलिभावः। यदात्म-शब्दः शरीरप्रतिसम्बन्धिपरः तदा आत्मन आकाश इत्यत्रात्म शब्दस्य परमात्मपरतया ज्यायस्त्वादिगुणानामपि मुख्यत्वाद्यौगिकवृत्त्या विषयवाक्यस्याकाश-शब्दः परात्मपर इति कारणवाक्यप्रतिपाद्यः परमात्मेति राद्धान्ते फलफलिभावः पूर्वपक्षसमर्थनौपयिकं प्रयोजकं शिक्षयति "शब्दे"ति, प्रमाणान्तरसिद्धार्थानुवादे सति हि तदनुरोधाय क्लिष्टगत्याऽर्थस्य वर्णनीयत्वं स्यात् आदित्यो यूप इत्यादिषु यूपादेः प्रमाणान्तरगोचरतया हि तदनुरोधादैक्यहानं, मानान्तरागोचरे वस्तुनि प्रतिपाद्ये न तथा व्युत्पत्तिसिद्धार्थस्सा[१]ध्यः अनुरोद्धव्यान्तराभावेन शब्दस्वातन्त्र्यस्याकुण्ठितत्वादिति भावः। ततः किमित्यत्राह-

सू० अतः प्रसिद्धाकाश एव चराचरात्मकभूतजातस्य कृत्स्नस्य कारणम् अतस्तस्मादनतिरिक्तं ब्रह्म। नन्वीक्षापूर्वकस्रष्ट्र्यादिभिरचेतनाज्जीवाच्च व्यतिरिक्तं ब्रह्मेत्युक्तं, सत्यमुक्तं दुरुक्तन्तु तत, तथा हि यतो वा इमानि भूतानि जायन्ते तद्ब्रह्मेत्युक्ते. कुत इमानि भूतानि जायन्ते? इत्यादिविशेषाकाङ्क्षायां सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इत्यादिना विशेषप्रतीतेर्जगज्जन्मादिकारणमाकाश एवेति निश्चिते सदेव सौम्येदमग्र आसीदित्यादिष्वपि सदादिशब्दाः साधारणाकारास्तमेव विशेषमाकाशमभिदधति, आत्मा वा इदमेक एवाग्र आसीदित्यादि-

१ व्युत्पत्तिसिद्धार्थस्याक्ष्य इति पा०।

इति आत्म-शब्दस्तत्रैव वर्त्तते तस्यापि हि चेतनैकान्तत्वं न सम्भवति यथा मृदात्मको घट इति आप्नोतीत्यात्मेति व्युत्पत्त्या सुतरामाकाशेऽप्यात्म-शब्दो वर्तते अत एवमाकाश एव कारणं ब्रह्मेति निश्चिते सतीक्षणादयस्तदनुगुणा गौणा वर्णनीयाः ।

टी० "अत" इति, प्रसिद्ध्याकाश एवेति अर्थान्तरपरत्वे हि यौगिकवृत्तिराश्रयणीया न तद्युक्तं रूढिर्हि योगाद्बलीयसीति भावः । अर्थविरोधाद्व्युत्पत्तिसिद्धार्थस्त्यज्यत इति चोदयति "नन्वि"ति, परिहरति "सत्यमि"ति, इत्यादीत्यादि-शब्देन किं प्रयन्ति ? केन जीवन्ती-त्यपेक्षा विवक्षिता विशेषप्रतीतेरिति एतद्वाक्यविशेषेण वस्तुविशेषप्रतीतिर्हेतुतयोक्ता जगज्जन्मादिकारणमाकाश एवेति निश्चित इति सद्विद्यादिप्रतिपन्नकारणानुवादिलक्षणवाक्योक्तं ब्रह्म आकाश एवेति निश्चित इत्यर्थः । यद्वा आपातप्रतीतिः पूर्वमुक्ता निश्चित इति युक्तितो निर्णय उक्तः । ननु यतो वा इमानीत्यादिवाक्यप्रकरण एवानन्दो ब्रह्मेत्यानन्द-शब्देन विशेषनिर्णयोऽस्ति नैवं यद्येष आकाश आनन्दो न स्यादित्याकाश-शब्दसामानाधिकरण्यादानन्द-शब्दः किमाकाशपरः ? आकाश-शब्दः किमानन्दपर? इति संशयः स्यात्, तस्मादानन्दशब्दसामानाधिकरण्यरहितादाकाशादेव समुत्पद्यन्त इति वाक्यादेव विशेषनिर्णय इत्यभिप्रायेणाकाश एवेति निश्चित इत्युक्तं, साधारणाकाराः-साधारणरूपाः "छागो वा मन्त्रवर्णादि"ति न्यायोऽभिप्रेतः, आत्म-शब्देन विशेषनिर्णयशङ्कां व्युदस्यति "आत्मा वा" इत्यादिना, तत्रैव आकाशे आकाश-शब्दापेक्षया आत्म शब्दोऽपि साधारण इत्यर्थः । आत्म-शब्दस्यावयवशक्त्याप्याकाशपरत्वं दर्शयति "आप्नोती"ति, व्यवस्थितरूढिशक्तेराकाश-शब्दस्य रूढिभङ्गादपि नानार्थसाधारणरूढिशक्तेरात्म-शब्दस्य रूढिभङ्ग उचित इति भावः । ईक्षणादीनां गौणत्वेन निर्वाह्यत्वमाह "अत एवमि"ति, श्रुतिप्राबल्याल्लिङ्गं तदनुगुणं नेयमित्यर्थः,

ईक्षणादिमुख्यत्वानुरोधिसदादिशब्दैरेव विशेषनिर्णय इति शङ्कायां सदादिशब्देभ्यः आकाशपदश्रुतेः प्राबल्यमुपपादयति—

भा० यदि ह्व साधारणशब्दैरेव सदादिभिः कारणमभ्यधायिष्यत ईक्षणाद्यर्थानुरोधेन चेतनविशेष एव कारणमिति निरचेष्यत, आकाश—शब्देन तु विशेष एव निश्चित इति नार्थस्वाभाव्यान्निर्णेतव्यमस्ति । नन्वात्मन आकाशस्सम्भूतः इत्याकाशस्यापि कार्य्यत्वं प्रतीयते सत्यं, एवं रामेवाकाशवाय्वादीनां सूक्ष्मावस्था स्थूलावस्था चेत्यवस्थाद्वयमस्ति तत्राकाशस्य सूक्ष्मावस्था कारणं, स्थूलावस्था तु कार्यम् आत्मन आकाशस्सम्भूत इति स्वस्मादेव सूक्ष्मरूपात्स्वयं स्थूलरूपः सम्भूत इत्यर्थः सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इति सर्वस्य जगतः आकाशादेव प्रभवाप्ययादिश्रवणात्, तदेव जगत्कारणं ब्रह्मेति निश्चितं यत एवं प्रसिद्धाकाशादनतिरिक्तं ब्रह्म, अत एव यदेष आकाश आनन्दो न स्यात् आकाशो ह वै नामरूपयोर्निर्वहितेत्येवमादिनिर्देशोऽप्युपपन्नतरः, अतः प्रसिद्धाकाशादनतिरिक्तं ब्रह्मेत्येवं प्राप्ते ब्रूमः ।

टी० "यदि ह्री"ति, साधारण—शब्दैरेवेति न तु विशेषशब्दान्तरै सतीति भावः । यदीत्यभिप्रेतं, विपर्ययेण विशेषनिश्चायकसद्भाव दर्शयति "आकाश—शब्देन त्वि"ति, "रूढिर्हि योगमपहरती"ति न्यायाद्विलम्बितप्रतिपत्त्याद्यौगिकादपि शीघ्रधीविषये रूढ्यर्थ एवाकाश—शब्दस्य परिग्राह्ये सदादिशब्दानाम् ईक्षणादिलिङ्गपरामर्शसापेक्षत्वेन विलम्बितप्रवृत्तितया अतिशीघ्रप्रवृत्तित्वात्प्रबलतराकाशपदश्रुत्याऽपेक्षिते विशेषे लब्धे अर्थस्व-

भावनिर्णीतस्याविशेषाभावादीतयादयस्तदनुरोधेन वर्णनीयाः, अतो न चेतनविशेषकारणत्वसिद्धिरित्यर्थः । कार्यतयाऽवगतस्य परमकारणत्वानुपपत्तिमुखेन चोदयति "न न्व"ति, परिहरति "सत्यमि"ति, कार्यत्वेऽभिमतिः, तस्य कारणत्वभङ्गकत्वेऽनङ्गीकारः, वाय्वाद्युपादानविदर्शनतया सूक्ष्मावस्था-शब्देन तन्मात्रावस्था कथ्यते आत्मन आकाश इति वाक्ये आत्म-शब्दः स्ववाचीत्यर्थः । कुत इत्यमस्वारस्येनार्थो वर्ण्यत इत्यत्राह "सर्वाणी"ति, प्रभवाप्ययादीत्यादि-शब्देनावकाशप्रदानेन स्थितिहेतुत्वमुच्यते, परायणमिति च्छान्दोग्ये नामरूपयोर्निर्वहितेत्येवमादीत्यादि-शब्देन कं ब्रह्म खं ब्रह्म प्राणं चास्मै तदाकाशं चोचुः परमे व्योमन् प्रतिष्ठिते"-ति वाक्यान्यभिप्रेतानि, पूर्वपक्षमुपसंहरति "अत"इति, राद्धान्तमारभते ।

आकाशस्तल्लिङ्गात् ॥ २३ ॥

सू० आकाश-शब्दाभिधेयः प्रसिद्धाकाशादचेतनादर्थान्तरभूतो यथोक्तलक्षणः परमात्मैव, कुतः-तल्लिङ्गात निखिलजगदेककारणत्वं सर्वस्माज्ज्यायस्त्वं परायणत्वमित्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते, निखिलकारणत्वं ह्यचिद्वस्तुनः प्रसिद्धाकाश-शब्दाभिधेयस्य नोपपद्यते चेतनवस्तुनस्तत्कार्यत्वासम्भवात्, परायणत्वं चेतनानां परमप्राप्यत्वन्तच्चाचेतनस्य हेयस्य सकलपुरुषार्थविरोधिनो न सम्भवति सर्वस्माज्ज्यायस्त्वं च निरुपाधिकं सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयोत्कर्षः, तदप्यचितो नोपपद्यते ।

टी० "एव"मिति, पूर्वाधिकरण इव नात्र तद्धर्मोपदेशादित्युक्तम्, अपि तु तल्लिङ्गादित्युक्तं, वाक्यान्तरप्रसिद्धार्थस्यानूदितस्य हेतुतया विवक्षितत्वात् लिङ्गसम्बन्धित्वेन प्रमाणान्तरोपलब्धं हि लिङ्गं भवति, लिङ्गं च किमि? त्यत्राह 'निखिलजगदि"ति, सर्वाणि ह वा इमानि भूतानि इत्य-

स्मिन् विषयवाक्ये सर्व-शब्दस्यासङ्कोचमभिप्रेत्य निखिलेत्युक्तं, भूत-शब्दस्य वाय्वादिचतुष्टयमात्रपरत्वव्युदासाय जगच्छब्दः, महच्छब्दपञ्चशब्दपृथिव्यादिशब्दसमभिव्याहाराभावे भूत-शब्दस्याचित्संसृष्टचेतनपरत्वं स्वतःप्राप्तं यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति "न हिंस्यात्सर्वाभूतानि" "भूतानां प्राणिनः श्रेष्ठाः" इत्यादिप्रयोगस्वारस्यात्, अतस्सर्वभूतकारणत्वोक्त्या चिदचिदात्मकसमस्तप्रपञ्चकारणत्वमुक्तं भवतीत्यभिप्रायेण निखिलजगदित्युक्तं, तत्र निमित्तान्तरास्रवणाद्वाक्यान्तरैकार्थ्याच्च निमित्तोपादानादिरूपसर्वविधसाधारणकारणत्वाभिप्रायेणैककारणत्वमित्युक्तम् । आकाशस्य तल्लिङ्गानुपपत्तिमाह "निखिलकारणत्वमि"ति, अनेनैककारणत्वानुपपत्तिश्चाभिप्रेता, न ह्याकाशो निमित्तकारणं भवितुमर्हति हेयत्वात्पुरुषार्थविरोधित्वाच्च । प्राप्यत्वं च न सम्भवतीत्याह "परायणत्वं चे"ति, अचेतनस्य अचेतनत्वेन स्वरूपान्तर्भूतत्वाद्धेयत्वमित्यर्थः, सकलपुरुषार्थविरोधिनः-सकलानां जीवानां साक्षात्पुरुषार्थो मोक्षः बन्धहेतुतया तस्य विरोधिन इत्यर्थः । यद्वा मोक्षविरोधितया हेयस्य शब्दादिनिषिद्धविषयप्रावण्यजननाद्धर्मादिसकलपुरुषार्थविरोधिनः सर्वविधसुखस्य मोक्षान्तर्भावात्सकलपुरुषार्थरूपो मोक्षस्तद्विरोधिन इति वार्थः । यद्वा कारणावस्थायामत्यन्तज्ञानसङ्कोचहेतुतया चतुर्णामपि पुरुषार्थानां विरोधिन इत्यर्थः । ज्यायस्त्वाद्यनुपपत्तिमाह "सर्वस्मादि"ति, अत्र पूर्वपक्षयुक्तेः कः परिहार? उक्तोभवतीत्यपेक्षायां सूत्राभिप्रेतार्थं वक्ष्यन् परोक्तमनुवदति-

सू० यदुक्तं जगत्कारणविशेषाकाङ्क्षायामाकाश-शब्देन विशेषसमर्पणादन्यत्सर्वं तदनुरूपमेव वर्णनीयमिति तदयुक्तं "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त" इति प्रसिद्धवन्निर्देशात्, प्रसिद्धवन्निर्देशो हि प्रमाणान्तरप्राप्तिमपेक्षते, प्रमाणान्तराणि च "सदेव सोम्येदमग्र

आसीदि'त्येवमादीन्येव वाक्यानि, तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति तत्प्रतिपादितं ब्रह्म आकाश-शब्देन प्रसिद्धवन्निर्दिश्यते, सम्भवति च परस्य ब्रह्मणः प्रकाशकत्वादाकाश-शब्दाभिधेयत्वम्, आकाशते आकाशयति चेति,। किञ्चानेनाकाश-शब्देन विशेषसमर्पणक्षमेणापि चेतनांशं प्रत्यसम्भावितकारणभावमचेतनविशेषमभिदधानेन "तदैक्षत बहु स्यां प्रजायेये"ति ।

टी० "यदुक्तमि"ति, परिहरति "तदयुक्तमि"ति, प्रथमं पुरोवादसापेक्षेण अनुवादेन पुरोवादिवाक्यविरुद्धार्थप्रतिपादनायोगं वक्तुमनुवादलिङ्गवत्त्वमाह "सर्वाणी"ति, प्रसिद्धवन्निर्देशोऽस्तु ततः किमित्यत्राह "प्रसिद्धवदि"ति, सापेक्षत्वमस्तु ततः कि? मित्यत्राह "प्रमाणान्तराणि चे"ति, कथमाकाश-शब्दस्य परब्रह्मवाचित्व? मित्यत्राह "सम्भवति चे"-ति, प्रकाशकत्वात्-अन्येषां सर्वार्थप्रकाशकत्वात्, आकाशते स्वस्मै प्रकाशते आकाशयति अन्यं प्रकाशयति स्वात्मने इत्यर्थः । यद्वा प्रकाशकत्वादिति णिजन्तत्वेन अणिजन्तत्वेन च व्युत्पत्तिद्वयस्य तन्त्रोक्तिस्तस्यैव विवरणमाकाशत इत्यादि रूढिप्राबल्यमर्थाविरोधे सतीत्यपशूद्राधिकरणनयोपजीवनेनात्रावयवशक्त्या निर्वाहः कृतः, रूढ्यपरित्यागेनापर्यवसानवृत्याऽऽकाश-शब्दस्य आकाशशरीरकपरमात्मपरतया निर्वाहोऽप्यभिमतः, वैश्वानराधिकरणे वैश्वानर-शब्दे उभयथाऽपि परमात्मपरत्वस्य वक्ष्यमाणत्वादाकाशादिशब्दानान्तच्छरीरकपरमात्मवाचित्वस्यानन्तरपादेऽनुवदिष्यमाणत्वाच्च आकाश-शब्दस्याव्याकृतशरीरकपरमात्मपरत्वं तुल्यादवप्रकाशोक्त विलम्बदुयवत्त्वादुपेक्षितं, न केवलं प्रसिद्धवन्निर्देशमात्रमनुवादत्वसाधकं यदाऽऽग्नेयोऽष्टाकपाल:, उपरि हि देवेभ्योधारयतीत्यादावदर्शनादिति शङ्कायामयोग्यत्वे निश्चिते सति प्रसिद्धवन्निर्देशोऽनुवादत्वसाधक इत्यभिप्रायेणाह "किञ्चे"ति, विशेषसमर्पणक्षमेणापीति एकपदश्रवणवेलायां विशेषसमर्पणक्षमेणापि परामर्शदशायाम् अयोग्यतया निश्चितोऽर्थो न प्रतिपादयितुं शक्यत इत्यभिप्रेत्य असम्भावितकारणभावमित्युक्तं, तदैक्षतेति सद्विद्यावाक्यशेषः ।

(शेषमग्रे)

श्रों नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

श्रों श्रीगणेशाय नमः ।

(*Continued from page* 102. Vol. XII.)

श्रीगणेशाय नमः ।

## अथ नवमोऽध्याय आरभ्यते

अग्निहोत्रादिसूक्तानां धर्माणामपूर्वप्रयुक्तत्वाधिकरणम् ।

सू॰ यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥

सिद्धेऽतिदेशेऽधुनाऽतिदिष्टानां पदार्थानां मन्त्रसामसंस्काराणां द्वारान्तरसम्बन्धनिमित्तोऽन्यथाभावात्मक ऊहश्चिन्त्यते, तस्य चातिदिष्टविषयत्वादतिदेशोत्तरकालमारम्भः, अतिदेशाधीनत्वमेव दर्शयितुं सप्रमाद्यसिद्धमपूर्वप्रयुक्तत्वं धर्माणामनेन सूत्रेण स्मारयति, यजिप्रयुक्तत्वे हि पारिप्लवा धर्माः सर्वत्रोपदिष्टा नान्यथा कर्त्तुं शक्यन्ते, अपूर्वप्रयुक्तत्वे तु प्रतिक्रतुं व्यवस्थिता धर्माः दशमाद्यन्यायेन कार्यमुखेनातिदिष्टा युक्तं यदूहं भजन्ते, तस्मादूहविवक्षयाऽपूर्वप्रयुक्तिः स्मारिता तदीयौ पूर्वोत्तरपक्षौ तत्रैव प्रदर्शिताविति नेह प्रदर्श्येते, तथाऽन्यदिह चिन्त्यते किमवघातमन्त्रादयो विवक्षितव्रीहि[1]त्वादिद्वारा ऽपूर्वस्योपकुर्वन्ति? उताविवक्षिततत्स्वरूपाः साधनविशेषमात्रद्वारे? ति, स्वरूपविवक्षायां हि तदभावान्नीवारादिषूहो न स्यात्, अविवक्षितत्वे तु नीवारादावपि साधनविशेषसद्भावात्सि ध्यत्यूहः । ननु साधनस्यापि दार्शपौर्णमासिकस्य द्वारत्वात् विकृतौ च तदभावात्कथमूहः, यस्यापूर्वस्यावघातोऽङ्गन्तदीयसाधनं नीवारमिति

१ व्रीहित्वादिद्वारेति पाठान्तरम् ।

चेत्तथा सत्यैन्द्रधाज्यसान्नाय्यानां धर्मसङ्करः स्यात्, त्रयाणामपि प्रदेयसाधनत्वात्। अथाग्नेयादिद्वारभेदेन साधनत्वभेदाद् व्यवस्था, ततो विकृतौ तद्द्वाराभावादवघातादेरप्रवृत्तिः, उच्यते—अवहतैरपूर्वं कुर्यादिति शास्त्रार्थः साधनप्रयुक्तिश्च तद्वत्कुर्यादित्यतिदेशे अवहतैः कुर्यादित्यर्थो भवति तस्मात्सिध्यति विकृतावप्यवघातः, तेन यस्यापूर्वस्यावघातोऽङ्गमित्यादिकुशकाशावलम्बनमनर्थकं, यदि परं धर्मसाङ्कर्याय स्यादित्यास्तां तावत् एवं प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्यत्रागन्म सुवः सुवरगन्मेत्यत्रावहन्तिस्वरूपं स्वर्गस्वरूपञ्च संस्कारमन्त्रयोरपूर्वार्थयोर्द्वारमुतापूर्वसम्बन्धिविशेष इति तुल्यो विचारः, तत्र व्रीह्यादीनां श्रुतानामविवक्षाकारणाभावात्तद्द्वारेणैवापूर्वार्थत्वं साधनरूपस्यावर्जनीयत्वादन्यथाऽवघातादेरानर्थक्यात्तन्मात्रमेव विवक्षितमिति सिद्धान्तः, तदेतदिह संक्षिप्तमुपरितनैस्त्रिभिरधिकरणैः प्रपञ्चयिष्यते, सेयं द्वितीयस्य वर्णकस्यैका व्याख्या, तथाऽन्यापि सप्तमाद्ये हि यद्यर्थत्वेऽपि धर्माणामपूर्वविशेषनिमि[1]त्ततामात्रेण व्यवस्थासिद्धेर्नैकान्ततोऽपूर्वार्थत्वं व्युत्पादनीयमिह त्वपूर्वार्थत्वमन्तरेणोहासिद्धेरपूर्वार्थत्वम्प्रतिपाद्यते, यजिस्वरूपार्थत्वे हि तुल्यन्यायत्वादवघातादीनां व्रीह्यादिस्वरूपार्थत्वं स्यात्तदभावाच्च नीवारादावूहो न स्यादिति तस्यैवापरा व्याख्या सप्तमाद्ये साधारण्येनापूर्वार्थत्वमिह त्वारादुपकारकाणामपूर्वार्थत्वम्प्रकरणात्स्यात्सन्निपातिनान्तु श्रुत्यादिसंयुक्तव्रीह्याद्यर्थत्वावगमात् न तत्प्रयुक्तत्वमित्याशङ्क्य तेषामपि व्रीह्यादिस्वरूपपर्यवसायिनामानर्थक्यात्तद्द्वारेणापूर्वार्थतेति प्रतिपाद्यते, तदेतेषु त्रिष्वपि पक्षेषु यथैवेत्यादिभाष्यन्तन्त्ररत्न एवास्माभिर्व्याख्यातम्। अथवाऽन्यामित्यादिनाभाष्येण पुनर्वर्णकान्तरमारब्धं तदुच्यते सप्तमाद्ये ऽपूर्वार्थत्वं सिद्धम्, इह तु किमपूर्वार्थानां धर्माणां यजिर्निमित्तम्? । उतानिमित्तमथापूर्वमेवे? ति चिन्त्यते। नन्वनिमित्ता प्रवृत्तिः कादाचित्कत्वात् येन विचार एव न स्यात्तथापूर्वस्यासाध्यत्वान्निमित्तता न युक्ता, तस्माद्यजिरेव निमित्तं तत्तुल्यन्यायत्वाच्चावघातादीनामपि व्रीह्यादिस्वरूपमेव निमित्तमिति तद-

१ निष्टतामात्रेणेति पा०

भावान्नीवारादिषु न स्यादिति प्राप्ते ब्रूमः "यज्ञेस्तादर्थ्यान्निमित्तत्वं न केनचिदिहोच्यते। अपूर्वस्यापि तत्रोक्तमर्थात्तस्य निमित्तता। साध्य हि साधनानुष्ठानेऽनिमित्तम् अनिष्पन्नमपि मनसि साध्यतया विपरिवर्त्तमानं, तस्मादपूर्वार्था धर्मास्तन्निमित्ताश्च विकृत्यपूर्वमपि तेषां धर्माणामतिदेशेन साध्यमवगतं तत्साधनभूतनीवाराद्यङ्गत्वेनावघातादीननुष्ठापयतीति सिध्यत्यूहः॥

प्रोक्षणस्यापूर्व्वप्रयुक्तत्वाधिकरणम्।

## सू॰ संस्कारे प्रयुज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात ॥ २ ॥

पूर्वाधिकरणे धर्माणाम् अपूर्वार्थत्वं सप्तमाद्यसिद्धं स्मारितं, तत एव च द्रव्यसंस्कारोऽपि तत्प्रयुक्त इति संक्षेपतः प्रतिज्ञामात्रेणोक्तम्, इदानीं तु तदेव श्रुत्यादिविरोधान्न सम्भवतीत्याशङ्क्योपपाद्यते तत्रेह वाक्यप्रयुक्तानां फलदेवतयोश्चेत्यत्र लिङ्गप्रयुक्तानां द्रव्यसंख्याहेतुसमुदायमित्यत्र श्रुतिप्रयुक्तानामपूर्वार्थत्वम्प्रतिपाद्यते दर्शपूर्णमासयोः श्रूयते "प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति" प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टी"ति तत्र प्रोक्षित–शब्देन विशेषणप्रधानेन तृतीयान्तेनान्यसाधनभूतयोरुलूखलमुसलयोर्दृषदुपलयोश्च संस्कारकं गम्यमानं प्रोक्षणं यत्तयोः साध्यन्तदर्थमित्यविवादम्। इदन्तु चिन्त्यते यत्तयोर्हन्तिपिषिसाधनत्वं तदर्थं सत्प्रोक्षणं हन्तिपिष्यर्थं? मुत यदपूर्वसाधनत्वं तदर्थत्वादपूर्वार्थं? मिति तत्र "अवहन्तिश्रुतेस्तावदवघातः प्रतीयते। तत्साधनत्वमेवातस्तृतीयातोऽवगम्यते॥ सामानाधिकरण्याच्च प्रोक्षणं तद्विशेषणम्। एवं हन्त्यर्थतापूर्वशेषत्वं प्रक्रियावशात्"। न च वाक्यसंयुक्तस्य प्रकरणमीष्टे, हन्तिपिषिद्वारेणापूर्वार्थत्वादुभयमविरुद्धमिति चेन्न उभयाकाङ्क्षासम्भवाच्च हि प्रकरणाधीनत्वमात्रेण प्रकृतार्थता सम्भवति, किं तर्हि प्रकृतेनैकवाक्यतां कल्पयित्वा, न चावहन्तिपदेन प्रधानवाक्येन च युगपदेकवाक्यता सम्भवति तत्रान्यतरेऽवहातव्ये प्रकरणं बाधित्वा हन्तिनैवान्वयमध्यवस्यामः, न च प्रोक्षणस्यानर्थक्यं हन्तेरपूर्वार्थत्वात्तदर्थमपि प्रोक्षणमपूर्वस्योपकरोत्येव

यथाऽऽधानमग्निद्वारेण क्रतूनामुपकारकमपि क्रतुविधिभिर्न गृह्यते, तथा प्रोक्षणमपूर्वार्थस्य हन्तेरङ्गमपि तत्स्वरूपपर्यवसायित्वेन विधीयमानं न क्रतुविधिवाक्यतां गच्छति। यच्च प्रधानवाक्यशेषभूतं तदेव विकृतिष्वतिदिश्यते, ततश्चावघातः क्रत्वङ्गत्वादतिदिश्यते न प्रोक्षणमतच्छेषत्वात् अवघातस्तु गच्छंस्तदङ्गभूतं प्रोक्षणमपकर्षतीति कृत्वा विकृतिषु प्रोक्षणमनुष्ठीयते, नखनिर्भिन्ने तु चरावतघाताभावाव प्रोक्षणस्याकर्षकमस्तीति न नखेषु प्रोक्षणमूहितव्यम्। अथाप्यवघातद्वारेण क्रत्वङ्गम्प्रोक्षणं तथाऽपि तत्स्वरूपमेव द्वारमिति तदभावान्नखेषु नास्ति प्रोक्षणमिति प्राप्तेऽभिधीयते। "अवघातावसायं सत्प्रोक्षणं स्यादनर्थकम्। विनापि प्रोक्षणं हन्तिरूपनिष्पत्तिदर्शनात्। तद्द्वारेण त्वपूर्वार्थं भवत्वानर्थकं भवेत्॥ न हि तेन विना तस्य निष्पत्तिरवगम्यते"। तेनावघातमात्रेण प्रयोजनानवाप्तेर्वाक्यसंयुक्तमप्यवघातमतिक्रम्यापूर्वार्थतां प्रकरणादर्थ्यते, न च तदेकवाक्यतामन्तरेण तादर्थ्यं सम्भवति। न च हन्तिनाऽपूर्वेण च पृथक् पृथगेकवाक्यता संभवति प्रोक्षिताभ्यां हन्ति प्रोक्षिताभ्यामपूर्वं भावयेदिति वाक्यं हि तथा भिद्येत तस्मादेवं द्रष्टव्यं हन्तेर्द्वे रूपे हन्तिरूपं तण्डुलनिर्वृत्तिप्रणाड्या चापूर्वजननव्यापारविशेषता, तत्र वाक्यात्प्रोक्षणं प्रति प्राधान्यमापद्यमानोऽवघातः श्रोतव्य स्वरूपस्यान्यथाऽपि सम्भवात्तेनात्मना प्राधान्यासम्भवादपूर्वजननव्यापारात्मना प्राधान्यं प्रतिपद्यते तद्रूपस्य विना प्रोक्षणेन निष्पत्त्यनवगमात्तत्स्वरूपप्रतिपत्तिपरश्च हन्ति-शब्दः, एवमुलूखलमुसलयोरपि द्रष्टव्य स्वरूपं हन्तिसाधनरूपं च विनापि प्रोक्षणं सम्भवतीति यत्तयोर्हन्तिशब्दावगतापूर्वव्यापारविशेषं प्रति साधनत्वं तेनात्मना प्रोक्षणसंस्कार्यत्वं गम्यते, तदेवं वाक्यार्थः, येन व्यापारेण तण्डुलनिर्वृत्तिप्रणाड्याऽपूर्वं क्रियते तं व्यापारम्प्रोक्षितेन साधनेन कुर्यादिति तत्र नखनिर्भिन्ने चरौ दलनस्यावघातवत्तण्डुलनिष्पत्तिप्रणाड्याऽपूर्वजननव्यापारत्वान्नखानाञ्च तत्साधनत्वात् प्रोक्षणं सिध्यति। नन्वेवमवहन्ति-शब्द उलूखलमुसलशब्दौ च लक्षणावृत्त्या स्युः सत्यम्, आनर्थक्याद्वरं लक्षणा, तस्मादपूर्वप्रयुक्तं प्रोक्षणम्। एवं "यावत्या वाचा कामयीत तावत्या

दीक्षणीयायामनुब्रूया"दिति श्रुतः स्वरविशेषः किं ज्योतिष्टोमापूर्वप्रयुक्तः ? उत दीक्षणीयापूर्वप्रयुक्त ? इति विचारः, "तत्र फलवत्परमापूर्वं तच्छेषत्वं ततो भवेत् । स्वापूर्वं क्रतुशेषत्वाच्च स्वयं फलवद्यतः ॥ फलवच्छेषता युक्ता न तु निष्फलशेषता, । तस्मात्तत्साधने रूपे स्वरभेदो विधीयते ॥ उच्यते । एवमाश्रीयमाणे हि भवेल्लक्षितलक्षणा । स्वापूर्वं लक्षणामात्रं तस्मात्तच्छेषतावरं तच्छेषत्वेऽपि धर्मस्यानानर्थक्यं प्रसज्यते ॥ तस्याप्यदृष्टरूपत्वात्फलापूर्वोपयोगतः । फलवत्परमापूर्वोपयोगित्वाद्यजमानसंस्काररूपं दीक्षणीयापूर्वं फलवदेव न तादर्थ्येऽप्यानर्थक्यम् । अदृष्टरूपत्वाच्च तद्रूपस्य विना धर्मैरवघातादिवत्सिद्ध्यनवगमात्सम्भवति प्रयोजकत्वमिति तादर्थ्यमेव युक्तं, दीक्षणीया हि केनात्मना धर्मं गृह्णातीत्यपेक्षायां स्वापूर्वसाधनत्वं शीघ्रं गम्यते, तद्द्वारन्तु परमापूर्वसाधनत्वं बिलम्बितं, तस्मादवान्तरापूर्वप्रयुक्ता एवं जातीयकाः, एतेन प्रोक्षणाद्यङ्गानामुत्पवनादीनान्तज्जन्यव्रीह्यादिसमवेतापूर्वप्रयुक्तत्वं व्याख्यातम् । आरादुपकारकप्रयाजाद्यङ्गानान्तदपूर्वप्रयुक्तत्वं "संस्कारोऽपि ह्यदृष्टत्वादपूर्वमिति गीयते ॥ प्रयाजापूर्ववत्तस्मादुभयं स्यात्प्रयोजकम्" ॥

फलदेवतासम्बद्धधर्माणामप्यपूर्वप्रयुक्तताधिकरणम् ।

## सू० फलदेवतयोश्च ॥ ३ ॥

"अगन्म सुवः सुवरगन्म" "अग्नेरहमुज्जितिमनूज्जेषमि"ति दर्शपूर्णमासप्रकरणपठितौ मन्त्रौ किं स्वर्गस्वरूपाग्निस्वरूपप्रयुक्तौ ? उत यद्दर्शपूर्णमासापूर्वसाध्यं स्वरूपं फलस्याग्नेश्च तदीयदेवतास्वरूपं तच्छेषौ सन्तौ मन्त्रावपूर्वप्रयुक्ताविति "तत्र स्वर्गादिशेषत्वं भवेल्लिङ्गेन मन्त्रयोः । फलस्यादृष्टरूपत्वात्प्रधीनत्वाच्च सर्वतः ॥ अग्न्यादेर्योच्यमानस्य फलदायित्वसम्भवात् । तादर्थ्यमेव मन्त्रस्य युक्तं नापूर्वशेषता ॥ सत्यं, फलस्य सर्वस्मात्प्राधान्यं न तु तावता । मन्त्रस्तद्रूपशेषः स्यादानर्थक्यप्रसङ्गतः ॥ न हि मन्त्रेण प्रकाशितमात्रं फलं भवतीति प्रमाणमस्ति, तेन क्रतुमतिलङ्घ्य स्वर्गार्थत्वं तावन्मन्त्रस्यानाशङ्क्यं प्रकरणाम्नानात्प्रकृतक्रतुशेषः[2] संस्कार-

[1] सिध्यतीति पा० ।
[2] संस्तवद्वारेण इति ।

द्वारेण फलार्थः स्यात्, ततश्च क्रत्वपूर्वप्रयुक्ततामेवापद्यते, न हि क्रत्वङ्गन्त- दपूर्वातिलङ्घनेन फलं यावचेतुं युक्तम् । एवमग्न्यादेरपि फलदायित्वे सत्यपि मन्त्रेण प्रकाशितमात्रात्फललाभोऽनिष्पमाणक एवेति क्रत्वन्वयित्वेनैव प्रका- श्यत्वमङ्गीकर्त्तव्यं, तस्मादेवं वक्तव्यं मन्त्रप्रकाशितफलदेवतः क्रतुः स्वापूर्वं साधयतीति, ततश्च विकृतौ फलान्तरदेवतान्तरवत्यामगन्म ब्रह्मवर्चसं सूर्यस्याहमुज्जितिमनूज्जेषमित्यूहनीयन्तथा हि प्रकृतिवत्कृतं भवतीति ॥

धर्म्माणामदेवताप्रयुक्तत्वाधिकरणम् ।

सू० देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ४ ॥

एवं तावत्फलदायित्वेऽपि न देवतायाः प्रयोजकत्वं स्वरूपेणोत्युक्तम्, इदानीं तु नास्याः फलदायित्वं, नापि प्राधान्यमिति प्रतिपाद्यते, सर्वं पूर्वोक्ताक्षेपेणेदमारभ्यते ऽपूर्वापह्नवात्तद्धिहैतर्द्विचार्यते किं यागो देवताराधनार्थः अस्याश्चाराधितायाः फलम्? उतापूर्वद्वारं यागस्य साधनत्व? मिति, तत्र "इन्द्रादेः सम्प्रदानत्वात्कर्मणोऽपि प्रधानता । यागः पूजा तदङ्गं स्यादतिथेर्भोजनं यथा ॥ कर्मकारकं हि क्रियंयेप्सिततमं प्रधान- त्तेनापि व्याप्यमानं संप्रदानं ततोऽपि प्रधानं संप्रदानं च देवता, तस्मात्प्र- धानं यागश्च देवतापूजा, सा च लोके पूज्यमानार्था अतिथिभोजनादिवत्, अतो देवताराधनार्थो यागः, सा चाराधिता फलमाराधयित्रे ददातीति युक्तम् । एवञ्च लौकिकप्रसिद्धपदार्थस्वभावो नातिक्रान्तो भवति, अवश्यं च यागस्यापि फलसाधनत्वं केनचिद् द्वारेणाश्रयितव्यं स्वरूपस्य भङ्गुरत्वा- त्तत्र रात्रिसत्रन्यायेन वाक्यशेषमन्त्रवर्णावगता देवतातृप्तिरेव द्वारमिति कल्पयितुं युक्तं, न त्वत्यन्ताप्रतीतापूर्वकल्पनं, श्रूयते हि "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयती"ति "दधत्पोषं रयिं मयि" इति, शब्दागम्यत्वाच्च देवताप्रसादस्य स एवापूर्ववद्धर्माणां प्रयोजकः फलसाधनं चेत्येवं प्राप्ते ब्रूमः "यागस्यैव पदश्रुत्या फलसाधनतोच्यते । देवतायाश्च तादर्थ्यं तच्चिह्नस्त्वुपयोगतः ॥ यागश्च साध्यरूपत्वात्साधनत्वेन देवताम् । गृह्णाति सिद्धरूपा च देवता तस्य साधनम्" ॥ प्रत्ययाभिहिता हि भावना पुरुषार्थभाव्यमपेक्ष- माणा पदगतमपि यागमयोग्यत्वादुपेत्य वाक्यादुपनीतं स्वर्गादि गृह्णी-

त्वा तस्य साधनमाकाङ्क्षन्ती समानपदश्रुत्युपनीतं यागमविरोधात्करणं गृहीत्वा इत्थम्भावापेतायां द्रव्यदेवतभूतं भव्ययागनिर्वर्तनसमर्थं तादर्थ्येन गृह्णन्ती देवतां यागार्थां करोति, न च प्रागवगतं देवतायाः फलार्थत्वं येन तदाराधनाय यागविधिः स्यादेवं शब्देन तावत् यागात्फलं गम्यते यत्त्वतिथिवदित्युक्तं युक्तं तत्र प्रमाणान्तराद्भोजनस्य तादर्थ्यावगमात्, अपि च तत्रापि नातिथिर्भोजयितुः फलं ददाति प्रीयमाणोऽपि न ह्यसौ स्वर्गादिप्रदानायेष्टे तस्माद् यागवद्भोजनादेव फलम्, एवं विशिष्टसम्प्रदानकदानेऽपि तथा यागेऽपि, यद्यपि देवता विग्रहवती प्रतिगृह्य भुक्त्वा तृप्यति प्रसीदति च तथापि यागादेव फलं विग्रहवती चानित्या स्यात्तश्च नित्यवेदविषयत्वं न स्यात्, सत्यपि विग्रहे प्रत्तस्य हविषो देवताया भोगः प्रत्यक्षविरुद्धोऽशक्योऽभ्युपगन्तुं, न चाभुञ्जाना प्रसीदतीति युक्तम्, अत एवाप्रतिपत्त्या पूर्वत्यागेन देवताप्रसादादेव फलमित्येतदपि निरस्तं, न हि तस्याः प्रसादः सम्भवतीत्युक्तं, यत्त्वस्या यागसाधनद्वारा फलनिर्वृत्त्युपयोगित्वं तदभिप्रायादेव देवतायाः फलदायित्ववादाः, सेनापतिना ग्रामो दत्त इत्यादिवत् तत्तन्मन्त्रार्थवादेतिहासपुराणेष्वपि देवतानामपि तपश्चरणक्रत्वनुष्ठानब्रह्मास्वादिमन्त्रतश्च समीहितसिद्ध्यनुकीर्तनात्कर्मण एव फलं गम्यते, । मन्दधियस्तु श्रद्धालवस्तात्पर्यमजानाना भ्राम्यन्तु नाम, किञ्च स्तोकमण्डूकादीनां तिरश्चामचेतनानां चौषधिवनस्पतीनामश्वानां गवां च हनुदन्तानामुश्वरूपाणाञ्च कृष्णाश्वेतादीनामश्वचरितानां चेङ्कारशकृत्करणादीनां देवतात्वेन होमेषु श्रूयमाणानां को नाम फलदायित्वं श्रद्दधीत । किञ्च सैवाग्निहोत्रदेवता दध्ना पूज्यमानेन्द्रियं ददाति पयसा पशुमिति को हेतुरन्यदतो वस्तुस्वभावात्, पावकभोजनानशनादिभिश्च किमिति देवतास्तृप्यन्ति, किमिति वा सुरापानादिभिः कुप्यन्ति, येनाभ्युदयं प्रत्यवायं च कुर्वन्ति कर्तुः । अथैवमादिषु कर्मण एवापूर्वद्वारं फलं तथा सर्वत्रास्तु तस्मादपूर्वप्रयुक्ता धर्माः ॥

प्रोक्षणादीनामपूर्वप्रयुक्तत्वाधिकरणम् ।

सू० द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ५ ॥

वाक्यसंयुक्तानां लिङ्गसंयुक्तानां चापूर्वप्रयुक्तिर्व्याख्याता यस्त्वत्यन्तबलीयस्या श्रुत्या संयुक्तं तस्य प्रकरणादपूर्वार्थत्वमत्यन्तान्याय्यमिति मन्यमानान्प्रति श्रुतिसंयुक्तानामपि अपूर्वार्थता प्रतिपाद्यते। अथवा स्वरूपातिक्रमेण साधनसम्बन्धे स्रुवादिष्वतिप्रसङ्गमाशङ्क्य निराक्रियते दर्शपूर्णमासयोः श्रूयते "व्रीहीन्प्रोक्षती"ति तत्र संशयः किं व्रीहिद्रव्यप्रयुक्तं प्रोक्षणम्? उतापूर्वप्रयुक्त? मिति, यद्व्रीहिपदाभिधेयं स्वरूपं तन्मात्रपर्यवसितं प्रोक्षणं विधीयते तन्मात्रं च क्रत्वङ्गम्? उत यत्तेषां साधनरूपं व्रीहिभिर्यजेतेत्यनेनावगतन्तेन प्रोक्षणं सम्बध्यते प्रोक्षितैर्यजेते? ति, स्वरूपपरत्वे प्रधानविधिविशेषणत्वाभावादतद्विशेषणस्य तद्विकारेष्वतिदेशाभावाच्च प्रोक्षणस्य विकृतिष्वतिदेशः, व्रीहिमात्रं त्वतिदिश्यते तदतिदिष्टं स्वाङ्गभूतं प्रोक्षणमनुष्ठापयतीति विकृतिष्वपि सत्सु व्रीहिषु प्रोक्षणं स्यादेव, नीवारादिभिस्तु विनिवर्त्तितेषु व्रीहिषु प्रोक्षणमुपदेशातिदेशयोरभावान्नीवारादिष्वननुष्ठेयं भवति, यदा तु साधनविशेषद्वारेण प्रधानविधेरेव विशेषणं प्रोक्षणं तदाऽयमर्थः प्रोक्षितैर्व्रीहिभिः साध्यमानेन यागेनापूर्वं कुर्यादिति तत्र नैवारहविष्कायां भावनायां तद्वच्छब्देन प्राकृतभावनेत्थंभावे सकले ऽतिदिश्यमाने नीवारैर्व्रीहिमात्रे निवर्तिते ऽन्यस्य तद्रूपस्यैवावस्थानान्नीवाराणां च व्रीहिस्थाने निवेशादेषो ऽर्थो भवति-प्रोक्षितैर्नीवारैर्यजेतेति, ततश्च नीवारेषु प्रोक्षणं सिद्धं भवति, तथा त्रीन्परिधीनिति मन्त्रः किं त्रित्वसंख्याप्रयुक्तः? उतापूर्वीयपरिधीयत्ताप्रकाशनार्थः सन्नपूर्वप्रयुक्त? इति, इदं तु लिङ्गविनियोगत्वादिहानुदाहरणम्, अतिप्रसङ्गनिराकरणपक्षे तु भवत्येवोदाहरणं, तथा चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्रामावास्यामिति अभिमर्शनं पौर्णमास्यामावास्यासमुदायप्रयुक्तम्? उतापूर्वप्रयुक्त? मिति, तथा चातुर्मास्येषु श्रूयते "शूर्पेण जुहोति तेन ह्यन्नं क्रियत" इति किमन्नकरणप्रयुक्तो होमो ऽन्नकरणानां शूर्पदर्विपिठरादीनामङ्गम्? उताराादुपकारको ऽपूर्वार्थ? इति विचारः। ननु तृतीयानिर्देशादिह द्रव्यस्य न तत्संस्कारार्थता होमस्य शङ्कितव्या उच्यते तेन ह्यन्नं क्रियत इति हेतुनिर्देशोऽयं हि-शब्दश्रुत्या गम्यते व्याप्यश्च हेतुर्भवति प्रधानं चाङ्गेन व्याप्यते नाङ्गं प्रधानेन, यत्र प्रधानं

तत्राङ्गं न यत्राङ्गं तत्र प्रधानं, तस्माद्धेतुश्रुत्या व्याप्यत्वेन धूमवदवगम्यमानमवधातं प्राधान्येनावसीयत इति होमस्तदर्थे इत्याशङ्का, तत्र श्रुतिबलीयस्त्वाद् व्रीह्यादिद्रव्यशेषता प्रक्रियाऽवगतापूर्वशेषत्वस्यावबाधिनी व्रीह्यादिरूपशेषरूपत्वे सत्यानर्थक्यमापतेत्। प्रोक्षणस्य विना ऽप्यस्मात्तस्वरूपस्य सिद्धितः। तस्मात्साधनरूपं यद् व्रीहीणां शास्त्रचोदितम्। तेन रूपेण संबन्धः, प्रोक्षणादेर्विधीयते॥ शक्नुवन्ति व्रीहयः शास्त्रान्तरा[1]वगतमात्मीयमपूर्वसाधनत्वं हवीरूपत्वं लक्षणया ऽवगमयितुं, तेनात्मना प्रोक्षणं गृह्णन्ति हवीरूपस्य च विवक्षितत्वान्नातिप्रसङ्गः। यदि पुनरेकेनैव वाक्येन संस्कारो द्रव्यञ्च विधीयते प्रोक्षितैर्व्रीहिभिर्यजेतेति, तदापि किं सिध्यति साधनरूपान्वयः प्रोक्षणस्य सुतरां सिध्यतीति ब्रूमः, न हि तत्र व्रीहिसंबन्धः प्रोक्षणस्य साधनत्वेनैवोपदिश्यमानं द्रव्यं संस्कारे[2]ण व्रीहित्वेन च शिष्यत इति व्यक्तः साधनसम्बन्धः, अयं हि तत्रार्थः—व्रीहिजातीयम्प्रोक्षणसंस्कृतं च यत्तेन यजेतेति, ततश्च यवनीवारादिषु विरोधाद् व्रीहिसाधनत्वं निवर्त्तितेऽपि प्रोक्षितसाधनता न निवर्त्तेत इति सिद्धं तत्रापि प्रोक्षणं, यत्र तर्हि संस्कारवाक्ये द्रव्यं निर्दिश्य सर्वनाम्ना च तद् द्रव्यं परामृश्य यागे विनियुज्यते "तप्ते पयसि दध्यानयति सा वैश्वदेव्याऽऽमिक्षे"ति तत्र कथं तत्रापि यद्यपि प्राक् पयसः साधनत्वं विदितं नापि संस्कारवेलायां गम्यते, तथाऽपि भाविनियोगावगम्यसाधनत्वापेक्ष एवायं संस्कारविधिरन्यथाऽनर्थक्यात्। ननु साधनत्वं पूर्वानवगतं कथं पयसः लक्षयितुं शक्यते न वदं प्रवृत्तिवेलायामेव स्वार्थं हित्वा साधनविशेषं लक्षयित्वा संस्कारान्वयं प्रतिपादयतीति ब्रूमः, किं तर्हि प्रथमं पयः—शब्दः स्वार्थस्य संस्कारान्वयितारूपं वाक्यार्थं प्रतिपादयति तद्रूपस्य च कार्यान्तरोपयिकतामन्तरेणानुपपत्तेस्तदाकाङ्क्षायामुपरितनेन वाक्येन संस्कारविशिष्टस्यैव पयसस्तच्छब्दपरामृष्टस्य कार्ये विनियोगः क्रियते, तदर्थश्च पूर्वं विहितः संस्कार इति पश्चादवगम्यते, तदयमर्थः—दध्यानयनसंस्कृतं

---

१ शास्त्रान्तरावगमात् इति पा०।

२ संस्कारत्वेन इति पा०।

पयोवैश्वदेवमिति, न ह्यवश्यं पूर्वलक्षित एव साधनरूपे संस्कारा विधातव्याः, साधनरूपार्थाः संस्कारा इत्येतावच्चः प्रतिपाद्यं, तच्चैवंविधेष्वयनेनैव सिध्यति श्रुत्यैव संस्कारस्य साधनरूपान्वयात्, व्रीहीनित्यादिकन्तु लाक्षणिकं रूपम्। नन्वेवं श्रुत्यर्थस्यैव पयसः संस्कारात्कथं लक्षणा वाचोयुक्तिः, सत्यं, व्रीहिपयःप्रभृतीनां द्रव्याणामेव संस्कारस्स तु साधनरूपसिद्ध्यर्थंतत्तु रूपमशाब्दमित्येतावता लक्षणावाचोयुक्तिः, तच्च रूपं यवेषु नीवारादिषु चाविशिष्टमिति तत्रापि प्रोक्षणादयः सिद्धा भवन्ति, तस्मात्सर्वेषामेव भूतभवद्भाविनियोगानां द्रव्यादीनां संस्कारा अपूर्वभावनाशेषभूतास्तद्विकृतिषु प्राकृतार्थकरेषु द्रव्यान्तरेषूहितव्याः, शूर्पहोमस्तु तृतीयानिर्दिष्टद्रव्यकरणकत्वादारादुपकारक इति दूरापास्तं, तस्य द्रव्यप्रयुक्तत्वमचकरणत्वं त्वर्थवादो न हेतुरित्युक्तम्॥

अग्निष्टोमे उपांशुत्वस्य प्राचीनपदार्थप्रयुक्तत्वाधिकरणम्।

सू० देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात्॥ ६॥

ज्योतिष्टोमे श्रूयते "त्सरा वा एषा यज्ञस्य तस्माद्यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ती"ति तत्र संशयः किमिदमुपांशुत्वं सोमयागस्य यः प्राग् भागस्तद्धर्मः सन्परमापूर्वप्रयुक्तं, ततश्च विकृतिषु तद्भागारम्भके अप्राकृतेऽपि पदार्थे ऊहितव्यम्? उताग्नीषोमीयात्पशोर्ये प्राचीनाः? पदार्था दीक्षणीयादयस्तेषां धर्मस्तदवान्तरापूर्वप्रयुक्तं, ततश्चाप्राकृते पदार्थे यूपाछटस्तरणबर्हिर्धर्मवन्नोहितव्यम् इति, तत्र वाग्यमनवदवान्तरापूर्वप्रयुक्तत्वे प्राप्ते पूर्वपक्षोऽभिधीयते यज्ञस्येति शब्दः प्राचीन-शब्दस्य विशेषणं व्यवहितोऽपि प्रवृत्तिविशेषकरत्वं विधिविशेषणशेषत्वे स्यात् त्सरा-शब्दविशेषणत्वे हि अप्रवृत्तिविशेषकरः स्यात्तस्माद्यज्ञस्य यत्प्राचीनं तदुपांश्विति सम्बन्धः ततश्च यज्ञभागधर्मता, प्राचीन-शब्दोऽपि देशं निमित्तीकृत्य पदार्थेषु वर्तमानो वर्तते तथा च सति प्रथमं देशे वर्तितुमर्हति तदतिक्रमे कारणाभावात्तद्धर्म एवोपांशुत्वं, वाग्यमनन्तु यज्ञसंयोगाभावादवान्तरापूर्वप्रयुक्तं, तदिदमुक्तं प्रणीतादि तथेति चेत्र यज्ञस्याश्रुतत्वादिति। अथवाऽनेन सूत्रद्वयेनाधिकरणान्तरं प्रकृताधिकरणसिद्धान्तस्य दृष्टान्तसिद्ध्यर्थं तदीयपूर्वपक्षन्यायेन च

पूर्वपक्षं वक्तुम् अन्तरा गर्भिणीन्यायेन विचार्यते दर्शपूर्णमासयोः श्रूयते "यज्ञं तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छतः यदध्वर्युयजमानौ वाचं यच्छतस्तत्प्रजापतिभूयं गतौ यज्ञं तन्वाते तस्मात्प्रणीताः प्रणेष्यन्वाचं यच्छन्तीति तत्रायं वाग्यमः किं परमापूर्वप्रयुक्तः? उतावान्तरापूर्वप्रयुक्त? इति संशयः किं यज्ञभागधर्मोऽयं परमापूर्वप्रयुक्तः? उत प्रणीताप्रणयनादूर्ध्वं हविष्कृदाह्वानात्प्राग्ये पदार्थाः प्रोक्षणादयस्तत्तदपूर्वप्रयुक्त - इति, यज्ञसंयोगाद् यज्ञार्थत्वे प्राप्ते ब्रूमः यज्ञस्यात्र विस्तारेण संबन्धो न वाग्यमश्रुतिद्वयविशेषणात्त्वं यज्ञस्य यो भागस्तत्र वाग्यम इति, किं तर्हि यज्ञन्तनितुं वाचं यच्छेदिति वाग्यम इति वाग्यमश्च प्रणिधानेनाविकलानुष्ठानार्थोऽङ्गं तदङ्गैरपि चाविकलैर्यज्ञस्य विस्तरो भवत्युपपन्नोऽङ्गार्थत्वेऽपि यज्ञसंयोगः, अतस्तद्देशानां पदार्थानां साक्षादवैकल्यकरणेनोपकुर्वन्वाग्यमस्तदङ्गमेव स्यात्, भाष्येऽपि हविष्कृता वाचं विसृजति प्रथम् इति यदुक्तमित्यादिना नात्रयज्ञ-शब्दः श्रूयत इत्यन्तेन तत्प्रत्यनुभाषणत्वेन तत्परिहारत्वेन सूत्रद्वयं व्याख्याय नन्वित्यादिनाऽन्तरागर्भिणीत्वेन व्याख्यातम् । एवं हि स्थितादुत्तरमित्यादि भाष्यमुपपद्यते नान्यथा, तत्र नन्वित्यादिना पूर्वव्याख्योक्तयज्ञसंयोगाभावाक्षेपेणान्तरागर्भिणीत्वेन पूर्वपक्षमाह यज्ञसंयोगोऽत्राप्यस्तीति उच्यत इत्यादिना सिद्धान्तं दर्शितवान्, स्थितादुत्तरमुच्यते यज्ञ—शब्दोऽत्र तस्य-शब्दविशेषणम् अव्यवधानाच्च प्राचीनशब्दस्य विशेषणं व्यवधानादपि च भागस्यैकत्वात्कस्मिंश्चिदित्यनेकापेक्षः शब्दो नावकल्पते, तस्मादग्नीषोमीयात्प्राचीनानामङ्गानामुपांशुत्वम् अग्निधर्मः, ॥

इष्टकासु सकृद्विकर्षणानुष्ठानाधिकरणम् ।

सू० अग्निधर्मः प्रतीष्टकं संघातात्पौर्णमासीवत् ॥ ७ ॥

अग्नौ श्रूयते "हिरण्यशकलैरग्निं प्रोक्षती" ति किं प्रोक्षणं सकृदेव स्यात् । उत प्रतीष्टकं भेदेने? ति यदीष्टकातिरिक्तोऽवयव्यग्नि—शब्दाभिधेयस्ततः सकृत्, अथेष्टका एव संहता अग्निधारणार्थेन स्थापिता अग्नि—शब्देनाभिधीयन्ते ततस्तदर्थं प्रोक्षणं प्रतीष्टकं कर्त्तव्यं यत्रैकावयवाकर्षणेनावयवान्तरमाकृष्यते सन्धिश्च न दृश्यते तत्रैव देवदत्तपटादौ अवयव्य-

भ्युपगम्यते, न चेहैकेष्टकाकर्षणेऽन्यासामपकर्षणं सन्धिश्चात्र पुरीषच्छन्नानामपीष्टकानामनुमानेन दृश्यते तस्मान्नास्त्यवयवी, पक्कामसंयोगे च द्रव्यान्तरारम्भ इति काश्यपीयाः, तस्मादिष्टकार्थं प्रोक्षणं प्रत्येकं स्यात् नैवमेकबुद्धिरेव हि देशकालादिभेदेऽपि अबाधितावयविद्रव्यसाधनी, सा चेहापि विद्यते वृक्षादिषु चावयविसद्भावेऽप्याकर्षणं न दृष्टमित्यतन्त्रम् अवयविसद्भावेऽपि सन्धिदर्शनं च पटादावनैकान्तिकं, तस्मात्प्रत्यक्षबलात्पक्कामसंयोगेऽप्यस्त्यन्यवयवीति तस्येदं प्रोक्षणं सकृदेव कर्त्तव्यं पूर्वाधिकरणे यद्यज्यभाससमुदायात्मकज्योतिष्टोमप्रयुक्तिर्विचारिता, समुदायप्रसङ्गात् प्रोक्षणं विचार्यते इति प्रासङ्गिकी सङ्गतिः ॥

उत्तमान्यानामह्नां पत्नीसंयाजसंस्थाधिकरणम् ।

सू० पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ ८ ॥

द्वादशाहे श्रूयते "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते न बर्हिरनुपहरन्ति असंस्थितो हि तर्हि यज्ञ" इति, तत्र संशयः, किं सर्वेषामह्नां पत्नीसंयाजान्तत्वम् ? उतोत्तमवर्जमिति, "तत्राविशेषात्सर्वेषां पत्नीसंयाजसंस्थितिः । असंस्थावचनं गौणं यज्ञस्य चिरसंस्थितेः । स्यादेतत् असंस्थितो हि तर्हि यज्ञ इति यज्ञस्यासंस्था पत्नीसंयाजान्तत्वे हेतुः, सा च नोत्तमेऽहनि तस्माद्धेतुवशात्पूर्वेषामेव स्यात् । अथाप्ययमर्थवादः तथाऽपि वाक्यशेषवशादेवान्त्यवर्जं पत्नीसंयाजान्तता व्यवस्थाप्यते, अञ्जनमिव घृत नैवम् असंस्थित–शब्दस्य चिरसंस्थाभिप्रायत्वेनोपपत्तेर्न। विशेषप्रवृत्तो विधिः सङ्कोचमर्हति, यथा लोके-यश्चिरेण भुङ्क्ते तत्र वक्तारो भवन्ति नास्य भोजनं परिसमाप्यत इति तथेहापि दीर्घकालोऽसौ यज्ञो न सन्तिष्ठत इति यावत् अतो लाघवार्थं पत्नीसंयाजात् परःशेषं लुप्यते समयानुष्ठाने ह्यतिविलम्बः स्यादित्येतावानभिप्रायः, तस्मात्सर्वेषां पत्नीसंयाजान्ततेति प्राप्ते ब्रूमः "अपेक्षितविधानाय प्रागुत्तममयं विधिः । मुख्यत्वसम्भवाद्वाक्यशेषस्य, न च गौणता । द्वादशयागाः सह कर्त्तव्यास्तत्र पूर्वमहः कस्मिंश्चित्पदार्थे व्यवस्थाप्य परमुपक्रमितव्यं, तत्र कुत्र पदार्थेऽवस्थानमित्यपेक्षायां पत्नीसं-

याजान्तानि पूर्वपूर्वाण्यहानि कृत्वोत्तरमुत्तरमारभेतेत्येवं विधीयमाने ऽपेक्षितविधिर्भवति, चोदकश्च न बाध्येत शेषलोपस्तु चोदकबाधेनानपेक्षितश्च विधीयते, तस्मादयमर्थः पत्नीसंयाजान्तान्यहानि सर्वाणि कृत्वा हारियोजनाद्यहः शेषं तन्त्रेण सर्वेषामुपरिष्टादनुष्ठेयमिति, तस्मात्प्रागुत्तमात्पत्नीसंयाजान्तता, तथा चासंस्थित-शब्दो ऽपि मुख्यो भवति अविशेषप्रवृत्तो ऽपि हि विधिर्वाक्यशेषस्य मुख्यत्वाय विशेषे स्थाप्यते किमुत यदा तस्यापि न्यायादेव विशेषविषयत्वं, कः पुनरुहोपयोगश्चिन्तायाः पूर्वपक्षे विकृतिषु नोहः सिद्धान्ते द्विरात्रादिषु द्वादशाहविकारेषु यदन्त्यमहर्द्वितीयं तृतीयं वा तत्प्रकृतौ पत्नीसंयाजान्तमपि अनुष्ठितमूहित्वा सकलमनुष्ठीयते ॥

त्रिःप्रथमामन्वाह इत्यत्र त्रिषु स्थानधर्मताधिकरणम् ।

सू० अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्मः स्यात् ॥ ९ ॥

दर्शपूर्णमासयोः सामिधेनीः पञ्चदश विधाय एकादशर्चः पठित्वा त्रिःप्रथमामन्वाह त्रिरुत्तमान्ताः पञ्चदश सम्पद्यन्ते इति श्रुतं, तत्र संशयः किमयं त्रिरभ्यासः प्राथम्यलक्षितायाः ऋचः प्रेवोवाजीयाया धर्मस्तत्कार्यार्थस्ततश्च यत्र तत्र स्यात्प्रेवोवाजीया त्रिरभ्यसितव्या ? उत प्रथमस्थानधर्मस्तत्स्थानगतकार्यप्रयुक्तस्ततश्च प्रेवोवाजीयाया अन्यापि या विकृतिषु प्रथमं पठ्यते साऽप्यूहेन त्रिरभ्यसितव्येति, "तत्र स्त्रीलिङ्गनिर्देशादाद्याऽनेनाभिधीयते, । तस्या एव त्रिरभ्याससम्बन्धोऽत्र विधीयते" उच्यते "श्रुत्या प्रथमशब्देन प्राथम्यमभिधीयते । ऋक्तु लक्षणयोच्येत तस्मात्प्राथम्यधर्मता । प्राथम्यैकार्थसंमवेतस्त्रिरभ्यासो विधीयते तत्प्रथम उच्यते तत्त्रिरिति तच्च प्राथम्यमृगाश्रयत्वेनैव प्राप्तं गुणवचनानाञ्च शब्दामानाश्रयतोलिङ्गवचनानि भवन्तीति नित्यानुवादः स्त्रीलिङ्गनिर्देशः, न च प्राथम्यसम्बन्धपदमात्रस्य पादमात्रस्य वा त्रिरभ्याससम्बन्धसम्भवात् न नित्यानुवादत्वं स्त्रीलिङ्गस्येति मन्तव्यम्, सर्वत्रच एव कार्यसमर्थायावचनस्य प्राप्तत्वात्ताः पञ्चदश सम्पद्यन्त इति च वादात्तस्मात्स्थानधर्मः ॥

(शेषमग्रे)

# सिद्धान्तमुक्तावली

## प्रकाशानन्दविरचिता ।

(*Continued from page* 112. VOL. XII.)

२५ अथ कथ विद्याया अविद्याबाधकत्वम् विरोधादितिचेत् कस्तर्हि तयोर्विरोधः किमेककालानवस्थितत्वमुतैकदेशानवस्थितत्वम् आहोस्वित् वध्यघातकत्वम् अथवा भावाभावात्मकत्वम् । नाद्यः पूर्वभाविन्याऽविद्यया सह विद्यया एककालावस्थितत्वात् विद्योत्तरमविद्यानिवृत्तेः अन्यथा विद्यावैयर्थ्यात् । न द्वितीयः व्यधिकरणयोर्विद्याऽविद्ययोर्विरोधाभावेनैकाधिकरणत्वस्यावश्यंवक्तव्यत्वात् । तृतीये वध्यस्य घातो वाच्यः । यत्कर्तृत्वं घातकत्वं ध्वंसो घातस्तत्कर्तृत्वं घातकत्वमिति चेत् स तर्हि वध्याद्भिन्नः स्वतन्त्रः पदार्थः कश्चित् उत तद्धर्मः तदात्मैव वा ।

25. Now the objection may be raised:—How can Knowledge be the destroyer of Nescience? Because (the Siddhântin replies) they are opposed. What, then, is the opposition between them? Does it consist (i) in the impossibility of their existing at the same time? Or (ii) in the same place? Or (iii) in the one being the destroyer of the other, sc. that which is to be destroyed? Or (iv) in the positive and negative characters respectively of knowledge and nescience?

Objection: the supposed opposition between Knowledge and Nescience cannot be intelligibly stated:

Not the first: for knowledge must exist at the same time along with Nescience which preceded, because the destruction of Nescience is subsequent to knowledge; otherwise knowledge would be useless. Not the second: since (to prove his point of mutual opposition *) the Siddhântin is bound to declare that Knowledge and Nescience have the same locus, because there would be no opposition between Knowledge and Nescience, if they had separate loci. On the third alternative, the destruction (ghāta) of that which is to be destroyed must be maintained.

* वक्तव्यत्वात् । विरोधसिद्ध्यर्थमित्यर्थः । gloss

आद्ये वध्यस्य ध्वंसो न स्याद्धिमवद्विंध्ययोरिव परस्परासम्बन्धात्। द्वितीये धर्म एव धर्मिणो दीर्घायुष्ट्रमानयति अन्यथा निराश्रयो धर्म एव न स्यात्। तृतीये तु विद्याऽविद्योत्पादिकैवेति कुतो विरोधः। न चतुर्थः विद्याऽविद्ययोरुभयोरपि भावरूपत्वात् अविद्यायाः प्रागभावरूपत्वस्य निरस्तत्वात् अन्यथा एककालावस्थानं न स्यात्। तस्माद्विद्याऽविद्ययोर्विरोधस्य निर्वक्तुमशक्यत्वात्कथं विद्याया अविद्याबाधकत्वं विपरीतं वा किं न स्यादिति। अत्रोच्यते।

उपमर्द्यस्वभावत्वमविद्यायाविरोधिता।
तत्कर्तृत्वं तु विद्यायाः प्रकाशतमसोरिव ॥ ४१ ॥

If it be replied that ghātakatva implies agency:—thus, it is that which brings about ghāta *e. i* dhvaṃsa, destruction; then it may be asked whether (*a*) this ghāta is an independent something, distinct from that which is to be destroyed (vadhya) or (*b*) is an attribute of the vadhya or (*c*) is the vadhya itself?

If (*a*), then *destruction* of the vadhya would be impossible for the two are as unconnected as the mountains Himālaya and Vindhya. If (*b*), then the attribute prolongs the existence of its substrate, otherwise a substrateless attribute could not exist. If (*c*), then Knowledge itself brings about Nescience; and thus there would be no opposition between Knowledge and Nescience. Not the fourth; for both Knowledge and Nescience are positive entities, in that we have refuted the view that Nescience is the antecedent non-existence (negation) of knowledge: if this were not so, knowledge and nescience could not exist at the same time. Hence (argues the opponent) since the opposition between Knowledge and Nescience cannot be intelligibly set forth, why should Knowledge be regarded as the destroyer of Nescience, or why should not the reverse be held, sc. Nescience is the destroyer of Knowledge?

To this we reply:—

Nescience is by nature the thing to be destroyed; whereas (destroying) agency belonging to Knowledge constitutes the opposing character of Knowledge, just as this is exemplified in the case of darkness and light...XLI.

**Met: they are by nature opposed, as light and darkness; and the *nature of things* is not to be called in question.**

यद्यपि विरोधान्तरमिह निर्वक्तुमशक्यं तथाप्युपमर्द्योपमर्दक-भावलक्षणोऽयं विरोधः शक्यत एव निर्वक्तुम् अविद्योपमर्दकत्वस्य विद्यास्वभावस्यान्वयव्यतिरेकाभ्यां लोकप्रसिद्धत्वात् । नच विरोधिताऽविशेषे विद्योपमर्दकत्वमेवाविद्यायाः किं न स्यादिति वाच्यम् । तथा सति विद्योत्पत्तिरेव न स्यात् । उपमर्दिकाया अविद्यायाः पूर्वमेव स्थितत्वात् प्रतिनियतस्वभावस्य पर्यनुयोक्तुमशक्यत्वाच्च यथा प्रकाशतमसोः । नच तत्र वैपरीत्यं शङ्कितुं शक्यते दृष्टविरोधात् ।

नच वध्यघातकपक्षोक्तदोषप्रसक्तिः उपमर्दस्य कालत्रयेपि नास्तीति प्रमितिरूपस्य बाधापरपर्यायस्य विद्योत्तरं जायमानत्वात् ॥

Although in this case no other opposition can be intelligibly maintained, yet the opposition indicated above as the relation of destroyer and thing to be destroyed can certainly be thus maintained, in that it is a generally admitted fact of induction that Knowledge is by nature the destroyer of Nescience.

Nor may it be asked by way of objection why Nescience should not be the destroyer of Knowledge, since the opposition between the two is quite the same, (whether Nescience or knowledge be considered). Because if this were so, Knowledge could not indeed arise, since Nescience, the destroyer, was already existing: and further, because the settled nature of a thing cannot be called in question, as in the case of light and darkness. Nor can the reverse of this be urged, as being opposed to experience. Nor will there follow (in regard to our view) the defects noted in regard to alternative (iii) pp. 135,36, because it is subsequent to knowledge that the negation expressed in 'Nescience *is not* in trinal time' arises,—which negation is true knowledge, and is another synonym for bādha (destruction).

२६ नन्वविद्योपमर्दैकस्वभावत्वं चेद्विद्यायास्तर्हि विदुषो विद्योत्पत्त्यनन्तरमविद्यायाः सकार्याया: समूलकाषं कषितत्वात्तदैव विदेहकैवल्यप्राप्तौ देहपातस्तात्कालिकः स्यात् तथा चोच्छिन्नः सम्प्रदायःस्यात्। न च प्रारब्धसामर्थ्याद्देहपातो नास्तीति वाच्यं प्रारब्धस्याप्यविद्याकार्यतया तदभावे स्थातुमशक्यत्वात् तन्त्वभावे पटस्येव। नच प्रारब्धकर्मफलभोगनिर्वाहकतया कियत्कालमविद्याप्यनुवर्ततइतिवाच्यं विद्याया अविद्योपमर्दकत्वस्वभावहानिप्रसङ्गात्। नचोत्तरकालएव तथास्वभावः एकस्य स्वभावद्वयानभ्युपगमात्. नचावरणशक्तिप्रधानमज्ञानं निवृत्तमेव विक्षेपशक्तिप्रधानं त्वनुवर्तते प्रारब्धनिर्वाहायेतिवाच्यम्।

26. Here it may be argued that if knowledge is by nature the destroyer of Nescience, then corporeal existence should at once cease for the man who has knowledge, on his obtaining that state of isolation in which consciousness of his body is at an end (videhakaivalya).* Since subsequent to the rise of knowledge Nescience together with its products is entirely destroyed. And thus the traditional line of teachers (of Brahmavidyā) would be destroyed, (and without a guru no emancipation!)

**Reductio ad absurdum of the Vedānta: emancipation, or the cessation of bodily existence, is possible only through a sacred teacher; but the teacher is an impossibility, if knowledge destroys Nescience of which bodily existence is a product.**

Nor may it be argued against this view that corporeal existence does not cease because of the retributive efficacy of actions. For being a product of Nescience, this retributive efficacy cannot prevail when Nescience has ceased to exist, just as the cloth is at end when the threads have ceased to exist.

Nor may it be further urged that Nescience also continues to exist for a short time sufficient to bring about (for the individual) the fruition of the actions (by him) in earlier spheres of existence. For this view would imply the loss to knowledge of its nature as the destroyer of Nescience. Nor against the above is it to be urged that this character of destroyer belongs to knowledge only at a time subsequent (to that indicated above). For one and the same thing cannot have have *two natures.*

* Videhakaivalya to be distinguished from jīvanmukti in which there is for the individual a consciousness (abhimāna) of his body in the form of saṃskāra or mental retenta: cf. Yogasūtra I. 1. 17-19.

अज्ञानद्वयाभावात् । नचैकमेव शक्तिद्वयविशिष्टम् । एकस्य-युगपत्स्थितिनिवृत्त्योर्विरुद्धत्वात् । नच शक्तिनिवृत्तिमात्रमेव विवक्षितं शक्तिशक्तिमतोरभेदात् भेदे वा अज्ञानं न निवर्तेत नच प्रारब्धनिवृत्त्या तन्निवृत्तिः प्रारब्धनिवृत्तेः अप्रमाणत्वात् । नच तदनन्तरं ज्ञानमेवाप्रतिबद्धं तन्निवर्तकमिति वाच्यं प्रारब्धनाशे देहपातानन्तरं ज्ञानस्यैवाभावात् पूर्वज्ञानस्य च प्रारब्धेन प्रतिबद्धत्वात् । नचाविद्यासंस्कारो लेशाविद्याशब्दाभिधेयो ऽनुवर्तेत इति वाच्यं तस्याप्यविद्याकार्यत्वात् । अविद्यामात्रत्वे च संस्कारशब्दप्रयोगवैयर्थ्यात् । जीवन्मुक्तिप्रतिपादकश्रुतिस्मृतिप्रामाण्याद्विदुषो देहस्थितिः कल्प्यतइति चेन्न शास्त्रस्य जीवन्मुक्तिप्रतिपादने प्रयोजनाभावात् ।

Nor again that Nescience *quâ* concealing power ceases (with the rise of knowledge, but quâ projecting power it continues to exists in order to work out the retributive efficacy of actions. For there are not two Nesciences Nor again that though *one* only, Nescience is possessed of two-fold power. For that the one thing should at the same time both be and cease to be is contradictory. Nor again that the cessation of the power merely is implied (above). For the power and that which possesses power are identical: or if different, Nescience could not cease to be. Nor again that there is cessation of Nescience (tat) through cessation of prārabdha. For the cessation of prārabdha is not a source of knowledge (pramāṇa, and only Knowledge can put an end to Nescience). Nor is it to be argued that after the cessation of prārabdha, Knowledge being unobstructed (by prārabdha) puts an end to Nescience (tat). For when following on the destruction of prārabdha bodily existence has ceased, knowledge itself *is not*; and because knowledge prior (to the destruction of prārabdha) was obstructed by prārabdha (and could not therefore operate as the destroyer of nescience). Nor again, that a mental retentum of Nescience, technically termed leśāvidyā, continues to exist For this also is a product of Nescience (and must therfore perish along with Nescience, its upādāna or material cause): and because it is useless to apply the term *retentum* to that which really is Nescience. Nor may it be argued that the continued existence of a body for him who has gained knowledge is inferred on the authority of Śruti and Smṛiti passages, which declare the (technical) *jīvanmukti* state or emancipation of one while alive. For it is not the aim of the Śāstra to teach jīvanmukti.

मुमुक्षूणां श्रवणादौ प्रवृत्तिः प्रयोजनमिति चेत् अस्तु तर्हि श्रवणादिविधेरर्थवादस्तत् शास्त्रं तथाच लौकिकवैदिकप्रमाणविरोधात्तेन कथं विदुषो देहस्थितिः कल्प्यते । नच मुक्तेषुदृष्टान्तेन प्रारब्धस्थितिः साधितेति वाच्यं दृष्टान्ते वैषम्यात् तत्र कर्मोपादानस्येषोरनाशात् । नच जीवन्मुक्तौ सार्वलौकिकी प्रसिद्धिरव्याहतेति वाच्यं प्रमाणविरहेण प्रसिद्धेरन्धपरम्परारूपत्वात् । नचाप्रामाणिकस्य शास्त्रकारैरुपपादनमनर्थकमिति वाच्यं शिष्यस्याविद्वत्तया गुरावविश्वासपरिहारप्रयोजनतया तस्यार्थवत्त्वात् ।

If against this it be said that its aim is to urge those who seek emancipation to engage in *hearing* &c., then it must be granted that the passage in which jīvanmukti is taught (tacchāstram) is an *arthavāda* passage laudatory of the injunction (*vidhi*) to *hear* &c. and thus it is not possible to infer by means of the passage teaching jīvanmukti that the body of him who has gained knowledge continues to exist, for this is opposed to both natural and supernatural evidence.* Nor again is it to be argued that the continued existence of prārabdha is confirmed by the example of an arrow shot from a bow. The analogy is not strict; for in the former case, the arrow as the substrate in which the motion inheres is not destroyed (whereas Nescience, the substrate of prārabdha, is destroyed *ex hypothesi*). Nor again that the universal opinion (of teachers) in regard to jīvanmukti is untouched (by the above objection). For in the absence of proof, common opinion is but blind tradition. Nor again that the exposition by the Śāstra-teachers of something unproved would be purposeless. For such exposition has its purpose in destroying the distrust in his teacher which the pupil through his ignorance might entertain.

* *natural*, sc. the destruction of the saṃskāra follows on the destruction of avidyā its upādāna, as is commonly observed in regard to causes and effects. *Supernatural*, sc. that afforded by such Vedic passages as 'the fetter of the heart is broken &c.' Mu. Up. II. 2. 8.

तस्माद्विद्याया अविद्योपमर्दकत्वस्य स्वाभाव्यात् विदुषः सद्योमुक्तावुपदेष्टुरभावात् कुतो विद्योत्पत्तिः नचाचार्यनिरपेक्षैव विद्येति साम्प्रतं आचार्यवान्पुरुषो वेद नैषा तर्केण मतिरापनेया प्राप्यवरान्निबोधत आचार्यस्ते गतिं वक्तेति अनन्यप्रोक्ते गतिरत्र नास्ति प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ इत्यादिश्रुतिभ्यः । नैषदोषः ।

कल्पितोप्युपदेष्टा स्याद्यथाशास्त्रं समादिशेत् ।
नचाविनिगमो दोषोऽविद्यावत्त्वेन निर्णयात् ॥ ४२ ॥

Hence (concludes the opponent) since Knowledge is by nature the destroyer of Nescience, instant emancipation accrues to him who knows; and thus, in the absence of a teacher, the rise of Knowledge is impossible.

Nor is it correct to say that knowledge is certainly independent of a teacher. For as declared in Śruti passages,—So he who has a teacher knows: That knowledge is not to be obtained by argument: Having obtained your boons (sc. excellent teachers) understand them: but a teacher will tell you the way to another life: Unless it (Self) be taught by another there is no way to it: but when it is declared by another, then, O Dearest, it is easy to understand.

Chānd Up VI. 14.
Katha Up. I. 2 9.
" " I 3. 14.
Chānd. Up. IV. 14.

Katha Up. I. 2. 8.
" " " ". 9.

Our conclusion is not incorrect.

A teacher there can be, even though he be surmised: he can teach, as the Veda teaches. Nor is there here the fault of proposing alternatives without giving a reason for the adoption of of one of them, for decision is arrived at though the fact that ignorance pertains (to one only, sc. the pupil, avidyāvattvena).... XLII.

Met: an unreal teacher can declare the Real, Brahman, just as the unreal face seen in water makes known the real face reflected therein.

यद्यपि विदुषस्तदानीमेव मुक्तत्वात् पारमार्थिकः कश्चिदुपदेष्टा नास्ति तथापि कल्पितेन गुरुणा विद्योत्पत्तिसम्भवात् नानुपपत्तिः काचित् । नच कल्पितस्य कथं सत्यज्ञानजनकत्वमिति वाच्यं शास्त्रवदुपपत्तेः प्रतिबिम्बवच्च । नच गुरुशिष्ययोर्मध्ये कतरः कल्पक इत्यविनिगमो दोष इतिवाच्यम् । अविदुषः कल्पकत्वात् गुरोश्च विदुषः कल्पनाबीजाभावेन तत्त्वानुपपत्तेः । तस्माच्छास्त्राचार्यप्रसादासादिततत्त्वमस्यादिवाक्योत्थसाक्षात्कारेण मोक्षाविर्भावप्रतिबन्धकाज्ञानतत्कार्यतिरस्कारसमनन्तरं नित्यशुद्धबुद्धमुक्तस्वभावाऽद्वितीयानन्दोस्मीति मन्यते ततः कृतकृत्यो भवतीति ।

Although no real teacher exists, for (the teacher as) one who knows is at once emancipated, yet no contradiction finds place here, because knowledge can arise through an *imagined* teacher Nor can it be argued that what is imagined (sc the teacher) cannot bring about real knowledge For this is possible as in the case of the Veda, and in the case of a reflexion Nor again that our position is logically defective because a doubt exists as to which, of the two, the teacher or the pupil, is here the surmiser. For the surmiser is he who knows not, and this character cannot belong to the teacher, because in him, as one who knows, the germ of surmisal (sc avidyā) exists not. Hence when the pupil has gained intuition (of Self as Brahman) which comes from the sentence 'that thou art' through the favour of Veda and teacher, and has set aside Nescience and its products which are obstructive of emancipation, then he becomes conscious of himself as the Eternal, pure Intelligence, unrelated, one without a second, Bliss; then for him all duties are at an end. Thus we rightly spoke (in the opening verse p. 1) of 'having directly through Śruti ascertained the Self which is Bliss &c.'

अतः सुष्ठूक्तमात्मानन्दं साक्षाद्विनिश्चित्येति । विज्ञानमानन्दं ब्रह्म को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्सैषा आनन्दस्य मीमांसा इत्यारभ्य यश्चायं पुरुषे यश्चासावादित्ये स एक इत्यन्तं भृगुर्वै वारुणिरित्यारभ्याऽऽनन्दो ब्रह्मेति व्यजानादित्यन्तं यो वै भूमा तत्सुखं नाल्पे सुखमस्तीत्यादिश्रुतिशतेभ्यः नवा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति इत्यारभ्य नवा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यन्तेन व्युत्पादनाच्च आत्मनः परमानन्द-रूपत्वस्य ।

And because Self has been proved to be absolute Bliss in such many passages as 'Brahman is Intelligence, Bliss' and in that beginning, 'who could breathe, who could breathe forth, if that Bliss existed not in the ether (of the heart)? Now this is an examination of Bliss'; and ending, 'that Bliss which is in man and that Bliss which is in the sun, both are one'—and again in the passage beginning 'Bhrigu Vāruṇi (went to his father), and ending with 'He perceived that Bliss is Brahman.'—and again in the passage, 'that which is Infinite is Bliss. There is no Bliss in anything finite'—and in the passage beginning, 'Verily, a husband is not dear that you may love the husband, but that you may love the Self, therefore a husband, is dear' and ending 'Verily, everything is not dear that you may love everything, but that you may love the Self, therefore everything is dear.'

Taitt. Up. II. 7. 8.
" " III. 1. 6.

Chand. Up. VII. 23.

Bṛihad Up. II. 4.

२७ नन्वानन्दत्वादयो धर्मा आत्मनि सन्ति नवा आद्ये ते किं सत्या असत्या वा नाद्यः द्वैतापत्तेः नेतरः धर्मिणोऽनानन्दत्वापत्तेः नहि रजतत्वं यत्रारोप्यते तद्रजतम् । नचानानन्दत्वमानन्दभिन्नत्वं तदपि नास्तीति वाच्यं तथाप्यानन्दरूपत्वासिद्धेः । न द्वितीयः आनन्दत्वानाश्रये आनन्दव्यवहारादर्शनात् नच सर्वव्यवहारातीतोऽलौकिक एवायमानन्दः । लौकिकवैदिकपदार्थयोरेकत्वात् अन्यथा लोकवेदाधिकरणविरोधः ।

27. Here it may be asked by way of objection whether blissful character and the other attributes exist in Self or not. If so, whether they are real or unreal (*i. e.* surmised). Real they cannot be, for this would imply duality (sc Self, and the real attributes). Nor can they be unreal, for this would imply that the substrate (sc. Self in which these attributes are surmised) does not really possess blissful character: just as that substrate, sc. nacre in which silver-ness is surmised is not really silver. Nor (in reply) may it be urged (by the Vedantin) that the possession of a not blissful character = possession of a character other than blissful; and that such character also does not pertain to Self. For the blissful character of Self would still remain unproved. And the second alternative, sc. that blissful character does not exist in Self, will not hold. For the term bliss is not applied to anything which is not the substrate of the attribute blissful. Nor can it be urged that this, the Bliss (or Brahman of Vedānta), is something transcending the common usage of the world. For the common and Vedic meanings of a word must be identical: to deny this (anyathā) would be to deny the adhikaraṇa (of the Pūrvamīmāṃsā, I. 3. 30), teaching that words have the same meaning in Veda that they have in common speech.

Objection: Bliss, ānanda, implies blissful character ānandatva, technically known as the jāti class attribute or generality. Hence, over and above Brahman or Self there exists ānandatva: and thus Monism (advaitavāda) is overthrown.

*(To be continued.) A. V.*

# खण्डनखण्डखाद्यम् ॥

## अथ तृतीयः परिच्छेदः ।

*(Continued from page 56 Vol. XII)*

मू० [a] (१) अथ यान्यवलम्ब्य बहुलं वाग्व्यवहारास्तेषां सर्वनाम्नामर्थः कथं निर्वाच्यः तथाहि ईश्वरसद्भावे किं प्रमाणमिति ब्रुवाणः प्रतिवक्तव्यः(२) [b] किं शब्दोयमाक्षेपार्थो वा कुत्सितार्थो वा । [c] वितर्कार्थो वा [d] प्रश्नार्थो वा स्यात्तत्र यदि प्रथमः पक्षस्तदेश्वरसद्भावे नास्ति प्रमाणमित्युक्तं स्यात्तथा च न प्रतिज्ञामात्रात्साध्यसिद्धिरिति हेत्वादिकं किञ्चिद्वाच्यं तच्च भवता नाभ्यधायि तस्मान्न्यूनत्वं दोषः [e] अत एव न द्वितीयः ईश्वरसद्भावे कुत्सितं प्रमाणमित्यस्यापि प्रतिज्ञामात्रत्वात् अपिच साध्यसाधकत्वाद्वा तत्कुत्स्यते भवतान्यथा वा [f] अन्यथा चेदलं तदुद्भावनया साध्यसिद्धेरप्रत्यूहत्वात् नापि प्रथमः प्रमाणं च साध्यासाधकं चेति व्याघातात् *. गौणोयं प्रमाणशब्द ? * इति चे(३)न्न,

(१) {अवाच्यत्वप्रपञ्चेन निग्रहस्थमनाहृतः ।<br>विरोधश्चाधुनाद्वैते प्रश्नमङ्घेन वार्य्यते ॥ १ ॥}

(२) "कुत्सिते चाप्याक्षेपे तथा प्रश्नवितर्कयोः ।<br>किं शब्द प्रवृत्तिस्स्यादेवमर्थ चतुष्टये"

इति पद्ये किमोऽर्थचतुष्टयवाचकत्वदर्शनात्–कीदृशार्थकोयं भवत्प्रश्ननिक्षिप्तः किं शब्दइति पृच्छन्प्रश्ननिरासाय विकल्पते किं शब्दोर्थामति–।

(३) यद्यपि पाणिनीये किं शब्दः सर्वनाम्नामन्त्यस्तथापि विलोमगणनाक्रममनुसृत्य तस्याद्यत्वोपवर्णनं, व्याकरणान्तरमनुसृत्य वेति ध्येयम् ।

टी० ॥ ननु यत् तत्सर्वनामपदमहिम्नैव तत्तद्विशेषलाभे लक्षणानां दूषणानि न प्रसज्यन्त इत्यत आह-। [a]"अथे"ति । सर्वनाम्नामाद्यस्य(१) किंशब्दस्य तावदर्थं खण्डयति-। [b]'किंशब्द" इति । आक्षेपो निषेधस्त-दर्थः यथा तत्र किं गमनेन मा याहीत्यर्थः कुत्सितार्थो निन्दार्थः यथा "स किं सखा साधु न शास्ति यो नृपं हितान्न यः संशृणुते स किंप्रभुरि"त्यादौ ॥ [c]"वितर्कार्थे" इति । यथा वितर्के किं किमुत चेत्यमरः यथा 'किमिन्दुः किं पद्मं किमु मुकुरविम्बं किमु मुखं किमब्जे किं मीनौ किमु मदनवाणौ किमु दृशावि"त्यादि ॥ [d]"प्रश्नार्थे" इति । यथा "का त्वं शुभे कस्य परिग्रहो वा मदभ्यागमकारणं ते" इत्यादि यद्यपीश्वरमद्भावे प्रमाणं नास्तीति न प्रतिज्ञा किन्तु विप्रतिपत्तिमात्रं तथाच प्रमाणमीहरवादि-नाभिधेयं तथापि प्रतिज्ञापरत्वे दोष उक्तः ॥ [e]"अत एवे"ति । न्यूननिग्र-हापादकत्वादेवेत्यर्थः ॥ [f]"अन्यथे"ति । कुत्सितादपि प्रमाणात् साध्य-सिद्धिश्चेत्तदा कुत्सितत्वाद्भावनमफलमित्यर्थः ।

मू० [a]प्रमाणत्वयोगिनि यद्ययं प्रमाणशब्दप्रयोगस्तदा गौण-त्वव्याघातः [b]मुख्यत्वात् [c]*अथ प्रमाणाभासे तदाऽलं तदुद्भावनया [d]*ईश्वरसद्भावे यः प्रमाणाभासः स कुत्सित इत्यत्र च परस्यापि सम्प्रतिपन्नत्वात् ईश्वरसद्भाव इति विशेषोपादानं च व्यर्थं स्यात् अन्यत्रापि विषये प्रमा-णाभासः कुत्सित एव साध्यासाधकत्वात् [e]अतो नापि तृतीयः तथा सति हि वितर्कस्य पक्षान्तरसापेक्षत्वेन पक्षान्तरमपि निर्वचनीयमिति ईश्वरसद्भावे किमेतत् प्रमा-णमुतान्यदिति स्यात् तच्च भवता नान्यथापि ततो न्यूनत्वं दोषः ॥

(१) प्रमाणत्ववतिर्गौणोऽयं प्रमाणशब्द उत प्रमाणत्वशून्ये प्रमाणाभसा इति विकल्प्य परिहरति-नेति-

टी० ॥ [a] प्रमाणत्वयोगिनीति । यद्यप्यजहत्स्वार्थलक्षणा शक्यसाधारणीभवत्येव यथा छत्रिणो यान्तीत्यादौ तथाप्येकसार्थगन्तृत्वादिकमेव शक्यलक्ष्यसाधारणं तत्र लक्ष्यं नतु छत्रिणः छत्रित्वेन रूपेणोपस्थितिः । प्रमाणत्वं प्रमाणपदप्रवृत्तिनिमित्तं तादृूप्येण प्रमाणपदं चेत्प्रमाणपरं तदा गौणत्वहानिरित्यर्थः ॥ [b] "मुख्यत्वादि"ति । शक्यतावच्छेदकेन रूपेण शक्योपस्थापनादित्यर्थः ॥ [c] "अथ प्रमाणाभासे"इति । अत्र प्रमाणशब्दप्रयोग इत्यनुषङ्गः ॥ [d] "ईश्वरे"ति । अन्यत्रापि प्रमाणाभासस्य कुत्सितत्वादित्यर्थः ॥ [e] "अतः"इति । वितर्को हि सन्देहः संच विरुद्धनानाकोटिको भवति तथाच कोट्यन्तरानुल्लेखात् न्यूनत्वमित्यर्थः । यद्यपि कथावयवन्यायावयवहान्या न्यूनत्व भवति अत्र च न तथा किन्तु सन्देहकोट्यन्तरस्योल्लेखाभावः परं तथापि संशयपरं वचनमेव विरुद्धनानाकोट्यनुल्लेखाच पर्यवस्येदिति भावः ॥

मू० नापि चतुर्थः प्रश्नार्थात् खलु किंशब्दा[a]त्कस्यचित्पदार्थस्य जिज्ञास्यमानता प्रतीयते सा चेह प्रमाणपदसमभिव्याहारात् प्रमाणविषयिणी प्रतीयते यद्विषयश्च प्रश्नस्तदुत्तरवादिनाभिधेयं तदयं प्रश्न ईश्वरसद्भावे प्रमाण सामान्यविषयस्तद्विशेषविषयो वाभिप्रेतः आद्यश्चेदीश्वरसद्भावे प्रमाणमित्येवोत्तरमापद्येत यद्विषयो हि प्रश्नस्तदभिधेयं प्रमाणसामान्यविषयश्च प्रश्नः सच प्रमाणशब्देनाभिहितमेव अथ द्वितीयः तथापीश्वरसद्भावे प्रमाणमित्येवोत्तरमापद्येत ।

टी० ॥ [a] "कस्यचिदि"त्यादि । प्रमाणसामान्यजिज्ञासायां प्रमाणमित्येवोत्तरं तद्विशेषजिज्ञासायामपि प्रमाणमित्येवोत्तरं प्रश्नवाक्यस्यप्रमाणपदस्य विशेषपरत्वं चेदुत्तरवाक्यस्य प्रमाणपदस्यापि तत्परत्वौचित्यादित्यर्थः । यद्यपि जिज्ञासा ज्ञातुमिच्छा सा च येन प्रष्टुर्निवर्तते तादृशमुत्तरं वाच्यम् अन्यथोन्मत्ततैव स्यात् यथोक्तमाम्रान् पृष्टः कोदारा-

नाहेति तथाच "किं प्रमाणमि"ति प्रश्ने प्रमाणमित्युत्तरमनुन्मत्तस्यानुचितमेव नहि प्रष्टा प्रमाणसामान्यमेव न जानाति तथा सति नाभिलपेत्ततः किं प्रमाणमिति प्रश्ने प्रत्यक्षमनुमानं शब्दो वा विशिष्य तस्य दर्शनीयं तथाच प्रमाणमित्युत्तरं ददतनपेक्षिताभिधानेनाऽनवधेयवचनः स्यात् । किञ्च किंशब्दोयमाक्षेपार्थो वा कुत्सितार्थो वे(१)ति चतुःकोटिके प्रश्ने प्रश्नवाक्यानुवादमात्रेणोत्तरयितुस्त्वयापि किं वाच्यं विकल्पकोटिष्वेकतरकोटिपरिग्रहमन्तरेण न मम जिज्ञासाविच्छेद इति चेत् तर्हि प्रकृतेपि तुल्यम् एवं सति कथैव न वर्द्धेतेति चेत्तुल्य । तथाचेश्वरे किं प्रमाणमिति पृष्टः क्षितिः सकर्तृका कार्यत्वात् घटवदित्यादिप्रकारेण विशेषमनुपदर्शयन्नर्थान्तरेण निगृह्येतैव तथाप्यापाततः प्रश्नखण्डनमिदं वादिव्यामोहनाय भवत्येवेति तात्पर्यम् ।

मू० *"यथा प्रश्नवाक्ये प्रमाणशब्दा विशेषपरः तथोत्तरवाक्ये [b]क्वासौ विशेष ?*—इति चेन्न, [c]पूर्ववदुत्तरात [d] अस्यापि प्रश्नस्य विशेषो विषयः किंशब्दस्य विशेषशब्देन सामानाधिकरण्यात्तथाच सति विशेष इत्येवोत्तरं स्यात् [e]*स्यादेतत् विशेषशब्देन न विशेषमात्रमनिर्द्धारितमात्रं विवक्षितं किन्त्वसाधारणी व्यक्तिः तच विशेषशब्दस्य तात्पर्यं तस्मात्कासावसाधारणी प्रमाणव्यक्तिरिति प्रश्नार्थः तच तादृश्याः प्रमाणव्यक्तेरभिधानमुत्तरं युक्तं नैवंविधाः प्रलापा ?*—इति नैतदेवं, [f]यतोत्रापि विशेष इत्येवोत्तरं यथा प्रश्नवाक्यगतस्य विशेषशब्दस्य सर्वतो व्यावृत्तस्वरूपायां प्रमाणव्यक्तौ तात्पर्यं तथोत्तरवाक्यस्थितस्यापि एवं च सति यत्र विषये भवदीयस्य प्रश्नवाक्यस्य तात्पर्यं तदेवास्माकमुत्तरवाक्येन प्रतिपादितमिति युक्तमुक्तम् ।

(१) "वितर्कार्थो वा प्रश्नार्थो वा"—इति शेषः ।

टी० ॥ ननु प्रमाणविशेषप्रश्नश्चेत्तदा प्रमाणसामान्येनोत्तरं कथमित्यत आह—। [a]"यथे"ति ॥ [b] 'कोसावि'ति। ईश्वरसद्भावे कः प्रमाणविशेषइति प्रष्टव्यमित्यर्थः ॥ [c]"पूर्ववदि"ति। प्रश्नवाक्यस्येव तद्विशेषपरत्वर्वादित्यर्थः तथाच प्रमाणविशेष इत्येवोत्तरमस्माकमित्यर्थः तदेवोपपादयति—। [d]"अस्यापी"ति ॥ ननु विशेषेपि प्रश्नो व्यक्तिविशेषाभिप्रायकस्तथाच विशेष इत्युत्तरं कथं सङ्गतं स्यादित्याशङ्कते—। [e]"स्यादेतदि' ति। असाधारणी शक्तिस्त्वयापि प्रश्नवाक्यस्य विशेषपदेनाभिधेया चेत्तदोत्तरवाक्यस्यापि विशेषपदमपि तत्परं स्यादविशेषादित्याह—। [f]"यत"इति।

मू० * [a]अथ मन्यसे [b]किमिह प्रमाणमिति पृच्छतोयमभिप्रायः अत्रार्थेनुमानं प्रमाणमितरद्वेति? * —तत्राप्यनुमानमित्युत्तरमस्माकं * किं तदनुमानमिति चेत्? * —अयमपि प्रश्नोनुमानमात्रविषय उत तद्विशेषविषयइति विकल्प्य प्रमाणप्रश्नवदुत्तरं वाच्यमिति अत्र च सङ्ग्रहश्लोकौ [c]"यथाविधं यं विषयं निजस्य प्रश्नस्य निर्वक्ति परो ययोक्त्या। वाच्यस्तथैवोत्तरदिनापि तयैव वाचा स तथाविधोर्थः॥ [d]प्रश्नस्य यः स्याद्विषयः स वाच्यो [e]वाचानयैवैष भवेन्निरुक्तः। [f]इदं त्वयाप्यास्थितमेतयैव गिरा स्वपृच्छा विषयस्य वक्त्रा" ॥

टी० ॥ नन्वीश्वरेनुमानं प्रमाणमन्यद्वेत्येवमाकार एव प्रश्नः कर्त्तव्य इत्याह—। [a]"अथे 'ति॥ [b]"किमिह प्रमाणमिति पृच्छत"इति। प्रमाणं प्रष्टुमुद्यतस्येत्यर्थं ॥ [c]"यथाविधमि"ति। यं प्रकारं प्रमाणत्वादिगृहीत्वा प्रश्नवाक्य प्रवर्तते तमेव प्रकारमादायोत्तरवाक्यमपि प्रवर्तनीयमित्यर्थः॥ नन्वनेनोत्तरेण प्रष्टुर्जिज्ञासा कथं विच्छिद्यतामित्यत आह—। [d]"प्रश्नस्ये' ति। अविषयमादायोत्तरं उत्तरयितुरेवार्थान्तरं स्यादित्यर्थः॥ एतदेवाह—। [e]"वाचे"ति ॥ ननु सामान्यशब्देनापि प्रश्नो विशेषपरस्तथाच विशेषमनभिदधानस्य भवत उत्तरमेतदनादेयं स्यादित्यत आह—। [f]"इदमि"ति। स्वपृच्छाविषयस्य वक्त्रा स्वपृच्छाविषयमभिदधानेन त्वया एतयैव गिर प्रश्नलक्षणयैव गिरा इदमभिधेयमास्थितं स्वीकृतमित्यर्थः तथाच मयापि कथं नास्थेयमिति भावः। (शेषमग्रे)

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

(*Continued from page* 122. Vol. XII.)

"चुटू" ॥ 'आदित इति'। प्रारम्भे वर्त्तमानावित्यर्थः। 'कौञ्जायन्य इति'। च्फञन्ताद् 'व्रातच्फञोरस्त्रिया' मिति स्वार्थे ञ्यः। 'शण्डिकादिभ्यो ञ्य इति'। 'सोस्याभिजन' इति तत्र वर्त्तते। 'मन्दुरज इति'। ङ्यापोस्संज्ञाच्छन्दसोरिति ह्रस्वः। 'अत्राणा इति'। 'धनगणं लब्धे' त्यतो लब्धेति तत्रानुवर्त्तते। किमर्थो योगविभागः चुटुभ्यः प्रत्ययस्येत्येक एव योगः क्रियतामत आह। 'पृथगित्यादि'। 'केशचुञ्चुः केशचण इति'। अत्र चकारस्येत्संज्ञायां 'चित' इत्यन्तोदात्तत्वं स्यात् पित्करणन्तु पर्यायार्थं स्यात्। 'अवात् कुटारच्चेति'। अनेन नते नासिकायाः संज्ञायामित्यत्र अवादित्यस्यानुवृत्तिर्दर्शिता ॥

"लशक्वतद्धिते" ॥ 'प्रियंवद इति'। 'अरुर्द्विषदजन्तस्य मुम्'। 'जिष्णुरिति'। ग्स्नुप्रत्ययस्य गित्त्वपक्षे गकारस्येदमुदाहरणम्। 'चूडाल इति'। मत्वर्थे 'प्राणिस्थादातो लजन्यतरस्या' मिति लच्। अत्र लित्स्वरचित्स्वरयोः पर्यायः स्यात्। 'लोमश इति'। अत्र प्रयोजनाभावादेव न भविष्यतीति शक्यं वक्तुम्। 'कर्णिकेति'। 'कर्णललाटात् कनलङ्कारे' इति भवार्थे कन्, अत्र 'किति चे'ति वृद्धिः स्यात् रूपञ्च न सिध्येत्, अथ रुदिर्छिदिर्प्रभृतिषु इरित्यस्य समुदायस्य केनेत्संज्ञा, मा भूत्समुदायस्य रेफस्य 'हलन्त्य' मिति भविष्यति इकारस्यो 'पदेशेजनुनासिक इदि' ति। 'इरितो वे' त्यत्रापि इश्च रश्चेरौ तावितावस्येति विग्रहो न तु इरित्ययं समुदायः स इद्यस्येति, अवश्यं च इकारस्य पृथगित्संज्ञैषितव्या स्वरितेत इत्यात्मने पदं यथा स्यादिति। यद्येवं 'इदितो नुम् धातो' रिति नुम् प्राप्नोति, कुम्भीधान्यन्यायेन न भविष्यति। तद्यथा कुम्भीधान्यः श्रोत्रिय इत्युच्यते यस्य कुम्भ्यामेव धान्यं भवति यस्य पुनः कुम्भ्यां वान्यत्र वा नासौ कुम्भीधान्यः। नायं न्यायो नुम्विधौ शक्य आश्रयितुम् इह हि न स्यात् टुनदि नन्दथुरिति।

ज्ञापकात् सिद्धं, यदयं 'न दृश' इति क्तस्य प्रतिषेधं शास्ति तज्ज्ञापयति नेदितां नुम् भवति अन्यथा दृशेरिदित्त्वान्नुमि सति अनिगुपधात्वात् क्तस्य प्राप्तिरेव नास्ति किं तन्निषेधेन। परिहारान्तरमप्यत्र नुम्विधौ वक्ष्यते॥

"तस्य लोपः" ॥ तस्य ग्रहणं किमर्थं यावता ऽभावो लोपः स च कस्य चिदेव भवति तत्र प्रकरणादित्संज्ञकस्यैव लोपो भविष्यतीत्यत आह। 'तस्य ग्रहणमित्यादि'। 'आदिर्ञिटुडव इति'। असति तस्य ग्रहणे ये ऽनेकाल इत्संज्ञका ञिप्रभृतयस्तेष्वलोन्त्यस्य लोपः स्यात् तस्य ग्रहणसामर्थ्यात्तु सर्वस्य भविष्यति, एतच्च नानर्थकेलोन्त्यस्य विधिरित्यनाश्रित्योक्तम् ॥

"यथासङ्ख्यमनुदेशः समानाम्" ॥ 'सङ्ख्याशब्देनात्र क्रमो लक्ष्यत इति'। कथमव्यभिचारात्, यत्रैक एवोद्देश्यनुद्देशी च यथा 'मुद्गादयि' ति न तत्रानियमप्रसङ्ग इत्यनेकत्वसङ्ख्याया एवेह ग्रहणं सा च क्रमं न व्यभिचरति युगपदनेकस्य शब्दस्योच्चारयितुमशक्यत्वात्, मुख्ये त्वर्थे ऽसमर्थः स्यात्समानां समसङ्ख्यानामुद्देशिनां या सङ्ख्या चतुरादिलक्षणा तया उद्देश्यः सम्बध्यते ततसङ्ख्याको भूत्वा सम्बध्यत इति ततश्चानर्थकमेव स्यात् समत्वादेवास्यार्थस्य सिद्धत्वाद् अतः क्रमपर एव सङ्ख्याशब्द इति। यथाक्रमग्रहणं तु न कृतं सङ्ख्याद्वारकं साम्यं यथा विज्ञायेत, अन्यथा स्थानप्रयत्नादिकृतमपि समत्वं प्रतीयेत। ननु च क्रियमाणमपि सङ्ख्याग्रहणं क्रमपरमिति कथमतः संख्यासाम्यप्रतिपत्तिः, सत्यं, क्रमे शब्दः पर्यवस्यति मुख्योऽप्यर्थः प्रतीयते स हि प्रतीतो लाक्षणिकं गमयति तस्मात् संख्याग्रहणसामर्थ्यात् तद्द्वारकमेव साम्यं गृह्यते। 'यथासंख्यमिति'। 'यथासादृश्य' इति वीप्सायामव्ययीभावः। 'अनुदेशो भवतीति'। सम्बन्धी भवतीति द्रष्टव्यम्। तथा च वक्ष्यति 'अनुदेशिनः सम्बध्यन्त इति'। 'अनुदिश्यत इत्यनुदेश इति'। 'अकर्त्तरि च कारके संज्ञाया' मित्यसंज्ञायामपि कर्म्मणि घञ्। अनुशब्दः पश्चादर्थे दिशिरुच्चारणक्रिय इत्याह। 'पश्चादुच्चार्यत इत्यर्थ इति'। यदुक्तं संख्याद्वारकं साम्यं गृह्यत इति तद्दर्शयति। 'समानां समसंख्यानाम्,' अस्यैव विवरणं 'समं पठितानामिति'।

'उद्देशिनामिति'। कं चिद्धर्म्मं विधातुं प्रसिद्धवच्छब्दपरामर्शयोग्येन रूपेण उपादानमुद्देशः तद्वन्त उद्देशिनो विधेयतया पश्चादुच्चारणमनुदेशस्तद्वन्तोऽनुदेशिनः। यद्यपि सूत्रे उद्देशिनो न श्रुतास्तथाप्यनुदेशशब्दस्य सम्बन्धिशब्दत्वात् समसंख्यत्वस्य च प्रतियोग्यपेक्षत्वात् तएव गम्यन्ते। उद्देशिनामनुदेशिनां चेति यथाक्रममित्येतदपेक्षया षष्ठी। 'यथाक्रममिति'। पूर्ववदव्ययीभावस्तृतीयान्तं चैतत्। तदयमत्रार्थः। समसंख्यानामुद्देशिनामनुदेशिनां च यो यः क्रमः प्रथमचरमभावस्तेन तेनानुदेशिनः सम्बध्यन्ते उद्देशिभिः सहेत्यर्थाद् गम्यते। क्व चिदुद्देशिभिरिति पठ्यते तत्र सहयोगे तृतीया। प्रथमात् प्रथमं इत्यादिना सूत्रार्थमुदाहरणे योजयति। वहन्ति वर्षन्ति नदन्तीत्यादौ लोक एव यथासंख्यासम्बन्धस्य दृष्टत्वाच्चार्थं एतेन, उच्यते, व्युत्क्रमेणापि सम्बन्धो लोके दृश्यते कन्याब्रह्मचारिणौ दण्डकन्दुकहस्ताविति, योग्यतावशादत्र सम्बन्ध इति चेत् क्रमेणापि सम्बन्धस्तद्वशादेव योग्या हि नद्यो वहने घनाश्च वर्षणे, अत एवैकस्य धर्म्मिणो बहुषु धर्म्मेषु विहितेषु विधानक्रमेणान्यथा वा योग्यतानुरूप एव सम्बन्धो भवति अमुमुद्वर्त्तय स्नापय भोजय भोजय स्नापयोद्वर्त्तयेति। स्यादेतत्, स्वतः प्राप्तिरियं यदुत क्रमेण सम्बन्धः। तथाहि। योग्यता विशेषानवधारणे प्रथमप्रतीतयोः सम्बन्धो बाधकाभावात् तावता हि द्वयोरपि चरितार्थत्वं द्वितीयस्य धर्म्मिणो धर्म्मस्य वा प्रतियोग्यपेक्षायां प्रथमश्रुतस्य चरितार्थत्वाद् अचरितार्थेन द्वितीयेन प्रतियोगिनां सम्बन्धः, एवं सर्वत्र तस्मात् स्वतः प्राप्त्या क्रमसम्बन्धः सिद्ध इति। यद्येवं ललणेत्यम्भूताख्यानेत्यादौ वैषम्येप्येवमेव स्याद् यावत्तं साम्य तावतामादितः क्रमेण सम्बन्धः परिशिष्टस्य तु सर्वैरनन्तरेण वेत्यतः समानामिति वक्ष्यामीत्यारम्भः। 'स्वरितेनेति'। "विशेषं वक्ष्यामीति'। क्व चिद्धि साम्येपि नेष्यते, अथारभ्यमाणेप्यस्मिन् परस्मैपदानां णलादयो 'लुटः प्रथमस्य डारौरसः' 'एचो ऽयवायाव' इत्यत्र कथमस्य प्रवृत्तिः यावता परस्मैपदादिसंज्ञया युगपदेव संज्ञिनां प्रतीतिः न क्रमेण, सत्यं, तिबादिसूत्रे ऽक्षरसमाम्नाये च तिबादयः क्रमेण प्रतीताः स एव क्रमो नियामको भविष्यति एवं द्वन्द्वेपि। पाघ्रेत्यादौ युगपदधिकरणवचनतायां द्वन्द्वेपि क्रमस्य प्रतीतेः स एव नियामकः। ननु

च तिपो णल् तसो ऽतुस् पः पिबः घ्रो जिघ्र इत्येवं भिन्नवाक्यतयोपदे-शोऽस्तु एवं हीदं न वक्तव्यं भवति सत्यमेवं तु गौरवं स्यात् तस्य रूपेणा-निर्देशात् तत्र विभक्तेर्भेदेनोच्चारणाच्च। तथा 'विदो लटो वे' त्यत्रानन्तर्या-न्मसो मेत्येव सम्बध्येत, तदाह संज्ञासमासनिर्देशात् सर्वप्रसङ्गानुदेशस्य तत्र यथासंख्यवचनं नियमार्थं संज्ञासमासनिर्देशश्च पृथग्विभक्तिसंज्ञ्य-नुच्चारणार्थः प्रकरणे च सर्वसम्प्रत्ययार्थं इति, तौदेय इत्यादौ 'सोऽस्या भिजन' इत्यत्रार्थे प्रत्ययः। 'इहेत्यादि'। एकयोगत्वपत्ते चोद्यम्भिन्नयोगपत्ते तु योगविभागो यथासंख्यनिरासार्थ इति वक्ष्यति। केचित्तु विभज्य योगं पठन्ति। अन्ये त्वेकमेव। स्वरितेनेत्यादिपरिहारः। कथं पुनरयं विशेषो लभ्यत-इत्याह। 'स्वरितेनाधिकार इत्यादि'। यद्येवं स्वरिते दृष्टे सन्देहः स्यात् न ज्ञायते किमयं यथासंख्यार्थं आहो स्विदधिकारार्थं इति सन्देहमात्रमे-तद् भवति सर्वसन्देहेषु चेदमुपतिष्ठते व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति तत्र व्याख्यानान्निर्णयो भविष्यति॥

"स्वरितेनाधिकारः"॥ अत्र पारिभाषिकस्य स्वरितस्य ग्रहणे ण्याख्यात्रो ण इत्यादौ नकारादेर्व्यञ्जनस्याधिकारोपलक्षणं नोक्तं स्यात् पारिभाषिकस्याज्धर्मत्वादिति मत्वाह। 'स्वरितो नाम वर्णधर्म इति'। वर्णमात्रधर्म इत्यर्थः। स चायं धर्मः कलाध्मातादितुल्यः केवलं सूत्रेष्वेव भवति न प्रयोगे, क्वचित्तु स्वरितो नाम स्वरदोषो वर्णधर्म्म इति पाठः। तत्र स्वरदोष उच्चारणदोष, अधिकारशब्दो भावसाधनः। 'विनियोग इति'। व्यापारणम्। अथ शब्दस्य विनियुक्तस्य कोऽव्यापार इत्याह। 'अधि-कृतत्वादुत्तरत्रोपतिष्ठत इति'। उपस्थानमप्येतदेव यदुत्तरस्य तत्र बुद्धिस्थता। उत्तरत्रेत्युपलक्षणं क्वचित् पूर्वत्राप्युपतिष्ठते सूत्रकारेण पठितस्याप्यस्य स्व-रितत्वस्य संकीर्णत्वात् पाठस्य विषयविभागो दुर्ज्ञेय इत्याह। 'प्रतिज्ञा-स्वरिता इति'। प्रत्यय इत्याद्युदाहरणानि। किमर्थं पुनरिदमुच्यते यावता निर्दिश्यमानं लोकेऽधिक्रियते यथा देवदत्ताय गौर्दीयतां कम्बलश्चेति देवद-त्तायेति गम्यते तथा 'स्थिर' इत्यादीनां साकाङ्क्षत्वादनुवृत्तैर्घञादिभि-रेव सम्बन्धो भविष्यति, अन्यनिर्देशस्तन्निवर्त्तकः, तद्यथा देवदत्ताय गौर्दीय-

तां विष्णुमित्राय कम्बल इति कम्बलो गोर्निवर्त्तको भवति तथेहाप्यभिविधौ भाव इतीनुण् घञो निवर्त्तकः स्यात् ततश्चा 'क्रोशोऽवन्योर्ग्रहः' इत्यादिष्वनन्तर इनुणेव स्यात् तस्मात्परिभाषा, ऽधिकारपरिमाणज्ञानं तु न ज्ञायते कियन्तमवधिमधिकारोनुवर्त्तेत इति यथा प्रागभ्यासविकारेभ्यो ङ्गाधिकार उतासप्तमपरिसमाप्तेः, धातोरिति प्राक् लादेशेभ्य उताध्यायस्य परिसमाप्तेः, एवं तर्ह्युभयार्थमिदम् । अधिकारार्थं च निवृत्त्यर्थं च कथं स्वरितेनाधिकारः स्वरिते दृष्टे ऽधिकारो न भवतीत्यर्थः, तेन 'विंशतिकात् ख' इत्यत्र स्वरितत्वं प्रतिज्ञेयं तद्दर्शनाच्च द्वित्रिपूर्वादित्यस्य निवृत्तिरवसीयते, एवमपि स्वरिते दृष्टे संदेहः स्यात् किमयमधिकारार्थं आहो स्वित् प्रकृतस्य निवृत्त्यर्थं इति एवं तर्हि यस्य यावत्सु योगेष्वनुवृत्तिरिष्यते तत्र तावतिथोऽलनुबन्धनीयः यथा द्वित्रिपूर्वान्निष्कादित्यत्रेकारः तेन द्वयोर्योगयोरनुवृत्तिर्भविष्यति एवमन्यत्रापि यत्र तावतिथोल् नास्ति तत्र प्राग्वचनं कर्त्तव्यं यथा अङ्गस्य प्राक् टेरिति तद् गुरु भवति । स्यादेतत् व्याख्यानात् परिमाणं ज्ञास्यतइति, अधिकारोपि तर्हि व्याख्यानात् ज्ञायताम् इनुणघञिति संदेहे घञिति व्याख्यास्यामः, इनुण आनन्तर्यं घञोप्यनुवृत्तिसामर्थ्यं दृष्टमित्यस्त्येव संदेहः 'यहवृदृनिश्चिगमश्चे' त्यादिषु त्वनन्तरस्यापि एवाधिकारो न दृष्टानुवृत्तिसामर्थ्यस्यापि घञः सिद्धत्वाद्व्याख्यानाद्वा । यदप्युत्प्रेक्षितम् आकाङ्क्षारहितेपि वाक्ये प्रकृतस्य सम्बन्धार्थो शास्त्रीयोधिकारो यथा 'दूरान्तिकार्थेभ्यो द्वितीया चे' त्यत्र पञ्चम्यधिकार इति तत्रापि व्याख्यानमेव शरणमिति तदेव सर्वत्रास्तु नार्थ एतेन, इदं तर्हि प्रयोजनम्, अन्यत्र दृष्टस्याधिकारस्य स्वरितेनोपलक्षणं यथा स्याद् यथा गोस्त्रियोरुपसर्जनस्येत्यत्र स्त्रीग्रहणस्य, नह्येतल्लौकिकेनाधिकारेण सिद्धमानुषङ्गिकं वास्य प्रयोजनं यत् साकाङ्क्षेषु व्यवहितस्य चानुवृत्तिः ॥

"अनुदात्तङित आत्मनेपदम्" ॥ 'अविशेषेणेत्यादि' । लस्य तिबादयः लटः शतृशानचौ 'लिटः कानज्वा' 'क्वसुश्च' 'लटः सद्वे' त्यात्मनेपदपरस्मैपदयोर्विहितत्वादापादपरिसमाप्तेर्नियमार्थं प्रकरणमित्यर्थः । एकवाक्यतया विधावितरेतराश्रयणप्रसङ्गः । स्यादेतत्, यथा 'बहुषु बहुव-

चनं' 'कर्म्मणि द्वितीया' 'ङ्याप्प्रातिपदिका' दित्येतेरैकवाक्यभूतैः स्वादीनां विशिष्टविधिः, एवमनेन प्रकारेण लस्य तिबादय इत्यादिभिश्च तिङामपि विशिष्टविधिरस्त्विति । यद्येवमात्मनेपदपरस्मैपदसंज्ञाभ्यां तिबादीनां विधिः विहितानां च संज्ञाभ्यां भाव्यमितीतरेतराश्रयं प्राप्नोति स्वरूपेण विशिष्टविधौ शत्रादिष्वति प्रसङ्गः, स्यान्मतं, लस्य तिप्तस्झिसिप्थस्थमिब्वस्मस', लस्य तिबादयो भवन्ति ततो 'ऽनुपराभ्यां कृञः' कर्त्तर्यनुपूर्वात् करोतेः परस्य लस्य तिबादयो भवन्ति किमर्थमिदं गन्धनावक्षेपणस्वरितञित इति वक्ष्यति तद्बाधनार्थं, कर्तृग्रहणं 'भावकर्म्मणो'रिति वक्ष्यमाणस्य तङो बाधो मा भूदिति, एव 'मभिप्रत्यतिभ्यः क्षिप' इत्यादि, 'लुटि च कॢप' इत्येवमन्तं कृत्वा ततोऽनुदात्तङित्स्तातांझथासाथांध्वमिड्वहिमहिङ्, अनुदात्तङितः परस्य लस्य तादयो भवन्ति तिबादीनामपवादः, ततो भावकर्म्मणोरित्यादि विभाषोपपदेन प्रतीयमानइत्येवमन्तं करिष्यते तत्रायमप्यर्थः, आत्मनेपदग्रहणं शेषग्रहणं परस्मैपदग्रहणं न कर्तव्यं भवति । एवमपि प्रकरणान्तरावस्थितानां शत्रादीनां नियमो न स्याद् अतो न स्वरूपेण विशिष्टविधिर्युक्तः संज्ञाश्रयणे तु यत्रैतत्संज्ञकयोर्विधानं तत्र सर्वत्रोपस्थानान्नायं दोषः किं त्वितरेतराश्रयं प्राप्नोति, यदि त्वस्य सूत्रस्य शाटकं वयेतिवद् भाविनी संज्ञा विज्ञायेत ततो नेतरेतराश्रयं लाघवं प्रति न कश्चिद्विशेष इति किं मुधा भाविसंज्ञाश्रयणखेदेनेति भिन्नशाब्दतया नियमपक्ष एवाश्रितो वृत्तिकारेण, यद्येवं विकरणव्यवधाने नियमाप्रसङ्गः लिङ्लिट्श्यन्शलुलुक् वचनानुबन्धयोरर्थवत्त्वाद्, इह हि विकरणानामवकाशो ऽलादेशाश्चानशादयः, नियमस्यावकाशो यत्र विकरणा न सन्ति स्पर्द्धिषीष्ट पस्पर्द्धे आस्ते शेते अर्ति जुहोति भिनत्ति भूयादित्यादि । एधते स्पर्द्धते कुरुते निविशतइत्यादावुभयप्रसङ्गे परत्वाद्विकरणेषु कृतेषु तैर्व्यवधानान्नियमो न स्याद् अस्ति नियमे यदि तावत् प्रकृतिनियमोऽनुदात्तङिद्वादिभ्य आत्मनेपदमेव शेषाद्धातोः परस्मैपदमेवेति ततोऽस्मिन् विषये उभयप्रसङ्गः, प्रत्ययनियमेपि तुल्यजातीयस्य नियमेन व्यावृत्तिरिति धातोर-

नन्तरस्य लस्य यद्यात्मनेपदपरस्मैपदे भवतो ऽनुदात्तङिद्भ्योऽनन्तरमेवेत्येवं नियमो विज्ञायमानो धात्वन्तरादेव व्यावर्तयेदिति विकरणव्यवधाने नियमाप्रवृत्तावुभयप्रसङ्ग एव । एकवाक्यतया विधाने तु नायं दोषो विहितेषु लादेशेषु सार्वधातुकापेक्षैर्विकरणैर्भाव्यं विधानं चानेन प्रकरणेन सहेति नैनः प्राग्विकरणसम्भवः स्यादयो लावस्थायां विधीयमाना अपि लकारविशेषापेक्षत्वाद्बहिरङ्गा इति लमात्रापेक्षेष्वन्तरङ्गेष्वादेशेषु कृतेष्वेव भविष्यन्तीति न तत्रापि दोषः । ज्ञापकात् सिद्धं, यदयं 'वृद्भ्यः स्यसनो'रिति स्य विकल्पं शास्ति तज्ज्ञापयति विकरणेभ्यो नियमो बलीयानिति, एतेनैतदपि निरस्तं चङ्ङ्भ्यामात्मनेपदप्रसङ्ग इति, कथं, पूर्वनियमे प्रवृत्ते पश्चात् चङङौ भवत इति । प्रत्येकमिच्छब्दस्यान्वय इत्याह । 'अनुदात्तेति' । 'ये धातवो ङितश्चेति' । समुदायसम्बन्धे तु चक्षिङ एव स्यात् स ह्यनुदात्तेत् पठ्यते विचक्षण इत्यत्र युच्यथा स्याद् अकारस्त्वनुदात्तत्वनिबन्धनस्यात्मनेपदस्यानित्यत्वज्ञापनार्थस्तेन स एवायं नागः सहति कलभेभ्यः परिभवं, न सहामि साहसमसाहसिकीत्यादि सिद्धम् । धातव इत्येतत् कुतो लभ्यते, के विदाहुः । 'भूवादयो धातव' इत्यतो धातुग्रहणमनुवर्तते तच्चानुदात्तङित इत्यनेन सामानाधिकरण्यात् पञ्चम्या विपरिणम्यते अत एव चङङ्भ्यामात्मनेपदं न भवतीति यङन्तादपि तर्हि न प्राप्नोति बेभिद्यतइति यद्येवं ह्यत्र ङित् न तदन्तो धातुः, अवयवे चाचरितार्थं लिङ्गं समुदायस्य विशेषकं भवति तस्मादिह धातोरिति नानुवर्त्यं प्रायो वृत्त्या तु कृतो धातव इत्युक्तं चङङोस्तु परिहार उक्त एव । यद्ययं प्रकृतिनियमः स्याद् अनुदात्तङित आत्मनेपदमेवेति वृज्ञादयो न स्युः वचनाद् भविष्यन्ति अस्ति वचनस्यावकाशः परस्मैपदिनस्तत्रापि नियमः शेषात् परस्मैपदमेवेति तेन वचनाद् भविष्यन्ति तुल्यजातीयस्य च नियमेन व्यावृत्तिः कश्च तुल्यजातीयः आत्मनेपदस्य परस्मैपदं तस्य च तत् । एवमपि शेषात् कर्तरीति शेषग्रहणं न कर्तव्यं प्रकृतिनियमपक्षे कथं प्रकृतयो नियता आत्मनेपदं परस्मैपदं चानियतं ततो वक्ष्यामि परस्मैपदमिति तन्नियमार्थं भविष्यति यत्र परस्मैपदं चान्यच्च प्राप्नोति तत्र परस्मैपदमेवेति

प्रत्ययनियमस्तु नान्तरेण शेषग्रहणं शक्यो विज्ञातुमिति शेषग्रहणं कुर्वतः सूत्रकारस्य स एवाभिप्रेत इत्याह। 'तेभ्य आत्मनेपदं भवति नान्येभ्य इति'। यदि प्रत्ययनियमोयं शेषात् कर्त्तरि परस्मैपदमित्यत्र यदि तावदेवं नियमः कर्त्तरि यदि भवति शेषादेवेति ततोशेषात् कर्त्तरि मा भूद् भावकर्म्मणोस्तु शेषाच्च परस्मैपदं प्राप्नोति, अथ शेषाद्यदि भवति कर्त्तर्य्येवेति ततः शेषात् भावकर्म्मणोर्मा भूद् अशेषात्तु भावकर्म्मकर्तृषु त्रिष्वपि प्राप्नोति न चैकस्मिन्वाक्ये नियमद्वयं शक्यं विज्ञातुं शेषादेव भवति तत्रापि कर्त्तर्य्येवेति एवं तर्हि योगविभागेन नियमद्वयं तत्रैव साधयिष्यामः। 'आस्तइत्यादि'। आस उपवेशने, वस आच्छादने, षूङ् प्राणिप्रसवे, शीङ् स्वप्ने, अदादयः 'शीङः सार्वधातुके गुणः'॥

"भावकर्मणोः"॥ भाव्यत इति भावः, ण्यन्ताद् भवतेः कर्म्मणि घञ् धात्वर्थः क्रियात्मक उच्यते कर्म्म तु पारिभाषिकं, घञादिविधौ तु 'भाव'-इति शुद्धाद् भवतेर्भावे घञ् भावः सत्ता धात्वर्थस्य सिद्धतावस्थोच्यते अयमपि नियम इति दर्शयितुमन्यतः सिद्धिमाह। 'लः कर्म्मणि चेत्यादि'। कथं पुनरयं नियमः यावता अनुदात्तङित एवात्मनेपदमिति पूर्वेण नियमेन यथा शेषात् कर्त्तर्य्यात्मनेपदं व्यावर्त्तितमेवं भावकर्म्मणोरपीति तद्विषये विध्यर्थमिदं युक्तं, सत्यं, यदि पूर्वसूत्रे प्रवृत्तेऽस्य प्रवृत्तिर्विपर्ययोपि शक्यते वक्तुं भावकर्म्मणोरेवात्मनेपदमित्यस्मिन्नियमे प्रवृत्ते ऽनुदात्तङितः कर्त्तर्य्यात्मनेपदमप्राप्तमिति पूर्वसूत्रमपि विध्यर्थमिति तेन द्वयोरपि लस्य तिबादय इत्येतदपेक्षया नियमार्थत्वं परस्परापेक्षया तु विध्यर्थत्वमेवमापादपरिसमाप्तेर्द्रष्टव्यम्। अत एवास्या ऽन्यथा सिद्धिं दर्शयताप्येवशब्दो न प्रयुक्तः तिबादिसूत्रेण धातुसामान्यविहितं च लकारमाश्रित्य तिबादयो विहितास्तत्रेभ्य एव धातुभ्य इति पूर्वो नियमो ऽयन्त्वेतयोरेवार्थयोरिति। ननु चात्रार्थनियम एव ग्रन्थे प्रतीयते ऽयन्त्वत्रार्थो 'लः कर्म्मणिचे'ति भावकर्मणोर्यो विहितो लकारस्तस्य सामान्येन तिबादयः सर्वे वक्ष्यन्ते न त्वात्मनेपदमेवातस्तदेव यथा स्यादित्ययमारम्भ इति, प्रत्ययनियमे तु भावकर्म्मकर्तृष्वपि विहितस्य लस्य सामान्येन तङ् वक्ष्यत इति वाच्यं

स्यात्, सत्यम् । अयन्त्वत्रार्थः भावकर्मणोरित्युपलक्षणम् भावकर्मकर्तृष्वित्यर्थः, तिबादय इति सूत्रे तिपः प्रथमनिर्देशादेवमुक्तं तिबादिष्वन्तर्भूतास्तङ इत्यर्थः, तङानाविति यावत्, किं पुनः स्याद् यद्ययमर्थनियमः स्याद् इह को भवता लाभो लब्धः को भवता दायो दत्त इति कर्म्मणि घञ् न स्याद् अकर्त्तरि चेत्यस्य त्वपादानादिरवकाशः, यद्यपि तुल्यजातीयस्य परस्मैपदस्य नियमेन व्यावृत्तिरिति परिहारोऽस्ति तथापि पूर्वसूत्रे तावत् प्रत्ययनियम इतीहापि स एवाश्रितः । 'ग्लायतइति' । ग्लै म्लै हर्षक्षये । 'सुप्यतइति' । ञिष्वप् शये वचिस्वपीत्यादिना संप्रसारणम् । 'क्रियतइति' । 'रिङ्शयग्लिङ्क्षु' यदा कर्म्मवत्कर्म्मणेत्ययं शास्त्रातिदेशो व्यपदेशातिदेशो वा तदा शास्त्रव्यपदेशयोरतिदिष्टयोः स्वेन स्वेन शास्त्रेण तत्तत्कार्यं भवति तत्र कर्मण्यात्मनेपदमित्यस्यावकाशः शुद्धं कर्म्म, कर्त्तरिपरस्मैपदमित्यस्य शुद्धः कर्ता कर्म्मकर्तर्युभयप्रसङ्गे परत्वात्परस्मैपदं प्राप्नोति अत आह । 'कर्म्मकर्तरीत्यादि' । 'द्वितीयं कर्तृग्रहणमनुवर्त्ततइति' । 'कर्त्तरि कर्म्मव्यतिहारे' इत्यतः कार्यातिदेशपक्षे त्वात्मनेपदमेव । 'परमिति' । नायं परिहारो वाच्यः ॥

"कर्त्तरि कर्मव्यतिहारे" ॥ अत्र लौकिकं कर्म्म गृह्यते न पारिभाषिकमित्याह । 'कर्म्मशब्दः क्रियावाचीति' । ननु कृत्रिमत्वात्पारिभाषिकस्यैव ग्रहणं युक्तं ततो देवदत्तस्य धान्यं व्यतिलुनन्तीत्यत्रैव स्यात्, एवं मन्यते इह कर्त्तरि व्यतिहारइतीयता सिद्धं, करणादिव्यतिहारे कस्मान्न भवति, उच्यते, क्रियायाः साध्यत्वात् प्राधान्यं क्रियया प्तुमिष्टतमत्वात्तादर्थ्येन क्रियाप्रवर्तनात् कर्म्मणोपि प्राधान्यमित्युभयव्यतिहारे लब्धे कर्म्मग्रहणं क्रियते तद्यदि साधनं कर्म्म गृह्येत तदा क्रियाया अपि संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् कृत्रिमकर्म्मत्वमिति पुनरुभयोरपि ग्रहणात् कर्म्मग्रहणमनर्थकं स्यात्, किं चात्मनेपदेनाक्षिप्तोनुवृत्ता वा धातुः कर्म्मव्यतिहारेण विशेष्यते तत्र वर्त्तमानाद्धातोरिति न च साधनकर्म्मणि धातोर्वृत्तिः सम्भवति तस्य क्रियावाचित्वादिति । विनिमयो व्यत्यास इत्यर्थः, एतदेव स्पष्टयति । 'यत्रेति' । योग्यतावशादस्येदं साधनमस्येयं क्रिया साध्येति निज्ञातयोर्विपर्यासः साध्यसाधनभावस्य स व्यतिहार

इति विवक्षितं यत्रेन्यपक्षमात्तु स व्यतिहारस्य विषयो विवक्षित इत्यर्थः । परस्परकरणमपि कर्म्मव्यतिहार उच्यते संप्रहरन्ते राजानः व्यात्युक्षीमभिसरणग्लहामदीव्यन्तीति । 'व्यतिलुनतइति ।' लूञ् छेदने 'आत्मनेपदेष्वनत' इत्यदादेशः श्नाभ्यस्तयोरित्याकारलोपः 'प्वादीनां ह्रस्वः' अन्योन्यपेा्यमन्योन्यविषये वा लवन कुर्वन्तीत्यर्थः । एवंरूपश्चार्थोनैककर्त्तृकत्वे सति प्रतीयतइत्येकवचन न भवतीति केचिदाहुः । व्यत्यसे व्यतिहे इत्येकवचनमपि तत्र तत्रोदाहरिष्यते अन्यो व्यतिस्ते तु ममापि धर्म इति भट्टिप्रयोगः । 'कर्म्मव्यतिहारइति किमिति' । कर्त्तृग्रहणमेव व्यतिलुनतइत्यादौ प्रापकत्वेनोपयोक्ष्यतइति भावः । अथ कर्त्तृग्रहणं किमर्थं भावकर्म्मनिवृत्त्यर्थं न वा पूर्वेण भावात् भावकर्म्मणोर्हि पूर्वेणात्मनेपदं भवत्येव व्यतिलूयते व्यतिपूयतइति तेन यथा स्यात् अनेन मा भूत् कः पुनरत्र विशेषः, तेन वा स्यादनेन वा, अयमस्ति विशेषः अनेन सति 'न गतिहिंसार्थेभ्य' इति प्रतिषेधः प्राप्नोति व्यतिगम्यते ग्रामः व्यतिहन्यन्ते दस्यव इति । न वानन्तरस्य प्रतिषेधात् व्यतिहन्यतइत्यत्र द्वे प्राप्ती भावकर्मणोरिति च कर्मव्यतीहारइति च तथानन्तरस्य विधिर्भवति प्रतिषेधो वेति अनन्तरा कर्मव्यतिहारलक्षणा प्राप्तिः प्रतिषिध्यते पूर्वा तु भविष्यति नार्थ एतेन कर्त्तृग्रहणेनेत्यत आह । 'कर्त्तृग्रहणमिति' । शेषात्कर्तरीति प्रदर्शनमेतदा 'डो दानास्यविहरणे'-इत्यादावप्यस्योपयोगं वक्ष्यामः ॥

"न गतिहिंसार्थेभ्यः" ॥ 'व्यतिगच्छन्तीत्यादि' । गम्लृ सृप्लृ गतौ तृहि हिसि हिंसायां हन हिंसागत्योः गमे 'इषुगमियमां छः' 'छे च' ति तुक् सृपेर्लघूपधगुणः हन्तेर्गमहनेत्युपधालोपः होहन्तेरिति कुत्वम् । 'हसादीनामिति' । हसिप्रकाराणां शब्दक्रियाणामित्यर्थः । 'उपसंख्यानमिति' । संख्यायते संक्षिप्य प्रतिपाद्यते ऽनेनार्थ इति संख्यानं सूत्रं तस्योपोच्चारितमुपसंख्यानं सूत्रं समीपइदमपि सूत्रं पठितव्यमित्यर्थः । 'हरतेरप्रतिषेध इति' । अर्थग्रहणसामर्थ्याद्ये शब्दान्तरनिरपेक्षा गतिहिंसयोर्वर्त्तन्ते तइह गृह्यन्तइति उपसर्गवशेन हिंसार्थत्वाद्धरतेरप्रतिषेध् इत्याहुः । इह तु ततः संप्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयाविति योत्स्यमानाविति विवक्षितं न व्यतिहारः, इह च संव्यवहरन्ते गर्गैरिति वहेरगत्यर्थत्वादप्रतिषेधः देशान्तरप्रापणं हि वहेरर्थः भारं वहतीति नान्तरीयकस्तु गतिप्रत्ययः कन्याप्रापणमुखेन गर्गैः सम्बध्यन्तइत्यर्थः ॥ (शेषमग्रे)

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

---

श्रीगणेशाय नमः ।

*(Continued from page* 132. Vol. XII.*)*

अलङ्कारः शङ्काकरनरकपालं, परिजनो
विशीर्णाङ्गो भृङ्गी, वसु च वृष एको बहुवयाः, ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति, वयं के पुनरमी ॥

अत्र 'विधौ' वित्यत्र विधिविधुशब्दयोरिकारोकारयोर्भेदाद्वर्णश्लेषः।

पदश्लेषो, यथा–

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥

अत्र पृथुकानां बालानां(क)मार्तस्वरस्य पात्रं, पक्षे, पृथु बहुलं कार्तस्वरस्य पात्रं यत्रेत्यादिक्रमेण पदभेदात्पदश्लेषोऽयम् । लिङ्गवचनयोः श्लेषो यथा–

भक्तिप्रह्वविलोकनप्रणयिनी, नीलोत्पलस्पर्द्धिनी,
ध्यानालम्बनतां(ख) समाधिनिरतैर्नीतेहितप्राप्तये, ।
लावण्यस्य महानिधी,(ग) रसिकतां लक्ष्मीदृशोस्तन्वती,
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥

---

(क) एकत्र 'बालाना' मिति नास्ति ।

(ख) ध्यानालोकनतामिति पु॰ ।

(ग) लावण्यैकमहानिधी–इति पा॰ ।

अत्र 'प्रणयिनी'-इति स्त्रियां प्रथमैकवचनं, नपुंसके तद्विवचनं चेति लिङ्गवचनयोः श्लेषः॰ एवमन्येऽप्यूह्यम् । भाषाश्लेषो यथा-

महदेसुरसंधम्मे तमवसमासङ्गमागमाहरणे ।
हरबहुसरणं त्वं चित्तमोहमवसरउमे सहसा ॥

अत्र प्राकृते 'मम' देहि रसं धर्म्मे, तमोवशामाशाङ्गमागमाद् हर नः, हरवधु! शरणं त्वं, चित्तमोहो ऽपसरतु मे सहसा'-इत्यर्थकानि पदानि॰ संस्कृतपक्षे तु 'महदे उत्सवदे, सुरेण सन्धा सन्धानं यस्मात्तम्, आगमाहरणे समासङ्गमव, बहुसरणं संसारस्वरूपं यस्मात्तं, चित्तमोहमवसरे उमे हर सहसा'-इत्यर्थकानि पदानि । प्रकृतिश्लेषो यथा-

अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥

अत्र वक्ष्यतीति वहिवच्योर्लृटि, कृदिति कृन्ततिकरोत्योः क्विपि तुल्यं रूपमिति प्रकृतिश्लेषौ । विभक्तिवैचित्र्यविशेषहेतुतया पृथगुपादानात्प्रत्ययपदं तदतिरिक्तपरम्॰ तच्छ्लेषो यथा-

रजनिरमणमौलेः पादपद्मावलोक॰
क्षणसमयपराप्तापूर्वसंपत्सहस्रम् ।
प्रमथ(क)निवहमध्ये जातुचित्तत्प्रसादा(ख)-
दहमुचितरुचिः स्यान्नन्दिता सा तथा मे ॥

अत्र नन्दितेति तृचि तलि च रूपम्॰ तेना'हं नन्दिता नन्दकः स्याम्॰ तथा सा नन्दिता नन्दिनो भावो मे स्या'दित्यर्थः॰। विभक्तिश्लेषो यथा-

सर्वस्वं हर सर्वस्य त्वं भव च्छेदतत्परः ।
नयोपकारसांमुख्यमायासि तनुवर्त्तनम् ॥

अत्र हरभवेत्यनयोः संबोधनत्वक्रियापदत्वाभ्यां सुप्तिङ्विभक्त्यन्तत्वम्॰ एवमायासीत्यादिक्रियापदत्वे च विभक्तिश्लेषः॰ एवमन्यत्राप्यूह्यम् ॥ ८४ ॥

(क) प्रथमेति पाठस्त्वबोधविजृम्भितम् ।
(ख) ०त्त्वत्प्रसादादिति पु० ।

भेदाभावात्प्रकृत्यादेर्भेदो ऽपि नवमो भवेत् ।

नवमोपीत्यपिर्भिन्नक्रमः· उदा०–

योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः ।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते ॥

अत्रैकार्थमात्रनियतप्रकरणाद्यभावाद्द्वावप्यर्थौ वाच्यावेवेति "भद्रात्मनो दुरधिरोहतनो"रित्यादिवन्न ध्वनित्वम्· ननु श्लेषस्तावद्द्विधा, सभङ्गपदोऽभङ्गपदश्च· तत्राद्यः शब्दश्लेषः, स्वरितादिगुणभेदाद्भिन्नप्रयत्नोच्चार्यतया भिन्नानां शब्दानां बन्धे जतुकाष्ठन्यायाच्छब्दयोरेव श्लिष्टत्वात्· द्वितीयस्त्वर्थश्लेषः, स्वरितादिगुणाऽभेदादेकप्रयत्नोच्चार्यतया शब्दभेदाभावादेकवृन्तगतफलद्वयन्यायेनार्थयोरेव श्लिष्टत्वात्· यद्यप्य'र्थभेदेन शब्दभेद' इतिनयेन(क) द्वितीयेपि शब्दस्य भेद,स्तथाप्युपपत्त्या शब्दभेदप्रतीतावप्येकताध्यवसायान्नास्ति शब्दभेदः· स एष निरवकाशतया सर्वालङ्कारबाधक इत्यलङ्कारान्तराणां प्रतिभामात्रमुत्पादयति, न तु तत्पर्याप्तिम्· यथा–

स्वयं च पल्लवाताम्रभास्वत्करविराजिनी ।(ख)
प्रभातसंध्येवास्वापफलुब्धेहितप्रदा ॥

अत्र पूर्वार्द्धे ऽभङ्गपदो, द्वितीयार्द्धे सभङ्गपदः श्लेषः· द्वयमप्युपमाप्रतिभोत्पत्तिहेतुः, साधर्म्याभावेन तस्याः प्ररोहाभावात्· यदुक्तम्–

'एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम् ।
स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्ट इहोच्यते ॥
अलङ्कारान्तरगतां प्रतिभां जनयत्पदैः ।
द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम्" ॥

इति· द्विविधोप्यलङ्कारसर्वस्वकारादिभिरर्थाश्रितत्वेनार्थालङ्कारमध्ये पठित,स्तत्कथं शब्दालङ्कारमध्ये पठ्यत इति· उच्यते–दोषगुणालङ्काराणां

(क) नये–इति पु० ।
(ख) विराजितेति पा० ।

शब्दार्थगतत्वेन यो विभागः, सोऽन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते· यत्र हि पर्यायान्तरपरिवृत्तिसहत्वं नास्ति, तस्य शब्दगतत्वम्· यत्र तु तत्सहत्वं, तत्रार्थगतत्वम्· यथा कष्टत्वादयो दोषा, गाढत्वादयो गुणा, अनुप्रासादयो ऽलङ्काराः, शब्दगताः, पर्यायान्तरेण[क] तदर्थोपस्थापने तेषामसम्भवात्· व्यर्थत्वादयो दोषाः, प्रौढत्वादयो गुणा, उपमादयो ऽलङ्काराश्चार्थगताः, पर्यायान्तरेणापि तदर्थोपस्थापने तेषां सम्भवात्· उदाहृते च "स्वयं च पल्लवे"त्यादौ द्वयोरप्यर्थयोः शब्दपरिवृत्त्यसहतया द्वयोरपि शब्दालङ्कारत्वमेवोचितं, न त्वाद्यस्या[ख]र्थालङ्कारत्वम्· नन्वेवमर्थश्लेषः किं नास्त्येव· क एवमाह· कस्तर्हि तस्य विषयः· यत्र शब्दपरिवर्त्तनेपि न श्लेषभङ्गः· यथा—

> स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्, ।
> अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥

अत्र स्तोकेनेत्यादिपदस्थाने ऽल्पादिपदप्रक्षेपेपि[ग] न श्लेषभङ्गः· यच्चोक्तं "स्वयं च"त्यादावुदाहृते उपमाप्रतिभोत्पत्तिहेतुः श्लेष इति, तदप्ययुक्तम्,प्रत्युतोपमैवात्रश्लेषप्रतिभोत्पत्तिहेतु , तद्बाधकत्वात्· तथाहि, साधर्म्याभावेनोपमायाः प्ररोहाभावादेव तावन्नोपमा बाध्या,यतः, "कमलमिव मुखं मनोज्ञमेतत्कचतितरा"मित्यादौ मनोज्ञत्वस्य गुणस्य दीप्तिरूपायाः क्रियाया वा उभयोर्वा साम्ये यथोपमा निर्वहति, तथा "सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिवे"त्यादावपि शब्दमात्रसाम्येनापि सा युक्तैव· साधर्म्यमात्रस्योपमाप्रयोजकत्वात्, तस्य चार्थरूपस्येव शब्दरूपस्याप्यविशेषेण सम्भवात्· तथाह्युक्तं रुद्रटेन—

> "स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ, किन्तु ।
> आश्रित्य शब्दमात्रं साधर्म्यमिहापि संभवतः" ॥

---

(क) पर्यायान्तरेणापीति पुस्तकान्तरं तु नानुरूपम् ।

(ख) आद्यस्यापीति पु० ।

(ग) प्रक्षेपेपीत्येकस्य स्त्वसमञ्जसः ।

इति। अथात्र साधर्म्यसंभवेऽपि नोपमा। साधारणधर्मप्रयोगशून्यो हि "कमलमिव मुख"मित्येतावन्मात्रादिरुपमाविषयः, अत्र तु शब्दरूपसाधारणधर्मप्रयोग एवेति वैयात्या[क]दुक्तव्यम्। तदपि न युक्तम्, पूर्णोपमाया निर्विषयत्वापत्तेः। साधारणधर्मप्रयोग उपमात्वाभावा, तत्प्रयोगे त्वपूर्णत्वात्। तदेतदुक्तम् 'नच कमलमिव मुखमित्यादिसाधारणधर्मप्रयोगशून्य उपमाविषयइति वक्तुं युक्तम्, पूर्णोपमाया निर्विषयत्वापत्ते"रिति। केचित् पुनस्तदन्यथा व्याचक्षते। तथाहि, यत्र साधारणधर्मद्वारेण्युपमा संभवति प्रसिद्धत्वा,त्स उपमाविषयो, नचात्र तथेत्यात्निपार्थः। अयं पूर्णोपमाविषयो न स्यादिति। यद्वा, श्लेषस्योपमाबाधकत्वायैतदङ्गीक्रियते। तथा श्लेषस्योपमाबाधकत्वे पूर्णोपमा निर्विषयैव स्यात्। "कमलमिव मुखं मनोज्ञमेत'दित्यत्र मनोज्ञत्वस्य सम्बन्धिभेदाच्चानात्वेनार्थश्लेषस्वीकारादित्यर्थः। नन्वेवं श्लेषस्य निर्विषयत्व,मसङ्कीर्णस्थलाभावादिति चेन्न,

त्वमेव देव! पाताल,माशानां त्वं निबन्धनम्, ।
त्वं चामरमरुद्भूमि,रेको लोकत्रयात्मकः ॥–

इत्यादावलङ्कारान्तराभावात्। तथाहि, न तावदत्रोपमा, इवाद्यप्रयोगात्,नापि तुल्ययोगितादीपके।[ख] नापि पातालादिना रूपकं वाच्यम्। व्यङ्ग्यस्यतस्य संभवेऽपि वाच्यापेक्षयैवासङ्करगवेषणमिति।[ग] किंच "येन ध्वस्तमनोभवेने'त्यादौ नास्त्येव किञ्चिदलङ्कारान्तरमित्युपमाश्लेषयोर्विभक्तोदाहरणासम्भवात्। बाध्यबाधकभावानुपगमे द्वयोर्योगे सङ्कर एवेति वरमभ्यु[घ]पगन्तव्यम्। उपपत्तिपर्यालोचने तूपमाया एवायं विषयो न श्लेषस्येत्युक्तमेव। उपपत्तिश्चेयम्–'व्यपदेशाः प्राधान्येन सम्भवन्ती'ति[ङ] वस्तुस्थितिः। प्रधानं चात्रोपमा, श्लेषस्य तन्निर्वाहकस्य तदङ्गत्वात्। नहि श्लेषं विना

(क) वैजात्यादिति पु० ।

(ख) "नापि तुल्ययोगितादीपके" इत्येकत्र नास्ति ।

(ग) ०गवेषणादितीति पु० ।

(घ) वरमुपेत च पा० ।

(ङ) प्राधान्ये भवन्तीतीति पा० ।

समानशब्दवाच्यत्वलक्षणं साधर्म्यमुपमानिर्वाहकं निर्वहति· उपमा तु न श्लेषाङ्गम्, श्लेषप्रतीतिं विना तत्प्रतीत्यभावेन तदनुपकारकत्वादिति· यदि चोपमाव्यवहारवारणाया ऽसाधारणधर्मप्रयोगशून्य उपमाविषय इति स्वीकर्त्तव्यं, तदा पूर्णोपमाया निर्विषयत्वमेव स्यादिति· तदेतदुक्तम्— "अन्यथा पूर्णोपमाया निर्विषयत्वापत्ते"रिति· न केवलमुपमाया एव श्लेषबाधकत्वं, किन्त्वलङ्कारान्तरस्यापि· यथा—"अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुके"त्यत्र विरोधालङ्कारस्य· नह्यत्रार्थद्वयप्रतिपादकस्य शब्दस्य श्लेषः, बिन्दुराहित्यरूपस्य द्वितीयार्थस्य प्रतिभामात्रविषयस्य प्ररोहाभावात्· नचाऽप्ररूढोपि श्लेषालङ्कार आस्तां, विरोधाभासवदिति चेद्, भवेदेव, यदि विरोधाभासस्य विरोधत्वमिव श्लेषाभासस्य श्लेषत्वमनुमतं कस्यापि भवेत्· तस्मादेवंविधे विषये श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरं प्राधान्यात्· तथा च "सद्वंशमुक्तामणि"रित्यत्र परम्परितश्लिष्टरूपकं प्रधानं,[क] वंशशब्दे श्लेषस्तु वेणुकुलयो रूपकोपयोगितया तदङ्गमिति श्लेषप्रतिभोत्पत्तिहेतू रूपकमेव व्यपदेश्यम्· "नाल्पः कविरिव स्वल्पश्लोको देव! महान् भवा"[ख]नित्यत्र श्लेषव्यतिरेक एव प्रधानं, श्लेषस्तु तन्निर्वाहक इति तत्प्रतिभोत्पत्तिहेतुर्व्यतिरेकः·

अनुरागवती सन्ध्या, दिवसस्तत्पुरःसरः, ।
अहो दैवगतिश्चित्रा, [ग]तथापि न समागमः ॥—

इत्यत्र समासोक्तिरलङ्कारः, अभिधाया नियमने श्लेषस्याऽसम्भवात् ।

आदाय चापमचलं, कृत्वाहीनं गुणं, विषमदृष्टिः ।
यश्चित्रमच्युतशरो लक्ष्य[घ]मभाङ्क्षीत्नमस्तस्मै ॥—

इत्यत्र विरोध एवालङ्कारः, श्लेषस्तु तदङ्गमात्र,मप्ररोहात्·

कवीनां सन्तापो,ऽभ्रमणमभितो, दुर्गतिरिति
त्रयाणां पञ्चत्वं रचयसि, न तच्चित्रमधिकम्· ।

(क) इत्यत्र परम्परितश्लिष्टरूपके रूपकमिति पुस्तकान्तरमनर्हम् ।
(ख) देव भवान् महानिति पु·
(ग) चित्रमित्येकीयत्र युक्तम् ।
(घ) लक्ष्यमिति पु· ।

चतुर्णां वेदानां व्यरचि नवता वीर! भवता[क]
द्विषत्सेनालीनामयुतमपि लक्षं [ख]त्वमक्षयाः ॥

अत्र मदीये पद्ये काव्यलिङ्गस्य श्लेषाङ्गमिति श्लेषप्रतिभोत्पत्ति-हेतुः काव्यलिङ्गम्· तस्मादलङ्कारान्तरप्रतिभोत्पत्तिहेतुः श्लेष इति रिक्तं वचः· किंच, "प्रभातसन्ध्ये"त्यादौ शब्दश्लेषस्यार्थालङ्कारत्वमिति वचनं भवतां विरुद्धम्, शब्दानाश्रितत्वे तेन[ग] व्यपदेशस्याऽन्याय्यत्वात्· अपि च, तस्य वैचित्र्य कविप्रतिभासंरम्भगोचरः[घ] स एवालङ्कारस्थानम्· "स्वयञ्च पल्लवाताम्रे"त्यादौ शब्दवैचित्र्यमेव तादृक्, तस्यैव कविप्रतिभया मुख्य-तयोट्टङ्कनादिति शब्दालङ्कारत्वमेवोचितम्· ननु श्लेषेऽर्थमुखप्रेक्षकः· नह्यर्थप्रतीतिं विना श्लेषस्य चमत्कारित्वं[ङ] सम्भवो वेत्यर्थालङ्कारत्वं श्लेषस्येति चेत्, एवं ह्यनुप्रासस्यार्थालङ्कारत्वं स्यात्· रसादिव्यञ्जक-स्वरूपवाच्यसव्यपेक्षत्वेन ह्यनुप्रासस्यालङ्कारता, अन्यथा वृत्तिविरोधादि-दोषस्य वक्ष्यमाणत्वात्· किञ्चैवं शब्दयोर्गुणदोषयोरप्यर्थत्वं स्या,त्तयो-रप्यर्थापेक्षयैव तथाभावात् शृङ्गारादौ हि[च] माधुर्यादिर्गुणः कष्टत्वादि-र्दोषो वा· यच्चोक्तमेकप्रयत्नोच्चार्यशब्दवत्त्वे ऽर्थश्लेषत्वमिति, तदप्ययुक्तम्, "विधौ वक्र" इत्यादौ वर्णादिशब्दभेदेऽप्य[छ]र्थश्लेषत्वापत्तेरित्यादि स्वय-मपि विचार्यम् ॥ ऽ ॥

चित्रं लक्षयति—

**तच्चित्रं, यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥ ८५ ॥**

यद्यपि वर्णानामाकाशगुणानां खड्गाद्याकृतिहेतुत्वमसम्भवि, त-थापि न्यस्तवर्णानुमापकलिपयः सन्निवेशविशेषवत्त्वेन यत्र खड्गाद्याकार-

(क) रभसादिति पा· ।
(ख) लक्ष्यमिति पुस्तकान्तरन्त्वशुद्धम् ।
(ग) शब्दानाश्रितत्वेनेति पु० ।
(घ) ०संरम्भगोचरमिति त्वपपाठः ।
(ङ) चमत्कारकारित्वमिति पु० ।
(च) शृङ्गारादौ मधुर्यादिगुणः कष्टत्वादिदोषो वेति पु० ।
(छ) विधौ वक्रेत्यादिवर्णादिश्लेषे शब्दभेदेऽपीति पु० ।

मुल्लासयन्ति, तच्चित्रमिति विवक्षितम्· तर्हि लिपिनिष्ठत्वाच्छब्दालङ्कारत्वं न स्यादिति चेन्न, तादृशवर्णविन्यासं विना तादृशलिपिविन्यासाभावाच्छब्दान्वयव्यतिरेकयोरभग्नत्वात्· लिपेर्वर्णाभेदस्य लोकप्रसिद्धिमाश्रित्य शब्दालङ्कारत्वमिति कश्चित्· तथापि शृङ्गारादिरसानुपकारकस्य कथमलङ्कारत्वमिति चेत्, कविनैपुण्य[क]वशेन विस्मयोपकारकत्वादिति गृहाण· क्लेशनिर्वाह्यं चेत्,न च तादृशरसोपकारकमिति दिङ्मात्रमुदाह्रियते· तत्र खड्गबन्धो यथा—

मारारिशक्ररामेभमुखैरासाररंहसा ।
सारारब्धस्तवा नित्यं तदार्ति[ख]हरणक्षमा ॥
माता नतानां संघट्टः श्रियां बाधितसम्भ्रमा ।
मान्याऽथ सीमा रामाणां शं मे दिश्यादुमाऽऽदिजा[ग] ॥

न्यासो यथा—नाड़िकायां प्रथमं 'मा'शब्दं विन्यस्य, तदूर्ध्वमारोहक्रमेणैकस्यां धारायां चतुर्दश वर्णा,नऽग्रे श्लिष्ट'से'तिवर्णो, ततोऽपरधारायामवरोहक्रमेण चतुर्दश, 'मे'ति प्रथमेन माशब्देन श्लिष्टं, तद्दक्षिणपार्श्वे निष्क्रमणक्रमेण सप्त, वामपार्श्वे प्रवेशक्रमेण सप्त, ततो माशब्दौ श्लिष्टौ, यत्राऽद्रिका माशब्दादधः क्रमेण वर्णत्रयम्, एषा गण्डिका, तदधो मेति, तद्दक्षिणपार्श्वे निष्क्रमणक्रमेण चतुष्टयं, वामपार्श्वे प्रवेशक्रमेण चतुष्टयं, ततो माशब्दः श्लिष्टः, एतत्त्सरुकं, ततो माकारादधः शेषवर्णद्वयं न्यस्ये[घ]देतन्मस्तकमिति ॥

(शेषमये)

(क) कविनैर्मल्येति पाठस्त्वनर्हः· कविनैपुणेति च पा० ।

(ख) तदर्त्तीति पु० ।

(ग) ०दुमा ऽऽदिजेति, ०दुमाऽऽदिजे'ति च पा०· एतस्य चाक्रे काव्यालङ्कारे चक्रबन्धोद्धृतपद्यस्य"सामाजा"पदानुरोधेन जान्त एव पाठः साधुः· परम् प्रायः पुस्तकेष्वाऽऽद्रिमेति प्राप्यते ।

(घ) प्रायः पुस्तकेषु न्यसेदिति प्राप्यते ।

॥ श्रीः ॥

श्रीं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम् ।

श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम् ।

तत्र प्रथमाध्यायस्यावशेषः ।

(*Continued from page* 140. Vol. XII)

मू० "सोऽकामयत बहु स्यां प्रजायेये"त्यादिवाक्यशेषावधारितसार्वज्ञ्यसत्यसङ्कल्पत्वादिविशिष्टापूर्वार्थप्रतिपादनसमर्थवाक्यार्थान्यथाकरणान्न प्रमाणपदवीमधिरोहति, एवमपूर्वानन्तविशेषणविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्यगतिसामान्यं चैकेनानुवादस्वरूपेणान्यथा कर्त्तुं न शक्यते, यच्चात्म-शब्दश्चेतनैकान्तो न सम्भवति मृदात्मको घटः इत्यादिषु दर्शनादित्युक्तं, तत्रोच्यते-यद्यपि चेतनादन्यत्रापि क्वचिदात्म-शब्दः प्रयुज्यते तथाऽपि शरीरप्रतिसम्बन्धिन्यात्म-शब्दस्य प्रयोगप्राचुर्य्यादात्मा वा इदमेक एवाग्र आसीदात्मन आकाशः सम्भूत इत्यादिषु शरीरप्रतिसम्बन्धिचेतन एव प्रतीयते, यथा गो-शब्दस्यानेकार्थवाचित्वेऽपि प्रयोगप्राचुर्य्यात्सास्नादिमानेव स्वतः प्रतीयते, अर्थान्तरप्रतीतिस्तु तत्तदसाधारणनिर्देशापेक्षा, तथा स्वतःप्राप्तं शरीरप्रतिसम्बन्धिचेतनाभिधानमेव "स ऐक्षत लोकान्नुसृजा" इति सोऽकामयत बहु स्यां प्रजायेयेत्यादितत्तद्वाक्यशेषा एव स्थिरीकुर्वन्ति ।

टी० सोऽकामयतेति ब्रह्मविदाप्नोतीत्यनुवाकवाक्यशेषः ब्रह्मणो योग्यार्थत्वज्ञापनाय सार्वज्ञ्यादिकमुक्तं, न प्रमाणपदवीमधिरोहतीति अयोग्यार्थेनानुवादरूपवाक्येन योग्यापूर्वार्थवाक्यानाम् अन्यथा करणमयुक्तमित्यर्थः उक्तवैषम्यद्वयानुवादेनानेकवाक्यानि एकेन वाक्येन बाधितुम् अशक्यानीत्याह "एवमि"ति, गतिसामान्यं—प्रवृत्तिसामान्यम्, अस्य लोकस्य का गतिरित्युपक्रमवशादन्यपरत्वं स्फुटम्, एवमाकाशकारणपक्षे अन्यपरत्वमेकवाक्यत्वमयोग्यार्थत्वमनुवादरूपत्वं स्वपक्षे त्वनन्यपरत्वं, वाक्यबहुत्वं, योग्यार्थत्वम,पूर्वत्वञ्चे,ति वैषम्यचतुष्टयमुक्तम्, एवं योग्यार्थश्रुतिमूलं लिङ्गम् अयोग्यार्थश्रुतितः प्रबलमिति सिद्धान्तन्याय उक्तो भवति, यथा गङ्गा—शब्दः स्वार्थसमर्पणक्षमो भूतलधर्मतया प्रत्यक्षसिद्धघोषाऽधिकर[1]णत्वलिङ्गविरोधेन अन्वयायोग्यः स्वार्थप्रतिपादनक्षमत्वाभावात् श्रुत्याभास ,एव योग्यार्थश्रुतिमूललिङ्गापेक्षया आकाशश्रुतिः श्रुत्याभास इति, आत्म—शब्दानैकान्त्यं यत्त्वित्यादिनाऽनूद्य परिहरति "तत्रे"ति,स्वतःप्राप्नाऽऽत्म—शब्दो विशेषवाचीत्यर्थः, प्रकृतब्रह्मवाचितच्छब्दसामानाधिकरण्याच्च न स्वरूपपरत्वमित्यर्थसिद्धं, न केवलमर्थान्तरसाधकनिर्देशाभावः स्वतःप्राप्तार्थसाधकनिर्देशोऽप्यस्तीत्याह "स ईक्षते"ति, अधिकरणार्थमुपसंहरति—

सू० एवं वाक्यशेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्टं निखिलजगदेककारणं सदेव सोम्येदमग्र आसीदिति वाक्यसिद्धं ब्रह्मैवाकाश—शब्देन प्रसिद्धवत्सर्वाणि ह वा इमानि भूतानीत्यादिवाक्येन निर्दिश्यत इति सिद्धम् ।

समाप्तमाकाशाधिकरणम् ।

सू०. अत एव प्राणः ॥ २४ ॥

श्रीः इदमाम्नायते छान्दोग्ये "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ते"ति प्रस्तुत्य "कतमा सा देवता इति प्राण" इति

१ घोषाधिकरणइति पा० ।

होवाच "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता ताञ्चेदविद्वान् प्रास्तोष्योमूर्द्धा ते व्यपतिष्यदि"ति अत्र प्राण-शब्दोऽप्याकाश-शब्दवत् प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्त्तते, तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमणादिलिङ्गात्प्रसिद्धवत् निर्द्दिष्टात् अधिकाशङ्का तु कृत्स्नभूतजातस्य प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनात्प्रसिद्ध एव प्राणो जगत्कारणतया निर्देशमर्हतीति ।

टी० "एवमि"ति, योगाद् रूढेः प्राबल्यात् प्रसिद्धार्थपरत्वे सति श्रुतिविरोधाद्दुर्बलं लिङ्गादि तदनुरोधेन नेयमिति पूर्वपक्षयुक्तिः, योग्यार्थश्रुतिमूललिङ्गादयोग्यार्थस्य पदस्य श्रुत्याभासत्वाद्योग्यार्थः स्वीकार्य इति राद्धान्तयुक्तिः । आकाशाधिकरणं समाप्तम् ॥

उक्ताधिकरणन्यायमतिदिशति 'अत एव प्राणः, विषयमाह "इदमि' ति, मूर्धा ते व्यपतिष्यत्-आत्मसत्ता न लभ्येतेत्यर्थः, किं वेदान्तवेद्यः प्रसिद्धः प्राण? उत परमात्मा? तदर्थं प्राण इति होवाच प्राणमेवाभिसंविशन्तीत्युक्त प्राणः किं प्रसिद्धः? उत परः? तदर्थं किं प्राण-शब्दो रूढ.? उत यौगिकः? तदर्थं भूतजातस्य प्रसिद्धप्राणायत्तस्थितिप्रवृत्तित्वमस्ति? उत ने?ति विचारः, यदाऽस्ति तदा रूढत्वात् विषयवाक्यस्यप्राणशब्दः प्रसिद्धप्राण पर इति सर्ववेदान्तवेद्यः प्रसिद्धः प्राण इति पूर्वपक्षे फलितम् । राद्धान्ते तु यदा प्राणायत्तस्थितिप्रवृत्तित्व नास्ति तदाऽवयवशक्त्या विषयवाक्यस्यप्राण-शब्द परमात्मपर इति सर्ववेदान्तवेद्यः परमात्मेति फलफलिभावः । अक्षरार्थमाह "अत्रे ति, आकाशशब्दवदित्यत्र रूढिप्राबल्यतत्परिहारादिकं पूर्वोक्तं सर्वमनुसन्धेयं, न हि प्रत्युदाहरणन्यायो ऽतिदेष्टव्यः, अतिदेशस्य हि प्रयोजनम् अधिकाशङ्कापरिहारः, अतःसूत्रकाराभिमतामधिकाशङ्कां दर्शयति 'कृत्स्नस्ये"ति, 'अतं अविरोधश-

ङ्क्त्या प्रत्यवस्थानं, विरोधस्फुटीकरणं चानुसन्धेयं, स्थितिप्रवृत्त्यादीत्यादि-शब्देन निवृत्तिरुच्यते, प्रवृत्तिहेतुभूतज्ञानचिकीर्षे च स्थितिप्रवृत्तिहेतुत्वेनोत्पत्तिकारणत्वमर्थसिद्धमिति भावः। यद्वा "यदा वै पुरुषः स्वपिति प्राणन्तर्हि वागप्येति प्राणञ्चक्षुः प्राणं श्रोत्रं प्राणं मनः यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते" इति प्रसिद्धवन्निर्देशरहिततया श्रुत्या प्राणस्य अप्ययोद्गमन-हेतुत्वावगमश्च आदि-शब्देन विवक्षितः, अस्मिन्प्रकरणे उद्गीथप्रतिहार-योर्देवतात्वेन अन्नादित्यावुक्तौ, तयोश्चाब्रह्मत्वात् प्राणोऽपि ब्रह्मव्यति-रिक्तः प्रसिद्ध एव ग्राह्य इति इदं भाष्येऽनादृतं प्रकरणोक्तानामन्नमयादी-नामब्रह्मत्वेऽपि कारणस्य परब्रह्मत्वमानन्दवल्ल्यां समर्थितमिति प्रकर-णमात्रस्य पूर्वपक्षावलम्बनत्वेन बुद्धावनारोहात्, जगत्कारणयेति संसृष्टं प्रति कारणत्वं सम्भवतीति भावः। अधिकं परिहारं दर्शयति—

मू० परिहारस्तु शिलाकाष्ठादिषु चेतनस्वरूपे च तदभावात्सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते इति नोपपद्यत इति, अतः प्राणयति सर्वाणि भूतानीति कृत्वा परं ब्रह्मैव प्राण-शब्देनाभिधीयते, अतः प्रसिद्धाकाशप्राणादेरन्यदेव निखिलजगदेककारणमपहतपाप्मत्वसार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणगणं परं ब्रह्मैवाकाशप्राणादि-शब्दाभिधेयमिति सिद्धम्। समाप्तं प्राणाधिकरणम ॥

अतः परं जगत्कारणत्वव्याप्तेन येन केनापि निरतिशयोत्कृष्टगुणेन जुष्टं ज्योतिरिन्द्रादिशब्दैरर्थान्तरप्रसिद्धैरप्यभिधीयमानं परं ब्रह्मैवेति प्रतिपाद्यते "ज्योतिश्चरणाभिधानादित्यादिना, ।

टी० "परिहारस्त्वि"ति, आदि-शब्दोक्तं आकाशादिः, प्राणन्तर्हि वागप्येतीति श्रुतिरिन्द्रियव्यापारविषया, प्राण-शब्दस्य परब्रह्मवाचित्वङ्कथ? मिति शङ्कां परिहरन् अधिकरणार्थमुपसंहरति "अत" इति, वृत्ताधिकरणद्वयस्य अवान्तरपेटिकात्वं दर्शयति "अतः प्रसिद्धे' ति, प्राणाधिकरणं समाप्तम् ।

वर्त्तिष्यमाणाधिकरणद्वयस्य पेटिकान्तरत्वमाह "अतः परमि"ति, वस्त्वन्तरासाधारणैशब्दैर्जगत्कारणे निर्दिश्यमानेऽपि कारणत्वाभिधायिनां वाक्यानां विशेषपर्यवसान कृतम् । अथ कारणत्वाक्षेपकलिङ्गवाचिनां वाक्यानामभिमतविशेषपर्यवसानमुच्यत इत्यवान्तरपेटिका ज्योतिरधिकरणभेदस्तत्सङ्गतिश्चेत्यर्थः ज्योतिः-शब्देनावान्तरसङ्गतिश्च कीर्तिता, प्राणो-वायुविशेषः, आदित्यादिज्योतिस्तेजोविशेषः, अतः आकाशप्राणज्योतिषां क्रमो युक्त इति । नन्वात्काशादिशब्दत्रयं परमात्मपरमिति सिद्धान्तितं सत्यन्तथाऽपि प्रसिद्ध्यनुसारिण्या पूर्वपक्षदृष्ट्या सङ्गत्युपपत्तिः, येन केनापीति न लिङ्गात्पत्वं विवक्षितं किन्तूदाहृतविषयवाक्यप्रतिपन्नोऽयमेव गुणः कारणत्वापेक्षक इति गुणविशेषानियम इति भावः । उभयोः पेटिकयोरनुयायिनीमाकाङ्क्षां दर्शयति "अर्थान्तरप्रसिद्धेरपी"ति,

ज्योतिरधिकरणम् । सू० ज्योतिश्चरणाभिधानात् ॥ २५ ॥

भू० इदमाम्नायते छान्दोग्ये "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योति"रिति, तत्र सन्देहः किमयं ज्योतिश्शब्दनिर्दिष्टो निरतिशयदीप्तियुक्तोऽर्थः प्रसिद्धमादित्यादिज्योतिरेव कारणभूतः ब्रह्म? उत समस्तचिदचिद्वस्तुजातविसजातीयः परमकारणभूतोऽमितभास्स्वरूपः सत्यसङ्कल्पः पुरुषोत्तम? इति, किं

युक्तं प्रसिद्धमेव ज्योतिरिति, कुतः प्रसिद्धवन्निर्देशोऽप्याकाशप्राणादिवत्स्ववाक्योपात्तपरमात्मव्याप्त–

टी० सू· "ज्योतिश्चरणाभिधानात्" इदमित्यादि–पृष्ठेषु उपरितनेषु त्रिपादूर्ध्वस्तमसोपरिष्टादित्यादिश्रुतिभ्यः व्यष्टिसमष्टिविवक्षया विश्वतस्सर्वत इत्युक्तम् । अनुत्तमेषु स्वस्मादन्य उत्तमो नास्तीत्यनुत्तमः, विश्वतः– कृत्स्नभूमिप्रदेशात्, सर्वतः–कृत्स्नान्तरिक्षप्रदेशात् पृष्ठेषु वा भूतेष्विति योजनासम्भवात्पूर्वपक्षोत्थानम्, आदित्योह्यूर्ध्वलोकेष्वपि रश्मिद्वारा दीप्यते, तत्रेति लोकप्रसिद्धि भूतचरणत्वाभ्यां संशयः, निरतिशयदीप्तियुक्तोऽर्थ इति पूर्वपक्षसिद्धान्तसाधारणनिर्देशः, निरतिशयदीप्तिरेव कारणत्वापेक्षकं लिङ्ग, 'न तत्र सूर्यो भाति तस्य भासा सर्वमिदं विभाती"ति प्रकरणे "तथाऽक्षरात्सम्भवतीह विश्वमि' ति निरतिशयदीप्तियुक्तवस्तुनः कारणत्वश्रवणात्तत्प्रकारणस्य कारणविषयत्वं त्वविगीतं, परमात्मविषयत्वे हि विमतिः निरतिशयदीप्तियोगात्कारणभूतं ब्रह्म भवतु ज्योतिश्शब्दनिर्दिष्टोऽर्थः किं प्रसिद्धमादित्यादि ज्योतिरेवेत्यन्वयार्थ·, सावान्तरभेदसमष्टिव्यष्ट्यादिविवक्षया समस्तविदविद्वस्तुजातशब्दो, व्याप्तिग्रहणस्यानोपनिषत्प्रसिद्धं विशेषणमाह "सर्वज्ञस्सत्यसङ्कल्प" इति,' यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयन्तप 'इति हि श्रूयते अस्यामुपनिषदि पुरुषसूक्तप्रत्यभिज्ञानात् पुरुषोत्तम इत्युक्तम्, "अथ यदतः परो दिवो ज्योतिर्दीप्यते इत्यत्र ज्योतिश्शब्दः किं प्रसिद्धादित्यादिज्योतिर्विषय? उत परमात्मपर· इति तदर्थे पूर्ववाक्ये द्युसम्बन्धितया निर्दिष्टस्य परमात्मन, किमत्र प्रत्यभिज्ञानं नास्ति ? उतास्ति ? तदर्थं कौक्षेयज्योतिषैक्योपदेशः उपदेशभेदश्च किं प्रत्यभिज्ञाविरोधिनौ ? उताविरोधिनौ ? पूर्वस्मिन् ब्राह्मणवाक्ये गायत्रीशब्दः किं प्रसिद्धगायत्रीपर ? उत नेति विचारः, यदा विरोधिनौ गायत्रीशब्दार्थश्च प्रसिद्धः तदाऽस्मिन्वाक्ये परमात्मप्रत्यभिज्ञाऽभावात् द्युसम्बन्धिज्योतिः प्रसिद्धादित्यादिज्योतिरेवेति पूर्वपक्षे फलफलिभावः, यदा कौक्षेयज्योतिषैक्योपदेशो विभक्तिभेदश्च न परप्रत्यभिज्ञाविरोधिनौ गाय-

त्रीशब्दश्च ब्रह्मपरः तदा पूर्ववाक्योक्तद्युसम्बन्धिपरमात्मन इह प्रत्यभिज्ञानाद्ध्रुवः परत्वेनोक्तज्योतिः-

सू० लिङ्गविशेषादर्शनात् परमपुरुषप्रत्यभिज्ञानासम्भवात्कौक्षेयज्योतिषैक्योपदेशाच्च प्रसिद्धमेव ज्योतिः कारणत्वव्याप्तनिरतिशयदीप्तियोगाज्जगत्कारणं ब्रह्मेत्येवं प्राप्ते प्रचक्ष्महे-

ज्योतिश्चरणाभिधानात् ॥ २५ ॥

टी० परमात्मैवेति सिद्धान्ते फलफलिभावः । ननु कथं स्ववाक्ये परमात्मलिङ्गाभावः? निरतिशयदीप्तियोगाक्षिप्त कारणत्वं हि परमात्मलिङ्गं नैवं, न हि जगत्कारणत्वमात्रम्परमात्मलिङ्गम् अपि तु कारणत्वविशेष एव तल्लिङ्ग कृत्स्नचेतनाचेतनं प्रति सर्वविधकारणं हि परमात्मा पूर्वाधिकरणद्युर्विषयवाक्ये ऽपि सर्वाणि ह वा इमानि भूतानीति समस्तचेतनाचेतनं प्रति कारणत्वरूपं परमात्मलिङ्गं स्ववाक्यस्थन तथा ऽत्र परमात्मलिङ्गभूतकारणत्वविशेषः स्ववाक्ये दृश्यते इत्यभिप्रायेणोक्तं परमात्मव्याप्तलिङ्गविशेषादर्शनादिति । ततः किमित्यत्राह 'परमपुरुषे''ति, हेत्वन्तरमाह ''कौक्षेय' ति, प्राकृततेजस्तत्त्वकार्यतया ऽऽदित्यादेः कौक्षेयज्योतिषश्च एकजातीयतया सामानाधिकरण्यनिर्देश ऐक्योपदेशः, कौक्षेयज्योतिषश्च भौतिकत्वं उष्णत्वघोषगुणकत्वाम्नानात्सिद्धं ''तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपि गृह्य निनदमिव नदथुमिवाग्नेरिव ज्वलत उपशृणोतीति हि श्रूयते प्रसिद्धमेव ज्योतिरिति, आदित्यादौ ज्योतिश्शब्दस्य प्रसिद्धत्वादिति भावः । एवं स्ववाक्येत्यादिना कौक्षेयेत्यादिना च स्ववाक्ये विरोधिलिङ्गाभावान्यानुकूललिङ्गसद्भावौ दर्शितौ भवतः । दीप्यत इति श्रूयमाणा दीप्तिश्च रूपवत्पदार्थनिष्ठा भवतीत्यभिप्रेतम्, अस्यापि हेतोः परिहरिष्यमाणत्वात् सर्वगतस्य ब्रह्मणो द्युमर्यादत्वासम्भवस्तु परैः पूर्वपक्षहेतुतयोक्तो भाष्ये नादृतः भौतिकज्योतिषोऽपि द्युमर्यादत्वासम्भवात्, सर्वत्र भौतिकानि ज्योतींषि हि वि-

द्यन्ते, उपासनार्थं प्रदेशविशेषपरिग्रहस्तु ब्रह्मणोऽप्युपपद्यते लोकेष्वित्यधिक-रणबहुत्वप्रतीतिश्च सर्वत्र सतो ब्रह्मण उपपन्ना तदेतद्दृष्टं च श्रुतं च चेत्यु-पासीत चक्षुष्यः श्रुतो भवति य एवं वेदेत्यल्पफलत्वश्रवणान्तु ब्रह्मविदा-मपि विद्यानुकूलसकलप्रदत्वात्परमात्मन उपपद्यते । एवमेतेषां हेतुनाम-धिकरणान्तरपरिहार्यत्वादमी पूर्वपक्षेऽनादृताः एवं प्राप्त—इति चरणत्वेन सर्वभूताभिधानं कारणस्य जीववैलक्षण्यनिश्चायकं जीवमात्रस्य सर्वभूत-पादवत्त्वानुपपत्तेः, ततः एव पुरुषसूक्तप्रत्यभिज्ञापकतया देवताविशेषनि-श्चयः तद्द्वारा दीप्तियोगस्य भौतिकज्योतिष्ट्व हेतुतापरिहारश्च भवति पुरुषसूक्तं कस्मात्सूत्रकारेण न निरूपितं? संशयहेत्वभावादिति ब्रूमः सन्दिग्धे हि न्यायः प्रवर्त्तते, पुरुषसूक्ते च ज्योतिश्शब्दः छन्दोऽभिधाना-दिकं प्रधानक्षेत्रज्ञासाधारणलिङ्गान्तरं वा क्वचिन्न दृश्यते सर्वभूतपादवत्त्वा-दिधर्माश्च तयोरसम्भाविता, तर्हि चिदचिद्विलक्षणकारणास्तित्वविषयस्य प्रथमपादस्यानारम्भः स्यादिति चेत् न बहूनां वेदान्तवाक्यानां प्रकृतिपुरुष-कारणमात्रवादित्वे तद्विरोधेनात्रापि संशयप्रसङ्गात्, तेषाम्भूयसाम्बलीय-स्तया विपरीतस्य निश्चयप्रसङ्गाच्च, तद्व्युदासायारम्भणीयत्वात् तेषु च प्रकृतिपुरुषविलक्षणविषयतया न्यायतो निश्चितेषु संशयविपर्ययाभावा-त्पुरुषसूक्तस्य चिदचिद्विलक्षणे परे ब्रह्मणि प्रामाण्यमप्रतिभटमवतिष्ठते अतो न तत्र निरूपणीयं, तस्य च तत्त्वपरत्वे पुरुषसूक्तस्य भगवत्परत्वं तत्र महापुरुषसंज्ञदेवताविशेषविषयत्वमप्यविगीतम्, अनेकोपपत्तिसिद्धञ्च तथा हि—

सू० द्युसम्बन्धितया निर्दिष्टन्निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव, कुतः "पादोऽस्य सर्वा—

टी० इदं नाग्रत् "अग्निमीडे पुरोहितम्" "अभित्वा शूर नो नुमः स्तो-मीन्द्रं नाधितो जोहवीमि स्तौम्यग्निर्नाधितो जोहवीमीत्यादिवत् अस्य स्ववाक्यत्र स्तुतिपरत्वमवगमयति 'अर्हन् बिभर्षि सायकानि धन्वेत्याह स्तौम्येवैनमेतत् ततो दे वा ऊर्द्ध्ववाहवोऽद्रमस्तुवन्नित्यादेरिव वाक्यान्तरे-

णास्य स्तुतिपरत्वमवगम्यते, नापि स्तुतिपरत्वलिङ्गमुपलभ्यते न हि "नमस्तेऽस्तु मामाहिंसीर्देहि मे ददामि त" इति वत् नमस्कारोऽनिष्टनिवृत्तीष्टलाभप्रार्थना वा दृश्यते विश्वस्मादिन्द्र उत्तरः तस्य वज्रमादाय शीर्षाण्यच्छिनत् तम्भूतान्यभ्यक्रोशन् ब्रह्महन्" निति "अग्निस्सर्वा देवताः अग्निं वै जातं पाप्मा जग्राहेत्यादिभिरग्नीन्द्रादीनामिव प्रतिपक्षस्य प्रकर्षस्य बाधकश्च न दृश्यते, न हि परमपुरुषस्य कार्यत्वकर्मवश्यत्वादिकं क्वचिदनन्यपरवाक्ये नावगम्यते "आकाशो ह वै नाम" "यतो वा इमानीत्यादिवाक्यानामिवानुवादरूपतया नान्यसाकाङ्क्षत्वं[1] प्रतीयते तदेषाभ्युक्ता तदेतदृचाभ्यनूक्तमितिवत् स्वोपदिष्टार्थसाक्षित्वेन प्रमाणान्तरानुपस्थानाच्च नैरपेक्ष्यमवगम्यते, तदेतदृचाऽभ्यनूक्तम् तावानस्य महिमेत्यादिभिस्साक्षित्वेनोदाहृतत्वाच्च स्वयमन्यानपेक्षस्य प्रमाणान्तरोपजीव्यत्वं च प्रतीयते "इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते । ऋतं सत्यं च विख्यातम् ऋषि सिंहेन चिन्तितम्" इति मोक्षधर्मे, तत्त्वनिष्कर्षकतया व्यासेनोदाहृतम्, अत्र च सर्वेषु वेदेषु पठिततया सन्निहितत्वात्तत्तच्छाखागतानां तत्त्वपरवाक्यानामाकाङ्क्षितयोग्यविशेषसमर्पकतयाऽनुरोद्धव्यमिदमवगम्यते, एवं तत्त्वपरस्यास्य सूक्तस्य देवताविशेषपरत्वं दुरपन्हव 'पुरुषो ह वै नारायणोऽकामयतेति बृहदारण्यके पुरुष–शब्दस्य नारायणपरत्वदर्शनात् । किञ्च छान्दोग्ये "एषा वैष्णवी नाम संहिता एतां प्रयुञ्जन् विष्णुं प्रीणाती'त्युक्तम्, अथर्वणे अष्टादशमहाशान्तिप्रकरणे तत्तद्दैवत्यशान्तिषु तत्तद्दैवत्यमन्त्रविनियोगावसरे 'वैष्णव्यां पुरुषसूक्त"मिति वैष्णव्यां शान्तौ पुरुषसूक्तं विनियुज्यते तथा "आद्यया वाहयेद्देवमृचा तु पुरुषोत्तममित्यादिना शौनकेन भगवत्समाराधने "जितं ते इत्यादिमन्त्रतुल्य विनियुज्यते महापुरुष–शब्दश्च कल्पसूत्रकारैर्देवताविशेष एव प्रयुक्तः "महादेवं वा महापुरुषं वाऽर्चयेदि"ति इह च "वेदाहमेतं पुरुषं महान्तम्" इत्युच्यते अतश्च भगवदसाधारणन्तथा "पुरुषस्य हरेस्सूक्तं स्वार्थं धन्यं यशस्कर"मिति स्मर्यते, तथा "योऽनूचानं द्विजं मर्त्यो हतवानर्थलोभतः । स पठेत्पौरुषं सूक्तं स्मरन् विष्णुं जले सकृदि"ति यमस्मृतौ

[1] नास्य साकाङ्क्षत्वमिति ।

रहस्यप्रायश्चित्तेऽप्युक्तं, तथा योगवासिष्ठे "आसीनः प्राङ्मुखः शुद्धः चिन्तयन्मनसा हरिम् पौरुषेणैव सूक्तेन जुहुयाद्धव्यवाहने" मित्युक्तं लक्ष्मीपतिप्रतिपादकोत्तरनारायणसमानप्रकरणं चेदम् "सहस्रशीर्षा पुरुषः पुरुष एवेदं सर्वमिति नारायणानुवाकैकार्थ्यञ्च प्रतीयते पुरुष एवेदं सर्वमिति वाक्येन सुबालोपनिषदैकार्थ्यञ्च प्रतीयते, तत्र हि दिव्यो देव एको नारायण इति नारायणपरत्वमवगम्यते, तत्र च पुरुष एवेदं सर्वमित्युपसंहृतम्, तथा पाद्मे पुराणे "ब्रह्महत्यादिपापानां सर्वेषामपनुत्तये । पठेत्तु पौरुषं सूक्तमेकान्ते सस्मरन् हरि" मित्युच्यते,तथा स्कान्दे "यथा भास्कर–शब्दोऽयमादित्ये प्रतितिष्ठति । यथा चाग्नौ बृहद्भानुर्यथा वायौ सदागतिः तथा पुरुष–शब्दोऽयवासुदेवेऽवतिष्ठते तथा शङ्करशब्दोऽयं महादेवे व्यवस्थित इति शङ्करशब्ददृष्टान्तत्वेन पुरुष–शब्दस्य भगवदसाधारणत्वकथनाच्च पुरुषसूक्तस्य तदसाधारण्यं प्रतीयते । पाद्मे पुराणे नामनिर्वचनाध्याये "पूस्सञ्ज्ञे तु शरीरेऽस्मिन् शयनात्पुरुषो हरिः । शकारस्य षकारोऽयं व्यत्यासेन प्रयुज्यते ॥ यद्वा पुरे शरीरेऽस्मिन् आस्ते स पुरुषो हरिः । यदि वा पुरि वासीति पुरुषः प्रोच्यते हरिः । यदि वा पूर्वमेवासमिहेति पुरुषं विदुः । यदि वा बहुदानाद्धि विष्णुः पुरुष उच्यते । पूर्णत्वात्पुरुषो विष्णुः पुराणत्वाच्च शार्ङ्गिणः पुराणभजनाच्चापि विष्णुः पुरुष उच्यते । यद्वा पुरुष–शब्दोयं रूढ्या वक्ति जनार्दन" मिति च योगरूढत्वमवगम्यते अतः पुरुषप्रतिपादकं सूक्तं भगवदसाधारणमिति चरणाभिधानादिति वदता सूत्रकारेण देवताविशेषनिष्कर्षः कृतः, सोऽपि चैवं विशदतममुक्तं भगवता भाष्यकारेण अतो यथोक्तार्थ उपपन्नः, अत्र पादोऽस्येति मन्त्रे त्रिपादस्यामृतं दिवीति द्यु–शब्देन द्योतमानसंविदात्मस्वरूपमुच्यत इति केचिदाहुः, तदानीमस्य दिवीति व्यतिरेकनिर्देशस्य क्लिष्टता स्पष्टा । किञ्च द्युसम्बन्धप्रत्यभिज्ञापकतया तदैकार्थ्यत्वेन सूत्रकारेणोदाहृते "अथ यदतः परो दिवो ज्योतिर्दीप्यत इति वाक्ये पञ्चम्यन्ततया श्रूयमाणेन द्यु–शब्देन विरोधश्च स्यात्, न हि द्योतमानमात्मस्वरूपं स्वस्वरूपात्परं भवति । दिवि हृदयाकाशे स्थितमिति भास्करः, तदयुक्तम् अतः परो दिवो ज्योतिर्दीप्यते विश्वतः

पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विति श्रुतिविरोधात् न हि हृदयाकाशो दिव उपरितनेषु लोकेषु वर्त्तते परमात्मन आदित्यमण्डलेऽप्यवस्थानात् तद्विषयत्वाद्वाक्यमिति चेन्न रविमण्डलस्य भूमेर्योजनलक्षेऽवस्थितस्य विश्वप्रपञ्चबहिर्भावाभावात्, विश्वसर्वशब्दयोर्भूम्यन्तरिक्षमात्रपरत्वे स्वारस्यभङ्गाच्च । किञ्च पञ्चम्यन्तसप्तम्यन्तयोर्द्यु-शब्दयोरविरोधेनार्थैकत्वं चतुर्थसूत्रे समर्थितं, तच्च तयोर्हृदयाकाशरविमण्डलपरत्वेऽनुपपन्नं विश्वसर्वशब्दस्वारस्यभङ्गप्रसङ्गादेव द्यु-शब्दस्य प्रसिद्धद्युपरत्वं चायुक्तं जाग्र-

सू० भूतानि चिपादस्यामृतन्दिवीत्यस्यैव द्युसम्बन्धिनः चरणत्वेन सर्वभूतानामभिधानात् ।

त्स्वप्नसुषुप्त्यवस्थासु जीवसञ्चारभूमितया त्रेधा विभक्ता कार्याकाशप्रदेशविशेषप्रदेशास्त्रयः पादाः तदुपलक्षण कारणब्रह्मस्वरूपं त्रिपादस्यामृतमुच्यत इति चायुक्तम् अस्य त्रिपादिति व्यतिरेकनिर्देशस्यामुख्यत्वात्, जीवस्य जाग्रदवस्थायां बाह्याकाशसञ्चारभूमिरिति चायुक्तं तदानीमपि शरीरान्तर्वर्तित्वात् स्वप्ने शरीराकाशवर्त्तित्वमप्ययुक्तम् ईश्वरसृष्टशरीरैर्बहिरप्यवस्थानात् तदनभ्युपगमेऽपि पूर्वसंस्कारसहकृतमनोव्यापारमात्रेण हृदयावस्थानेऽपि जीवस्य स्वाप्नप्रमोपपत्तेः, स्वप्ने जीवस्य हृदयान्निष्क्रमणस्य निष्प्रमाणकत्वाच्च, हृदि ह्ययमात्मेति जीवस्य स्वतो हृदयावस्थान श्रूयमाण स्वप्नावस्थायां कथं वचनेन विनाऽपोह्यते, तस्माद्वृचोऽयमर्थः सर्वाभूतानीति कार्यजगदन्तर्गताचित्संसृष्टचेतना उच्यन्ते द्यु-शब्दस्तु समस्तव्यष्टिसमष्टितत्त्वबहिर्भूतस्थानविशेषपरः "विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वि"ति श्रवणात् विश्व-शब्दविवरणं सर्व-शब्द इति गत्यभावलिङ्गं तथाऽक्षरात्सम्भवतीह विश्वमिति जगदन्तर्वर्त्तिव्यष्टिजाते विश्वशब्दप्रयोगात् विश्वशब्दो व्यष्टिपरः सर्व-शब्दः परिशेषात्समष्टितत्त्वपरः, अत एव गद्ये[१]ऽपि गदितं भाष्यकारैः "समस्तं "कार्यकारणजातमतीत्य वर्तमान" इति पुरुषसूक्ते "तेह नाक महिमानस्सचन्त" इति मुक्तप्राप्यदेशस्य,

१ श्रीभाष्यकाराचार्यप्रणीतग्रन्थरत्नेनुवके गद्यत्रयं नाम ग्रन्थः ।

नाक–शब्देनोक्तत्वात्, मुक्तस्य च दुःखमिश्रकार्यलोकानां हेयत्वात् नास्माऽऽकं भवतीत्यवयवार्थपौष्कल्योपपत्तेः, तत्रैव तमसः परस्तादिति विशेषितत्वात्, क्षयं तमस्य रजसः पराक इति निवासशब्दात् तदक्षरे परमे व्योमन् विश्वम्भुराणां तमसः परस्तादिति तमसः परस्य स्थानस्य स्थानिनो ब्रह्मणश्च व्यतिरेकनिर्देशात्, तस्य तमसः परत्वविशेषणेन पुरुषसूक्तप्रत्यभिज्ञानाच्च दिवीत्यप्राकृतं स्थानमुच्यते, त्रिपात्स्वरूपस्य अप्राकृतैर्भोग्यभोगोपकरणभोगस्थानविशेषैर्वा भूषणास्त्रादिरूपेण जगदन्तर्गतवस्त्वभिमानिभिर्नित्यैर्भगवदनुभवमात्रपरैश्च नित्यसिद्धैर्मुक्तैश्चात्मभिर्वा सम्भवतो, एवास्य दिवीति व्यतिरेकनिर्देशो ऽमृतत्वं च मुख्यं भवतीति, एवं पूर्ववाक्ये ऽसम्बन्धिनश्चरणाभिधाने सति कथमस्य वाक्यस्य परमात्मपरत्वम्? एकविषयत्वादिति चेत् कथमेकविषयत्व? मित्यत्राह–

(शेषमग्रे)

---

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

*(Continued from page* 153. Vol. XII*)*

मयात्रज्जीवं दर्शपूर्णमासयोरारम्भणीयेष्टेः सकृदनुष्ठानाधिकरणम् ।

सू० इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया ॥ १० ॥

दर्शपूर्णमासप्रकरणेऽन्वारम्भणीयाऽऽम्नाता,"आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः सरस्वत्यै चरुं सरस्वते चरुमि"ति, सा किं दर्शपूर्णमासावृत्तावावर्त्तेत? उत सकृदेवादौ स्या? दिति संशयः, "आवृत्तौ हि प्रधानानामङ्गावृत्तिरसंशया । दर्शाद्यङ्गमियन्तस्मादावर्त्तेत प्रयाजवत्" । उच्यते,"आरम्भद्वारकं त्वेतदङ्गं साधारणश्च सः। तस्य साधारण-

त्वेन सापि साधारणी भवेत्", आरप्स्यमानसंयोगादारम्भाङ्गमिष्टिर्न साक्षा-द्दर्शपूर्णमासाङ्गम्, आरम्भश्चेदं मया कर्त्तव्यमित्यध्यवसायः, स च सर्वप्र-योगसाधारणः सर्वो ह्यग्नीनाधायैवमध्यवस्यति यावज्जीवं मया दर्शपूर्ण-मासौ पर्वणि पर्वणि कर्तव्याविति, तस्मादारम्भसाधारण्यात्तदङ्गभूता-न्वारम्भणीयाऽपि साधारणी न प्रतिप्रयोगमावर्त्तनीया, एवं वृत्तिकारमते नाधिकरणं व्याख्याय तत्रापरितोषाद् व्याख्यानन्तरं भाष्यकारेण कृतं कस्य हेतोरपरितोषः, नाध्यवसायवचनोऽयमारम्भ-शब्दः प्रथमप्रवृत्तिवाची हि लोके प्रसिद्धः, यद्यपि नाध्यवसायवाची स्यात्तथापि यद्यदा कार्यमुपस्थितं तस्यैव तदाऽध्यवसायो न च यावज्जीविकाः प्रयोगा युगपदुपस्थिताः, न ह्ययमेकः प्रयोगोऽभ्यस्तरूपः पूर्वका[1]लीनन्तु जीवनं दर्शानुष्ठाने निमित्तं तस्मिन्नागते नैमित्तिकं समाप्तं कृत्वा चरितार्थे पुरुषे पुनस्तादृशनिमित्तव-शात् नैमित्तिकमापतितमिति पुनः क्रियते, यथैकस्मिन्पुत्रे जाते वैश्वानरीं निरूप्य पुत्रान्तरजन्मन्यपि पुनर्निर्वपति तादृगेतत्, तस्मात्प्रतिप्रयोगमध्य-वसायभेदात्तदङ्गमारम्भणीयाऽऽप्यावर्त्ततेति तत्सि[2]द्धान्तसिद्धिस्तस्माद्देवं व्याख्यायते किं प्रथमस्याग्न्यन्वाधानात्मकस्य पदार्थस्याङ्गमिय? मुत दर्श-पूर्णमासावारम्भमाणस्य प्रथमं प्रवर्तमानस्य पुरुषस्याङ्गमिति तत्र । "पुरुषा-र्थत्वपक्षे हि फलक्लृप्तिः प्रसज्यते । तेनान्वाधानशेषः स्यात्स ह्यारम्भोऽनयो-र्यतः । तस्यावृत्तौ तदङ्गत्वादेषाऽऽप्यवृत्तिमश्नुते । प्रधानवशवर्तित्वाद्देवं प्राप्तेऽभिधीयते न खल्वारम्भ-शब्देन पदार्थः कश्चिदुच्यते । यदेव ह्यप्रवृ-त्तस्य कर्त्तुराद्यं प्रवर्त्तनम् । तत्रायं वर्तते शब्दस्तद्योगात्तु पदार्थधीः । आर-प्स्यमानशब्दस्तत्कर्त्तुः श्रुत्यैव वाचकः । लट्प्रत्ययोऽपि श्रुत्यैव तदर्थस्या-भिधायकः । आद्या प्रवृत्तिरेकैव बह्वी नैकस्य कर्मणः ॥ प्रथमप्रवृत्तिविष-यतया ह्यन्वाधानमेव प्रतिपाद्यते न श्रुत्या, न च श्रुतिसम्भवे लक्षणा युक्ता, तस्मान्नाग्न्यन्वाधानेन सम्बन्धः, दर्शारम्भकर्त्तुः पुरुषस्य शानचाऽभिहितस्य संस्कारिकेयम्, आरम्भार्थतया लट्प्रत्ययेन क्रियार्थायां क्रियायामुपपदे विहि

१ पर्वकालीनं तु इति पा०।
२ न सिद्धान्तसिद्धिरिति ।

तेनेयं प्रतिपाद्यते, अतो न पुरुषार्थत्वेऽपि फलकल्पना, न चैकस्य कर्मणो बह्व्यः प्रथमप्रवृत्तयः सम्भवन्ति, किं त्वेकैव। ननु द्वितीयादीनपि प्रयोगानसावारभत एव सत्यं, प्रयोगानारभते न तु दर्शपूर्णमासावारभते दर्शपूर्णमासारम्भाङ्गं त्वियं प्रथमप्रवृत्तिश्चारम्भः, न च द्वितीयादि प्रयुञ्जानः प्रथमं प्रयुङ्क्ते इति शक्यते वक्तुं, तस्मादारम्भाङ्गत्वात्तस्य चावृत्त्यभावादारम्भणीया नावर्तते॥

निर्वापमन्त्रे सवित्रादिशब्दानामनूहाधिकरणम्।

सू० अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तत्राचोदितमप्राप्तं चोदिताभिधानात्॥ ११॥

दर्शपूर्णमासयोर्निर्वापमन्त्रः "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी"ति तत्र सवित्रश्वि-पूष-शब्दाः किं समवेतदेवताप्रकाशनार्थास्ततश्च विकृतावूहितव्या? उतासमवेतवचना निर्वापविशेषणमात्रार्था नोहितव्या? इति,"तत्र दृष्टार्थतालाभाद्देवतावाचिता भवेत्। निर्वापस्य प्रशंसार्थाः सन्त्वादृष्टार्थतामियुः। सवित्रादिपदैस्तस्मादग्न्यादिरभिधीयते। अग्निना वा विकल्प्येत सविता मान्त्रवर्णिकः। उत्पत्तौ तद्धितोक्तेन न मन्त्रोक्तो विकल्पते। वैषम्याच्च सवित्रादिपदमग्नेश्च वाचकम्। मन्त्रवाक्यानि चैतानि भिद्येरन् प्रतिदैवतम्। जुष्ट-निर्वाप-शब्दौ च भजेतामनुषङ्गिताम्। सर्वश्च निर्वपाम्यन्त एकमन्त्रः प्रतीयते। जुष्टादिः सकृदाम्नातो न सहेतानुषञ्जनम्। तस्मान्निर्वापमेवैते प्रशंसयितुम् अनुष्ठानकाले प्रशंसितुं प्रकाशयन्तीति नोहितव्याः॥

अग्नये जुष्टमिति मन्त्रे अग्नि-शब्दस्य विकृतावूहाधिकरणम्।

सू० गुणशब्दस्तथेति चेत्॥ १२॥

तस्मिन्नेव मन्त्रेऽग्नये जुष्टं निर्वपामीत्यग्नि-शब्दोऽपि किमसमवेतवचनो नोहितव्यः? उत समवेतवचन ऊहितव्यः? इति तत्रायं समवेतोऽग्निरस्मिन् कर्मणि यद्यपि मन्त्रे त्वत्राग्नि-शब्दो न समवेताभिधायकः जुष्टमिति भूतकालनिर्देशादग्निना यत्सेवितं तदुच्यते, न च निर्वापवेला-

यामग्निना सेवितं द्रव्यं तस्माज्जुष्ट-शब्दस्तावदसमवेतवचनः, तद्विशेषणं चाग्निपदम् अतोऽसमवेतवचनं सवित्रादिपदवत्प्रशंसार्थं कीर्तितमित्यनूह-उच्यते "नात्र जुष्टस्य निर्वापो मन्त्रेणानेन कथ्यते। निर्वापकरणात्त्वत्र कीर्त्यते जुष्टभावना"। नायमर्थः यज्जुष्टन्तस्य निर्वापं करोमीति, किं तर्हि निर्वापेणाग्नये जुष्टं करोमीति यथा जुष्टं भवति तथा करोमीत्यर्थः, तस्मात्समवेतवचनत्वादग्नि-शब्दस्योहः, एवं वा यस्तु मुख्यवृत्त्या समवेतं न वदति यथा धान्यमसि धिनुहि देवानि"ति तण्डुलेषु धान्य-शब्दस्तुषद्रव्यवचनः स किमसमवेतवचनत्वानूह्य? उतोह्य: इति संशये, समवेतप्रकाशनासामर्थ्याददृष्टार्थोऽयं तस्मादनूह्यः, लक्षणया तु प्रकृतिवदुपचाराद्विकृतिं प्रकाशयन्दृष्टार्थः कल्पयितुं न्याय्यः, तस्मात्तण्डुनानेव प्रकृतिशब्देन शालयो भुज्यन्त इतिवत्प्रकाशयति इति इतरथमये हविषि वाक्यानामयनेमां ममसीत्यूहितव्यमार्थिकी च प्रकृतौ धान्यशब्दाम्नानाल्लक्षणा न तु सैव विवक्षिता विकृतौ लक्षणा कारणाभावान्मुख्य एव मांस-शब्दः प्रयोक्तव्यो। न मृग-शब्दः॥

इडोपहृानमन्त्रे यज्ञपति-शब्दस्यानूहाधिकरणम् ।

सू॰ चोदिते तु परार्थत्वाद्विधिवद्विकारः स्यात् ॥ १३ ॥

दर्शपूर्णमासयोरिडानिगदे श्रुतम्, उपहूता मनुष्या ये यज्ञपतिं वर्धानि'ति किमेते यज्ञपतिवृद्धिप्रकाशनेन प्रोत्साहकरणेन तत्संस्कारार्थं सदनेकयजमानकेषु कर्मसूहितव्य? मुतेडास्तुत्यर्थो यज्ञपति-शब्दो नोहितव्य? इति, "इडामन्त्रैकवाक्यत्वादिडास्तुत्यर्थता भवेत्। स्वामिवृद्ध्यर्थता त्वस्य सामर्थ्येनावगम्यते॥ वाक्याच्च बलवल्लिङ्गं दृष्टं चेह प्रयोजनम्। उत्साहकरणात् स्तुत्यामदृष्टार्थत्वमापतेत्। यजमानेषु बहुषु सर्वसंस्कारसिद्धये ऊहो यज्ञपतीन्वर्द्धानित्येवं प्राप्त उच्यते। "प्रत्यक्षादेव वचनादिडोपह्वानशेषता कृत्स्नस्य निगदस्योक्ता तन्मध्या[1]पतितं ततः। न पृथग् भवितुं शक्तमतः स्तुत्यर्थता वरं वृद्धिप्रकाशे कल्प्यं लिङ्गेन विनियोजनम्। यच्छब्देन च पारार्थ्यं वृद्धेः श्रुत्याऽभिधीयते। लिङ्गादपि ततोवृद्धेर्न स्वार्थेन प्रकाशनं सत्रेषु

१ तन्मध्यपतितमिति पा॰ ।

चैकयजमानवृद्धिप्रकाशनेनेडास्तुतिसिद्धेर्नोहः, यत्र पुनर्यजमानस्य प्राधान्य न पारार्थ्यं यथा सूक्तवाके यं यजमान आयुराशास्त इति भवत्येवोहः, तदिदमुक्तं विकारस्तत्प्रधाने स्यादिति, तदिद पूर्वस्य परार्थग्रहणस्य प्रत्युदाहरणार्थं सूत्रम् ॥

अथवाऽधिकरणान्तरं सूक्तवाके यं यजमान आयुराशास्त इति यजमानशब्दः

किं सत्रेषूहितव्यो नेति प्रहरणाङ्गत्वात्सूक्तवाकस्य तद्गतमायुरादिकीर्तनं यज्ञपतिवृद्धिवत्स्तुत्यर्थमतो नोहः, उच्यते सर्वाण्येतानि आयुरादीनि श्रुतिविनियुक्तसकलसूक्तवाकाङ्गत्वान्यथानुपपत्त्या प्रस्तरप्रहरणस्य फलानि कल्प्यन्ते. क्रियान्तरसम्बन्धि वा प्रकाशयतो मन्त्रस्य करणताऽवकल्पते, तस्मात्प्रहरणसाध्ययजमानफलप्रकाशनमस्य कार्यं सत्रेषु यस्यैव यजमानस्य फल नोच्यते तस्यैव न सूक्तवाकः करणं स्यात्, न च फलं प्राप्नुयात् तस्मादूहः ॥

सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दस्यानूहाधिकरणम् ।

सू॰ असंयोगात्त[1]दर्थेषु तद्विशिष्टं प्रतीयेत ॥ १४ ॥

ज्योतिष्टोमे देवताप्रकाशनार्थः सुब्रह्मण्यानिगत इन्द्र आगच्छ हरि व आगच्छेत्यादिः सोऽग्निष्टुत्यतिदिष्टस्तत्राग्नेयी सुब्रह्मण्येति वचनादिन्द्रपदस्थानेऽग्निपदं निविश्यते हरिवदादिशब्दा अपि किमूहितव्या? नेति संशयः, तदर्थं च किं समवेतवचना? नेति तत्र पूर्वपक्षापरपक्षा वा इन्द्रस्य हरी इत्यादिभिरेते गुणा इन्द्रे सन्तीति गम्यते, सन्ति चेत्स्वगुणद्वारेणेन्द्रमेव प्रकाशयितुममीषामुच्चारणं दृष्टार्थं भवति, तेनाग्निरपि स्वगुणद्वारेण प्रकाश्यत इति हरिवदादिशब्दानपोद्धृत्य रोहितवदादिशब्दा ऊहितव्या इति प्राप्ते ब्रूमः "सत्स्वेतेषु गुणेष्वेवन्तत्सद्भावे तु न प्रमा। वाक्यशेषास्त्वदुक्ता ये स्तुतिमात्रपरा हि ते। इति तस्माददृष्टार्थमेवाविद्यमानैरेव गुणैः सम्बध्येन्द्रः प्रकाश्यत इत्यग्निरपि तैरेव गुणैः

[1] असंयोगादर्थेषु इति पा॰ ।

सम्बन्धुव्य इत्यनूहः । अथवेदमन्यदुदाह्रियते । ज्योतिष्टोमे एक-हायन्या मन्त्रः तस्यै शतन्तस्यै दधीत्यादिः स साण्डे त्रिवत्सेऽति-दिष्टः किमूहितव्यो नेति संशये यद्यप्येकहायन्यवस्थायां न विद्यन्ते शतादयस्तथापि भावित्वेनापि तावत्सम्भवद्भिः स्वगुणैरेकहायन्येव प्रका-श्यते दृष्टार्थत्वात्, त्रिवत्से तु अभावादूहः, नैतदेव कर्माङ्गभूतायामेकहा-यन्यवस्थायां तावन्न सन्त्येव, भावित्वमपि नैकान्तिकमरणसम्भवात् अतो यथाकथंचित्प्ररोचनार्थं कीर्त्यन्ते तावच्च साण्डेऽपि सम्भवति साण्डादपि या गौर्जनिष्यते तस्या एते ऽवाप्यमानाः साण्डादेवावाप्ता भवन्तीति, तस्मादनूहः ॥

स्वरस्वत्यामग्नेष्यामधिगुवचनाभावाधिकरणम् ।

सू० लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ १५ ॥

ज्योतिष्टोमे सवनीयाः पशव आग्नेयमजमग्निष्टोम आलभेत ऐन्द्राग्नमुक्थ्ये द्वितीयमैन्द्रं वृष्णि षोडशिनि तृतीयं सारस्वतीं मेषीं चतु-र्थीमतिरात्र इति तत्र पशुधर्मा यदा सर्वेषां साधारणास्तदा किमध्रिगुव-चनं मेष्यां भवति नेति संशये प्रकरणाविशेषात् 'प्रास्मा अग्निं भरते''ति पुं-ल्लिङ्गस्यास्मै-शब्दस्य नियतलिङ्गपशुशब्दाभिधेयपशुत्वाभिप्रायेण प्रास्मै पशव इत्येवं स्त्रियामप्युपपत्तेर्लिङ्गविरोधाभावात् तस्यामपि स्यादध्रिगुव-चनमिति प्राप्ते ऽभिधीयते । पशुशब्दश्रुतावेव भवेत्त्विह स श्रुतः । तस्मा-त्प्रयोगकाले यद्दपरोक्ततया स्थितम् । द्रव्य तत्र प्रयुक्तोऽयं पुंल्लिङ्ग वदितुं क्षमः न स्त्रीद्रव्यमतो मेष्यामशक्तेर्न प्रवर्त्तते तेन समानविध्यपूर्वपक्षे ऽध्रिगो-र्मेष्यामप्रवृत्तिः, सिद्धान्ते त्वग्निषोमीयार्थत्वाद्धर्माणामतिदेशेन पंशवन्तरग-मनादूहेन प्रवृत्तिः ॥

यज्ञायज्ञीये गिरा-शब्दस्य स्थाने इरापदस्यैव कर्तव्यताधिकरणम् ।

सू० आम्नानादन्यदधिकारे वचनात्तद्विकारः स्यात् ॥ १६ ॥

साम्नामिदानीमूहमारिप्समानस्तदुपोद्घातं चिन्तयति तानि ह्यव-रान्तरेषु समाम्नातानि अवरान्तरेषूह्यन्ते, तत्रेह गिरांपदगीतेरिरापद्

स्थानापत्त्या प्राप्तिं वक्तुं स्थानापत्तिमेव चिन्तयति, ज्योतिष्टोमे यज्ञायज्ञीये श्रूयते "न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयमि"ति किमिरापदस्य गिरापदस्थानापत्तिः पाक्षिकी गिरापदमिरापदं वा प्रयोक्तव्यम् ? उत नियता स्थानापत्तिरिरापदमेव प्रयोक्तव्य? मिति, "तत्रैरापदमात्रं वचनेन विधीयते। नोद्गानसम्बन्धः स्तोत्रसम्बन्धो वा प्रकरणात्तु स्तोत्राङ्गता भवति तदङ्गभूतस्य च तत्साधनभूतयज्ञायज्ञीयगानसम्बन्धः प्राप्त एवानूद्यते ततश्च काल्पनिकमेव स्तोत्राङ्गत्वं गानसम्बन्धश्च, गिरापदस्यापि चास्त्येव काल्पनिकमस्त्येवाङ्गत्वमित्यविशेषादुभयोर्विकल्पः, नैतदेवम् इरापदस्य हि प्रकरणेसनाथयाऽग्निष्टोमस्तोत्रसाधनभूतोद्गानसम्बन्धित्वेन विधीयमानस्य श्रुत्या गानसम्बन्धः प्रकरणाच्च स्तोत्राङ्गत्वं, गिरापदस्य तु प्रगाथैकवाक्यतया गानसम्बन्धः स्यात् क्रमाच्च स्तोत्राङ्गत्वं, गिरापदस्य तु प्रगाथैकवाक्यतया गानसम्बन्धः स्यात् क्रमाच्च स्तोत्राङ्गत्वं स्तोत्रक्रमेण हि ज्योतिष्टोमप्रकरणे पठ्यमानासु ऋक्षु यज्ञायज्ञीयप्रगाथोऽग्निष्टोमस्तोत्रक्रमे पठ्यते इति तदेकदेशस्य गिरापदस्यापि क्रमात्तदङ्गत्वं क्रमाच्च प्रकरणं बलीयः श्रुतिश्च वाक्यात् बलीयसी, अपि च गिरापदस्याम्नानमात्रं न विधिः इरापदं तु प्रत्यक्षविहितम्, अतोऽपि बलवत्। ननु च यज्ञायज्ञीयेन स्तुवीतेति प्रत्यक्षमेव यज्ञायज्ञीयं स्तोत्राङ्गत्वेन विहितं, सत्यं, साम्नः प्रत्यक्षम् ऋचस्त्वनुपपत्त्या कल्प्यम् एतदेव हि साम्नः स्तुतिसाधनत्वं यद्गुणाभिधानपराणामृगक्षराणामभिव्यक्तिः, अतो यज्ञायज्ञीयेन स्तुवीतेत्यस्यायमर्थः—यज्ञायज्ञीयाभिव्यक्तैर्ऋगक्षरैः स्तुवीतेति, तत्रापि सामाम्नानसिद्धाक्षराभिव्यक्तिरेव सति सम्भवेऽङ्गीकरणीया नान्यकल्पनं युक्तमिति यज्ञायज्ञीयप्रगाथस्यैवायं स्तुतौ विनियोग इति प्रकल्पते, तत्रापि सर्वपदानां साधारण्येन विनियोगो न विशेषतो गिरापदस्यैव, इरापदस्य तु साक्षाद्विशेषरूपेण साक्षाद् विनियोग इति बलवत्ता ॥

इरापदस्य प्रणीतताधिकरणम्।

सू० अप्रमाणाच्छब्दान्यत्वे तथाभूतोपदेशा[1]त् ॥ १७ ॥

---

१ तथाभूतोपदेशः स्यादिति पा०।

नियतमिरापदमिति स्थिते, किं तदप्रगीतं प्रयोक्तव्यं? उत प्रगीतमिति संशयः, तत्र "तदप्रगाणं भवेत्कस्मादप्रगीतस्य चोदनात्। प्रगीता तद्धितोत्पत्तावापौरीयं प्रसज्यते । यदि तावदैरमिति स्वार्थे तद्धितस्तत इरां कृत्वोत्स्तुयमित्येतावानर्थः स्यात्, अप्रगीतात् खल्विरापदादयन्तद्धितः प्रगीतात्तु तदुत्पत्तौ वृद्धं तालव्यं प्रथमस्वरं चेत्येवमिकारस्यापीभावे सति वृद्धाच्छ इति छप्रत्ययोत्पत्तेरापौरियमिति रूपं स्यात्, ऐरमिति रूपमप्रगीतादुत्पत्तौ सिध्यति, तस्मादप्रगीतस्यैवोपदेशादप्रगाणम्,। अथापि विकारार्थोयन्तद्धितस्तथाऽपि प्रगाणाप्रगाणयोरुभयोरप्यसरविकारत्वादन्यतरावधारणप्रमाणमन्यन्मृग्यन्ततश्चैरापदे विहिते यत्प्राप्तं प्रगाणमप्रगाणं वा तस्यैवायमनुवाद इत्यापद्यते,। तद्विधि[1]नावाप्रगाणमेव प्राप्तं तथाभूतस्योपदेशात्, तस्मादप्रगाणम् । उच्यते, "गिरापदस्य यत्स्थान तत्र ह्येदं विधीयते । इरापदमतस्तस्य या गीतिस्तां लभेत तत् । सत्यमप्रगीतात्तद्धितो न त्वप्रगाणं विधीयते । पदोत्त[2]रविधिपरं ह्येदं वाक्यं नाप्रगाणं प्रगाणं वा स्पृशति, तत्तु पदान्तरं गिरापदस्थाने विहितं स्थानापत्त्या तद्गीतिं लभमानं न केनचिद्वार्यते यज्ञायज्ञीयसाध्या हि स्तुतिः समस्तञ्च साम यज्ञायज्ञीयं नैकदेशविकलं, तत्र गिरापदे पदान्तरोपदेशान्निवृत्तेर्यस्तद्गतोगीत्यंशः स गेयमपेक्षते, इरापदमपि सामसाध्यस्तुतौ सामसंस्कार्यतामन्तरेण साधनीभवितुमशक्तं संस्कारकं सामांशमपेक्षते तयोर्नष्टाश्वदग्धरथवत्सम्बन्धः तस्मात्प्रगीतं प्रयोक्तव्यम् ॥

इति शास्त्रदीपिकायां नवमस्य प्रथमः पादः ।

## अथ द्वितीयः पादः आरभ्यते ॥

गीतीनां सामनामताधिकरणम् ।

सू० सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥

साम–शब्दस्तद्विशेषवचनाश्च रथन्तरादिशब्दा न प्रगीतमन्त्रस्य

१ तद्विधानाच्च प्रगाणमिति पा० ।
२ पादान्तरविधिपरमिति पा० ।

वाचकाः किन्तु गीतिमात्रस्यैवेति सप्तमे यदुक्तं तदेवेदमुत्तरविवक्षया स्मार्यते, एवं वा योयमूहो नामयन्थविशेषश्छन्दोगैः पठ्यते कयानश्चित्रा आभूवो वा'' इत्यादिः स किं नित्योऽथानित्यो वा पौरुषेय इति, कर्तृस्मरणाभावादध्ययनध्यायाद्याचाराच्छूश्रूषाराधितगुरुमुखाच्च प्रतिपत्तेर्वेदत्वप्राप्तावुच्यते ऊहसमाख्यानादनित्यत्वं, न ह्यध्ययनसिद्धस्योहत्वं घटते, किं च यद्योन्यां तदुत्तरयोर्गायतीत्यतिदेशवचनाद्योनावध्ययनसिद्धस्योत्तरयोरनुष्ठानावगमात् पौरुषेयत्वं विस्पष्टं, न हि तिसृष्वप्यधीतस्य यद्योन्यां तदुत्तरयोरिति वादो घटते, कर्तुस्तु अस्मरणमनादरादप्युपपद्यते, न ह्यत्र पुरुषप्रत्ययाधीनमनुष्ठानं वचनादेवोत्तरयोगानसिद्धेः, ऋक्सामानाञ्च पृथक् पृथक् वेदत्वात्सत्यपि संसर्गस्य पौरुषेयत्वे ऽध्यायाद्यादरः, तस्मात्पौरुषेयत्वाच्चाप्यं संगृह्यान्याय्यं त्यक्तव्यमिति न्यायतः कीदृशमनुष्ठानं भवतीति चिन्तनीयम् ॥

सामः ऋक्संस्कारकर्मताधिकरणम् ।

## सू॰. कर्म वा विधिलक्षणम् ॥ २ ॥

सामानि किमृचं प्रति प्रधानभूतानि? उत तत्संस्कारार्थानि गुणभूतानी'' ति विचारः, तत्राकर्मकालप्रयोगात् प्राधान्यं संस्कारार्थत्वे ह्यक्षराभिव्यक्तिरेषां कार्यं स्यात्सा च कर्मकाल एवोपयुज्यत इति अकर्मकाले प्रयोगो न स्यात् । ननु वचनादकर्मकाले गानं भविष्यति "गर्भाष्टमे वर्षे उपनयीत श्रावण्यां पौर्णमास्याम् उपाकृत्य स्वाध्यायमधीयीते''ति एवं तद्धि दृष्टार्थतैव बलादापद्यते न ह्यकर्मकाले प्रयुक्तं साम कर्मार्थयिकीमभिव्यक्तिमलं भवति कर्तुम् ॥ अथादृष्टरूपः संस्कारस्ततो ऽकर्मकाले संस्कृतानां कर्मकाले पुनः संस्कारो ऽनर्थक इति क्रतुमध्ये सामानि न प्रयुज्येरन् । अथाकर्मकाले प्रधान्यं कर्मकाले तु संस्कारस्तदाऽर्द्धवैशसन्तस्मात्प्रधानकर्म साम बहिः प्रयोगः फलार्थः, क्रतुमध्ये तु क्रतो[1]रारादुपकारक इति प्राप्ते उच्यते "अक्षराणामभिव्यक्तिः साम्नां दृष्टं प्रयोजनम् । अक्षरैश्चाप्यभिव्यक्तैः स्तुतिः क्रत्वङ्गवोदिता । एवं दृष्टे फले लब्धे नादृष्टफलकल्पना । ननु चाविनियुक्त-

१ क्रतावारादुपकारक इति पा॰ ।

त्वादृचराणां न संस्क्रिया सक्तूनामिव होमेन नैवं दृष्टफलत्वतः । प्रयोजनं न सक्तूनां दृश्यते श्रूयते ऽपि वा । यथोक्तं भाष्यकारेण "न होमसंस्कृतानां सक्तूनां प्रयोजनं श्रूयते नापि दृश्यत" इति. दृश्यते त्वचराणां प्रयोजनमिति वैषम्यं प्रयोजनवत्त्वं संस्कार्यत्वे हेतुर्न विनियोग', तथाच ग्रहणाचेतृणस्मग्गजरणानामविनियुक्तानामपि मन्त्रप्रकाशसंस्कार्यत्वमिष्टम् । अपि चोत्तरायन्थे क्रन्वर्थेन स्तोत्रक्रमेण वा पाठादस्त्येव विनियोगः तस्मात्संस्कारकर्माणि सामानीति, यत्त्वकर्मकाले गानं वाचनिकं तच्छिक्षार्थतया रथहस्त्यादियोग्यावत् ॥

तृचे प्रत्यृचं कृत्स्नसाम्नः समापनाधिकरणम् ।

## सू० तृचे स्याच्छ्रुतिनिर्देशात् ॥ ३ ॥

"एकं साम तृचे क्रियते स्तोत्रीयम्" इति श्रूयते तत्र संशयः किं व्यासज्य तिसृषु गान? मुत प्रत्यृचं परिसमाप्त? मिति, तदर्थं च विचार्यते किमिदं त्रित्व साम निर्वृत्त्यङ्ग? मुत स्तोत्राङ्ग? मिति, तत्र साम क्रियत इत्येवं सामनिर्वृत्तिरुच्यते तामुद्दिश्य ऋग्गीतं त्रित्वमङ्गत्वेन विधीयते प्रधानभूतानामप्यृचामार्थिकं सामसाधनत्वमस्त्येवेति तदङ्गतस्य त्रित्वस्य युक्तमेव सामाङ्गत्वं, वचनबलाच्च प्रतिप्रधानावृत्तिं बाधित्वा व्यासज्य गेयं, न हि प्रत्यृचं गीयमानस्य त्रित्वमङ्गं भवति, क्रियत इत्यनेनाभ्यासलक्षणा च स्यात् प्रत्यृचं गाने, तस्माद्व्यासज्येति प्राप्ते उच्यते । 'स्तोत्रीयस्य हि साम्नोऽत्र तृचसम्बन्ध उच्यते स्तोत्रसाधनभूतं च स्तोत्रीयमिति भण्यते । साम्नः स्तोत्राङ्गभावश्च स्तोत्र साधनसंस्कृते स्तोत्रसाधनता चर्चां प्रत्येकं न तु संघशः । यदि त्रित्वसम्पादनाय व्यासज्य.गीयते ततो रथन्तरं पृष्ठं भवति यज्ञायज्ञीयेन स्तुवीतेत्यादिभिर्यत्साम्नां स्तोत्रसाधनत्वं विहितं तन्न घटते स्तोत्रसाधनभूतशब्दाभिव्यक्त्या च साम्नः स्तोत्राङ्गत्वं, अक्ष्यं च स्तुतिबुद्धेः साधनं न वाक्यसमुदाय', तस्मात्प्रत्यृचं गेयम्, एवं च त्रित्वं सामाङ्गत्वेनाघटमानं स्तोत्रसाधनपरिच्छेदेन विधीयमानं स्तोत्रस्यैवाङ्गत्वेन विधीयते, तद्विधानेन प्राप्तं तिसृषु गानं तृचे क्रियत इत्यनेनानूद्यते, अनुवादत्वाच्च करोतेरभ्यासलक्षणा न दोष. ॥

समास्वेव तिसृषु ऋक्षु गानाधिकरणम् ।

सू० तदभ्यासः समासु स्यात् ॥ ४ ॥

तिसृषु प्रत्येकं गीयमानं किमनियमेन समासु विषमासु वा गेयम्? उत समच्छन्दस्कास्वेवे? ति संशये विशेषाश्रवणात् अनियमः संशर-विलेशपरिहाराय तु समास्वेव स्यात् ॥

उत्तरयोर्गायतीत्यत्र उत्तराग्रन्थसमधीतयोरेव ऋचोर्ग्रहणाधिकरणम् ।

सू० नैमित्तिकन्तू[1]त्तरार्थमानन्तर्यात्प्रतीयेत ॥ ५ ॥

"यद्योन्यान्तदुत्तरयोर्गायती"त्यत्र संशयः, किं योन्युत्तरयोरुत्तराग्रन्थाधीतयोर्वा गेय? मुतोत्तराग्रन्थाधीतयोरेवे? ति तत्रोत्तरा-शब्दस्य सम्बन्धिशब्दत्वाद्योव योनेः परतः पठिता सैवोत्तरा, ततश्च योनिपाठापेक्षया रथन्तरयोनेः परतो बृहद्योनेः पठितत्वात्त[2]स्यां गानम् उत्तराग्रन्थे तु रथन्तरस्य योनेः परतो न त्वा वाम् अन्यो दिव्य इत्यस्याः पाठात्तस्यां गानम्, अतो विकल्पः, द्वयोरपि रथन्तरयोन्यपेक्षयोत्तरत्वादिति-प्राप्ते ब्रूमः, यद्यप्येवं सम्बन्धिशब्दो लोके तथाऽप्युत्तराग्रन्थे संज्ञारूपेण प्रसिद्धिस्तत्र संज्ञाशब्दस्यान्यानपेक्षवृत्तित्वात्सापेक्षवृत्ते सम्बन्धिशब्दाद्बलीयस्त्वं प्रकरणपाठाच्चोत्तराग्रन्थः क्रत्वङ्गं, तस्मादुत्तराग्रन्थाधीतास्वेव गेयम्, एवं वा द्वादशाहे पार्ष्ठिकं चतुर्थमहः एकविंशः शोडशी वैराजं सामेति श्रुतं, तत्र च त्रैशोकं नाम ब्रह्मसामातिज[3]गतीषु स्तुवत" इति श्रूयते, तच्चातिजगत्यामुत्पन्नं विश्वाः पृतना इति उत्तरे द्वे बृहत्यौ नेमिं नमन्ति चक्षसेत्याद्ये तत्र तृचे गाने क्रियमाणे संशयः किमतिजगत्यौ द्वे आनीय समासु गानम्? उत बृहत्याविवादाय विषमासु गानमिति, संशरविले[4]शपरिहारायातिजगतीषु स्तुवत इति चातिजगती बहुत्वानुग्रहाय समासु गानम्, बृहत्योस्तूत्तराग्रन्थपठितयोः क्रत्वर्थत्वात्तत्परित्यागे तयोरानर्थक्यादेकविंशसम्पत्तये च एकैकस्या-

---

१ नैमित्तिकं तूत्तरात्वमानन्तर्यादिति पा० ।

२ तस्यां गानमिति तु पा० ।

३ जगतिषु इति इति पा० ।

४ अत्रैकस्मिन् पुस्तके संशरविलेशयपरिहारायेति दृश्यते पाठस्तथापि संशरविलेशपरिहारायेत्येव युक्तः पाठो माधवोक्तार्थानुरोधाद् भाष्यानुसारित्वाच्च ॥

मृचि सप्तकृत्वोऽभ्यस्यमानायामभ्यासापेक्षयाऽतिजगतीबहुत्वादनुवादस-रूपस्य वर्त्तमाननिर्देशस्योपपत्ते विषमासु गानम्, ॥

बृहतीपङ्क्त्योरेव प्रग्रथनेन रथन्तरस्य गानाधिकरणम् । सू० प्रागाथिकं तु ॥ ६ ॥

ज्योतिष्टोमे बृहद्रथन्तरे बृहत्योरुत्पन्ने अभित्वा शूर नोनुमस्त्वा-मिद्धि हवामह इति, तयोः पङ्क्ती उत्तरे नत्वा वाम् अन्यो दिव्यो न पार्थिवः स त्वं नश्चित्रेति. तत्र श्रूयते न वै बृहद्रथन्तरमेकच्छ-न्दो यत्तयोः पूर्वा बृहतीककुभावुत्तरे इति, तत्र किं पङ्क्ती परित्यज्य द्वे ककु-भावानेतव्ये? उत योनिमुत्तराञ्च प्रग्रथ्य ककुभावुत्तरे सम्पादनीये इति संशयः, तत्र प्रग्रथनेन मुख्यककुप्संपत्त्यभावात् अक्षरसामान्यमात्रेण गौणत्वापत्तेस्तृच-गानस्यच[1] क्रयमन्त्ररेणासामञ्जस्यादन्यासां ककुभामानयनम्, उच्यते प्रगा-थस्मरणात्प्रगाथसमाख्यानात्पङ्क्तेश्चोत्तरात्वेन पाठस्यात्यन्तानर्थक्यापाता-त्यादं पुनरारभत इति च दर्शनात्तृचगानस्य च सामान्येन विहितस्यात्र प्र-गाथेऽप्यत्यन्तदोषाभावात्प्रग्रथनम्, एवं वैरूपवैराजयोर्वाजये वार्हते तृचे भवतः तयोश्च पूर्वा बृहती, उत्तरा विष्टारपङ्क्तिरिति, तत्रापि पूर्ववदुत्पत्तिबृहत्या-वानीय तृचसम्पादन? मुत पठितयोरेव प्रग्रथन? मिति संशये तत्रैव विशेषत-स्तृचे भवत इति तृचश्रवणादन्यागमनं प्रगाथस्मरणसमाख्योत्तरापाठलिङ्गद-र्शनैस्तु प्रग्रथनम्, एवं वा श्यावाश्वान्धीगवे आनुष्टुभे तृचे भवत इति तयोः पूर्वानुष्टुबुत्तरे द्वे गायत्र्यौ, तत्राप्यन्ययोरनुष्टुभोरागमनं पठितानाा-मेव वा प्रग्रथनेनानुष्टप्तृत्रयं संपाद्यमिति विचारः, लिङ्गान्तरप्रदर्शनार्थं त्विदं व्याख्यानान्तरं न तु काचिदधिका शङ्काऽस्ति, एवं वा गवामयने श्रूयते चतुः-शतमैन्द्रावार्हताः प्रगाथा इति, तत्र किं तिसृषु ऋक्षु गान? मुत द्वयोर्द्वयोः प्रग्रथनेने-ति संशये तृचप्रापिचोदकानुग्रहाय तिसृषु स्यात्प्रग्रथने हि न सम-ञ्जसं तृचत्वम्. असति प्रग्रथने कथं प्रगाथवचनम् ऐन्द्रावार्हताः प्रगाथा इति ऋक्प्रग्रथनाभिप्रायमिति ब्रूमः, प्रथमे तृचे गीत्वा, तस्मात्तृचादेकैका-मृचमुपादायापरे द्वे ऋचौ गृहीत्वा गीयते पुनरप्येवन्तथा सति तृचगानं

१ तृचगानस्य च ऋक्क्रयमन्तरेणेति युक्तः पाठः ।
२ श्यावाश्वान्धीगवे इति तु पा० ।

नुरोधात् प्रगाथ-शब्दश्चोभयमनुगृहीतम्भवति नैतदेवम् "अन्या अन्या ऋचो भवन्ती"ति वचनादेकस्यामृचि द्विर्गानं सम्भवति, तस्माद् द्वयोः प्रग्रथनम् ॥

गीतिसम्पादकानामक्षर-विकारादीनां विकल्पाधि-करणम् ।

सू० अर्थैकत्वाद्विकल्पः स्यात् ॥ ७ ॥

छान्दोग्ये तलवकारादिसहस्रसामशाखागतानां गीतिप्रकाराणामे-कार्थत्वाद्युगपत्प्रयोगासम्भवात्तदनुरोधेन च सामावृत्तेरन्याय्यत्वात्सिद्ध एव विकल्पः सामप्रसङ्गाद्विस्पष्टीकाराय दर्शितः ॥

ऋचा स्तुवते साम्ना स्तुवते इति विधिना साम्नैव स्तवविधानाधिकरणम् ।

सू० अर्थैकत्वाद्विकल्पः स्यादृक्साम-योस्त[1]दर्थत्वात् ॥ ८ ॥

क्वचिद्विकृतिविशेषे कानिचिदप्राकृतानि स्तोत्राणि विहितानि तेषां च न प्रकृतितः किञ्चित्साधनं प्राप्नोति प्राकृतानां गायत्ररथन्तरादि-साम्नां प्राकृतेषु बहिष्पवमानादिस्तुतिषु निबद्धानामप्राकृतेषु प्राप्त्यभावात् तेन तानि साकाङ्क्षाणि, तत्रेदं श्रूयते "यदृचा स्तुवते तदसुरा अन्ववायन् यत्साम्ना स्तुवते तदसुरा[2]नन्ववायन् य एवं विद्वान् साम्ना स्तुवीतेति तत्र ऋग् ग्रहणमप्रगीतऋक्परं प्रगीतायाः सामोपदेशेनैव सिद्धत्वात्, साम्ना ह्यक्षरा-भिव्यक्तिद्वारेण स्तुतिः क्रियते न साक्षात्तेन साम्ना स्तुवीतेति सामाभिव्यक्तै-रक्षरैः स्तुवीतेत्यर्थः, एवं चेद प्रगीतपरमृ[3]क्पदं तत्र संशयः किमृचा साम्ना वा स्तोतव्यम्? उत साम्नैवे? ति द्वयोर्वचनाद्विकल्पप्राप्तौ उच्यते साम्नाम् उपसं-हारे विस्पष्टप्रशंसावचनेन विधेयत्वावगमादृक्कीर्तनमसुरागमनिन्दया सामप्रशंसार्थं, तस्मात्साम्ना स्तोतव्यम् एवं वा सामवेदे किञ्चित्प्रकृत्य अयं सहस्रमानव इतीयं प्रगीतापि पठिता अप्रगीतापि श्रूयते "अयं सहस्रमा नव इत्येतयाऽऽहवनीयमुपतिष्ठत" इति तत्र प्रगीतया अप्रगीतया वोपस्था-तव्यम्। उत प्रगीतयैवेति विचारे विशेषाभावादनियमः अप्रगीतायाः प्रगाणार्थ एव पाठः, न ह्यनवधारितस्वरूपायां सुखं गानं सम्भवति, प्रगीता त्वनन्यार्था

१ ऋक्सामयोस्तत्परत्वादिति पा० ।
२ तदसुरानान्ववायन्निति पा० ।
३ मन्त्रवचनमिति

तेन सा प्रयोजनमपेतमाणाक्रतुना गृह्यते, उपस्थाने च विनियुज्यते एतयेति सर्वनाम्ना परामृश्यते, तस्मात्प्रगीतैव ग्राह्या, एवं वा सामप्रसङ्गान्मन्त्राणां स्वरश्चिन्त्यते मन्त्रा हि क्वचित्त्रैस्वर्येणाधीताः क्वचिच्चातुःस्वर्येण तत्र कर्मसु त्रैस्वर्यचातुःस्वर्ययोः समुच्चयः विकल्पो वा । अथोभयद्दानेनैकश्रुत्या प्रयोग इति संशयः, तत्र समुच्चय इत्युपक्रममात्रं गीत्युपायवचिरस्तत्वात् तद्वदेव तु विकल्प इति पूर्वः पक्षः, तानो यज्ञकर्मणीति स्मृत्यनुमितात्तद्वचनादैकश्रुत्यम् अर्थावगमार्थं तु स्वराध्ययनं स्वरविशेषाधीनत्वाद्दर्थविशेषाणां, 'बहुव्रीहौ प्रकृत्या पूर्वपद'मित्यादिवचनात्तस्मात्तानेन प्रयोगः ॥

रथन्तरमुत्तरयोर्गायतीत्यादौ उत्तरावर्णवशेन गानाधिकरणम् ।

सू० सामप्रदेशे विकारस्तदपेक्षः स्याच्छा[1]स्त्रकृतत्वात् ॥ ९ ॥

उपोद्घातं समाप्य प्रकृतमिदानीं साम्नामूहं विचारयति रथन्तरयोर्गायतीत्यादिभिः ऋगन्तरे गीयमानानि किमूहितव्यानि? उत ने?ति, यदि योनिवर्णवशेन गानं यस्मिन् प्रदेशे योनावा[2]यीभावस्तस्मिन्नैवासत्यपि संध्यक्षरे उत्तरयोरायीभावस्ततो नोहः । अथ तूत्तरावर्णवशेन गाने यस्मिन् प्रदेशे संध्यक्षरवशेन योनावायीभावोयोनौ ततः प्रदेशान्तरे यत्र संध्यक्षरस्तत्रायीभावस्तत्र ऊहः किं प्राप्तं योनिवर्णवशेन, कुतः योनावेकारं निवर्त्याकार ईकारश्चोच्चारितः तत उत्तरयोरपि तद्भागपतितं वर्णं निवर्त्याकारेकारावुच्चार्यौ, किं च नात्र कार्यमुखेन साम्नः प्राप्तिः रथन्तरादिस्वरूपस्यैवातिदेशात्तेन दशमप्रथमपूर्वपक्षन्यायेन सामस्वरूपमुत्तरयोः प्रापितमविकृतस्वरूपमेव सत्प्राकृतमप्राकृतं दृष्टमदृष्टं वा कार्यं कुर्यात्तस्मान्नोहः साम्नामिति प्राप्ते ब्रूमः यदि ह्येकारं लुप्त्वा वर्णौवर्णावुच्चारितौ ततो भवेत् यथा भवानाह, न त्वेतत्किं तर्हि एकारो नाम न वर्णान्तरम् अवर्णवर्णौ संहतावेक[3]भावमापन्नावायीभावेन विश्लेषितौ दर्शितौ प्रत्यक्षं ह्यवर्णवर्णावेकारे प्रत्यभिज्ञायेते, तस्मादुत्तरयोरप्येकार एव, यत्र तत्रस्थोऽप्यायी-

१ प्रकृत्वादिति तु पा० ।
२ आईभावः इति तु युक्तः पाठः ।
३ संहतावेभावमापन्नाविति तु युक्ततमः पाठः ।

भावेन विश्लेषणीयः एवमृगक्षराभिव्यक्त्या स्तोत्रं साम्ना संपाद्यते नान्यथा। यद्यपि च सामस्वरूपस्यातिदेशस्तथाऽपि स्तोत्रसाधनतयाऽतिदिश्यते, एकं साम तृचे क्रियते स्तोत्रीयमिति वचनात्स्तोत्रसाधनता चाक्षराभिव्यक्तिद्वारा न च सन्ध्यक्षरादन्यस्यापीभावः क्रियमाणोऽक्षराभिव्यक्तिं करोति, एवं सर्वत्र, तस्माद्योनिवर्णवशेन गानादृस्त्यूहः साम्नाम् ॥

उत्तरयोः स्तोभातिदेशाधिकरणम्।

**सू० स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ १० ॥**

सामातिदेशे किं स्तोभानामतिदेशोऽस्ति नेति संशये सामभ्यो भिन्नत्वात्स्तोभानामृगक्षराणामिव नातिदेशः भिन्नानामपि गीतिकालपरिच्छेदकत्वेन सामाङ्गत्वात्तदतिदेशादेवातिदेशः, सामानि हि येनैनांशेनाक्षराण्यभिव्यञ्जयन्ति तेन दृष्टमेव स्तुतेरुपकारं कुर्वन्ति स्तोभाक्षराभिव्यक्तिनिर्वर्त्येन त्वंशेन स्तुत्यौपयिकमेवादृष्टं कुर्वन्ति, तद्यदि स्तोभा नातिदिश्येरन् तन्निर्वर्त्यस्य गीत्यंशस्य लोपात्तत्कृतोपकारस्य हान्या वैगुण्यं स्यात्, तस्मादतिदिश्येरन्, ऋगक्षराणां तु प्रधानत्वाच्च सामवशादतिदेशः ॥

स्तोभलक्षणाधिकरणम्।

**सू० अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात् ॥ ११ ॥**

प्रसङ्गात्स्तोभलक्षणमुच्यते यदृगक्षरेभ्योऽधिकं विवर्णं च किंचित्तत्स्तोभ–शब्देनोच्यते ॥

नीवारादिषु प्रोक्षणावघातानानुष्ठानाधिकरणम्।

**सू० धर्मस्यार्थकृतत्वाद् द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात ॥ १२ ॥**

प्रकृतौ व्रीह्यादिषु श्रुताः प्रोक्षणावघातादयो न तत्स्वरूपप्रयुक्तास्तन्मात्रापर्यवसायिनः किं तु व्रीहिभिर्यजेतेत्यादिविहितसाधनविशेषद्वारेणापूर्वभावनार्थाः, तथा हि आग्नेयोऽष्टाकपाल इति पुरोडाशद्रव्यकोऽग्निदेवत्यो यागो विहितः तदनुवादेन व्रीहयो विहिताः पुरोडाशप्रकृति-

त्वप्रतिपद्यन्ते,—तदयमर्थः व्रीहिभिः पुरोडाशं कृत्वा तेन यजेतेति ततः पुनराह मैवं यजेत तान्व्रीहीन्प्रोक्षतीति, ततश्च सर्वैरुपसंह्रियमाणैरयमर्थः सम्पद्यते प्रोक्षणसंस्कृतैरवघातवितुषीकृतैश्च व्रीहिभिः पुरोडाशं कृत्वा तेन यजेतेति अयमेव वाक्यार्थः पारमार्थिकः, व्रीह्यादिवाक्यार्थो अस्यैवोपायभूताः पदार्थस्थानीयाः, एवं चेदाग्नेयभावनायाः शेषभूतः प्रोक्षणादीत्थंभावस्तद्विकारेष्वतिदेशेन नीयते, तत्र नैवारे चरौ पुरोडाशसंस्थाने चरोर्निवेशात् व्रीहिस्थाने च नीवारनिवेशात् इतरस्य समस्तस्य यथाऽतिदेशमवस्थानाच्चैवारं चरुं निर्वपेदाग्नेयवदित्यस्य श्रुतानुमितैकदेशनिष्पन्नस्य नैवारचरुविधेरयमर्थो भवति प्रोक्षितैरवघातवितुषीकृतैर्नीवारैश्चरुं कृत्वा तेन यजेतेति, तेनं व्रीह्यादिस्थानापन्नेषु नीवारादिषु सिद्ध ऊहः । स्थानापत्तिस्तु कथमवगम्यते इदमस्य प्राकृतस्य कार्यं वर्त्तेत इदमस्येति तत्प्रदर्शनार्थमिदमधिकरणं, तत्र पूर्वपक्षवादी नीवारमध्वशनखर्पारेरापदानां व्रीहिषडहोलूखलमुसलयूपगिरापदस्थानापत्तौ प्रमाणमपश्यन् तेषु तद्धर्मा भवन्तीति मन्यते, सिद्धान्तस्तु नीवाराणां तावत्प्रत्यक्षमेव व्राहिकार्यं तण्डुलनिर्वृतौ सामर्थ्यं, सामर्थ्यानुसारी च शब्द इति नैवार इति तद्वित्तौ विकारार्थं इति निश्चीयते, चरुश्च देवतासंयोगात् पुरोडाशस्थानापन्न इति तत्प्रकृतिभूता नीवारा व्रीहिस्थानापन्ना भवन्ति, तथा मध्वशनं षडहाभावे तत्कार्यस्य साधनापेक्षायां विधीयमानं कार्यापेक्षं सत् षडहकार्यमेवावलम्बते, इदं च षडहाभावे मध्वशनं विधीयत इति कृत्वा चिन्तितं, तेनाभावे विधिरपि कार्यापत्तौ प्रमाणं, तथा नैर्ऋतश्चरुर्नखावपूतानामिति किं नखैरवपतनमन्यतस्तुषविमोचनादतो नखानामुलूखलमुसलकार्यापत्तिः परिधौ पशुं नियुञ्जीतेति तु विस्पष्टमेव यूपकार्ये नियोजने परिधिर्विधीयते तथा यत्प्रतिषिध्य यद्विधीयते न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयमिति तस्यापि तत्कार्यापत्तिः गिरापदेऽपि हि निवृत्ते तत्कार्ये साधनमपेक्षते इरापदमपि विधीयमानं कार्यापेक्षं गिरापदकार्येण साधनापेक्षेण सम्बध्यत इति गिरापदस्थानापन्नमिरापदं तत्संस्कारिकां गीतिं लभते ॥

( शेषमग्रे )

# सिद्धान्तमुक्तावली
## प्रकाशानन्दविरचिता ।

(*Continued from page* 163. Vol. XII.)

नच वाक्यार्थ एवायमानन्दस्तेनाऽपि आनन्दत्वाप्रतिपादनात् अखण्डे एव तात्पर्यात् । नच सर्वथा अलौकिके सुखे कस्यापि कामना सम्भवति स्वर्गादेरपिलौकिकसुखसजातीयत्वात् । अत्र केचित् । अनानन्दव्यावृत्तिमात्रमानन्दत्वं नतु प्रसिद्ध आनन्द एवात्मा धर्मधर्मिभावानभ्युपगमात् नच व्यावृत्त्यापि द्वैतापत्तिः तस्या आश्रयानतिरेकात् । एतेन ज्ञानत्वादयो व्याख्याताः । तन्न व्यावृत्तेरपदार्थत्वात् अपोहवादापत्तेः व्यावर्तकधर्मस्यावश्यं वक्तव्यत्वाच्च अन्यथा व्यावृत्त्यसिद्धेः ।

Nor is this transcendental Bliss what the sentence (as a whole, considered apart from its constituent words) means. For even so (the Vedic sentence) does not predicate blissful character as an attribute, since it is devoted to teaching the *impartite* (attributeless) Brahman. Nor is at all possible for one to desire transcendental bliss, for Paradise and like supersensuous objects of desire are also generically the same as worldly bliss. Here some teachers might interpose that blissful character is (predicated) merely with a view to the exclusion of all that is not bliss; but it is not meant that bliss as commonly understood is Self, for the relation of subject and attribute is not admitted (in regard to the Self). Nor (continue these teachers) does dualistic doctrine follow logically on such exclusion (differentiation), for such exclusion is nothing other than the substrate (or Self). In this way the attributes of possessing knowledge &c. are (by them) explained. The above view must be rejected; for the *exclusion* urged above is nothing at all. And because thereon would follow the *view of universal negation* of the Vijnānavādins). *

The view of the Samkshepaśariraka I, I. sl. 174 is unsatisfactory.

* Apohavāda, is the sensationalist's reply to the question—If

नच स्वरूपेणैव व्यावृत्तिः आत्मनोऽव्यावृत्तत्वात् अन्यथा ऽब्रह्मत्वापत्तेः । अन्ये तु आनन्दत्वादयो धर्मा यत्र कल्पितास्ते एव आनन्दादिपदार्था लोके ऽपि प्रसिद्धाः तत्राप्यानन्दत्वादीनां कल्पितत्वात् नचैतावता आनन्दस्य काचित्क्षतिरस्ति धर्मस्यानुपादेयत्वात् तदाश्रयव्यक्तेरेवाभिलषणीयत्वात् । तदप्यापातरमणीयमिव प्रतिभाति विशिष्टस्यैवानन्दपदार्थत्वात् व्यक्तिमात्रे तदनुपपत्तेः कल्पितानन्दत्वाश्रयस्यानानन्दत्वप्रसङ्गानिवृत्तेश्च ।

And because some differentia or excluding attribute must be granted: if not, the differentiation remains unproved. And it cannot be said that the differentiation proceeds *per se*. For Self is the undifferenced: if not, it cannot be Brahman.

Also that of the Panchapādikāvivarana.

Others again hold that the substrates, in which blissful character and like attributes are surmised, are just what the words bliss, (knowledge &c.), are commonly taken in this world to mean; for in such worldly substrates also are surmised blissful character &c. Further, that on this view no harm is done to Bliss (sc. the Self as *the aim* of man), for the attribute (sc. blissful character) is not accepted as an object of desire; since it is only an individual substrate (of certain attributes, tat) that is desired. This view also commends itself only at first sight. For the meaning of the word bliss attaches indeed to the individual as possessed of certain attributes (viśishṭa), because it cannot attach to the individual *per se*. And because it would for ever follow that non-blissful character pertains to that which is the substrate (sc. Brahman) of a surmised attribute, sc. blissful-character.

---

no object exists apart from the sensation (vijnāna), whence variety (bheda) of perceptions in the forms 'this is blue', 'this is yellow' &c.? He admits that blueness, yellowness &c. are the causes of the variety of perceptions, but denies that these attributes are anything distinct from the various sensations: every such attribute is the attribute of a sensation and is nothing more than the *negation of a negation of itself* (svabhedābhāva), that is to say, sensation is self-differentiating. Another definition of apoha is atadvyāvṛitti: here tat = nīla; atat = pīta; vyāvṛitti = bheda. cf. Siddh: muktāv: and Dinakarī to śl. 49 of Bhāshāpariccheda.

नहि यो धर्मो यत्र न स्वाभाविकस्तदन्तर्भावितः पदार्थः स सम्भवति अन्यथा शुक्त्यादेरपि रजतपदार्थत्वापत्तेः ।

अत्रोच्यते ।

उपाधिसंश्रयो ह्यात्मा आनन्दत्वं तदाश्रयः ।
विशिष्टशक्यपक्षे तु व्यक्तिर्वा शक्तिगोचरः ॥ ४३ ॥

यदि लोके आनन्दत्वविशिष्ट एवानन्दपदार्थस्तदाप्यात्मैवानन्दपदार्थो मुख्यः एकस्यैव नानोपाध्यनुप्रविष्टस्यानुगतव्यावृत्तिबुद्धिजनकतया जातिव्यक्त्युभयरूपत्वोपपत्तेः ।

For in a case where, in a certain substrate (yatra, sc. nacre,) an attribute sc. silver-ness, is not real (*i. e.* is falsely surmised), that substrate cannot mean that thing which included within itself the surmised attribute (sc. silver): otherwise it follow that nacre would have to bear the meaning of the word silver.

We reply :—

On the view that the power * of a word attaches to an individual as possessing certain attributes, Self is the substrate of attributes; blissful character is the substrate of Self (sat). Or the view that it is only the individual that is declared by the power * of a word may be adopted.....XLIII.

Reply: blissful character is really Self jāti, generality, has no real existence apart from vyakti, individual: cf. supra, pp. 100, 1,

Although the word *bliss*, as commonly understood, means an individual possessing blissful character, yet Self is the primary meaning of the word bliss. For since a single substrate (ekasya), when in relation with many limiting adjuncts, can give rise to uniform, persistent knowledge (anugata, whence existence of jāti or class is inferred cf. pp. 101,8 supra) and to knowledge of difference, (vyavṛitti, *i. e.* of individual things), to that single substrate can belong both class character and individual character.

* For śakti, śakya cf. Ved. Paribh. Pandit Vol. VI. pp. 95 et seq.

यथा एकस्मिन्नेव स्वरूपे सर्वकल्पनारहिते मुखचन्द्रादौ बिम्बप्रतिबिम्बस्वरूपमिति त्रिविधव्यवहारस्योपाध्यनुप्रविष्टत्वारोपानन्तरं दर्शनादित्युक्तं लक्षणास्थले । अथवा व्यक्तिरेव सर्वत्र पदशक्तिगोचरोऽस्तु नच व्यक्तीनामानन्त्यात्पदशक्तिसम्बन्धव्यभिचारदोषप्रसङ्गः विशिष्टशक्यपक्षे ऽपि तुल्यत्वात् विशेषणाभेदे ऽपि विशेष्यभेदेन प्रतिविशेष्यं विशिष्टभेदात् । तस्मादशक्येनापि शक्यतावच्छेदकेनानुगतशक्यव्यवहाराऽशक्यव्यावृत्तिव्यवहारयोर्ज्ञनयितुं शक्यत्वात् ।

And thus we declared in discussing lakshaṇā (p. 97.): 'in regard to the own nature of a thing (*i. e.*, the thing in itself), which is really one and without any attributes (cf p. 64), *e. g.*, a human face or the moon, a three-fold consciousness of reflected object, reflexion and the own nature of the thing is observed to arise after a connexion between the own nature of the thing and certain limiting adjuncts has been imagined.' Or let it be granted, that in all cases it is the individual alone that is made known by the power of the word. The objection to this view,—namely, that since the individuals are infinite in number, the connexion of the power of the word (with any one individual object) would sometimes fail (vyabhichāra)—will not hold good. For this objection would apply equally to the other view—namely, that the literal meaning of a word (śakya as coming directly from the śakti of the word) is the individual as possessing a certain attribute (viśishṭa). Because, although the attribute may be only one, the individuals possessing this attribute are many, as each is a subject,—there being many subjects. And since both views are on the same footing (tasmāt), both the knowledge of the persistent, (sc. jāti) which is the literal meaning of the word, and the knowledge of difference (sc. vyakti), can be produced through that attribute sc blissful character, which, while it essentially constitutes the literal meaning, is not itself the literal meaning (of the word bliss).

तत्रापि शक्तिकल्पने मानाभावात् कारणस्वरूपबहिर्भूतकारणतावच्छेदकवत्। तस्मादानन्दरूपत्वे आत्मनो न काचिदनुपपत्तिः ।

आनन्दरूपमात्मानं सच्चिदद्वयतत्त्वकम् ।
अपूर्वादिप्रमाणोक्तं प्राप्याहं तद्वपुःस्थितः ॥ ४४ ॥

योऽहमद्वयवस्त्वेव सद्वये दृढनिश्चयः ।
प्राप्य चानन्दमात्मानं सोऽहमद्वयविग्रहः ॥ ४५ ॥

For there is no reason to assume that the word bliss possesses a power in regard to this essential constitutive attribute also (tatrāpi sc. ānandatve): just as it is unnecessary to assume causal power as residing in that attribute, which, while it is constitutive of causality, is outside (*i. e.*, is not) the cause itself.* Hence there is no contradiction in holding that blissful character pertains to Self.

The teacher's Song of Joy.

Having gained intuition of Self, which is Bliss, Existence, One without a second, made known through that new and originative source of knowledge (sc. the Witness, cf. p. 102.), I am become that Self....XLIV.

That same 'I' who, though really the One without a second, was once firmly persuaded of duality, am now identified with that One, having gained intuition of Bliss which is Self...XLV.

* Taking the stock example of daṇḍa as the kāraṇa of ghaṭa daṇḍatva resides in daṇḍa and is the kāraṇatāvacchedaka or attribute which essentially constitutes the causal power belonging to the daṇḍa as being exactly co-extensive with it (anyūnānatiprasakta); but, on the other hand daṇḍatva is not the kāraṇa. And so, while there is a relation technically termed śakyatā between the word ānanda and the individual, *i. e.*, the Self which is Bliss, it would be incorrect to say that ānandatva which is the śakyatāvacchedaka, in this case, is the śakya or literal meaning of the word ānanda.

नास्ति ब्रह्म सदानन्दमिति मे दुर्मतिः स्थिता।
क्व गता सा न जानामि यदाहं तद्वपुःस्थितः॥ ४६॥

पूर्णानन्दाद्वये तत्त्वे मेर्वादिजगदाकृतिः।
बोधे ऽबोधकृतैवासीदबोधः क्व गतोऽधुना॥ ४७॥

संसाररोगसंग्रस्तो दुःखराशिरिवापरः।
आत्मबोधसमुन्मेषादानन्दाब्धिरहं स्थितः॥ ४८॥

योऽहमल्पेऽपि विषये रागवानतिविह्वलः।
आनन्दात्मनि संप्राप्ते सरागः क्व गतोऽधुना॥ ४९॥

यस्य मे जगतां कर्तुः कार्यैरपहृतात्मनः।
आविर्भूतपरानन्द आत्मा प्राप्तः श्रुतेर्बलात्॥ ५०॥

'Brahman the existent, Bliss, is not'—such was my mistaken judgment: but now that I have become that Brahman I know not whither that judgment fled....XLVI.

The external world of Meru, &c., was through Nescience wrought in the One Reality which is perfect Bliss: but now that knowledge of Brahman has been attained, where is that Nescience gone?..XLVII.

Seized by the ills of life I became another, a mountain of pain, as it were; but now through knowledge of Self I am an ocean of Bliss....XLVIII.

Then yearned I for little things and was much disquieted: but such yearning is no more, for now know I the Self which is Bliss....XLIX.

That creator of worlds am I, whose Self was drawn away by the products of Nescience (sc. by mind, sense-organs &c.): now through Śruti my Self, the highest Bliss, has been manifested...L.

परामृष्टो ऽसि लब्धो ऽसि प्रोषितोसि चिरं मया ।
इदानीं त्वामहं प्राप्तो न त्यजामि कदाचन ॥ ५१ ॥

त्वां विना निःस्वरूपोहं मां विना त्वं कथं स्थितः ।
दिष्ट्येदानीं मया लब्धो योसि सोसि नमोस्तु ते ॥ ५२ ॥

देहाभिमाननिगडैर्बद्धो ऽबोधाख्यतस्करैः ।
चिरं ते दर्शनादेव त्रुटितं बन्धनं क्षणात् ॥ ५३ ॥

विशुद्धोस्मि विमुक्तोस्मि पूर्णात्पूर्णतमाकृतिः ।
अस्पृश्य ममात्मानमन्तर्ब्रह्माण्डकोटयः * ॥ ५४ ॥

तत्त्वमादिवचोजालमावृतमसकृत्पुरा ।
इदानीम् तत् श्रवादेव पूर्णानन्दो व्यवस्थितः ॥ ५५ ॥

Thou hast been pondered and gained. long wert thou absent from me: now have I gained thee, never to leave thee... ..LI.

Without thee I cease to be. without me thou canst not be oh joy! thou art what I now have gained Hail to thee!...LII

Bound was I in the bonds of conceit of body by those thieves, the many forms of Nescience: but at the very sight of thee that bondage was destroyed....LIII.

I am pure and emancipated, my form is more pervasive than the pervading† (ākāśa, ether): let numberless worlds then be within me, they touch not my Self...LIV.

Formerly the whole collection of Vedic passages such as 'that thou art' was concealed (by Nescience) again and again, but now absolute Bliss remains constant through the 'hearing' of the Veda...LV.

*(To be continued)* A. V.

* var. lec. नमात्मानं सन्तु ब्रह्माण्डकोटयः ।

† पूर्णाद्विभोराकाशादपि पूर्णतमा इति त्रिविधपरिच्छेदशून्य इत्यर्थः । N. D's gloss. त्रिविध=देश, काल, वस्तु.

# खण्डनखण्डखाद्यम् ॥

## अथ तृतीयः परिच्छेदः ।

(*Continued from page* 168 Vol XII)

नृ॰ "प्रश्नार्थाच्च किंशब्दाज्जिज्ञासाविषयताऽर्थस्य प्रतीयते जिज्ञासा च ज्ञातुमिच्छा इच्छा चाज्ञाते न सम्भवति अतिप्रसङ्गात् तस्मादीश्वरविषयं प्रमाणं ज्ञातुमिच्छता तच्च स्वज्ञानमिच्छाकारणीभूतं वक्तव्यं तद्यथाभूतार्थं वा स्यादयथाभूतार्थं वा यथार्थं चेत्तेनैव ज्ञानेन स्वकीयो विषयः प्रमाणमुपस्थाप्यते विषये प्रमाणप्रवृत्तिमन्तरेण तदीययथार्थत्वस्य वक्तुमशक्यत्वात्· तेनापि प्रमाणेन स्वगोचर ईश्वरसद्भावः उपास्थाप्यत इत्यनायासेनैव सिद्धोस्माकमीश्वरसिद्धिमनोरथः अथायथार्थं तत्तस्मिन्न-यथार्थज्ञानविषये यद्यस्माभिरप्ययथार्थमेव ज्ञानमुत्पादनीयमिति भवतः पृच्छतो वाञ्छितं तदा केयं स्वाधीनेऽर्थे परापेक्षा भवानेवायथार्थज्ञानोत्पादनकुशलो यथैकं तच्च मिथ्याज्ञानमजीजनत्तथापरमप्युत्पादयतु वयं पुनर्यथार्थ-ज्ञानस्योत्पादयितारो मिथ्याज्ञाने सर्वथैवाकुशलिनः किमिह नियुज्येमहि * अथ मदीयस्यायथार्थज्ञानस्य यो विषयः स मदीययथार्थज्ञानविषयो भवता क्रियतामिति? *— त्वदीयं वाञ्छितं तदा व्याघातादीदृश्यर्थे भवतः प्रवृत्ति-रेवानुपपन्ना शुक्तिका रजतात्मत्वेन मम यथार्थज्ञानवि-षयो भवत्वित्येतदर्थं प्रेक्षावान् कथङ्कारं प्रयतेत येन रूपे-

णायथार्थज्ञानविषयत्वं तेन रूपेण यथार्थज्ञानविषयत्वे व्याघातात् ॥

टी० ॥ प्रकारान्तरेण प्रश्नखण्डनमुपक्रमते–। [a] "प्रश्नार्थादि"ति। ज्ञाते एव जिज्ञासा तथाच ज्ञानार्थं प्रश्नानुपपत्तिः यच्च ज्ञानं प्रमाणविषयकं त्वयास्ति तद्यदि यथार्थं तदा प्रमाणं प्रमितमेव तत्राभूद्यथायथार्थं तदा वस्तुगत्या ईश्वरे प्रमाणं नास्ति तत्र त्वया प्रमाणगोचरमयथार्थमेव ज्ञानं ममाधीयतामिति विपरीतफलक एवायं प्रश्नः यद्विशेष्यकं यत्प्रकारकं ममायथार्थज्ञानं तद्विशेष्यकं तत्प्रकारकमेव मम यथार्थज्ञानं क्रियतामिति च न सम्भवत्येवेति प्रघट्टकार्थः ॥

मू० * अथ मन्यसे स्वसिद्धान्तमनुरुन्धानेन भवता यथार्थज्ञानं तच्चोत्पादनीयमतस्तदर्थं भवाननुयुज्यते ? * –इति मैवम्, ईश्वरसद्भावविषयो भवता प्रमाणाभासः प्रमाणतया भ्रान्त्या प्रतीतस्तस्य प्रमाणत्वमस्माभिर्व्युत्पादनीयमिति नास्माकमीदृशः सिद्धान्तः प्रत्युतेश्वरसद्भावविषयं यत् प्रमाणं भवता प्रमाणाभासत्वेन भ्रान्त्या प्रतीतमस्ति तत् प्रमाणनीयमिति * स्या(१) न्मतमीश्वरसद्भावविषयस्य प्रमाणस्य भवता ज्ञापनमात्रं क्रियतामित्यभिमतं पृच्छतामस्माकं न तु प्रमाणेनाप्रमाणेन वेति विशेषोऽप्यभिमत ? * –इति न, [a] ज्ञापनमात्रस्याप्रमाणज्ञानमादायाप्युपपत्तेः [b] तच्च स्वाधीने का भवतः प्रार्थनेत्याद्युक्तमनुषञ्जनीयं * स्यादेतत् येयमीश्वरसद्भावविषयकप्रमाणप्रतीतिरस्माकमुत्पन्ना सा

(१) मतसिद्धान्तयोरविशेषात् "सिद्धान्त इत्यनुषञ्जनीयम्"–इति प्रक्रान्तशाङ्करव्याख्यानानुरोधेन पारम्परिकैः कैश्चित् "स्यान्मतम्"–इति पाठो मूले प्रक्षिप्त इति सम्भाव्यते। यद्वा ऽप्रेऽन्वयं कृत्वा "स्यादेतादृशं तव मतं तथापीश्वरसद्भावविषयस्य"—इत्यादि शङ्कापरतया कथञ्चिद्ग्रन्थो योजनीयः।

व्यभिचारिणी सत्या वेति संशयोचास्माकं [c] तेनैक त्वर्पानि-र्द्धारणाधीनं यदिदं दूषणमवादि भवता तन्निरवकाश-मिति * नैतदस्ति, एवं हि तस्यां प्रतीतौ यथार्थत्वायथार्थ-त्वसंशये तस्याः प्रतीतेर्गोचरो यत्प्रमाणं तस्यापि योसौ विषय ईश्वरसद्भावस्तत्र सर्वत्रैव संशयानस्य भवतः प्रश्नोयं नतु विप्रतिपन्नस्येति स्या–

टी० ॥ यद्यपि तवेश्वर प्रमाणादात्मेमतो मयि प्रमा तत्र जन्यता-मिति प्रष्टुरभिप्रायवर्णनानन्तरमीश्वरसद्भावविषय इत्याद्युपबद्धमुत्तरं तथापि तात्पर्यगत्या कथञ्चिद्द्रष्टव्यं(१) तत् प्रमाणनीयमित्यत्र सिद्धान्त इत्यनुषञ्जनीयं । [a] "ज्ञापनमात्रस्ये"ति । यद्यप्यप्रमाणमादाय ज्ञापनमि त्युत्तरयितुरेवानिष्टं तथापि भवत्प्रयुक्त्यैव तत्सम्भवतोत्येतदर्थे प्रश्नायासो-नुपपन्न इत्यर्थः ॥ एतदेवाह–। [b] "नत्रे"ति ॥ [c] "तेने"ति । यथार्थपक्षे ईश्वरसिद्धिरयथार्थपक्षे ईश्वरगोचरा यथार्थज्ञानोत्पादनशक्तिस्तवैवेत्यादि दूषणं निरवकाशमित्यर्थः ॥

मू०. [a] तथाच स्वीकुरु शिष्यभावं प्रसादय चिरंचरणशुश्रूषा-भिरस्मान् छेत्स्यामस्ते संशयमिति विप्रतिपन्ना एववाय-माचार्यः संशयोऽस्माकमिति चेत्तर्ह्यवधृतैककोटय एव वयं कार्यानुरोधात्तु संशयमालम्बामहे इत्युक्तं स्यात् एवं तर्हि तदेव कोप्यवधारणं भवतां यथार्थमयथार्थं वेति

(१) "ईश्वरसद्भावविषये वेदाः प्रमाणाभासः"=इति., "अनुमानादिकमेव तत्र मानम्"–इति वा य ईश्वरसद्भावविषयः स्वानुभवो भवता प्रमाणाभासोऽपि सन् प्रमाणतया प्रतीतस्तस्य प्रमाणत्वं नास्माभिर्व्युत्पादनीयं किन्तु वेदानां प्रमाणत्व-मेव व्युत्पादनीयमित्यर्थः । यद्वा यो वेदादिः प्रमाणाभासत्वेन रूपेण प्रामाणिको ज्ञातस्तस्य प्रमाणत्वं न व्युत्पादनीयं किन्तु प्रमाणे प्रमाणत्वप्रकारिका भवदीयप्रतीति-रेव प्रमापणीया तेनाप्यर्थतस्तदेव सिध्यतीति भावः ।

विकल्पोक्तयुक्त्या दूष्यं एतेनाऽन[a]ध्यवसायेन तदस्माभिः प्रतिपन्नमित्यपि निरस्तं वेदितव्यं व्यभिचारिविषयं वा तदितिविकल्पाभ्यां तस्यापि ग्रस्तत्वात् परस्परविरोधे हि न प्रकारान्तरस्थितिरितिन्यायात् [b]एवमीश्वराभिसन्ध्यादौ तत्तत्स्थानस्थं सर्वनामान्तरखण्डनं द्रष्टव्यम् ॥

इति श्रीश्रीहर्षमिश्रकृतानिर्वचनीयसर्वस्वे खण्डनखाद्ये सर्वनामार्थानिरुक्तिस्तृतीयः परिच्छेदः ॥

---

टी० ॥ [a]"अनध्यवसायेने"ति । अनध्यवसायाख्यं वैशेषिकाभिमतमविद्याप्रभेदोऽसाधारणधर्मोजन्य ज्ञानं तत्रापि पूर्व एव विकल्पः यद्यपि प्रमाणं किञ्चिदपीश्वरं न गोचरयतीत्यस्माकं पक्षः किञ्चित्प्रमाणमीश्वरं गोचरयतीति त्वत्पक्षस्तत्र पृच्छ्यते किं तत्प्रमाणं यदीश्वरं विषयीकरोति अत्र च भवद्विकल्पजालस्य नावकाशः तत्र यत्त्वया प्रमाणमुपदर्शनीयं तन्मया खण्डनीयमिति नचेश्वरः प्रमितो नवेति विकल्पावसरोऽत्रापीति वाच्यम् अद्वैते किं प्रमाणमिति खण्डनेन पौनरुक्त्यापातात् सर्वनामखण्डनेनोपक्रान्तेनाऽसंस्पर्शाच्चेति तथापि आदित्यामोहनमापाततो भवत्येवानेन विकल्पजालेनेति भावः ॥ ननु सर्वसर्वनामखण्डनमुपक्रम्य किंशब्दमात्रखण्डनं न्यूनमत आह–। [b]"एवमि"ति ईश्वराभिसन्धियन्ये सर्वनामखण्डनं कृतमेवात्रातिदिश्यत इति न न्यूनतेति भावः ॥

इति तृतीयः परिच्छेदः ॥

(शेषमग्रे)

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

(*Continued from page* 178. Vol. XII.)

"इतरेतरान्योन्योपपदाच्च" ॥ उपोच्चारितम्पदमुपपदञ्च पारिभाषिकम् असम्भवाद्, असत्युपपदग्रहणे पञ्चमीनिर्देशे परस्यैवानन्तरस्य स्यात् 'तस्मादित्युत्तरस्ये' ति वचनात्, सप्तमीनिर्देशे तु 'तस्मिन्निति निर्दिष्टे पूर्वस्ये' ति पूर्वस्यैवानन्तरस्य स्यात् तत्र यद्यपि लकारोऽनन्तरः परो न सम्भवति धातुस्तु सम्भवति पूर्वस्तु धातुरनन्तरो न सम्भवति लकारस्तु सम्भवति, तृतीयानिर्देशस्तु पञ्चमीसाधारणत्वा[1]दनध्यवसान इत्युपपदग्रहणं क्रियते । 'इतरेतरस्येत्यादि' । लौकिके तु शब्दव्यवहारे लाघवं प्रत्यनादराद् इतरेतरादिशब्दास्तङ् उपसर्गाश्च कर्मव्यतिहारद्योतनाय समुच्चीयन्ते, कर्मव्यतिहारे 'सर्वनाम्नो द्वे भवतस्समासवच्च बहुलं' यदा न समासवत् प्रथमैकवचनं तदा, पूर्वपदस्येति षष्ठ्येकवचनान्तस्येतरशब्दस्य द्विर्वचने समासवद्भावेन सुब्लुकि समासत्वादेव प्रातिपदिकत्वात्[2] पुनः षष्ठ्येकवचनम् । अन्यशब्दस्य तु बहुलग्रहणादसमासवद्भावे पूर्वपदस्थस्य षष्ठ्येकवचनस्य प्रथमैकवचनम् एवम्परस्परस्येत्यत्रापि कस्कादिषु दर्शनाद्विसर्जनीयस्य सत्वं पदस्य द्विर्वचनविधानादन्योन्यपरस्परेति सूत्रवाक्ययोः प्रकृतिभागमात्रस्यानुकरणं द्रष्टव्यम् ॥

"नेर्विशः" ॥ 'शेषात्कर्तरि परस्मैपदे प्राप्तइति'। अनारम्भस्यापि शेषपक्षे निक्षेपात् । 'आत्मनेपदं विधीयतइति' । यद्यपि तिबादिसूत्रापेक्षया सर्वस्यैव प्रकरणस्य नियमार्थत्वम् । 'अनुदात्तङित आत्मनेपदं' 'भावकर्मणो' रिति सूत्रद्वयापेक्षया तु विध्यर्थत्वमपि सम्भवतीति मत्वैवमुक्तम्, एवं सर्वत्र द्रष्टव्यम् । न्यविशतेत्यत्र लङि निविश् ल् इति स्थिते

---

१ दुरध्यवसाय इति पा॰ २ ।

२ समुदायादित्यधिकं २ पुस्तके ।

लादेशो लकारमात्रापेक्षत्वाद् अन्तरङ्गो ऽडागमस्तु लुङादिविशेषापेक्षत्वा-द्बहिरङ्ग इति पूर्वं लादेशे विकरणश्च प्राप्नोति अडागमश्च, नित्यत्वाद्वि-करणो, ऽडागमो हि विकरणे कृते तदन्तमेव लङि परतोऽङ्गम् । तदादि-ग्रहणस्य स्यादिनुमर्थत्वादिति तस्यैव प्राप्नोति अकृते विकरणे धातुमा-त्रस्येति शब्दान्तरप्राप्तेरनित्यः, ततश्च विकरणान्तस्य विधीयमानोऽडा-गमो धातुमात्रं प्रत्यभक्त इति नेश्च धातोश्च व्यवधायक इत्यात्मनेपदं न प्राप्नोतीत्यत आह । 'यदागमा इत्यादि' । एवं मन्यते बाह्योपसर्ग-सम्बन्धापेक्षत्वादयं [1]विधिर्बहिरङ्गः, अस्मिंश्चाप्रवृत्ते लादेशोऽप्यप्रवृत्त एव, अपवादविषयपरिहारेण हि तेन प्रवर्तितव्यम् । अनिर्वृत्तश्च लादेशो वि-करणोत्पत्तौ न निमित्तं तेन लावस्थायामेवाड् भवन् धातुमात्रस्यैव भवति ततश्च तदवयवत्वात्र तस्यैव व्यवधायक इति, कथं तर्ह्युक्तं व्यवधानेपि भवतीति, श्रुतिमात्रापेक्षया, क्वचित्त्वटा नास्ति व्यवधानमित्येव पाठः । 'मधु निविशतीति' अङ्गभक्तो नुम् ङेरनवयव इति निशब्दस्यानर्थक्यं क्वचित्तु मधूनि निविशन्ति भ्रमरा इति शशन्तं पठ्यते ॥

"परिव्यवेभ्यः क्रियः" ॥ पर्यादय उपसर्गा गृह्यन्त इति कथं क्रिय इति षष्ठी, उपसर्गैरेव पर्यादिभिरर्थद्वारको विशेषणविशेष्यभावलक्षणः सम्बन्धः, न च क्रिया ये उपसर्गास्तेभ्यः परं धात्वन्तरं सम्भवतीति क्रीणातेरेवात्मनेपदं भवतीति । यद्वा पर्यादिविशेषणाय षष्ठीमनुभूयात्म-नेपदसम्बन्धे क्रिय इति पञ्चमी सम्पद्यते तदाह । 'इत्येतेभ्य उत्तरस्मात् क्रीणातेरिति' । 'बहुव्रीति' । बहवो वयः पतिणोऽभिव्रीति बहुव्रीहिः, कर्मपदं चैतत्, पक्षिवाचिनो विशब्दस्य नपुंसकत्वाभावाद् विभक्त्यास्य व्यवधानात्केवलो नोदाहृतः । ननु बहुव्रीहावपि जहत्स्वार्थायां वृत्तौ वेरा-नर्थक्यम् अजहत्स्वार्थायामपि तदर्थस्योपसर्जनत्वमिति न भविष्यति, एवं तर्ह्युदाहरणादिगियं दर्शिता, इदं तत्रोदाहरणं वे क्रीणासि अत्रैकदेशविकृत-स्यानन्यत्वात्प्रसङ्गः, वी क्रीणीतः अत्रैकादेशस्य पूर्वं प्रत्यन्तवद्भावात्प्रसङ्गः ॥

१ विधिरिति २ ४ पुस्तकयोर्नास्ति ।

"विपराभ्यां जेः"॥ 'साहचर्यादिति'। द्वयोर्दृष्टापचारत्वेऽपि परस्परसाहचर्यादित्यर्थः। 'निर्विश' इत्यादिप्रकरणसाहचर्याद्वा। 'बहुव्रीति'। अत्रापि वे जयसि वो जयत इत्युदाहार्यं, परा, उत्कृष्टा। अथ कथं जेरिति निर्देशः, यावता प्रकृतिवदनुकरणं भवतीति अचि श्नुधात्वित्यादिनेयङादेशेन भवितव्यं, न च दीर्घेषु सावकाशमियङं परत्वात् 'घेर्ङिती' ति गुणो बाधतइति युक्तं, ह्रस्वेष्वपि पूर्वविप्रतिषेधेनेयङ इष्टत्वात्, तथा च 'त्रिय' इति निर्देशः उच्यते, धातुत्वं तावदर्थाश्रयं क्रियावचनो धातुरिति इह वा विवक्षितार्थं रूपमात्रमनुकर्त्तमिति अनुकार्यस्यापि धातुत्वं नास्ति प्रागेवानुकरणस्य॥

"आङो दोऽनास्य विहरणे"॥ यथैवावत्सा धेनुरानीयतामित्युक्ते सम्भवद्वत्ससम्बन्धा गोधेनुरेवानीयते न महिष्यादिधेनुः, तथेहापि सम्भवदास्यविहरणस्य डुदाञ् दानइत्यस्यैव ग्रहणं न तु गामादायग्रहणेष्वविशेष इति सर्वेषां दारूपाणामित्याह। 'आङ्पूर्वाद्दाञ इति'॥ 'आदत्त इति'। श्लो द्विर्वचनं पूर्ववदाकारलोपः दकारस्य चर्त्वं, क्व चिदाङो ङिद्विशिष्टस्य ग्रहणं किं भिक्षामाददातीति पठ्यते तत्र स्मृतावाकारः। 'आस्यविहरणसमानक्रियादपीति'। कथ,मिहाङो दोऽनास्य इतीयता सिद्धं द्रव्ये धातोर्वृत्त्यसम्भवादास्यसमवायिन्यां क्रियायां वर्तमानस्य समुदायस्य निषेधो विज्ञायते, नन्वेवं स्वं मुखमादत्तइत्यत्रापि मुखविषयत्वाद्दादानस्य प्रतिषेधप्रसङ्गः, ग्राह्यास्यएव समवेता क्रिया तस्यां वर्त्तमानो ददातिरास्ये वृत्तिर्भवति ग्रहणन्तु ग्राह्यग्राहिणोरुभयोरपि समवेतम्। अनास्य इति पर्युदासः, आस्यानास्यसमुदायश्चाप्यादन्य इति विधिरेव भविष्यति, एवं सिद्धे विहरणग्रहणं विहरणविशेषोपलक्षणार्थं तेनासत्यप्यास्ये तादृशे विहरणे भविष्यति यादृशमास्यविहरणम् आस्यव्यादानम्। 'विपादिकेति'। पादस्फोटो विपादिका। 'स्वाङ्गकर्मकाच्चेति'। स्वमङ्गं स्वाङ्गं न तु पारिभाषिकमद्रवादिलक्षणं, एतच्च न्यायसिद्धमेवोक्तं, कथं, कर्तरीति वर्तते आस्यशब्दश्चायं सम्बन्धिशब्दः कस्यास्यमित्यपेक्षायां यस्मिन् कर्त्तर्यात्मनेपदं तस्य चेत्तदास्यमिति विज्ञाते तेन परकीयास्यविहरणे विधिरेव भवति॥

"क्रीडोऽनुसमपरिभ्यश्च" ॥ 'माणवकमनुक्रीडतीति'। माणवकेन सह क्रीडतीत्यर्थः। 'तृतीयार्थे' इत्यनुः कर्मप्रवचनीयसंज्ञकः 'आगमेरिति' एयन्तस्येदं ग्रहणम् आगमयस्व तावदिति सहस्व कञ्चित्कालं मा त्वरिष्ठा इत्यर्थः। 'शिक्षेरिति'। शिक्ष विद्योपादान इत्यस्यानुदात्तेत्त्वादेव सिद्धमिति शकेः सन्नन्तस्य ग्रहणं, 'शिक्षत इति'। सनि मीमाघुरभ्यच इस्, स्कोः संयोगाद्योरिति सलोपः, 'अत्र लोपोऽभ्यासस्य' धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः, क्रियाविषयो हि शकेः प्रयोगः भोक्तुं शक्नोति गन्तुं शक्नोतीति, तदिह ज्ञानं विषय आत्मनेपदेनैव ज्ञानविषयत्वस्य गमितत्वाज् ज्ञानमिति न प्रयुज्यते। 'आशिषि नाथ इति'। नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु अनुदात्तेत्, नियमार्थं तु वचनम्, आशिष्येव यथा स्याद् याच्ञादिषु माभूदिति, अनुदात्तेत्वं युजर्थं, 'सर्पिषो नाथ इति'। 'आशिषि नाथ' इति कर्मणि षष्ठी, सर्पिर्मे भूयादित्याशास्त इत्यर्थः। 'हरतेरिति'। गतिः प्रकारः, 'पैतृकमिति'। पितुरागतं प्रकारं सततं शीलयन्तीत्यर्थः। 'अतष्ठन्' 'इसुसुक्तान्तात्कः' प्रत्युदाहरणे सादृश्यमात्रं विवक्षितं न प्रकारताच्छील्यं,'किरतेरिति'। विक्षेपार्थः किरतिः, हर्षादयस्तु विषयत्वेनोपात्ताः, तत्र हर्षो विक्षेपस्य कारणं जीविकाकुलायकरणे तु फलम् एतेष्वर्थेष्वपाच्चतुष्पादिति सुडिवधीयते। 'आनुत इति'। उत्कण्ठापूर्वं शब्दं करोतीत्यर्थः। णु स्तुतौ अदादिः। 'आपृच्छत इति'। प्रच्छ ज्ञीप्सायां तुदादिः, ग्रहीत्यादिना सम्प्रसारणं, 'वाचा शरीरस्पर्शनमिति'। त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येवं रूपः शपथविशेषः। 'देवदत्तायेति'। श्लाघह्नुङ्स्थाशपामिति सम्प्रदानसंज्ञा॥

"समवप्रविभ्यः स्थः" ॥ सन्तिष्ठत इति'। पाघ्रादिसूत्रेण तिष्ठादेशः। अत्राप्युपसर्गग्रहणादिह न भवति वे तिष्ठसि वो तिष्ठत इति। 'अस्ति सकारमिति'। स्तः सन्तीत्यादौ सकारमात्रस्य दर्शनात्स भुवीत्येव धातुः पाठ्यः, अस्तीत्यादौ पिति सार्वधातुके अडागमो विधेयः, आस्ताम् आसन्नित्यादौ आडागमस्यादित्यापिशला मन्यन्ते। 'आगमौ गुणवृद्धी इति'। वैयाकरणाः सौवश्व इत्यादौ वृद्धेरागमत्वमित्याहुः। गुणस्य त्वागमत्वे उदाहरणं मृग्यम्॥

"प्रकाशनस्थेयाख्ययोश्च" ॥ 'स्वाभिप्रायकथनमिति' । कथनमाविष्करणमात्रं न तु शब्देनैव, तेनाभावमाणायामपि कन्यकायां भवति । 'तिष्ठत्यस्मिन्निति' । प्रकरणादिनात्र विवादपदनिर्णेतुः प्रतीतिर्न तु शाब्दीति विषयवाक्ये आत्मनेपदं न कृतं, 'संशय्य कर्णादिष्विति' । संशयस्थानेषु कर्णादीन् निर्णेतृत्वेनाश्रयतीत्यर्थः ॥

'उदोऽनूर्ध्वकर्म्मणि' ॥ 'कर्म्मशब्दः क्रियावाचीति' । साधनकर्म्मणि धातोर्वृत्त्यसम्भवादिति भावः । 'उद ईहायामिति' । ईहा परिस्पन्दः, 'ईहाग्रहणमित्यादि' । ईहात्मकं यदनूर्ध्वकर्मेत्येवमनूर्ध्वकर्म्मण एव विशेषणम् ईहाग्रहणं न पुनरनूर्ध्वकर्म्मग्रहणमपनीय ईहाग्रहणं कर्त्तव्यमित्युच्यतइत्यर्थः । तथा हि सत्यासनादुत्तिष्ठतीत्यत्रापि स्यात्परिस्पन्दरूपत्वादुत्थानस्येति भावः, उद ईहायामित्येतत्कर्म्मग्रहणात् सिद्धमित्याहुः । कथम् ईहाऽनूर्ध्वे इत्येतावताऽनूर्ध्वताविशिष्टं क्रियावाचित्वं सिद्धं धातोः क्रियावाचित्वात्, एवं सिद्धे कर्म्मग्रहणात् लोकप्रसिद्धं परिस्पन्दात्मकं कर्म्म गृह्यतइति ॥

"उपान् मन्त्रकरणे" ॥ पारिभाषिकमत्र करणं गृह्यते, मन्त्रः करणं यस्यार्थस्य तस्मिन्वर्त्तमानादित्यर्थः । 'उपादित्यादि' । अमन्त्रकरणार्थमिदम् । 'सङ्गतकरणमुपश्लेष इति' । विनापि मैत्रीसम्बधात् । 'भुग्नमुपतिष्ठतइति' । प्राप्नोतीत्यर्थः । 'भिक्षुक इति' । लिप्सया हेतुभूतया ब्राह्मणकुलमुपगच्छतीत्यर्थः ॥

"अकर्मकाच्च" ॥ अत्रासम्भवात् क्रिया कर्म्म न गृह्यते, न ह्यस्ति सम्भवो धातुश्च भवत्यक्रियावचनश्चेति । ननु च साधनकर्म्मण्यकर्मकत्वमव्यभिचारादविशेषणं नहि शब्दात्मकस्य धातोः कर्मणा योगवियोगौ सम्भवतः साधनयोगस्य क्रियाधर्मत्वादत आह । 'अकर्म्मकक्रियावचनादिति' । एतेनार्थद्वारकमेतद् धातोर्विशेषणमिति दर्शयति । 'यावदुक्तमिति' । यथार्थे यदव्ययमिति वीप्सायामव्ययीभावः । सप्तम्यन्तं चैतत् । 'संनिधीयतइत्यर्थे इति' । भावे लकारः, अर्थतो व्याख्यानं चैतत्, यो ह्युपतिष्ठते स संनिधत्ते यश्च संनिधत्ते तेन संनिधीयते । 'अकर्म्मकादिति किमिति' । पूर्व-

सूत्रे उपादितियोगविभागादिष्टस्य सिद्धिं पश्यति, न चैवमतिप्रसङ्गः, मन्त्रकरणइत्यस्य नियमार्थत्वात् सकर्म्मकाद्यदि भवति मन्त्रकरणएवेति। 'राजानमुपतिष्ठतीति'। विपरीतोपि नियमः स्यात्, करणे यदि भवति मन्त्रकरणएवेति ततश्चात्र स्यादेवेति भावः ॥

"उद्विभ्यां तपः" ॥ उत्तपति सुवर्णमित्यत्र सन्तापने विलापने वा तपिर्वर्त्तते इति सकर्म्मकत्वं, 'स्वमङ्गं स्वाङ्गमिति'। यस्मिन्कर्त्तर्यात्मनेपदं तस्य चेत् स्वमङ्गमित्यर्थः। यद्यन्वर्थग्रहणं ततोप्राणिन्यपि कर्त्तरि यस्य यदङ्गं तत्कर्म्मकादपि प्रसङ्गः परिभाषिके त्वेव दोषो न भवति तस्य प्राणिस्थत्वात्। अन्वर्थेपि न दोषः तपेः प्राणिकर्तृत्वात्। पारिभाषिकस्य त्वसम्बन्धिशब्दत्वात् कर्तुश्चेत्स्वमङ्गमित्येवं न प्रतीयेतेति भावः ॥

'आङो यमहनः' ॥ 'आहतेति'। अनुदात्तोपदेशेत्यनुनासिकलोपः। 'आघ्नत इति'। पूर्ववदादेशोपधालोपौ कुत्वं च,। 'आहन्ति शिरः परकीयमिति'। आजघ्ने विषमविलोचनस्य वक्ष इत्यत्र तु गाण्डीवी विषमविलोचनस्य वक्ष एत्य स्वं वक्षो हतवानित्यर्थः। मल्लोप्युत्साहवर्धनाय स्वं वक्ष आस्फालयति ॥

"समो गमृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः" ॥ समो गमृच्छिभ्यामित्येतावत्सूत्रं, प्रच्छ्यादयस्तु वार्तिककृदृष्टाः सूत्ररूपेण पठिता. सूत्रकारवद्वार्तिककारोपि शास्त्रस्य कर्ता न व्याख्यातेति दर्शयितुम्। 'तत्र हीति'। उत्तरार्थमनुवर्त्तमानमपि योगविभागसामर्थ्यात् तत्र न सम्बध्यतइत्यर्थः। 'न लाभार्थस्येति' सत्ताविचारणार्थयोस्त्वनुदात्तत्वादात्मनेपदेन भाव्यमेवेति भावः। 'दृशेश्चेत्यादि'। इदं वक्तव्यरूपेणैव पठितं विचित्रा हि वृत्तेः कृतिः वृत्तिकारेण, अथास्मिन्नकर्मकाधिकारे ये सकर्मकाः हनिगमिप्रभृतयस्तेषां कथमकर्म्मकत्वम्, उच्यते ॥

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः कर्म्मणोकर्म्मिका क्रिया ॥

वहति भारमिति, प्रापणे सकर्म्मको. वहिः स्यन्दनेत्वकर्म्मकः। वहन्ति नद्य इति, प्राणविशिष्टं धारणं जीवतिराह, तत्र प्राणानां

धातुनैवोपात्तत्वात्तेन कर्म्मणा सकर्म्मकत्वं, न च प्राणकर्म्मके धारणे ऽन्यस्य कर्म्मत्वमिति जीवतिरकर्म्मकः, प्रसिद्धेर्यथा वर्षतीत्यनुपात्ते कर्म्मान्तरे नियमेन जलं प्रतीयतइति न तेन सकर्म्मकत्वं, तेन वृष्ट देव इति कर्त्तरि क्तो भवति व्यभिचारिणा तु रुधिरादिना सकर्म्मक एव, रुधिरं वर्षति शरान्वर्षतीति, कर्म्मणो ऽविवक्षयाप्यकर्मकत्वं यथा नेह पच्यते नेह भुज्यते इत्यत्र कर्म्मविवक्षायां तत्कर्मिकैव क्रिया प्रतिषिद्धा स्यात् न पाकमात्रमित्यविवक्षा कर्म्मणः ॥

"निसमुपविभ्यो ह्वः" ॥ 'निह्वयतइति'। कथं पुनरत्रात्मनेपदं यावता ह्वा इत्याकारान्तादियं पञ्चमी एकारान्तश्चायं न च विकृतिः प्रकृतिं सगृह्णाति, तत्र माकारान्तात्पञ्चमी न त्विदं प्रयोगस्यस्याकारान्तस्यानुकरणं किं तर्हि धातुपाठे ऽवस्थितैकारान्तस्य तस्यैव लक्षणवशादात्वं, न चानुक्रियमाणरूपविनाशप्रसङ्गः शास्त्रवासनया तस्यैव प्रतीतिः, यथा 'यस्येति च' तीकाराकारयोः ॥

"स्पर्द्धायामाङः" ॥ 'सविषय इति'। हेतुभावेन च विषयत्वम्, अत एव हेतौ शानच् प्रयुक्तः । 'स्पर्द्धमानस्तस्याह्वानमिति'। शब्दक्रिय एवेति'। यद्यपि स्पर्द्धायां पठ्यते तथाप्याङ्पूर्वस्तत्र न वर्तते किं तर्हि शब्दनक्रियावाचीत्यर्थः ॥

"गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः" ॥ 'अपकारयुक्तमिति'। अपकारेण प्रयुक्तमनेन मेपकृतमित्येतया बुध्या कृतमित्यर्थः, अथ वा कथं मया ऽपकृतं स्यादिति बुध्या प्रवर्तितमित्यर्थः । 'हिंसात्मकमिति'। मुख्यतस्य वधबन्धनादिका हिंसा इह तु तत्कारणत्वात् सूचनमेव हिंसा स्वभावमित्युक्तं, कथं पुनर्ज्ञायते गन्धनं हिंसात्मकमित्यत आह । 'तथाहीति'। 'चुरादाविति'। स्वभावानुवादः । 'साहसिक्यमिति'। सहसा वर्त्तते साहसिकः 'ओजःसहोम्भसा वर्तत' इति ठक्, तस्य कर्म्मणि ष्यञ्, वर्तिका शकुनिविशेषः 'एधोदकस्येति'। समाहारद्वन्द्वः । 'कृञः प्रतियत्न' इति षष्ठी । 'उपस्कुरुतइति'। उपात्प्रतियत्नेत्यादिना सुट् ॥

"अधेः प्रसहने"॥ 'प्रसहनमभिभव इति'। सा साह्या युधा नृभिः पृतनाषाडित्यादौ दर्शनात्, केचित्तु षह मर्षणे ऽभिभवे छन्दसीति पठन्ति तत्र छन्दसीति प्रायिकं द्रष्टव्यम्, 'अपराजयो वेति'। पराजेतुं समर्थस्यैव क्षमया यस्तदभावः स इत्यर्थः, तथा च भारविः। भवादृशाश्चेदधिकुर्वते परान् इति, भवादृशाश्चेत्परानधिकुर्वते क्षमया न पराजयन्ते क्षमन्त-इत्यर्थस्तदाह। 'न वा तेन पराजित इत्यर्थ इति'। तेनात्मनेपदवाच्येन कर्त्रा तमित्येतद्वाच्यः कर्मभूतो न पराजित इत्यर्थः। 'पृथग्योगकरणमि-त्यादि'। प्रकथनोपयोगप्रसहनेष्वधेरित्युच्यमाने गन्धनादिष्वपि अधि-पूर्वादेव स्यात्, अथ तत्राधिग्रहणं न क्रियेत प्रसहनेप्यध्यभावेपि प्रसङ्गः, अत उत्सर्गेण प्रसहनं विशेषयिष्यामीति प्रसहने वा उत्सर्गं विशेषयि-ष्यामीति योगविभाग इत्यर्थः॥

"वेः शब्दकर्म्मणः"॥ उदोनूर्ध्वकर्म्मणीत्यादिवत् कर्म्मशब्दः क्रि-यावाची मा विज्ञायीत्याह। 'कर्म्मशब्द इत्यादि'। विपूर्वस्य करोतेः शब्द-क्रियायां वृत्त्यसम्भवात् कृत्रिमसम्भवे लौकिकस्य ग्रहणायोगाच्च, किं च वेः शब्द इत्येव वक्तव्यं कर्म्मग्रहणमनर्थकं, 'विकरोति पय इति,' सकर्म्म-कत्वाद् उत्तरेणापि न भवति॥

"अकर्म्मकाच्च"॥ 'ओदनस्य पूर्णा इति'। सुहितार्थयोगे षष्ठी भवति ज्ञापनात्, यदयं पूरणगुणसुहितार्थेतिसुहितार्थयोगे या षष्ठी सा न समस्यत इत्याह। तज्ज्ञापयत्याचार्यो भवति सुहितार्थयोगे षष्ठीति। 'अक-र्म्मकादिति किमिति'। पूर्वसूत्रे वेरिति योगविभागेनेष्टसिद्धिं मन्यते, न चैव-मतिप्रसङ्गः शब्दकर्म्मण इत्यस्य नियमार्थत्वात् कर्म्मणि यदि भवति शब्द एवेति, कटं विकरोतीति, विपरीतोपि नियमः सम्भाव्येत शब्दे यदि भवति कर्म्मण्येवेति ततश्चात्रापि स्यादिति भावः॥

"सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः"॥ 'सम्माननादिषु विशेषणेषु सत्स्विति'। युक्तं सम्माननाचार्यकरणवेतनानां विशेषणत्वं तत्र हि प्रापणमेव धात्वर्थः सम्माननादीनि तु तमेव विष-यतया व्यवच्छिन्दन्ति, उत्सञ्जनादीनां त्वयुक्तं तेषामेव धात्वर्थत्वात् तद्व्य-तिरिक्तस्य विशेष्यस्यासम्भवात्, उच्यते, सम्माननादेरुत्सञ्जनादेश्च विशे-

यथान्यं समानं पूर्वोक्तं धात्वर्थविशेषणम्, उत्तरस्तु धातुविशेषणमिति विशेष्यमात्रं भिद्यते ऽतः सुष्ठूक्तं सम्माननादिषु विशेषणेष्विति । 'चार्वी बुद्धिरिति' । चारुशब्दात् 'वोतो गुणवचनादि' ति ङीष् 'आचार्यापि चार्वीति' । यथा यष्टीः प्रवेशयेति पुरुषेष्वजहत्स्वलिङ्ग एव यष्टिशब्दः तद्वच् चार्वीशब्दः । 'ते युक्तिभिरित्यादि' । पूर्वस्मिन् वाक्ये गुणभावेनापि प्रकृताः शिष्याः तच्छब्देन परामृश्यन्ते, 'स्थाप्यमानेति' तिष्ठतिः प्रतिपादनेऽत्र वर्त्तते ते शिष्याः युक्तिभिः प्रतिपाद्यमानाः निश्चाय्यमाना इत्यर्थः । 'पूजिता भवन्तीति' । अभिलषितार्थसम्पादनमेवैतेषां पूजा, पदार्था युक्तिभिः स्थाप्यमाना इति तु व्याख्याने पदार्थानामचेतनत्वात् न मुख्यं संम्माननम् । 'उत्क्षिपतीत्यर्थ इति' । तेनोत्सञ्जन नयतेरर्थ इति दर्शयति । आचार्यकरणमाचार्यक्रियेति, सूत्रकृता च कारणावस्थाया विवक्षितत्वात् च्विः प्राप्तोऽपि विकल्पाधिकारान्न कृतः, तथा चाचार्याः कुर्वन्विति च्विः प्रयुक्त, ननूपनयनं माणवकस्य संस्कारो येनासावध्ययने योग्यो भवति न त्वनेनाचार्ये कश्चिदतिशयो जन्यते आचार्यशब्दस्य तु प्रवृत्तिनिमित्तमुपनीयाध्यापनं नाम क्रियाविशेषो यथोपाध्यायशब्दस्यैकदेशाध्यापनं तत्कथमाचार्यकरणेऽऽत्मनेपदं विधीयत इत्यत आह । 'माणवकमीदृशेनेत्यादि' । एवं मन्यते, उपनीयाध्यापनेनादृष्टरूपः कश्चिदतिशय आचार्ये जन्यते तदेव प्रवृत्तिनिमित्तमाचार्यशब्दस्येति तदाह, 'स्वयमाचार्यः सम्पद्यत इति' । 'आत्मानमाचार्यीकुर्वन्निति च' हेतुलक्षणे लटः शत्रादेशः । 'ईदृशेनेति' । यादृशः शास्त्रोक्तो विधिस्तादृशेनेत्यर्थः । ननु यद्याचार्यकमुपनयनस्य प्रयोजनं तत्कर्त्रभिप्रायमिति नार्थ आचार्यकरणआत्मनेपदविधानेन, उच्यते । नोपनयनेनाचार्यकं जन्यते किं तर्हि तत्पूर्वकेणाध्ययनेन, उपनयनक्रियायास्तु माणवकसंस्कारः साक्षात्फलम्, एवं संस्कृतस्य माणवकस्य यदध्यापनं तेनाचार्यकं जन्यत इति न तदुपनयनायाः क्रियायाः फलं, यच्च तस्याः फलं तन्माणवकगामि न कर्तृगामि, 'निश्चिनोतीत्यर्थ इति' । अनेन ज्ञानं नयतेरर्थ इत्याह । 'कारं विनयत इति' । कर एव कारः प्रज्ञादिः, राजग्राह्यो भागः कर्षकैः कल्पितः ॥ (शेषमग्रे)

॥ श्रीः ॥

# साहित्यशास्त्रम्, काव्यप्रकाशस्य परिवृत्तिव्याख्यानम्,

## काव्यप्रदीपः,

### विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

(*Continued from page* 186 · Vol. XII)



मुरजबन्धो यथा—

सरला[क] बहुला[ख]रम्भतरलालिबलारवा ।
वारलाबहुला ऽमन्दकरला ऽबहुलामला[ग] ॥

अथ न्यासः—प्रथमपादस्य वर्णाष्टकं पङ्क्तिक्रमेणाभिलिख्य तेषामधोधो ऽपरपादत्रयवर्णान्पङ्क्तिक्रमेण विलिखेत्· तत्र चैतच्छ्लोकोत्थापनमार्गरेखायां दत्तायां मुरजाकारता भवति ॥




पद्मबन्धो यथा—

भासते प्रतिभासार रसाभाता हताविभा ।
भावितात्मा शुभा वादे देवाभा बत ते सभा ॥

अस्य न्यासः—कर्णिकायां 'भा'—इति, पूर्वपत्रे निर्गमक्रमेण 'सते', आग्नेयपत्रे प्रवेशक्रमेण 'प्रति,' ततो 'भे'ति कर्णिकास्थं श्लिष्टं, ततो दक्षिणपत्रे निष्क्रमणक्रमेण 'सारे'ति वर्णद्वय, ततस्ताभ्यां कर्णिकास्थेन वर्णेन प्रवेशक्रमेण श्लिष्ट 'रसाभे'ति वर्णत्रयम्· एवमग्रेपि दिक्पत्रस्य कर्णिकायाश्च वर्णाः सर्वत्र श्लिष्टा इति ॥

(क) अरला अरकाण्डोद्गमवर्तीति महेश्वरः ।
(ख) अत्र श्लोके बहुलत्रयस्थाने बहुलत्रयं पा· ।
(ग) बहुलामला, बहुले कृष्णपक्षे ऽप्यमलेति च पाठमर्थञ्च. महेश्वरः ।




सर्वतोभद्रं यथा—

रसासार! रसासार सायताक्ष! क्षतायसा।
सातावात! तवातासा रक्षतस्त्वस्त्वतक्षर! ॥

अस्य पादचतुष्टये पूर्ववत्पङ्क्तिचतुष्टयेन लिखिते प्रतिलोमादिपाठेन स एव श्लोकः ॥ सम्भविनोऽप्यन्ये भेदा न दर्शिताः· एते हि शक्तिमात्रप्रकाशकाः, न तु काव्यरूपतां दधत्य, तिनीरसत्वादिति ॥ ८५ ॥

## पुनरुक्तवदाभासो विभिन्नाकारशब्दगा।

## एकार्थतेव[क]

(क) "एकार्थतेति"—इत्येकस्यस्तु मार्शः।

एकार्थतेवेति,[क] एकार्थेनावभासयोग्यशब्दतेत्यर्थः· एतच्च यमक-लाटानुप्रासयोरतिव्यापक,मतो विशिनष्टि–विभिन्नाकारशब्दगेति ॥

स चायं द्विविधः, शब्दमात्रस्य शब्दार्थयोश्च· तयो[ख]राद्यमाह–.

—शब्दस्य—

शब्दमात्रस्येत्यर्थः· अयमपि द्विधा, सभङ्गशब्दनिष्ठो ऽभङ्गशब्द-निष्ठश्च· तयोराद्यो यथा–

अरिवधदेहशरीरः सहसारथिसूततुरगपादातः ।
भाति सदानत्यागःस्थिरतायामवनितलतिलकः ॥

अत्र देहशरीरशब्दयोः पुनरुक्तत्वधीः· सभङ्गौ च तौ, अरिवधदा ईहा यत्र, तादृशाऽशरीरा ईरयतीत्यर्थकत्वात्· एवं सारथिसूतशब्दयोः, सहसा हठेन रथिना सुष्ठुउतं तुरगपादातं यस्येत्यर्थकत्वात्· दानत्यागयोश्च· सदा नत्या भाति, स्थिरतायामगः पर्वत इवेत्यर्थकत्वात्सभङ्गः पुनरुक्त-वदाभासः·[ग] शब्दमात्रालङ्कारत्वं चोभयोरपि शब्दयोः पर्यायपरिवृत्त्य-सहत्वात्[घ] । अभङ्गशब्दनिष्ठो यथा–

चकासत्यङ्गनारामाः कौतुकानन्दहेतवः ।
तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्त्तिनः ॥

अत्राङ्गनारामाशब्दयोस्त्र्यर्थकतया पुनरुक्तत्वधीः· वस्तुतस्तु, अङ्गने आरमन्त्यङ्गनारामा इति, अङ्गनानामारामा इति वाऽर्थे इति न पुनरुक्तिः· नचात्र शब्दभङ्गः· शब्दमात्रालङ्कारत्वञ्चैकस्यापि परिवृत्त्यसहत्वात्· एवं कौतुकानन्दशब्दयोः सुमनोविबुधशब्दयोश्च द्रष्टव्यम् ॥–॥

उभयालङ्कारं द्वितीयमाह–

तथा शब्दार्थयोरयम्·॥ ८९ ॥

(क) एकार्थतेवेतीति प्रतीकग्रहणमन्यत्र नास्ति ।
(ख) ययोरिति प्रायः पुस्तकेषु लभ्यते ।
(ग) "०इवेत्यर्थकत्वात् ।· अभङ्गः पुनरुक्तवदाभासः"–इति पु० ।
(घ) ०असहत्वमिति पु० ।

यथा—

तनुवपुरजघन्यो ऽसौ करिकुञ्जररुधिररक्तखरनखरः ।
तेजोधाममहः पृथुमनसामिन्द्रो हरिर्जिष्णुः ॥

अत्र 'तनुवपुः' शब्दयोः पुनरुक्तधी, स्तद्विरहस्तु, तनुशब्द स्याल्पार्थकत्वात्· अयं चोभयालङ्कार, स्तनुशब्दस्य पर्यायपरिवृत्त्यसहत्वात्· एवं करिकुञ्जरयो, स्तेजोधाममहःशब्दाना, मिन्द्रहरिजिष्णुशब्दानां तदाभासत्वमुभयालङ्कारत्वं च[क] द्रष्टव्यम्· यद्यप्युभयालङ्कारो ऽत्र न प्रक्रत, स्तथापि शब्दमात्रालङ्कारस्यैतद्भेदस्यात्र प्रकरणे ऽवश्यवक्तव्यतया तत्प्रसङ्गादुभयालङ्कारत्वानपायाच्चोभयालङ्कारभूतोप्ययमत्रोक्तः· उभयालङ्कारान्तराणां तु न कोपि भेदः शब्दमात्रालङ्कारइति न तान्यत्र पठितानीति सर्वं रमणीयम् ॥ ८६ ॥

इति श्रीमहोपाध्यायगोविन्दप्रणीते काव्यप्रदीपे नवम उल्लासः ॥ *[ख]

## ॥ अथ दशम उल्लासः ॥

अथार्थालङ्कारा लक्षणीयाः· ते च.

उपमा, ऽनन्वयस्तद्व, दुपमेयोपमा ततः, (१,२,३)
उत्प्रेक्षा, ऽथ ससन्देहो, रूपका, पह्नुती तथा, ॥ (४,५,६,७)
श्लेष, स्तथा समासोक्तिः, प्रोक्ता चैव निदर्शना, । (८,९,१०)
अप्रस्तुतप्रशंसा, ऽतिशयोक्ती परिकीर्त्तिते ॥ (११,१२)
प्रतिवस्तूपमा, तद्वद्दृष्टान्तो, दीपकं तथा, । (१३,१४,१५)
तुल्ययोगितया चैव, व्यतिरेकः प्रकीर्त्तितः, ॥ (१६,१७)
आक्षेपो, विभावना च, विशेषोक्तिस्तथैव च, । (१८,१९,२०)
यथासङ्ख्य, मर्थान्तरन्यासः स्यातां, विरोधवत्, ॥ (२१,२२,२३)
स्वभावोक्ति,स्तथा व्याजस्तुतिः प्रोक्ता, सहोक्तिवत्, । (२४,२५,२६)
विनोक्ति, परिवृत्ती च, भाविकं, काव्यलिङ्गवत्, ॥ (२७,२८,२९,३०)

(क) ०शब्दानां तदाभासकत्वं चेति पु· न किंचित् ।
(ख) "इति श्रीगोविन्दठक्कुरकृते काव्यप्रदीपे शब्दालङ्कारनिर्णयो नवमोल्लासः ॥"—इति पु· ।

पर्यायोक्त,मुदात्तं च समुच्चय उदीरितः; । (३१ ३२,३३)
पर्याय,श्चानुमानं च, प्रोक्तः परिकरस्तथा, ॥ (३४,३५,३६)
व्याजोक्ति, परिसङ्ख्ये च विज्ञेये, हेतुमालया, । (३७,३८,३९)
अन्योन्य,मुत्तरं, सूक्ष्म, सार,[क] स्तद्वदऽङ्गतिः, ॥ (४० ४१,४२,४३,४४)
समाधिश्च, समेन स्या,द्विषमस्त्वधिकेन च, । (४५,४६,४७,४८)
प्रत्यनीकं, मीलितं च, स्यातामेकावली,स्मृती,[ख] ॥ (४९,५०,५१,५२)
भ्रान्तिमांस्तु, प्रतीपेन, सामान्यं च, विशेषवत् । (५३,५४,५५,५६)
तद्गुणा,ऽतद्गुणौ चैव, व्याघातः परिकीर्तितः ॥ (५७,५८,५९)
संसृष्टि, सङ्करौ चैवमेकषष्टिरुदीरिताः ॥ (६०, ६१)

तेष्वनेकालङ्कारमूलभूतत्वेन, सौकुमार्यातिशयाच्च प्रधानमुपमां प्रथमं लक्षयति—

## साधर्म्यमुपमा भेदे—

ननु साधर्म्यस्य प्रतियोग्यनुयोगिनिरूप्यतया तदनभिधाने न्यूनत्वं लक्षणवाक्यस्येति चेत्, आक्षेपादुपमानोपमेयरूपयोस्तयोर्लाभात्· नच प्रतियोग्यनुयोगिमात्राक्षेपे ऽतिप्रसङ्गः, उपमानोपमेये विना ऽन्यस्य कार्यकारणादिमात्रस्य साधर्म्याभावात्· एवं चोपमानोपमेययोः समानेन धर्मेण सम्बन्ध उपमेति लक्षणम्· अत्र चोपमानोपमेययोराक्षेपः साधर्म्यप्रतिपत्तिमात्रफलको, नतु व्यावर्तकः· नन्वेवं भेद इत्यनुपादेयम्, तस्याप्याक्षेपादेव लाभसम्भवात्· नह्यभेदे सादृश्यात्मकं साधर्म्यमिति चेन्न, साधर्म्यपदस्यारोपितानारोपितसाधारणसमानधर्मसम्बन्धमात्रपरत्वेनारोपितसाधर्म्यनिबन्धनस्यानन्वयालङ्कारस्य व्यवच्छेद्यत्वात्· अलङ्कारत्वे सतीत्यपि पूरणीयं, साधर्म्यमात्रस्योपमात्वाभावात् ॥—॥

एनां[ग] विभजते—

(क) सूक्ष्मसाराविति पु· ।
(ख) एकावलिस्मृती इति पा· ।
(ग) एतामिति पा· ।

—पूर्णा लुप्ता च—

यत्रोपमानोपमेयसाधारणधर्माणामुपमाप्रतिपादकशब्दस्य चोपादानं, सा पूर्णा· एतच्चतुष्कमध्ये एकस्य द्वयोस्त्रयाणां वा ऽनुपादानं यत्र, सा लुप्ता ॥–॥

तयोः पूर्णां विभजते

—सा ऽग्रिमा ।

श्रौत्याऽऽर्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥ ७८ ॥

अग्रिमा प्रथमोद्दिष्टा, पूर्णेत्यर्थः· वाक्यं विग्रहः· तेन उपमानादिपदानि चत्वार्यपि यत्रासमस्तानि भिन्नविभक्तिकानि सा वाक्यगा· यत्र तु तेषु कयोरपि समासः, सा समासगा· तद्धितेनोपमाप्रतिपादकेन तु सममुपमानवाचिन्याः प्रकृतेर्न समासो नापि विग्रह इति तत्र तृतीय उपमाभेदः· त्रिविधाप्येषा श्रौत्यार्थीभेदात्प्रत्येकं द्विविधेति षड्विधा पूर्णेत्यर्थः· श्रौतत्वं चोपमानोपमेययोः साधारणधर्मसम्बन्धरूपायास्तस्याः शाब्दबोधविषयत्वम्, अर्थापत्तिगम्यत्वं चार्थत्वम्· तत्र यथे,व,वादि-(क) शब्दानां "तत्र तस्येवे"त्यनेनेवार्थे विहितस्य वतेश्चोपादाने श्रौती· तुल्यादीनां शब्दानां "तेन तुल्य"मित्यादिना तुल्यार्थे विहितस्य वतेश्च प्रयोग आर्थी· नन्वयं विभागो ऽनुपपन्नः, उभयत्र सादृश्यप्रत्ययाविशेषात्· नच वाच्यं, यथादिशब्दैः साधारणधर्मसम्बन्ध उभयत्र शक्त्यैव.बोध्यते, न पुनस्तुल्यादिशब्दै,रयमेव विशेष इति· यतो, यथादिशब्दा यदनन्तरमुपात्तास्तस्यैवोपमानताप्रतीतिरित्युपमानविशेषणानि ते· अत उपमाने तत्सम्बन्धं बोधयन्तु,(ख) न पुनरुपमेये, अन्यविशेषणस्यान्यत्र सम्बन्धबोधकत्वायोगादिति चेन्न, ,शब्दशक्तिस्वाभाव्यादन्यविशेषणत्वे ऽप्यन्यत्र सम्बन्धबोधकत्वात्·(ग) नचादृष्टचरत्वम्, षष्ठ्यां तथादर्शनात्· षष्ठी हि यदनन्तरमुपात्ता,तस्यैवोपसर्जनत्वप्रतीतिरित्युपसर्जनविशेषणत्वेपि प्रधानेपि

(क) "यथा इव वादि"—इति, "यथा इव वा इत्यादि०"—इति च पुस्तकान्तरे।

(ख) बोधयितुमिति पुस्तकान्तरपाठे तु समर्था इत्यध्याहार्यम् ।

(ग) सम्बन्धकत्वादिति पु· ।

सम्बन्धं बोधयति· तस्मात्प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या च सम्बन्धबोधे विशेषाच्छ्रौतार्थविभाग इति मन्तव्यम्· तथाहि, 'पद्ममिव मुख'मित्यादावुपात्तस्याक्षिप्तस्य वा रमणीयत्वादेः सम्बन्धमविषयीकृत्यापर्यवसानम्, यथादिशब्दानां धर्मविशेषसम्बन्ध एव शक्तत्वात्· तुल्यादिशब्दास्तु नैवम्, 'पद्मेन तुल्यम्मुख'मित्यादावुपमेये, 'पद्मं तुल्यं मुखस्ये'त्यादावुपमाने, मुखं पद्मं च तुल्य'मित्यादावुभयत्रापि सामान्यतस्तुल्यत्वं बोधयित्वा विश्रान्तेषु तेषु धर्मविशेषं विना कथं तुल्यतेति प्रतीतानुपपत्त्या धर्मविशेषसम्बन्धप्रतीतेरिति· केचित्तु–उपमानोपमेयाभावरूपसम्बन्धस्य श्रौतार्थत्वाभ्यां विशेष इति व्याचक्रुः, तदयुक्तं, "साधर्म्यस्यार्थत्वात् तुल्यादिपदोपादान आर्थी'तिप्रकाशविरोधात्· यस्यैव ह्यार्थतयोपमाया आर्थत्वं, तस्यैव श्रौततया श्रौतत्वौचित्यात्· किञ्च, साधर्म्यमेवोपमिति तस्यैव श्रौतत्वार्थत्वाभ्यामुपमाभेदो युक्तः· अत एव 'यथादिना सादृश्यरूपः सम्बन्ध एव साक्षादभिधीयते षष्ठीवत्· तुल्यादिभिस्तु धर्म्यपी"ति व्याख्यानमनुपादेयम्· तथाप्यनुपपन्नो विभागः, पूर्णायां द्योतकोपमानयोरेव हि समासः सम्भावितः· नच यथादिभिः सममसौ दृश्यते,' येन समासे श्रौती स्यादिति चेन्न, "इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं चे"त्यनेन इवशब्देन समं समासविभक्त्यलोपयोः सम्भवात्· विभक्त्यलोपदर्शनाच्च तत्राऽसमासव्यवहारो मूढानाम्· तत्र वाक्ये श्रौती यथा–

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चयति, ।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ (१)

अत्र विजयश्रीरुपमेया, स्वाधीनपतिकोपमानं, 'न मुञ्चती'ति साधारणो धर्मः, यथेत्युपमाप्रतिपादकं विवक्षितम्· एवमग्रेऽप्यूह्यम्· नचैतेषां कयोरपि समास इति वाक्यगा श्रौती । वाक्यगार्थी यथा–

चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारिकान्ति ।
सरसिजमिदमाननं च तस्याः सममिति चेतसि संमदं विधत्ते ॥ (२)

इयं समशब्दप्रयोगादार्थी । समासे श्रौती यथा–

अत्यायतैर्नियमकारिभिरुद्धतानां दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं बभार ॥ (३)

अत्रेवेन समासः । समास आर्थी यथा—

अवितथमनोरथपथप्रथनेषु गुण[क]गरिमगीतश्रीः ।
सुरतरुसदृशः सभवानभिलषणीयः क्षितीश्वर ! न कस्य ॥ (४)

अत्र सुरतरुसदृश इत्युपमानद्योतकयोस्समासः । तद्धिते श्रौत्यार्थी यथा—

गम्भीर्यगरिमा सत्य गङ्गाभुजङ्गवत्, । (५) तस्य
दुरालोकश्च समरे निदाघाम्बररत्नवत्, ॥ (६)

अत्र गङ्गाभुजङ्गवदिति श्रौती, "तत्र तस्येवे"त्यनेनेवार्थे वतेर्विधानात्· निदाघाम्बररत्नवदित्यार्थी, तेन तुल्यमित्यर्थे वतेः प्रयोगात्

ननु चित्रभेदा अलङ्कारनिर्णये निर्णेष्यन्त इति पूर्वमवादीः· इदानीं स्वप्ने पीत्युदाहरसि· नच तच्चित्रं भवितुमर्हति· अत्र हि स्वाधीनपतिका कान्तं भजमाना यथा चमत्कारभू,[क]स्तथा जयश्रीस्त्वदासेवनेनेत्यादि वस्तुरूपं व्यङ्ग्यं विना नोक्तेर्वैचित्र्यम्· वैचित्र्यं चालङ्कारत्वनिष्पत्तय इति व्यङ्ग्यमवश्यापेक्षणीयम्· अतस्तस्य प्राधान्ये ध्वनित्वम्, अप्राधान्ये गुणीभूतव्यङ्ग्यत्वम्· तस्मात्पूर्वापरविरुद्धाभिधानमिति चेन्नैवं वादी., न खलु व्यङ्ग्यपरामर्शादेवात्र चारुताप्रतीतिरपि तु वाच्योपमामात्रपरामर्शादेव· चारुत्वहेतुश्चालङ्कारः· अवर्जनीयसन्निधेश्च व्यङ्ग्यस्यास्फुटतरतया[ख] न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारप्रवर्त्तकतेति न कश्चिद्दोषः· नन्वेवमप्युदाहृते रसादिरूपव्यङ्ग्यसद्भावाच्चित्रतानुपपत्तिः· किञ्च, अनुप्रासाद्यलङ्कारान्तरसद्भावात् सङ्करालङ्कारोदाहरणान्येतानि युक्तानि, न तु शुद्धाया उपमाया इति चेन्न, रसादिरूपव्यङ्ग्ययोऽलङ्कारान्तरं चैतेष्वव्यभिचारीति तत्रोदासीन्यमालम्ब्योपमालङ्कारोयमीदृश इत्यभिप्रायेणालङ्कारमात्रमुदाहृतं, न

---

(क) प्रथने प्रगुणेति पु· ।
(क) भूर्मिर्रति पु· ।
(ख) व्यङ्गस्य स्फुटतरतयेति पु· ।

तु चित्रकाव्यम्· अत्र 'चन्द्रधवलः पट' इत्यादिको रसालङ्काराभ्यामसंभिन्न एव विषयः किमिति नोदाह्रियत इति चे,त्तद्राहितत्वेनोदाहरणे वैरस्यप्रसङ्गात्· तादृशवाक्यस्याकाव्यत्वेन तस्या अप्यनुपमात्वात् ॥ ८७ ॥

अथ लुप्ता विभजनीया· सा च सप्तधा· तत्रैकस्य लोपे त्रिधा, उपमानस्य, साधारणधर्मस्य, द्योतकस्य च लोपात्, उपमेयमात्रस्य लोपादर्शनात्. द्विलोपेपि त्रिधा, धर्मवाद्योः, धर्मोपमानयो,र्वाद्युपमेययोश्च लोपात्, अन्यस्य द्विकस्य· लोपासम्भवात्· त्रिलोपे त्वियमेका, उपमेयं विना ऽन्येषामेकैकमात्रसत्त्व उपमाया असंभवादिति दर्शयन्नेव यथासंभवं तासां सप्तविधानामपि विभागमाह–

तद्वद्धर्मस्य लोपे स्यान्न श्रौती तद्धिते पुनः।

धर्मस्य, साधारणस्य· तद्वत्, समासे, वाक्ये, तद्धिते च, श्रौती आर्थी चेत्यर्थः· तत्र विशेषमाह–न श्रौती तद्धित इति·· इवार्थ एव हि तद्धिते सा श्रौती भवेत्· इवार्थश्च वतिरेव· स च "तत्र तस्येव"त्यर्थकतया नित्यं धर्मसाकाङ्क्ष इति धर्मानुपादाने श्रौती तद्धिते न भवत्येव· आर्थी तु यद्यपि वतिरूपे तद्धिते न सम्भवति, तेन तुल्यमित्यर्थे उक्तन्यायेन नित्यं तुल्यक्रियाकाङ्क्षत्वेन धर्मलोपे तदसम्भवात्· तथापि, कल्पब्देश्यदेशीयबहुज्रूपे[क]सम्भवत्येवेति पञ्चधा धर्मलोपोपमेत्यर्थः· तत्र वाक्ये श्रौती यथा–

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः।
करणीयं वचश्चेतः सत्यं तस्याऽमृतं यथा॥

तत्रामृतवचसोः परिणामसुरसत्वादि साधर्म्यम्· तच्च नोपात्तम्· आतेपात्तु लब्धस्य[ख]सम्बन्धो यथाशब्देन तद्बोधं[ग] विना ऽपर्याप्तेर्न[घ] श्रुत्यैव बोध्यत इति धर्मलोपे श्रौतीयम्· एवमग्रेऽप्यूह्यम्। वाक्ये आर्थी यथा–

(क) कल्पपदेश्यदेशीयबहुच्रूपे–इति पु०।
(ख) लभ्यस्येति पु०।
(ग) यथाशब्देन बोधमिति पु०।
(घ) अपर्याप्तेनेति पु०।

आकृष्टकरवालोऽसौ सम्पराये परिभ्रमन् ।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः ॥

आकृष्टकरवालत्वं च न साधारणो धर्मः, यमस्य दण्डायुधत्वेन प्रसिद्धेः । अन्त्यत्रयं यथा–

करवालइवाचार,स्तस्य वागमृतोपमा, ।
विषकल्पं मनो, वेत्सि, यदि जीवसि, तत्सखे! ॥

अत्र करवालइवेति समासे श्रौती, अमृतोपमेति समास आर्थी, विषकल्पमिति तद्धित आर्थी ॥ ५ ॥

उपमानानुपादाने वाक्यगा ऽथ सामासगा ॥ ८८ ॥

अत्र तद्धितगा न सम्भवति, उपमाप्रतिपादकस्य तद्धितस्य वति-कल्पबादेरुपमानादेव विधानेन उपमानानुपादानासम्भवात्· न वा श्रौती, इवादीनामुपमानमात्रान्विततया तदनुपादानात्· अतो वाक्यसमासयोरिव तयोरप्यार्थ्येवेति द्विप्रकारा लुप्तोपमानोपमा· तत्र वाक्यगा यथा–

सअलकरणपरिवीसामसिरिविअरणं ण सरसकव्वस्स ।
दीसइ अहवा णिसम्मइ सरिसं अंसंसमेत्तेण ॥

अत्र विशेषेण उपमानं नोपात्तं चिन्त्यमेतत् इदमेव 'कव्वस्से'त्यत्र कव्वसमं'सरिस'मित्यत्र गुणार्णमितिपाठे समासगोदाहरणम् ॥ ८८ ॥

द्योतकलोपे वाक्यगा तावच्च सम्भवति, मुखं चन्द्रो रमणीयमेतावन्मात्रेणोपमाप्रत्ययाभावात्· नापि तद्धितगा, वतेः कल्पबादीनां च द्योतकतया तत्प्रयोगे द्योतकलोपस्यैव सम्भवात्· नवा श्रौतीत्यन्यथा विभजते–

वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि ।
कर्मकर्त्रोर्णमुलि–

वाशब्द उपमाद्योतक इति वादेरुपमाद्योतकस्येत्यर्थः· तस्य लोपे समासे क्यचि क्यङि णमुलि चोपमा· तत्र क्यचि द्विधा कर्मणो ऽधिकरणाच्च विधानेन तस्य द्वैविध्यात्· क्यङि त्वेकैव, कर्त्तुरेव तद्विधानात्·

णमुल्यपि द्विधा, कर्मकर्त्रोस्तद्विधानात्· तत्र समासे द्विधा, द्वयोस्त्रया-णामपि वोपमानादिपदानां समासात्· तयोराद्या यथा—

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगऽलङ्कृता ॥

अत्र गण्डपाण्डुनेति द्वयोः समासः । द्वितीया यथा—

असितभुजगभीषणासिपत्रो रुहरुहिकाहितचित्ततूर्णचारः ।
पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेऽयमासीत् ॥

अत्रासितभुजगेत्यादावुपमानधर्मोपमेयशब्दानां त्रयाणामपि समासः· क्यच्क्यङोर्भेदत्रयं यथा—

पौरं सुतीयति जनं, समरान्तरे ऽसा-
वन्तःपुरीयति विचित्रचरित्रचुञ्चुः, ।
नारीयते समरसीम्नि कृपाणपाणे-
रालोक्य तस्य चरितानि सपत्नसेना ॥

अत्र 'पौरं सुतीयती'त्यत्रो"पमानादाचार" इति कर्मणः क्यच् 'समरान्तरेऽन्तःपुरीयती'त्यत्रा"धिकरणाच्चे"त्यनेनाधिकरणात्·'नारीयत' इत्यत्र "कर्त्तुः क्यङ् सलोपश्चे"त्यनेन कर्त्तुः क्यङ् । णमुलि भेदद्वयं यथा—

मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे, ।
स पुनः पार्थसंचारं संचरत्यवनीपतिः ॥

अत्र निदाघघर्मांशुदर्शमिति कर्मणि णमुल्, निदाघघर्मांशुमिव पश्यन्तीत्यर्थात्, पार्थसंचारमित्यत्र कर्त्तरि, "उपमाने कर्मणि चे"ति सूत्रे चकारात् ॥–॥

अथ द्विलोपे विभजनीया· तत्र धर्मवाद्योर्लोपे वाक्यगा न संभवति· शिष्टयोर्मुखं चन्द्र इत्येतावन्मात्रयोरुपादान उपमानावगमात्· नापि तद्धितगा, तद्धितस्यापि कल्पबादित्वेन तत्सत्त्वे द्विलोपाभावात्· नापि श्रौती, इवाद्यभावादित्यन्यथा विभजते—

( शेषमग्रे )

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम् ।

श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम् ।

तत्र प्रथमाध्यायस्यावशेषः ।

(*Continued from page* 198. Vol. XII.)

भा० एतदुक्तम्भवति—यद्यपि अथ यदतः परो दिवो ज्योतिर्दीप्यत इत्यस्मिन्वाक्ये परमपुरुषासाधारणलिङ्गन्नोपलभ्यते तथाऽपि पूर्ववाक्ये द्युसम्बन्धितया परमपुरुषनिर्देशादिदमपि द्युसम्बन्धिज्योतिस्स एवेति प्रत्यभिज्ञायत इति कौक्षेयज्योतिषैक्योपदेशश्च फलाय तदात्मकत्वानुसन्धानविधिरिति न कश्चिद्दोषः, कौक्षेयज्योतिषश्च तदात्मकत्वम्भगवता स्वयमेवोक्तम् "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित" इति, ॥

सू० छन्दोऽभिधानान्नेति चेन्न तथाचेतोऽर्पण-
निगमात्तथा हि दर्शनम् ॥ २६ ॥

पूर्वस्मिन्वाक्ये "गायत्री वा इदं सर्वमिति गायत्र्याख्यं छन्दोऽभिधाय तदेतदृचाभ्यनूक्तमित्युदाहृतायास्तावानस्य महिमा इत्यस्या ऋचोऽपि छन्दोविषयत्वान्नात्र परमपुरुषाभिधानमिति चेन्न तथा चेतोऽर्पणनिगमात् ।

टी० "एतदुक्तमि"ति, ज्योतिश्शब्दश्रुत्यपेक्षया स्ववाक्यस्थं पूर्ववाक्यप्रत्यभिज्ञापकं द्युसम्बन्धित्वलिङ्गं प्रकरणञ्च दुर्बलमिति चेत् न अनुवादलक्षणयच्छब्दसमभिव्याहारेण अन्यसापेक्षताज्ञापकेन ज्योतिश्शब्दस्य दुर्बलत्वावगमात् प्रथमप्रतिपन्नयच्छब्दश्रुत्या सहकृतस्य द्युसम्बन्धित्व-

लिङ्गस्य प्रबलत्वाच्च, इदं ज्योतिश्शब्दस्यादित्याद्यसाधारण्याभ्युपगमेनोक्तं, तच्च न अवभासकत्वनिमित्तत्वान् ज्योतिश्शब्दस्य, नारायणपरो ज्योतिरित्यादिप्रयोगाच्च । उक्तं पूर्वपक्षहेतुं परिहरति "कौक्षेये"ति, फलायेति, चक्षुष्यः श्रुतो भवतीत्युक्तफलायेत्यर्थः, तदात्मकत्वेति "तदेतद्दृष्टञ्च श्रुतं चेत्युपासीते"त्यत्र तदेतच्छब्दो तदात्मकज्योतिर्विषयौ तदात्मकत्वेन प्रकृतत्वादिति भावः । "अन्नादो वसुदानः" "चतुर्विधा भजन्ते मां" "सकलफलप्रदो हि विष्णु"रित्यादिश्रुतिस्मृतिवशात्सकलफलप्रदस्य परमात्मनश्चक्षुष्यत्वादिविद्यानुगुणफलहेतुत्वमत्र युक्तमित्यभिप्रायेणाह "न कश्चिद्दोष" इति, तदात्मकत्वे प्रमाणं दर्शयति "कौक्षेयज्योतिषश्चे"ति, वेदनस्य यथार्थविषयत्वे सम्भवति अतस्मिंस्तद्दृष्टिरूपताऽऽश्रयणं परोक्तमयुक्तमिति भावः । द्युसम्बन्धिविषयस्य पूर्ववाक्यस्य परमात्मपरत्वमाक्षिप्य साधत्ते 'छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात्तथा हि दर्शनम्" । सूत्रे शङ्कोपन्यासपरम् अंशं व्याचष्टे 'पूर्वस्मिन्नि"ति, परिहारखण्डस्थं नेति पदं मपूरकमादत्ते "नचे"ति, छन्दोऽभिधानाच्चेत्यर्थः, तथा चेतोऽर्पणनिगमादिति स्वाभिमतनिर्वाहं वदता सूत्रकारेणाभिप्रेतां छन्दोमात्रपरत्वानुपपत्तिमाह—

मू० न गायत्री–शब्देन छन्दोमात्रमिहाभिधीयते छन्दोमात्रस्य सर्वात्मकत्वानुपपत्तेः, अपि तु ब्रह्मण[१] एव गायत्रीचेतोऽर्पणमिह निगम्यते—ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलायोपदिश्यत इत्यर्थः, सम्भवति च पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवीति चतुष्पदो ब्रह्मणः चतुष्पदा गायत्र्या च सादृश्यम् ।

टी० "न गायत्री"ति, कुत इत्यत्राह "छन्दोमात्रस्ये"ति, पूर्वसूत्रे चरणाभिधानादिति स्वपक्षसाधकतया कण्ठोक्तस्य हेतोः पूर्वपक्षेऽनुपपत्ति

१ ब्रह्मण्येवेति पाठान्तरं तु युक्तम् ।

सूत्रकाराभिप्रेतेति भावः । ननु गायत्र्यां ब्रह्मदृष्टिरिति दृष्टिविशेषणभूतब्रह्मणशब्देनाभिधानोपपत्तिरिति चेन्न मनो ब्रह्मेतिवत् दृष्टिविशेषणभूतब्रह्मवाचिपदसामानाधिकरण्याभावात्, दृष्टिविधानाभ्युपगमेऽपि तावानिति मन्त्रस्य दृष्टिविशेषणब्रह्मपरत्वेनोत्तरवाक्ये ब्रह्मवत्यभिज्ञानोपपत्तेस्तदभ्युपगमवैयर्थ्यात्, अतो गायत्र्यां ब्रह्मदृष्टिश्चोदयितुरनभिमता यादवप्रकाशैस्तु "गायत्री वा इत्यादिब्राह्मणोक्तसर्वभूतवाक्पृथिवीशरीरहृदयप्राणात्मकत्वाभिधानात् न छन्दोमात्रमिति व्याख्यातं, ततोऽपीदमुचितम् अश्रुतं हेतुं कल्पयित्वा तदनुपपत्त्या छन्दःपरत्वप्रतिक्षेपादपि पूर्वसूत्रश्रुतहेतोरेवानुपपत्त्या तत्प्रतिक्षेपोपपत्तेः स्ववाक्यस्थहेतुविवक्षा न्याय्येति चेत् सत्यं, स तु हेतुरनन्तरसूत्रे विवक्षितः, मन्त्रवर्णोक्तपादवत्त्वं तत्र विवक्षितमिति चेत् न स्वपक्षसाधनाय तस्याग्रसूत्रे कण्ठोक्तत्वात्तच्छङ्कापरिहाराय तवेत्यत्र तस्यैवाभिप्रेतत्वाश्रयणोपपत्तेः क्वचिदुक्तस्य ह्यन्यत्रोपजीव्यत्वं न्याय्यम्, अन्यत्रानुक्तस्य च क्वचिदुक्तिरपेक्षिता सा चेत्सिध्यति तदनुगुणो निर्वाहो न्याय्यः, एवं छन्दःपरत्वेन उपपन्ने सति तस्य वाक्यस्य कोऽर्थ? इत्यत्राह "अपि त्वि"ति, चेतोऽर्पण शब्दं निगम-शब्दं च विवृण्वन् कस्मिन् किमर्थ-मित्याकाङ्क्षां च परयति "ब्रह्मणि" इति, अनुसंधानोपदेश शब्दाभ्यां चेतोऽर्पण-निगम-शब्दौ विवृतौ । केनाकारेण सादृश्यम्? इत्यत्राह "संभवति चे" ति, गायत्रीसादृश्यं चतुष्पात्त्वलक्षणं चतुष्पात्त्वमेवानुसंधेयम् । नन्विह नामधेयत्वं फलं च श्रूयते "न पूर्णामप्रवर्तिनीं श्रियं लभते य एवं वेदे"ति श्रवणात् पूर्णत्वम्-अपरिच्छिन्नत्वमप्रवर्तित्वमचलत्वं स्थिरत्वमनन्तस्थिरा च श्रीः-मुक्तैश्वर्यम् । ननु हार्दाकाशविशिष्टपरमात्मोपासनफलं हि तच्छ्रूयते 'यद्वैतद् ब्रह्मेति इदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशः यो वै स बहिर्धा पुरुषादाकाशोऽयं वाव सः योऽयमन्तः पुरुष आकाशो यो, वै सोऽन्तः पुरुष आकाशोऽयं वाव सः योऽयमन्तहृदय आकाशस्तदेतत्पूर्णमप्रवर्ती'ति हि श्रूयते अतो न गायत्रीसादृश्यानुसन्धानफलमिदमिति, उच्यते स्वतोऽपरिच्छिन्नत्वेऽपि ब्रह्मणः परिच्छिन्नैः यथार्थैः चतुष्पात्त्वोपदेशस्योपासनार्थत्वाभावे वैयर्थ्यात्, प्रकरणो-

तस्य फलान्तराविधानाच्च गायत्रीसादृश्यरूपस्य चतुष्पात्त्वस्यानुसन्धेयता प्रतीयते, तत्र भूतपृथिवीशरीरहृदयैश्चतुष्पात्त्वेऽभिहिते ब्रह्मणो ऽपूर्णत्वास्थिरत्वशङ्काव्यावृत्त्यर्थं पूर्णत्वाप्रवृत्तित्वगुणकतयैव चतुष्पाद्ब्रह्मणा उपासनं विधीयत इति, "त्रिपदा गायत्रीति" हि श्रुतिः तत्कथं चतुष्पात्त्व? मित्यत्राह-

सू० चतुष्पदा च गायत्री क्वचिद्दृश्यते तद्यथा "इन्द्रः शचीपतिर्बलेन पीडितो दुश्च्यवनो वृषा समित्सु सासहि"रिति, तथा ह्यन्यत्रापि सादृश्याच्छन्दोऽभिधायी शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते यथा सम्वर्गविद्यायां "ते वा एते पञ्चान्ये पञ्चान्ये दश सम्पद्यन्त इत्यारभ्य "सैषा विराडन्नादि"त्युच्यते । इतश्च गायत्री-शब्देन ब्रह्मैवाभिधीयते-

सू० भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २७ ॥

टी० "चतुष्पदा चे"ति, गायत्री-शब्दस्य मुख्यार्थाविवक्षा कथ? मिति शङ्कायां तथा हि दर्शनमिति सूत्रखण्डं व्याचष्टे "तथा ह्यन्यत्रापीत्यादिना, वाय्वग्निचन्द्रसूर्यसलिलानि प्राणवाक्चक्षुःश्रोत्रमनांसि च दशसङ्ख्यत्वाद्विराट्, सदृशे सदृशान्तरवाचिशब्दप्रयोगः श्रुतिसमाधिरित्यर्थः अन्नात् अवश्य तदत्ति चेत्यन्नात् । ननु ज्योतिर्वाक्ये परमात्मलिङ्गाभावादाद्यं सूत्रं तस्य परमात्मपरत्वसमर्थनार्थमिति सप्रयोजनं, द्वितीयन्तु किमर्थं छन्दोमात्रप्रसिद्धस्यापि गायत्रीशब्दस्य परमात्मासाधारणसर्वात्मकत्वलिङ्गबलात् परमात्मविषयत्वं ह्याकाशाधिकरणनयेन सिद्धम्, उच्यते गायत्री-शब्दस्य स्वार्थप्रहाणेन ब्रह्मपरत्वे चतुष्पात्त्वमविवक्षितं स्यात् तच्चोपदिश्यते गायत्र्यवच्छिन्नब्रह्मपरत्वे सर्वात्मकत्वमनुपपन्नं, गायत्र्यवच्छिन्नब्रह्मणस्सर्वात्मत्वोक्तिः स्तुतिरिति चेत् ततोऽपि गायत्र्या एव स्तुतिः सर्वात्मकत्वोक्तिरिति वरमित्यधिकशङ्कापरिहारपरं सूत्रं गायत्री-शब्दस्य तत्सदृशब्रह्मपरत्वाच्चतुष्पात्त्वसर्वात्मकत्वोपपत्तिरिति परिहारः । उपक्रमस्थगाय-

त्री-शब्दानुरोधेन मन्त्रगतसर्वात्मकत्वमस्वारस्येन निर्वाह्यं न तु सर्वात्मकत्वानुरोधेनोपक्रमस्थगायत्रीपदास्वारस्यं न्याय्यमिति शङ्कायाम् उपक्रमस्य गायत्रीपरत्वे स्वारस्यहानिरुच्यते सू॰ "भूतादिपादव्यपदेशोपपत्तेश्चैवम्" पूर्वस्मिन्सूत्रे पादोऽस्येति मन्त्रोक्तसर्वात्मकत्वानुपपत्तिरुक्ता, अत्र तु गायत्री वा इत्यादिब्राह्मणोक्तचतुष्पात्त्वानुपपत्तिरुच्यते भूतमात्मवर्गः पृथिवी अयं लोकः कर्मार्जनभोगस्थानं तदुपकरणं शरीरं हृदयमात्मनः स्थित्यनुगुणः प्रदेशविशेष, एवमुपक्रमस्यैव परमात्मपरत्वं दर्शितं, यद्वव प्रकाशेरित्यदं सूत्रं पादोऽस्येति मन्त्रवर्णोक्तभूतादिपादानुपपत्त्या ब्रह्मप्रतिपादनसमर्थनपरं व्याख्यातं गायत्री वा इदं सर्वमित्यादिब्राह्मणं न चतुष्पात्त्वपरं किन्तु सर्वभूतवाक्पृथिवीशरीरहृदयप्राणरूपविधाषट्कपरं, सैषा चतुष्पदा षड्विधेति वाक्यस्य षाड्विध्यानुवादेन चतुष्पात्त्वाविधानपरं चतुष्पात्त्व च पादोऽस्येति मन्त्रवर्णप्रतिपाद्यन्तत्र चेतनाचेतनरूपनिखिलविकारात्मा प्रथमः पादः, त्रिपादस्यामृतन्दिवीति वाङ्मयप्राणमयमनोमयात्मानस्त्रयः पादा उच्यन्ते इति प्रतिपादितं तदनुपपन्नं कथमुच्यते तत्र मन्त्रवर्णोक्तचतुष्पात्त्वपरत्वादपि ब्राह्मणोक्तार्थः विषयत्वोपपत्तिः पूर्वमेव दर्शिता। किञ्च प्राथमिकगायत्रीवाक्यानुरोधात्पश्चादुदाहृतमन्त्रवर्णो नेय इति शङ्का तावदवतरति सा च मन्त्रवर्णोक्तार्थस्य हेतुतयोपन्यासेऽप्यवतिष्ठते उपक्रमस्थगायत्रीवाक्य एव परमात्मसाधकहेतुप्रदर्शनेन तु निवर्त्तते, स तु हेतुस्सूत्रे नेत्यनेन अभिप्रेत इति चेन्न शङ्कायाः परिहारस्य च उत्सूत्रत्वादपि शङ्कामात्रस्य उत्सूत्रस्य शब्दादेव परिहारसिद्ध्यनुगुणनिर्वाहस्य न्याय्यत्वात् गायत्री वा इदं सर्वमि-

सू॰ भूतपृथिवीशरीरहृदयानि निर्दिश्य सैषा चतुष्पदेति व्यपदेशो ब्रह्मण्येव गायत्री-शब्दाभिधेये उपपद्यते ।

त्यादिवाक्यस्य षाड्विध्यपरत्वमप्ययुक्तम्, सैषा चतुष्पदा षड्विधेति निगमनवाक्यस्य स्वरसतश्चतुष्पात्त्वषाड्विध्यनिगमनपरत्वप्रतीतेः । ननु सर्वभूतवाक्पृथिवीशरीरहृदयप्राणाख्यपदार्थषट्कप्रतिपादनात्स्वारस्यभङ्गेनापि षाड्-

विध्यनिगमनपरत्वमास्थेयमिति चेत् न, वाक्प्राणयोर्गानत्राणादिवदन्यार्थ-मुक्ततया भूतपृथिव्यादिवत् प्राधान्यतः प्रतिपाद्यत्वाभावेन पदार्थषट्कासिद्धेः, ब्रह्मणो गायत्राणाभ्यां गायत्री-शब्दवाच्यत्वोपपादनाय वाक् प्रस्तुता, शरीरस्य प्राणप्रतिष्ठात्वोपपादनाय प्राणप्रसङ्गः तथा हि "गायत्री वा इदं सर्वं भूतमिति गायत्रीशब्दः चतुष्पाद्ब्रह्मपरः सर्वभूत-शब्द आत्मपरः आत्मवर्गस्य तत्पादत्वं सामानाधिकरण्येनोक्तं तस्यैव ब्रह्मणो गानत्राणादिभिः षाड्विध्यञ्च विवक्षुः श्रुतिर्गानत्राणोपपादनाय वाग्रूपत्वमाह "वाग्वै गायत्री"ति, गायत्री-शब्दवाच्यं चतुष्पाद् ब्रह्म वाग्रूपविशिष्टमित्यर्थः "रसोऽहमप्सु कौन्तेये"त्यारभ्योच्यते-शब्दः खे पौरुषं नृष्विति, तथा भगवत्पराशरवचनं "शब्दमूर्त्तिपर[1]स्यैतद्रूपं विष्णोर्महात्मन"इति, ततः किं विवक्षितषाड्विध्यस्ये? त्यत्राह "वाग्वा इदं सर्वं भूतं गायति च त्रायते चे"ति वाग्विशिष्टम्परं ब्रह्म सर्वं भूतं गायति अभिधत्ते हिताहितविधिनिषेधमुखेन त्रायते चेत्यर्थः, एवमेकः पादो, गानत्राणरूपविधाद्वयञ्चोक्तं तदनुवादपूर्वकं द्वितीयं पादं सामानाधिकरण्येनाह "या वै सा गायत्री इयं वाव सा येयं पृथिवी"ति उक्ताकारविशिष्टप्रकृतधर्मिपरो यत्तच्छब्दो या सर्वभूतरूपैकपादा गायत्री गायत्र्याख्यं ब्रह्म तदेव पृथिवीत्यर्थः । कथं पृथिव्या ब्रह्मात्मकत्व? मित्यत्राह "अस्यां ही"ति, ब्रह्मात्मकत्वादेव हि सर्वभूतप्रतिष्ठात्वं, न हि केवलपृथिव्याः सर्वभ[2]रणे शक्तिरित्यर्थः, प्रतिष्ठात्वञ्च नियतमित्याह "एतामेव नातिशीयत"ति, इति पृथिवीं भूतजातं नातिवर्तेत कर्मवश्यात्मनां नियमेन प्रतिष्ठात्वादशक्यातिक्रमणेत्यर्थः, पृथिवीमयब्रह्माण्डोदरे हि कर्तृभोक्तृवर्गः परिवर्तते, एवं द्वितीयः पादो भूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम् । अथ तृतीयपादमाह "या वै सा पृथिवीयं वाव सा यदिदमस्मिन् पुरुषे शरीर"मिति पुरुष-शब्दः शरीरविशिष्टजीवपरः पृथिवीरूपपादविशिष्टा या सा गायत्री गायत्र्याख्यं ब्रह्म सा शरीरं शरीराख्यपादविशिष्टेत्यर्थः भूतपृथिव्योर्गायत्री सामानाधिकर-

१ शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः" इति तु कोशान्तरे पाठः ।
२ सर्वभूतधारणे इति पा० ।

षयेन निर्दिष्टतया पृथिवी-शब्दस्य ब्रह्मपर्यन्तत्वेन तदुपस्थापनक्षमत्वा-दव्यवायन्यायेन अत्रापि पादान्तरस्य तत्सामानाधिकरण्येन निर्देष्टुं युक्त-त्वाच्च शरीरस्य ब्रह्मात्मकत्वं प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वाभ्याम् उप-पादयति "अस्मिन् ही मे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते" इति, चतुर्थम्पादमाह "यद्वैतत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे हृदयमि" ति, शरीराख्यपादविशिष्टं यद्गाय्त्र्याख्यं ब्रह्म तदेव हृदयमित्यर्थः पूर्ववद् ब्रह्मात्मकत्वमुपपादयति "अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एत-देव नातिशीयन्त" इति, प्राणाः-प्राणापानादयः, इन्द्रियाणि वा तेषां हृद-यसम्बन्धिनाडीद्वारा हृदयप्रतिष्ठितत्वं, प्राण-शब्दस्य जीवपरत्वं केचि-दाहुः तदयुक्तं भूतप्राण-शब्दयोरर्थवैषम्याभावेन तदभिमतषाड्विध्यासिद्धेः, भूतपृथिवीशरीरहृदयवाक्प्राणैर्हि तेषां[1] षाड्विध्यं वदन्ति एवं तृतीयचतुर्थौ पादौ प्राणप्रतिष्ठात्वतदनतिवर्त्यरूपं विधाद्वयञ्चोक्तम् । एवमुक्तं चतुष्पात्त्वं षाड्विध्यं निगमयति "सैषा चतुष्पदा षड्विधा गायत्री" ति, नन्वेवन्तर्हि ब्रह्मणः परिच्छिन्नत्वं स्यादिति शङ्कायाम् उक्तस्य महिम्न एतावत्त्व-प्रतिक्षेपिकामृचमुदाहरति "तदेतदि" ति, ब्रह्माभिप्रायेण नपुंसकत्वं तदे-तच्चतुष्पात् षड्विधं च ब्रह्मेत्यर्थः "स भूमिं विश्वतो वृत्वे" त्युक्त्वा "एतावानस्य महिमा अतो ज्यायांश्च पुरुष" इति पुरुषसूक्ते श्रूयते इह च पृथिव्यां भूतशरीरहृदयान्यन्तर्गतानि, अतस्तावानस्य महिमेत्यनेन पृथिवी-तदन्तर्गतपदार्थैश्चतुष्पात्त्वरूपमहिमानुवादः । तावत्त्वं प्रतिषेधति "अतो ज्याया" निति, पादोऽस्येति इहोक्तं पादचतुष्टयमेकपादस्थानीयम् अतो-ऽतिरिक्ता त्रिपाद्विभूतिः तस्मादतो ज्यायानित्युपपन्नमित्यर्थः, एवमस्या ऋचः परिच्छिन्नत्वशङ्काव्युदासार्थत्वं युक्तम्, अनन्तरमपि तदेतत्पूर्ण-मप्रवर्त्ति पूर्णामप्रवर्त्तिनीं श्रियं लभते य एवं वेदेति पूर्णत्वा-दिगुणकतया उपासनविधानात् । नन्वेवं सति ब्राह्मणोक्तचतुष्पा-त्त्वविषयत्वाभावेन ब्राह्मणस्य ऋचश्चैकार्थ्यं न सिध्येत् न, उभयोर्ब्रह्मवि-षयत्वाद् यदीयमृगुक्तचतुष्पात्त्वविषया न भवति तर्हि किमर्थं तदुदा-

१ ते षाड्विध्यमिति पा० ।

हरणं परिच्छिन्नत्वशङ्काव्युदासार्थम् इत्युक्तं, तथा सत्येवार्थवत्त्वं, न ह्युक्तमात्रज्ञापने प्रयोजनं, न चेयमृक् पूर्वोक्तविवरणरूपा दृश्यते । किञ्च ऋचश्चतुष्पात्त्वान्तरपरत्वं परेषामप्यवर्जनीयं जाग्रदाद्यवस्थात्रयोपलक्षितं बाह्यशारीरहार्दरूपेण त्रेधा विभक्तकार्याकाशोपलक्षितं वा कारणस्वरूपं त्रिपादुच्यत इति हि तत्कृतयोजना, तत्र कथं सर्वभूतैर्जाग्रदाद्यवस्थात्रयत्रिविधाकाशोपलक्षितरूपेण चतुष्पात्त्वं भूतपृथिवीशरीरहृदयैश्चतुष्पात्त्वं चैकरूपं भवति, चतुष्पात्त्वं हि बहुविधं श्रूयते "चतुष्पाद् ब्रह्म वाक् पादः प्राणः पादः चक्षुः पादः श्रोत्रम्पाद" इति तथा "अग्निः पादो वायुः पाद आदित्यः पादः दिशः पाद" इति च, एवं ज्ञातमात्रज्ञापने प्रयोजनाभावात् पुरुषसूक्तप्रक्रियानुगुण्यादनन्तरवाक्यानुगुण्यात् ब्रह्मणो विविधचतुष्पात्त्वसम्भवाच्चतुष्पात्त्वभेदस्य परपक्षेऽप्यवर्जनीयत्वाच्च यथोक्त एवास्या ऋचोऽर्थः । अथ चतुर्थपादत्वेनोक्तस्य हृदयस्याकाशस्य महत्त्वं वक्तुं बाह्याकाशस्य ब्रह्मतुल्यत्वं सामानाधिकरण्येनाह "यद्वैतद्ब्रह्मे"ति, "इदं वाव तद्योऽयं बहिर्धा पुरुषादाकाश" इति, आकाशः स्वकार्यव्यापित्वामूर्त्तत्वाचलत्वादिभिर्ब्रह्मतुल्य इत्यर्थः "अयं वाव सः योऽयमन्तः पुरुष आकाशः अयं वाव स योऽयमन्तर्हृदय आकाश इति निर्देशो धर्मैक्याभिप्रायः, एवं हार्दाकाशमाहात्म्येन हृदयं स्तुतम्भवति एवं चतुष्पदः षड्विधस्य ब्रह्मणः प्रपञ्चातभावेन परिच्छिन्नास्थिरत्वशङ्काव्यावृत्त्यर्थं पूर्णत्वाप्रवर्तित्वगुणकतयोपासनं मोक्षफलकं विदधाति "तदेतदि"ति, तदेतच्चतुष्पात् षड्विधमित्यर्थः, नात्र हृदयमात्रे ब्रह्मोपासनविधिः सप्तम्यश्रवणात् । अथ ब्रह्मोपासनाङ्गत्वेन द्वारपोपासनं विधीयते "तस्य ह वा एतस्य हृदयस्येत्यादिना, तत्र च प्राणवृत्तिविशेषाऽऽप्यायितचक्षुराद्यनुग्राहकतया आदित्यादय उपास्याः, न च हृदयस्येत्युक्तत्वात् द्वारपोपासनं हृदयोपासनाङ्गमिति वाच्यं किन्तु प्रकृतचतुष्पाद्ब्रह्मोपासनाङ्गं, हृदयस्येति निर्देशस्तु चतुर्थपादत्वेन हृदयस्याव्यवहितप्रकृतत्वात्नाडीद्वारा चक्षुरादीनां तत्सम्बन्धित्वाच्च कृतः, एवं गायत्रीविद्या प्रकृतस्य सकलफलप्रदस्य द्युसम्बन्धिनः परस्य ज्योतिष आभिरूप्यकीर्तिमत्त्वरूपफलविशेषार्थं कौक्षेयज्योतीरूपत्वेनोपासनविधानाय "अथ यदतः परो दिवोज्योतिरित्यारभ्य

ते, एवं वाक्प्राणयोरन्यार्थमुदाहृतत्वाच्चिगमनवाक्यस्वारस्याच्च भूतपृथिवीशरीरहृदयान्येव पादाः,गानत्राणभूतप्रतिष्ठात्वतदनतिशयप्राणप्रतिष्ठात्वतदनतिशयाः षड्विधाः । ननु सैषेत्यादिवाक्यस्य षाड्विध्यानुवादेन चतुष्पात्त्वविधानपरत्वे सति ऋचश्चतुष्पात्त्वोपदेशपरत्वं सिध्यति, ततश्च तदेतदृचाऽभ्यनूक्तमिति घटकवाक्यस्वारस्यं भवेदिति चेत्तदयुक्तं प्रथमश्रुतस्य ब्राह्मणवाक्यनिगमनस्य स्वारस्यभङ्गेन पाश्चात्यसन्दंशकवाक्यानुरोधानुपपत्तेः, अन्यार्थतया प्रस्तुतयोर्वाक्प्राणयोर्भूतपृथिव्यादितुल्यतापरिकल्पनस्योपक्रमस्वारस्यविरुद्धत्वाच्च, ऋगुपन्यासस्य प्रयोजन तत्रोपपत्तयश्च दर्शिताः, न ह्येकरूपमेव ब्रह्मणश्चतुष्पात्त्वमिति नियन्तुं शक्यं चतुष्पात्त्ववैविध्यस्य अन्यत्राऽपि श्रुतत्वात् । किंच त्रिपाच्छब्दनिर्वाहश्च निरूपणीयः; तथा हि मनोमयवाङ्मयप्राणमयास्त्रय ईश्वरस्य व्यूहास्तैस्त्रिप्रकारमवस्थितं ब्रह्म त्रिपादमृतं विवक्षितमित्युच्यते, तत्र तावत्प्रसिद्धमनोवाक्प्राणानामचिद्विकारत्वान्नेश्वरव्यूहत्वममृतत्वं च सम्भवति, सप्तान्नब्राह्मणोक्तानां मनोवाक्प्राणानुग्राहकाणामग्न्यादित्यचन्द्राणां च कर्मवश्यत्वात् सृज्यत्वाच्च नेश्वरव्यूहत्वममृतत्वं च युज्यते, "चन्द्रमा मनसो जातः चक्षोः सूर्योऽजायत मुखादिन्द्रश्चाग्निश्च" "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च असौ योऽपतीर्यात असौ य आपूर्यती"ति तेषां सृज्यत्वकर्मवश्यत्वे हि श्रूयेते मनोवाक्प्राणशब्दवाच्यतयाऽभिमतानां सत्त्वतमोरजसां शक्तिरूपाणां प्रज्ञाशक्तिवाक्शक्तिक्रियाशक्तिशब्दवाच्यानां द्युपृथिव्यप्शब्दवाच्यतयाऽभिमतानां स्थूलानां सविकाराणां सत्त्वतमोरजसां चाधिष्ठातार ईश्वरांशास्त्रय ईश्वरव्यूहा इति चेत् तैरपि त्रिपात्त्वं दुर्वचं वाङ्मयप्राणमयोर्मनोमयादुत्पत्त्यभ्युपगमेन त्रयाणां नित्यत्वायोगेन त्रिपादमृतमिति निर्देशानुपपत्तेः, तेषां शक्तिरूपेणामृतत्वमिति चेत् शक्तिरूपेणामृतत्वं पादोऽस्य सर्वाभूतानीति पादत्वेनोक्तानां सर्वभूतानां सप्रकृतिकानामप्यस्तीति त्रिपादस्यामृतन्दिवीति वचनवैयर्थ्यं स्यात् । किञ्च ईश्वरः पर आत्मा तपो ब्रह्म मनोमय इत्यारभ्य "तस्य द्वौ व्यूहौ आकाशशरीरः प्राणशरीरश्च तयोरन्ये प्रत्येकं असंख्याताः प्रतिजीवमवस्थिता व्यूहा इत्युपनि-

यत्कल्प्ये भवद्भिरुच्यते किमसंख्येयानामीश्वरव्यूहानां जीवानामिव स्वत एव स्वरूपगतो भेदः? उताधिष्ठेयगतभेद एवेश्वरव्यूहभेद इत्युपचारादुच्यते? प्रथमे जीवबहुत्वेश्वरैकत्वश्रुतीनां वैयर्थ्यं समष्टेरेकस्य व्यष्टिभेदस्य च जीवेश्वरयोस्तुल्यत्वात्, श्रूयते हि 'त्वमेकोऽसि बहूननुप्रविष्टः अन्तः प्रविष्टः शास्ता जनानाम् एकस्सन् बहुधाविचार एको देवः सर्वभूतेषु गूढः एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति एको बहूनां योविदधाति कामान् यः पृथिवीमन्तरे सञ्चरन्नित्यारभ्य बहुव्यवस्थानमुक्त्वा "एष भूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण" इत्यादि, द्वितीये च पक्षे किमीश्वरव्यूहाधिष्ठेया गुणाः? उत गुणशक्तयः? प्रथमे सत्त्वरजस्तमसामुत्पत्तेः पूर्वं निर्गुणानां तेषामवस्थानवादो न घटते, उक्तं हि तत्त्वविचारणायामभियुक्तैः—यस्मादेषां प्रलयकाले व्यवस्थानमाम्नायते तस्माद्गुणोत्पत्तेः प्रागप्येषामवस्थानान्निर्गुणा एते इति, द्वितीये च गुणप्रलयात्मकत्वाद् गुणशक्तीनामीश्वराधिष्ठेयत्वं नोपपद्यते तासामधिष्ठानं हि कार्याभिमुखीकरणलक्षणं प्रेरणं तत्तदानीमस्ति चेदासर्गकालाद्गुणानुत्पत्तिरनुपपन्ना कार्यानुत्पादनमपि ईश्वराधिष्ठानाधीनमिति चेत् तर्हि परमात्मनः स्वापे गुणशक्तीनां तदधिष्ठितत्वाभावात्कार्योत्पत्तिप्रसङ्गः, स्वापप्रबोधौ हीश्वरस्य त्वदभ्युपगतौ अतः कार्यानुत्पादनस्येश्वराधिष्ठानानपेक्षत्वेन गुणशक्तीनामधिष्ठातृत्वाभावेन व्यूहभेदाभावात् गुणोत्पत्तेः प्राक् निर्गुणत्वेन त्रयाणां व्यूहानां कञ्चित्कालमवस्थानमयुक्तम् अधिष्ठेयभेदमनपेक्ष्य स्वत एव भेदश्चेत् त्रित्वस्यानादित्वान्मनोमयादितरयोरुत्पत्तिरनुपपन्ना । किं च तिसृष्वपि ईश्वरव्यष्टिषु किं प्रमाणम् "एतन्मयो वाऽयमात्मा वाङ्मयो मनोमयः प्राणमय इति श्रुतिरि" ति चेन्न जीवस्य मनोवाक्प्राणोपकरणत्वप्रतिपादनपरत्वात्तस्याः, तथा हि यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति परमात्मनः सङ्कल्पाद्बुद्धिनामुपजीव्यत्वादन्नशब्दवाच्यानां सप्तानामुत्पत्तिमुक्त्वा तत्र प्रसिद्धान्नं दर्शपूर्णमासौ पयश्चेत्यन्नचतुष्टयस्य मानुषदेवतिर्यक्षु विनियोगमुक्त्वा त्रीण्यात्मनेऽकुरुतेत्यवशिष्टान्नत्रयस्य सर्वविधप्रवृत्तिहेतुत्वात् सामान्येन सर्व-

भोत्रूवर्गशेषमकरोदित्युक्त्वाऽन्यत्र मना अभूवन्नादर्शमन्यत्रमना अभूवन्नाश्रौषं कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे"ति प्रसिद्धं मन एव प्रतिपादितं कामादीनाम्मनः कार्यत्वात्, सामानाधिकरण्यं यः कश्चनशब्दो वागेवेति सामानाधिकरण्यमपि शब्दस्य वागिन्द्रियाधीनोच्चारणत्वनिबन्धनम्, अतः शब्दोच्चारणकारणं प्रसिद्धवागिन्द्रियमेवोक्तं प्राणोऽपानो व्यान उदानस्समान इत्येतत्सर्वं प्राण एवेति पञ्चवृत्तिप्राण एव स्पष्टमभिहितः एतन्मय इत्येतच्छब्दश्च प्रकृतमनोवाक्प्राणपरः अयमात्मेत्ययं—शब्दविशेषित आत्मा च प्रसिद्धो जीवोन तु परमप्रकृतः परःमात्मा तस्य जीवस्य त्रिविधोपकरणवत्त्वमेतन्मय इति प्रतिपादितं पश्चात् त्रयो लोका एत एवेत्यादिना तेषां प्रशंसा कृता यत्किञ्च विज्ञातं वाचस्तद्रूपं वाग्विज्ञाता वागेवैनन्तद्भूत्वाऽवतीति यद्वाग्व्यवहाराद्विज्ञातन्तत्सर्वं वाचोरूपम् अवच्छेदकं वाग्विज्ञाता विज्ञायमानं सर्वं वागधीनम् उपचारात् सामानाधिकरण्यं वागेवैनन्तद्भूत्वावतीति यद्वाचा विज्ञातं वस्तु पुरुषस्योपकरोति तद् भूत्वा तद्रूपेण वागेवोपकरोतीत्यर्थः, विजिज्ञास्यमिति चिन्तनीयं पूर्ववद्योजनाय यच्चिन्तितं दैवतादिकम् उपकरोति तद्भूत्वा मन एवोपकरोतीत्यर्थः, अविज्ञातमिति पूर्ववद्योजना पूर्वसुकृतवशादचिन्तितं अदुपकरोति तद्भूत्वा प्राण उपकरोतीत्यर्थः, एवं यशस्य त्रयाणाम् अधिष्ठानानि अधिष्ठातॄंश्च दर्शयति तस्यै वाच इत्यादिना, वाचः वागिन्द्रियस्य पृथिवी शरीरमायतनं जिह्वा गोलकस्थं पार्थिवांशमाश्रित्य वागिन्द्रियन्तिष्ठतीत्यर्थः, ज्योतीरूपमयमग्निर्ज्योतिर्मयमधिष्ठातृदेवतास्वरूपमग्निरित्यर्थः, यावती वाक् तावती पृथिवी तावानयमग्निरिति, यत्र यत्र वागिन्द्रियन्तत्र तत्र तदधिष्ठानतया पृथिव्यप्यस्ति अधिष्ठातृतया अग्निरप्यस्तीत्यर्थः । अथैतस्य मनसो द्यौः शरीरमितीह द्यु—शब्द आकाशमात्रपरः न तु लोकविशेषपरः, अनुपपत्तेः, न हि स्वर्गलोक एव मनसोऽधिष्ठानं मनुष्याणाममनस्कत्वप्रसङ्गात् द्यु—शब्दो हि लोकविशेषे नभोमात्रे च वर्तते "सुरलोके द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बर"मिति हि नामानुशासनम् अतः आकाशमात्रविवक्षा तत्रापि सामर्थ्याद् हृदया-

काशे पर्यवस्यति हृदयच्छिद्ररूपाकाशः आयतनमित्यर्थः, ज्योतीरूपमित्यादेः पूर्ववत् तौ अग्न्यादित्यौ मिथुनं समैतां मिथुनीभावमगच्छतां ततः प्राणोऽजायत" अयमस्याभिप्रायः–आदित्याधिष्ठेयमनःपूर्विका अग्न्यधिष्ठेयवाक्प्रवृत्तिः तदुभयपूर्विका पञ्चवृत्तिप्राणाधीना शरीरप्रवृत्तिरिति प्राणस्यासपत्नत्वञ्चक्षुरादिषु स्वसदृशस्वप्रतिस्पर्धिविरहितत्वम्। अथैतस्य प्राणस्य आपश्शरीरमिति प्राणा वा आप इति हि श्रुतिः "पानीयं प्राणिनां प्राणा विश्वमेव च तन्मयम्" इत्यायुर्वेदविदः, अतः प्राणस्य आप आयतनं ज्योतीरूपमित्यादि पूर्ववत्, मनःप्राणयोरभिमानिदेवतान्तरश्रवणेऽपि श्रुतित्वाविशेषात् एवमपि सम्भवतीत्यभ्युपगन्तव्यम्, आनन्त्यं प्रतिशरीरं मनआदिव्यष्टिभेदात् स एष संवत्सर इत्यादिना चन्द्रमाः षड्ढोता स ऋतून् कल्प[1]यतीति प्रकारेण सर्वर्तु प्रवर्तकतया सम्वत्सरसंज्ञस्य राज्यधीनोपचयापचयान्वितकलामयस्य प्राणाधिदैवस्य चन्द्रस्य प्रजारक्षकत्वं "सौम्यो वै देवतया पुरुष इति प्रक्रियया पुरुषस्य चन्द्राधीनत्वं तद्व्रतफलञ्चोक्तं पश्चान्मनोवाक्प्राणानां व्यापारस्य परलोकेऽप्यधिकत्वं वक्तुम् अथ त्रयो लोका इत्यादिना लोकत्रयं प्रस्तुत्य पुत्रे विन्यस्तभारस्य तन्मुखेनेहलौकिकार्थप्राप्तिं केवलकर्मणाऽन्तरिक्षप्राप्तिं काम्यविद्याविशेषेण देवलोकप्राप्तिञ्चाभिधाय प्रेष्यतो मनुष्यस्याध्ययनयज्ञादिकं श्रेयस्सर्वं पुत्रेण सम्पाद्यमिति तस्मिन्विहितभरत्वमुक्त्वा "अयं यदैवंविदस्मात् लोकात्प्रैति अथैभिरेव प्राणैस्सह पुत्रमाविशती'त्युक्तं, पुत्रो भूत्वा यज्ञादिकम् अयमेव करोति पुत्रकृतं सर्वं परलोकगतस्य पितुः स्वानुष्ठितसुकृतवदुपकारकम्भवतीत्यर्थः "अथैनमेते देवाः प्राणा अमृता आविशन्तीति" एवं पुत्रे निक्षिप्तभरं परलोकगतं पुण्यकर्माणं पुरुषं देवाः प्राणशब्दवाच्या मनआदयः आविशन्तीत्यर्थः। तदेव प्रपञ्चयति 'पृथिव्यै चैन"मित्यादिना, शापानुग्रहादिसमर्था वाक् दैवी वाक् अमोघसङ्कल्पमानन्दैककारणम्मनो दैवम्मनः अप्रतिहतगगनगमनादिव्यापारहेतुः प्राणो दैवः प्राणः, एते पृथिवीद्युस-

[1] कल्पयातीति तु पा०।

लिलरूपाधिष्ठानेभ्योऽग्न्यादित्यचन्द्ररूपाधिष्ठातृदेवताभ्यश्चास्य सम्भवन्तीति, देवताप्रसादादेवाऽस्य मनोवाक्प्राणा एवंविधा भवन्तीत्यर्थः, एवं जीवोपकरणानान्तेषां परलोके शक्त्यतिशयमुक्त्वा स एवंवित्सर्वेषां भूतानामात्मा भवतीति वागिन्द्रयादिदेवताविज्ञानप्रकर्षेणास्य सर्वभूतान्तर्वर्तिज्ञानसामर्थ्यं तस्य दुःखासंस्पर्शश्चाभिधायोपसंहृतम्, अत्र त्रपृथिव्यप्छब्दानां मनोवाक्प्राणशब्दानाञ्च सत्त्वतमोरजोवाचित्वाभावात् प्रज्ञाशक्तिवाक्छक्तिक्रियाशक्तिवाचित्वाभावाच्च तदधिष्ठात्रीश्वरव्यूहप्रतिपादनमनुपपन्नं शब्दस्वारस्याभावेऽप्यर्थानुपपत्त्या तादृगर्थपरत्वमाश्रयणीयमिति चेत्का पुनरत्रानुपपत्तिः? यावती वाक् तावती पृथिवीत्यादिवाक्यैः पृथिव्यादीनां व्याप्त्यवगमात् प्रसिद्धपृथिव्यादिपरत्वमनुपपन्नमिति चेत् न, वागिन्द्रियादिभिस्तदधिष्ठानभूतानां पृथिव्यादीनां तुल्यदेशत्वमात्रप्रतिपादनात् इन्द्रियसमष्टेरपि हि न व्याप्तिमत्त्वं कार्याणां तत्त्वानां दशगुणकारणपरिच्छिन्नत्वेनेन्द्रियसमष्टेरहङ्कारतत्त्वपरिच्छिन्नत्वात् । ननु तवल्कारिणां श्रुतौ "नासदासीन्नो सदासीत्तदानीं नासीद् रजो नो व्योमापरो यत् किमावरीवः कुहकस्य शर्मन् अम्भः किमासीद्गहनङ्गभीर''मिति तस्मिन्नसति सति न कस्मिंश्चन सति ऋतं ज्योतिष्मत् उदप्लवत सत्यं ज्योतिष्मत् उदप्लवत तपो ज्योतिष्म उदप्लवत तदृतमिति वाक् सा यत्सत्यमिति प्राणः स यत्तप इति मनस्तत् तेषामन्नमेव ज्योतिरासीत्तान्येकमभवंस्तदेकं भूत्वाऽन्येन ज्योतिषाऽप्यायत तद्यथा मध्वष्ठीला वा स्वासिक्तास्याश्चित्रैव तदैक्षत हन्त प्राणं कवा इत्यादिना तेषामृतसत्यतपश्शब्दवाच्यानां वाक्प्राणमनसां प्रलयेऽप्यवस्थानात् सत्त्वाद्यधिष्ठातार ईश्वरव्यूहा एव मनआदिशब्दवाच्या इति चेत् न अस्यां श्रुतौ प्रलयेऽप्यवस्थानाश्रुतेः उदप्लवतेति हि श्रूयते उत्प्लवनञ्च न स्थितिः किन्तूद्गमनं तेनोत्पत्तिरेवावगम्यते यथा ऽब्धेस्तरङ्गा उद्गम इति कारणात्कार्योदय इति च न ह्युद्गमनादिशब्दैः क्वचिदप्यवस्थानं प्रतीयते अत्र प्रसिद्धवागाद्युत्पत्तौ प्रतिपाद्यमानायामाख्यातपदानां कारकपदानां च स्वरसता स्यात्, इतरथा अस्वारस्यमेव तेषामन्नमेव ज्योतिरासीदित्यत्र

ज्योतिश्शब्दः ओजश्शब्दवत् प्रवृत्तिसामर्थ्यपरः, त्रिविधकरणानामप्यचमेव प्रवृत्तिसामर्थ्यहेतुरित्यर्थः, तान्येकमभवन्निति एककार्यात्पत्तिं प्रत्येकसाधीनत्वमभजन्नित्यर्थः, करणत्रयेणापि हि यज्ञादिकर्मनिर्वृत्तिः अनन्तरन्तदैक्षतेति तच्छब्दश्च सृष्टिप्रतिपादनादित्रकारणब्रह्मपरः, एवं प्रलयदशायामप्यवस्थानश्रवणरूपापवादाभावात् मनआदिशब्दो नेश्वरव्यूहपरः, यत एवं तस्मात् सप्राचसृष्टौ तौ मिथुनं समेतान्ततः प्राणो ऽजायत इन्द्रः स एषोऽसपत्न इति वाङ्मयव्यूहपत्नीकान्मनोमयादीश्वरात्प्राणमयव्यूहोत्पत्तिरुच्यत इति चानुपपन्नम् । ननु बृहदारण्यक एव षष्ठेऽध्याये इन्द्रो ह वै नामैषः योऽयं दक्षिणेऽक्षन् पुरुषः तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः । अथैतद्वामेऽक्षिणि पुरुषस्य रूपम् एषाऽस्य पत्नी विराट् तयोरेष संस्तावो य एषो ऽन्तर्हृदय आकाश इत्यत्र दक्षिणाक्षिप्रतिष्ठितस्य पुरुषस्य वामाक्षिगतं पुरुषरूपं पत्नीत्वेनोच्यते, अतोऽत्र वाङ्मयपत्नीको मनोमयः प्रतिपादित इति न ततः प्राणो ऽजायत स इन्द्र इति मिथुनोत्पन्नस्येन्द्रशब्दवाच्यत्वावगमात्, इह च पत्नीवतः पुरुषस्य इन्द्रशब्दवाच्यत्वावगमाच्च ततश्चेन्द्र–शब्दवाच्यप्राणमयस्य वाङ्मयः पत्नीप्रसज्येत् न तु मनोमयस्य वाङ्मयपत्नीकत्वं प्राणमयस्य तदुत्पन्नत्वमपि हि भवदभिमतं तस्मादत्रायमर्थः दक्षिणाक्षिस्थः पुरुषोत्तमः य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्निति दक्षिणाक्षिस्थस्य आदित्यान्तरवस्थितत्वश्रवणात् तस्य च पुण्डरीकाक्षत्वात् “इन्द्रं निचिक्युः परमे व्योमन्” इन्द्रो मायाभिरित्यादिषु परमपुरुषस्य इन्द्रशब्दवाच्यत्वं च सिद्धं, वामाक्षिस्थातत्पत्नी साक्षाल्लक्ष्मीरेव इन्द्र–शब्दवाच्यस्य पत्नीत्वेन प्रतीतेः तैत्तिरीयके च राडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी इतीन्द्रपत्न्याः श्री–शब्दवाच्यत्वावगमात् किञ्च हृदयगुहायामवस्थानं तयोरिह श्रूयते “तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाश इति, संस्तावः अधिकरणे घञ् संस्तावः स्थानं संस्तवः परिचयः सहवासः पद्मकोशप्रतीकाशमित्यारभ्य तस्याश्शिखाया मध्ये परमात्मा व्यवस्थित इति नारायणस्य हृदयस्थितिश्रवणादत्रापि श्रियः पतिर्नारायण

एव प्रतिपादित इति वाङ्मयपत्नीकपुरुषप्रतिपादनमसङ्गतं तवत्कारिणां श्रुतावपि ईश्वरव्यूहत्रयप्रतिपादनाभावात्, अघमर्षणसूक्तेऽपि न तत्प्रतिपादनमिति वाङ्मयपत्नीकपुरुषप्रतिपादनमसङ्गतम्, अपि तु तपश्शब्दः परमात्मपरः यस्य ज्ञानमयन्तप इति तपश्शब्दस्य ज्ञानवाचित्वात्, परस्य ज्ञानगुणसारत्वेन ज्ञानशब्दस्येव धर्मिपर्यन्ताभिधानोपपत्तेः, तस्मात् ऋत-शब्द सत्यशब्दवाच्ययोर्यज्ञादि कर्मतद्व्रात्तृचेतनवर्गयोरुत्पत्तिर्वाक्प्राणयोर्वा "तघट्टत" मिति वाक् सा यत्सत्यमिति प्राणस्स इति श्रुतेः । यद्वा ऋतं यथार्थशब्दः सत्यमबाध्योऽर्थः नामरूपे उत्पन्ने इत्यर्थः, अतो मिथः कार्यकारणभावेनावस्थितं वाङ्मयादिव्यूहत्रयं निष्प्रमाणकम् । किञ्च वाङ्मयपत्नीकान्मनोमयात् प्राणमयोत्पत्तिः किं प्रलयदशायां महदादिसर्गात्पूर्वभाविनी? उत महदादिसर्गानन्तरभाविनी? तत्र प्रथमं शिरोनिष्प्रमाणकत्वाचिरस्तं, द्वितीये तु ब्रूमः—वाङ्मयः पृथिवीशरीरो लयपरिणामशक्तिमधितिष्ठति तमः पृथिवीत्युच्यते लयपरिणामशक्तियोगिति । मोक्षस्थानमिति चेत्युक्तमुपनिषत्कल्पे, तत्रैव प्राणमयोऽप्छरीरः क्रियाशक्तिमधितिष्ठति रज आप इत्युच्यन्ते, क्रियाशक्तिः प्राण इति चोक्तं, यदि तमोरजश्शक्त्यधिष्ठातारौ वाङ्मयप्राणमयौ तदा वाङ्मयपत्नीकात् मनोमयात् प्राणमयोत्पत्तिं वदता चतुर्मुखोत्पत्तेः पूर्वमेव रुद्रोत्पत्तिरुक्ता स्यात्, तच्छ्रुतिविरुद्धं महोपनिषदि "तत्र ब्रह्मा चतुर्मुखोऽजायतेति ब्रह्मसृष्टिमुक्त्वाऽथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत तस्य ध्यानान्तस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायतेति रुद्रसृष्टिः पश्चात्तनत्वश्रवणात्, सुबालोपनिषदि ललाटात् क्रोधजो रुद्रो ऽजायत इति रुद्रस्य चतुर्मुखललाटोत्पत्तत्वश्रवणात्, शैलालिब्राह्मणे रुद्रस्य चतुर्मुखसृष्टान्यादिजीववदुत्पन्नत्वश्रवणात्, शतपथेचाष्टमूर्तिब्राह्मणे सम्वत्सरशब्दवाच्येन प्रजापतिना रुद्रसृष्टेः श्रुतत्वात्तद्रोदनपरिहाराय तेन तस्य नामसूर्त्यष्टकप्रदानप्रतिपादनाच्च । ननु श्वेताश्वतरे "विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं जनयामास पूर्वमि"ति श्रूयत इति चेत् तदपि भवत्पक्षे विरुद्धम्, अनन्तरमेव "वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात् महान् प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्त्तकः अङ्गुष्ठमात्रः पुरुषो-

ऽन्तरात्मा" सहस्रशीर्षा पुरुष इत्यादिषु वाक्येषु एतं महान्तं पुरुषम् महान् प्रभुर्वै पुरुष" इति प्रकृतरुद्रपरामर्शिनैतच्छब्देन महापुरुषशब्दसामानाधिकरण्यात् "यदेष आकाश आनन्दो न स्या" दित्यानन्दशब्दसमानाधिकरणाकाशशब्दस्य प्रसिद्धाकाशप्रहाणेन परमात्मपरत्ववत् रुद्र-शब्दस्यापि प्रसिद्धार्थप्रहाणेन महापुरुषपरताया न्याय्यत्वात्, सत्त्वप्रवर्त्तकविषयस्य शब्दस्य तमोऽधिष्ठातृ वाङ्मयपरत्वाभावात्, पुरुषसूक्तवाक्योपादानेन पुरुषोत्तमविषयत्वस्य स्फुटत्वाच्च, परमपुरुषादेव हिरण्यगर्भोत्पत्तिस्तत्र प्रतिपाद्यमानतया वाङ्मयपत्नीकत्वप्रसङ्गाभावात् यथा "मृत्युनैवेदमावृतमासीत् अशनाया हि मृत्युस्तन्मनोऽकुरुतात्म[1]न्वी स्यामिति सोऽर्चन् तस्यार्चत आपो ऽजायन्तेत्यारभ्याशनाया लक्षणान्मृत्योरम्बुपृथिव्यग्नीनां सृष्टिप्रतीतावपि न प्रसिद्धमृत्योः क्षुधो वा पृथिव्यादिप्रपञ्चकारणत्वमभ्युपगम्यते। भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः। मृत्युर्यस्योपसेचनन्तच्छ्रेयो रूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणीन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमः मृत्युरीशान इति परमात्मसृज्यत्वतसंहार्यनियाम्यत्वश्रवणात् एवं ब्रह्मसृष्टस्य रुद्रस्य न ब्रह्माणं प्रति स्रष्टृत्वमिहोच्यत इत्यभ्युपगन्तव्यं, शैलालिब्राह्मणश्च पथसुबालोपनिषदां तु नैवमर्थान्तरपरत्वं वक्तुं शक्यम्। नन्वेवमपि कल्पभेदेन सृष्टिप्रकार इत्याश्येयं, नैवं त्वदभिमतसृष्टिप्रकारस्य स्फुटश्रवणाभावात्। आकाशादीनामपि कल्पभेदेन परमकारणत्वकल्पनाप्रसङ्गात्, श्रुतिविरोधेन कल्पनानुपपत्तेश्च अतो वाङ्मयरुद्रपत्नीकांत्मनोमयात् प्राणमयहिरण्यगर्भोत्पत्तिः श्रुतिविरुद्धा। किञ्च वाङ्मयो लयपरिणामशक्तिमधितिष्ठति लयपरिणामशक्तिश्च वागिति कथ्यते मोक्षस्थानमिति च मोक्षस्थानं परमाकाशः स च प्रकृतेस्तमःशब्दवाच्याया आद्यावस्थेति भवद्भिरुच्यते, तथा तत्त्वविचारणायामुक्तं परमाकाशो नाम प्रकृतेराद्यावस्थेत्युपक्रम्य सा च तमोऽवस्थापन्ना प्रकृतिः पर-

[1] आत्मन्वी स्यामिति युक्तः।

स्मादात्मनो विभागरूपं विकारं प्रतिपद्यते स एव परमाकाशः स एव मुक्तानामीश्वरस्य च स्थानं शब्दपरिणामशक्तियुक्तत्वाद्वागिति चोच्यते अक्षरमिति चेति यदव्यक्ततमसोर्मध्यपतित[1]मक्षरं परमाकाशः स तावदव्यक्तो विभागः तम एकी भवति मृत्युर्वै परे देव एकी भवति तस्मात्तमसस्सञ्जायत इति तमस एव विभागश्रवणाच्च विभक्तात्तमसो ह्यक्षरविभाग तमस्तस्मादक्षररूपेण जायत इति योजना स्वरसा, अक्षरं तमसि लीयत इति लयश्रवणविरुद्धा च तच्चाक्षरं न मुक्तानामीश्वरस्य च स्थानं तस्याव्यक्ताद्यपेक्षया अक्षरत्वेऽपि तमसि लयश्रवणेन क्षरत्वात्, तदक्षरे परमे व्योमन्निति परमव्योम्नः क्षरणाभावाच्च । तत्राप्यापेक्षिकमक्षरत्वमिति चेन्न तत्र स्वारस्यभञ्जकप्रलयश्रवणाभावात् तमसो विभक्तमक्षरमेव तत्राक्षर-शब्देन प्रत्यभिज्ञायत इति चेन्न वर्णानुपूर्वीसादृश्येऽप्यन्यविशेषणतया प्रयुक्तेनाक्षर-शब्देन विशेष्यसमपेक्षाक्षरशब्दार्थस्य प्रत्यभिज्ञानाभावात्, न ह्यरुणः पट इति वाक्यस्थोऽरुणशब्दो रविरथस्थमरुणं प्रत्यभिज्ञापयति । किंच स्वप्रकरणे "विश्वं पुराणं तमसः परस्ता" दिति, समानप्रकरणे च "आदित्यवर्णं तमसः परस्तात् ते ह नाकं महिमानस्सचन्ते" "आदित्यवर्णं तमसस्तुपारे" इति मुक्तात्मेश्वरस्थानस्य तमसः परत्वश्रवणात्तमसोऽर्वाचीनस्याक्षरस्य न तत्र प्रत्यभिज्ञा, तमसः परस्तादिति परस्वरूपस्य तमोवैलक्षण्यमुच्यत इति चेन्न दिग्देशकालेषु परस्तादिति प्रत्ययस्य विवक्षि[2]तत्वेन वैलक्षण्यमात्रपरत्वस्य क्लिष्टत्वात्, स्थानविशेषस्य र.विहितत्वाच्च तमसः परत्वस्य देशविशेषवर्तिपरमात्मविशेषणत्वोपपत्तेः, तमसस्तु पार इति पार-शब्दश्चावधिवाचकः न तु वैलक्षण्यवाचकः, अतस्तमसः परस्य स्थानस्येह प्रत्यभिज्ञानाभावात्तमोविभागरूपमक्षरं न मुक्तात्मपरमात्मस्था[3]नपरं तमोविभागरूपं चाक्षरं न वाङ्मयाधिष्ठेयं 'तस्याक्षरस्य' ब्रह्मरुद्रसृष्टेः पूर्वभावित्वात्, यः पृथिवी-

(१) मध्यपठितमिति प० ।

(२) विहितत्वेनेति द्राविडपाठो युक्तः ।

(३) मुक्तात्मपरमात्मस्थानमिति पा० ।

मन्तरे सञ्चरन्नित्यारभ्य "योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यस्य मृत्युश्शरीरमित्युक्त्वा "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इति, तस्याक्षरस्य कारणभूतमृत्युशरीरकस्य नारायणस्य प्रतिपादनाच्च, तस्यैवान्तरात्मत्वश्रवणात् वाङ्मयोऽन्तरात्मेति चानुपपन्नम्, अत एव हिरण्यगर्भस्य प्राणमयस्यान्तर्यामित्वं च निरस्तं नारायणस्यैव ह्यन्तर्यामित्वं श्रुतं, हिरण्यगर्भस्य महत्तत्त्वाभिमानित्वं तु ब्रह्माण्डान्तर्व्यष्टिशरीरविषयं क्वचिदुक्तमिति मन्तव्यं परमकारणत्वाभावात् अग्नीन्द्रादीनां वाक्पाण्याद्यभिमानित्ववत् सर्वभूतान्तरात्मेत्यत्र सर्वभूत–शब्देन ब्रह्मरुद्रयोरपि जीवान्तर्भावः, तस्माद्विराडजायत विराजो अधिपुरुषः त्र्यक्षः शूलपाणिः पुरुषोऽजायत इन्द्रो वरुणस्सोमो रुद्रः स ब्रह्मा स शिवस्सेन्द्र इति इन्द्रवत्कार्यत्वादिश्रवणात् एवमेव ह्युपबृंहितं भगवता व्यासेन ब्रह्मरुद्रसंवादे "ममान्तरात्मा तव च । ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् । अहं ब्रह्मा चाद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः मत्तो जगत्स्थावरजङ्गमं च सर्वे वेदास्सरहस्याश्च पुत्रेति, अत एव मानवे धर्मशास्त्रेऽपि योऽस्यात्मनः कारयितेत्यादिवचनानि च न भवदभिमतवाङ्मयप्राणमयविषयाणि श्रुत्यनुसारित्वात्, स्मृतिवचनानाम्, अत एव मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाश आत्मा प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेत्यादिश्रुतयश्च न भवदभिमतपरिपाटीप्रतिपादिकाः स्ववाक्यस्वारस्याभावात् श्रुत्यन्तरविरोधादनुपपन्नत्वाच्च यत्तं ईश्वरस्य प्रलयकाले व्यूहत्रयं प्रामाणिकमत एव ब्रह्मरुद्रयोर्वाङ्मयप्राणमयव्यूहत्वं च दूरोत्सारितं, स्मृतयश्च श्रुत्यनुरोधेन वर्णनीयाः, अशक्यवर्णनाश्चेदनादरणीयाः एवं वाङ्मयादिव्यूहत्रयकल्पनस्य निर्मूलत्वात् त्रिपादस्यामृतं दिवीति वाक्यस्य यादवप्रकाशीयैरभिहितार्थोऽनुपपन्नः, तस्माद् भूतादिपादेत्यादिसूत्रस्य भाष्यकाराभिमतार्थ एवोपपन्न इति स्थितम् ॥

( शेषमग्रे )

# सिद्धान्तमुक्तावली

## प्रकाशानन्दविरचिता ।

(*Continued from page* 220. VOL. XII.)

२८ ननु परिपूर्णानन्दस्वभावश्चेदात्मा कथं संसारावस्थायां न स्फु-
रति । नच परमप्रेमास्पदतयाऽऽत्मनः स्फूर्तिरेवानन्दस्वरूपस्य स्फूर्ति-
रिति वाच्यं तादृगभिमानाभावात् नहि मोक्षावस्थायां यादृगानन्दस्व
रूपत्वमात्मनः श्रूयते एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीव-
न्तीत्यादिश्रुतेस्तादृगानन्दात्माभिमानःकस्यचिदस्ति आनन्दं ब्रह्मणो
रूपं तच्च मोक्षे प्रतिष्ठितमिति मोक्ष एव तदभिव्यक्तिश्रवणाच्च संसाराव-
स्थायां प्रतिबन्धसत्त्वाद्भासमानमप्यानन्दरूपत्वं नाभिमन्यत इति चे-
त्कस्तर्हि प्रतिबन्धः अज्ञानं तत्कार्यं वा आद्ये जीवस्य परस्य वा नान्त्य-
स्तस्य सर्वज्ञस्य निरवद्यस्य तदभावात् नाद्यस्तस्य परेणाभेदात् नान्यो-
तोऽस्ति द्रष्टेत्यनेन जीवेनात्मनातत्त्वमस्ययमात्मा ब्रह्मेत्यादिश्रुतिभ्यः।

Objection· Self is not commonly known as Bliss. To argue that this is due to Nescience is to raise the question, Who knows Nescience?—to which no answer can be given.

28 Here it may be asked by way of objection why Self, if it is by nature absolute Bliss, does not appear in consciousness during the transmigratory existence of the individual. Nor may the reply to this be that the appearance of Self in consciousness as the object of our highest love is indeed the presentation of (Self as) absolute Bliss (cf. p. 10, note). For our consciousness (abhimāna) does not take this form (sc. I am pure Bliss). And further, because no one is conscious of such Bliss as that which Veda declares to be the nature of Self in the state of emancipation (moksha) in the passage:—all other creatures live on a part of this same Bliss &c.

And because the manifestation of bliss (tat) is declared by Sruti to take place only at the time of moksha in the passage:—Bliss is the form of Brahman and is fixed in moksha.

Again it may be urged that though Self as Bliss shines forth yet we are not conscious of it during transmigratory life, because of the hindrance then existing. What is this hindrance? Is it Nescience or a product of it? If Nescience, does it pertain to jīva or to Brahman (parasya)? Not to Brahman, for to that which is all knowledge and is blameless Nescience cannot pertain. Nor to jīva which is identical with Brahman, as declared in the passages:—'there is no other seer but that one'; '(let me enter) with this living Self, jīva'; 'that thou art'; 'all is that Self.'

नच कल्पनामात्रेणैव जीवस्याप्यज्ञानं न वस्तुतो ऽस्तीति वाच्यं परस्मिन्नपि प्रसङ्गात् नच चिन्मात्रनिष्ठमज्ञानं तत्सर्वात्मना प्रतिबध्नात्येवेति वाच्यं यदि संसारावस्थायामप्रतिबद्ध आनन्दो नास्त्येव कस्य प्राप्त्या तर्हि प्रतिबन्धनिवृत्तिः स्यात् नहि संसारिप्राप्त्या संसारनिवृत्तिः सम्भवति नचाप्रतिबद्ध एवानन्दः संसारावस्थायामप्यस्त्येव केवलमज्ञानसमुद्भूतद्वैतान्तःपातिशब्दादिविषयविषविषण्णस्य तद्दर्शनातिलालसमानसस्य तद्दर्शनवेलायामप्यत्यन्तभावनासमुत्थापितविषयवडिशाकृष्टहृदयस्य परमप्रियतमं जगदीश्वरं सर्वाङ्गप्रोततया ऽतिसन्निहितमप्यात्मानमीक्षितुं क्षणमलभमानस्य स्वग्रीवास्थग्रैवेयकाद्यनवधानवदनवधानमात्रमात्मनि प्रतिबन्धः न वस्तुतः प्रतिबन्धो ऽस्तीति वाच्यं ।

Nor may it be replied that Nescience does not really pertain even to jīva but by a mere fiction. For the same would apply to Brahman also. Nor can it be urged (as in Saṃkshepaśārīraka cf. p. 14, supra) that Nescience which has undifferenced Intelligence as its focus, obstructs *completely* (*i. e.* both jīva and Brahman). If unobstructed Bliss exists not during transmigratory life, there is nothing by the attainment of which an end may be put to the obstruction (of Bliss). For transmigratory life cannot be put an end to by the attainment of anything that pertains to the transmigratory life (sc. jīva). Nor may it be urged that even during transmigratory life unobstructed Bliss exists; that the obstruction is not real but consists entirely in inattention to (non-discrimination of, anavadhāna) Self, just as inattention makes one lose sight of the jewel round one's neck; (that this inattention) pertains to him who is overcome by the poison of sensuous objects, sc. sounds and the rest, which fall within the duality wrought by Nescience, and whose mind eagerly desires the sight of Self, and whose heart is drawn away, even while he beholds Self, by the bait of sensuous objects awakened by the firm impressions (these had left behind in his mind), and who thus finds no time to recognise that Self most dear, the lord of the universe, who as the web entering all things is very near to him.

तद्दर्शनरूपस्य प्रतिबन्धस्याश्रयनिश्चयासामर्थ्यात्तथाहि कोसो द्वैतद्रष्टा किं परमात्मा किं वा जीवः किं वा परः कश्चित् नाद्यः तस्य सर्वज्ञस्य भ्रमबीजाज्ञानाभावेन द्वैतदर्शनानुपपत्तेः यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेत्ति स इति न्यायादज्ञानमिथ्याज्ञान-सम्यग्ज्ञानानां समानाधिकरणत्वनिश्चयेनाविद्यावत एव तत्सम्भवात् अस्तु तर्हि जीवस्याविद्यावतो द्वैतद्रष्टृत्वं । न । तस्य परेणाभेदस्योक्तत्वात् न चाभेदे पि बिम्बप्रतिबिम्बव्यवस्थया सर्वज्ञत्वद्वैत-द्रष्टृत्वयोरुपपत्तिरिति वाच्यं वैषम्यात् ।

For of this obstruction, consisting in the contemplation of those things * (sc. pain, duality &c ), the substrate cannot be known with certainty. To explain—who is the seer of duality? The supreme Self (Brahman)? Jīva? Or some third? Not Brahman: for Brahman, consisting of all knowledge, cannot have a vision of duality, since Nescience, the cause of error, is absent. For according to the rule that error pertains to him to whom Nescience pertains, that the deluded one knows truly (afterwards), it is ascertained that Nescience, false and true knowledge, refer to one common substrate (or person) and therefore vision of duality (tat) can belong only to that which possesses Nescience. Next suppose that jīva, as associated with Nescience, is the seer of duality. This cannot be. For the identity of jīva with Brahman has been declared (in Śruti). Nor may it be urged that though Brahman and jīva are really identical (abhede'pi), the characters (belonging to them respectively) *of consisting of all knowledge* and *of being the seer of duality* may be satisfactorily accounted for by recourse to the settled relation of reflected thing and reflexion of that thing. For there is a difference here.

* The gloss explains that this is the refutation of the second alternative, sc. that obstruction is a product of Nescience,—inattention being the product of Nescience.

तत्र हि पूर्वसिद्धे उपाधौ बिम्बप्रतिबिम्बभावानन्तरं प्रतीयमानयोर्मलिनत्वस्वच्छत्वयोर्व्यवस्थयोपपत्तिर्युक्ता इह तु द्वैतदृष्ट्युत्थापितद्वैतस्यैवोपाधितया तदनुप्रवेशेन बिम्बप्रतिबिम्बभावकल्पनायां ततः पूर्वं द्रष्टृव्यवस्थापकानुपपत्तेः नचानादिसिद्धाऽज्ञानप्रतिबिम्बस्याप्यनादितया ततः पूर्वमिति पर्यनुयोगानुपपत्तिरिति वाच्यं अनादिसिद्धाऽज्ञानद्रष्टुरप्यनादिसिद्धस्यैव वक्तव्यत्वात् । नचासौ वक्तुं शक्यः नच साक्ष्येव तथा तस्य सर्वज्ञस्य स्वाविद्याविरहेण तद्द्रष्टृत्वानुपपत्तेः ।

Thus, in the latter case, since the limiting adjunct (sc. the mirror) is already in existence, it is proper, after the relation of reflected object, sc. the face, and reflexion (of the face in the mirror) has been formed, to account for the perceived characters of purity and impurity (belonging respectively to the face and the reflexion of it) by recourse to this settled relation. But since in the present case, that very duality which has been brought about by the vision of duality, is the limiting adjunct through whose influence the surmisal of a relation as between reflected object (sc. Brahman) and reflexion (sc. jīva) is made, there could be nothing to constitute a seer (of this duality) previous to that duality (or Nescience, tataḥ). Nor may it be replied that the objection implied in the words *'previous to that'* cannot be raised, since the reflexion in Nescience, which is eternal *ab ante*, must also be eternal *ab ante*. For then an eternal seer of this eternal Nescience would also have to be maintained; but such an eternal seer cannot be maintained. Nor can it be said that the Witness is such an eternal seer (tathā). For to the Witness itself as consisting of all knowledge Nescience cannot attach, and therefore power of seeing that Nescience (tat) cannot belong.

नच सर्वज्ञस्याप्यन्याऽविद्याद्रष्टृत्वेनाविरोधः स्वभिन्नाऽविद्याद्रष्टृत्वेन परमात्मनो भ्रान्तत्वप्रसङ्गात् नान्योऽतोऽस्ति द्रष्टेति शास्त्रविरोधाच्च न च सर्वज्ञत्वं नाम स्वरूपचैतन्येन स्वाध्यस्तसकलभासकत्वं तच्चाविद्यावत्त्वेपि न विरुध्यत इति वाच्यं निरवद्यं निरञ्जनमिति श्रुत्या अविद्याया अपि तत्र निषिद्धत्वात् नच वस्तुभूताऽविद्यानिषेधः नतु कल्पितायापीति वाच्यं साधारणनिषेधात् वस्तुभूताऽविद्याऽप्रसिद्धेश्च जीवस्य चाविद्योत्तरभावितया ऽनादित्वानुपपत्तेः अन्यथा ऽविद्यानिवृत्त्यापि जीवभावो न निवर्त्तेत । न तृतीयः जीवपरमात्मव्यतिरिक्तस्य सर्वस्यैव जडत्वेन द्रष्टृत्वानुपपत्तेः ।

Nor can it be said that there is no contradiction in holding that the Witness, although consisting of all knowledge, is the seer of that Nescience which attaches to something other (than the Witness). For it would follow that the Highest Self is subject to error in thus beholding that Nescience which attaches to something other (than Self); and because this would contradict the passage—'there is no other seer but this one.' Nor again that *consisting in all knowledge* means the illumining by Intelligence *per se* (Brahman) of all that is erroneously surmised in it, and that this character (tat) is not opposed to that of being associated with Nescience (avidyâvattvena). For by the passage—'without fault, without taint', Nescience is also denied in regard to Brahman (tatra). Nor may it be replied that this prohibition extends to a *real* and not to an *unreal* (surmised) Nescience. For the prohibition is general, and because a *real* Nescience is not a fact of experience. And because to jīva, as being something subsequent to Nescience, eternal-ness *ab ante* cannot belong: otherwise the jīva state would not be put an end to by the cessation of Nescience, (according to the maxim that a positive entity, *sc.* jīva, eternal *ab ante* is eternal *without end*—and thus emancipation would be impossible). Nor will the third alternative hold. For everything that is different from jīva and the Highest Self is unintelligent (jaḍa) and could not therefore possess the power of vision.

नचोभयानुगतचित्सामान्यस्यैव द्रष्टृत्वमिति वाच्यं तथा च सति अविद्याया अपि तत्रैव वक्तव्यतया जीवस्य निरवद्यस्याऽभ्रान्तस्य परमात्मवन्नित्यमुक्तत्वसर्वज्ञत्वाद्यापत्तिः उपाधिसिद्ध्युत्तरकालीनत्वाच्च त्रितयविभागस्य । नचाविद्यानङ्गीकारे तद्विषयकप्रश्नाक्षेपानुपपत्त्या तवैव प्रष्टुराक्षेप्तुर्वाऽविद्याद्रष्टृत्वं युक्तमिति वाच्यं तस्यैव ममाप्यविद्याद्रष्टुः स्वरूपस्येदानीं त्वया तत्त्वनिर्णयार्थं वक्तव्यत्वात् नच यस्त्वं स्वात्मस्वरूपमपि न जानासि अयमहमिदं पृच्छामिति तस्य तव प्रश्न एव कथं स्यादिति वाच्यं प्रश्नविषयाऽज्ञाने सत्येव प्रश्नोपपत्तेः अन्यथा प्रष्टव्यार्थज्ञानाज्ञानविकल्पेन प्रश्नाभावेन नाऽपृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः जानन्नपि हि मेधावी जडवल्लोक आचरेदिति न्यायेन स्वयं वक्तुमशक्यतया सर्वं शास्त्रमरण्यरुदितं स्यात् ।

Nor may it be argued that power of vision belongs indeed to that pure Intelligence which pervades both (jīva and Brahman). For if this were so, Nescience would have to be admitted also in regard to that pure Intelligence (tatrāpi;) and so to jīva, (which would then have to be regarded as) faultless and undeluded, would pertain the characters of being ever free and of consisting of all knowledge, as is the case with the Highest Self And because this threefold division * must be, in point of time, subsequent to the existence of the limiting adjunct (sc. Nescience).

Nor may it be urged that the power of seeing Nescience is rightly predicated of you, whether you question or deny; for if you do not admit the existence of Nescience, your question or denial in regard to it is impossible. Because, to ascertain the truth, you must declare what the true nature is of that very seer of Nescience, sc. myself. Nor again, that you who know not the nature of your Self, thus, *this* *I* am asking about *this* (nature of Self) could not ask a question. For a question is possible only when nescience exists as to the matter of the question: otherwise, by admitting as alternatives knowledge or nescience of the matter in question, there would be no question at all; (and then) in accordance with the maxim that one unquestioned should not address another, &c. (Manu, II, 110.) the whole Veda would be a crying in the wilderness, for of itself it could not speak (until questioned).

* Var. lec. तृतीयभागस्य ।

नच प्रश्नविषयापरिज्ञाने कथं तद्विषयकशब्दरचना नहि संसर्गमज्ञात्वा शब्दरचना नामेति प्रसिद्धिरिति वाच्यं स्तोभशब्दवन्त्साथैकस्यापि शब्दस्य तत्स्वरूपज्ञानादेव रचनोपपत्तेः सर्वत्र शब्दस्वरूपज्ञानस्यैव शब्दरचनाहेतुत्वात् संसर्गज्ञानस्य च शब्दरचनाहेतुत्वेन प्रसिद्धोपात्तस्य प्रमाणशब्दप्रामाण्यप्रयोजकतया ऽन्यथासिद्धेः नच देहादीनां बुद्धिपर्यन्तानामहम्प्रत्ययालम्बनीभूतानामितराऽनात्मव्यावृत्ततया प्रतीयमानानां मध्ये ऽन्यतमं तत्समुदायो वा तव स्वरूपमिति वाच्यं

Nor may it be argued that, if the matter of a question is unknown, the employment of words in regard to that question is impossible, in accordance with the well-known fact that words are not employed where a certain relation has not been perceived. For even a word with a meaning can be employed when there is simply a knowledge of the form of the word, as is the case with meaningless words technically termed *stobha* (e.g. interjections), since in all cases it is simply a knowledge of the form of a word that is the cause of its employment. And because the knowledge of a certain relation, (which knowledge is) commonly accepted as the cause of the employment of a certain word, is the cause (or logical reason) determining the correctness (prāmāṇya) of the word which is here the pramāṇa, it *is not* the true cause (of the employment of that word).* Nor can it be said that the real nature of your Self is one of the following, or these taken together, viz. those things beginning with the body and ending with the mind, which are the objects of the consciousness expressed by the word I, and are perceived as different from the not-Self which is other than they are.

* To decide whether a certain word has been rightly used we must know the relations of things which that word is intended to convey; but merely to enounce *it*, all that we need know is the form, i.e. letters, inflection &c. of the word.

तेषामप्यज्ञानकार्याणां मद्भोगोपकरणतया ममप्रत्ययविषयाणां छत्रचामरादीतरभोगसाधनवन्मदुपसर्जनतया प्रतीयमानानां प्रत्येकसमुदाययो: कार्यकारणविलक्षणाऽहेयानुपादेयस्वभावममप्रत्ययाविषयपरमप्रियतमस्वातिरिक्तसर्वावभासकसर्वदाऽव्यभिचार्यात्मवस्तुस्वरूपत्वानुपपत्ते: नच देहादिबुद्धिपर्यन्तेभ्यो यत्स्वरूपं त्वया परिशेषितं तदेव तव स्वरूपमिति गृहाणेति वाच्यं तस्याप्यज्ञातत्वात् नचाज्ञानं परित्यज्य तद्विषयस्वरूपमात्रं प्रत्यक्तत्त्वं ग्राह्यमिति वाच्यं तस्यापि जीवेश्वरतद्भिन्नत्वादिरूपेण निर्णेतुमशक्यतया सन्देहाक्रान्तत्वात् नच किं नाम निर्णयेन वस्तुस्वरूपं तु निर्णीतमेवेति वाच्यं अशेषविशेषेण तत्त्वबुभुत्सुप्रत्येतस्यानुत्तरत्वात्।

For these things are products of Nescience, are known under he word *my* so far as they minister to *my* enjoyment, are known as subordinate to me, just as the umbrella &c. are the means of comfort to another (sc. the raja); hence thes things, singly or together, cannot possibly constitute that Self, which is neither cause nor effect, which in its own nature is not to be rejected or accepted as an object of desire, which is not made known by the word *my*, which illumines all that is different from itself most dear, which at no time fails to pervade all things. Nor may it be replied thus—Accept as your own nature (Self) that thing (svarūpa) which was distinguished by you from body &c., down to mind. For that thing also, the Self within, or Witness, is unknown. Nor again that putting Nescience out of view, we should accept as Self the Reality within, which *per se* is the object concealed by Nescience (tat). For doubt attaches to that Reality also, in that it cannot be discriminated as jīva or Īśvara, or as something different from them. Nor may it be urged that such discrimination is unnecessary since the Reality itself is ascertained. For this is no reply to the man who desires to know that Reality *in toto*.

नच सामान्यविशेषशून्ये विशेषबुभुत्सैवानुपपन्नेति वाच्यं तस्यैव सामान्यविशेषशून्यस्य वक्तव्यत्वापत्तेः नचाज्ञानव्यतिरिक्ततया निश्चिते स्वरूपे सन्देह एव नोपपद्यत इति वाच्यम् अज्ञानस्याद्याप्यनिवृत्तत्वात् स्थिते एवाज्ञाने विवेकदृष्ट्या तद्विविक्तस्वरूपनिर्णये ऽपि तेनैवाज्ञानेन विषयीकृते सन्देहोपपत्तेः नचाध्यस्ताज्ञानस्वरूपे स्थिते तदधिष्ठानस्यात्मनो विवेको ऽशक्य एवाधिष्ठानभेदेनाध्यस्तस्य पृथक्स्वरूपाभावात् ततो यदि विवेकदृष्ट्या ऽधिष्ठानस्वरूपमात्मतत्त्वं निश्चितं तदा तत्राध्यस्तमज्ञानं तत्कार्यं वा ततो भेदेन तत्र नास्तीत्यवधार्यं विनिश्चेतव्यं तथा च तत्राज्ञानविरहात्सन्देहानुपपत्त्या प्रश्नानुपपत्तिरेवेति वाच्यम् ।

Nor to this may it be answered that, in regard to that which is destitute of both general and special attributes, the very desire for special knowledge is impossible. For it follows that that something destitute of general and special attributes must be declared by you to exist. Nor, again, that no doubt is possible in regard to this reality (svarūpa), since it has been ascertained as something different from Nescience. For a doubt is possible in regard to that Reality which has been invested by Nescience, even though the Reality may have been carefully discriminated from Nescience (tat), in that the latter is existing, since even up to this time Nescience has not been destroyed. Nor again may it be argued that since Nescience is proved to be something surmised, it is quite impossible to discriminate it from Self which is its substrate, for that which is surmised has no existence apart from the substrate in which it is surmised: hence when by discrimination the real nature of Self as the substrate of all things has been ascertained, then a further conviction should arise in the form—Nescience and its products, surmised in the Self (tatra), have no existence apart from the Self: and thus since Nescience exists not in Self, doubt is impossible, and question (in regard to Self) is also impossible. *(To be continued.)* *A. V.*

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा॰ पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

---

(*Continued from page* 213. Vol. XII.)

परिधौ यूपधर्मानुष्ठानाधिकरणम् ।

सू॰ तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् ॥ १३ ॥

परिधौ पुनराक्षेपः, नीवारादयो हि कार्यार्थतया विधीयमाना युक्तं यत्कार्यार्थान् व्रीहिधर्मान् लभन्ते, परिधिः पुनरग्निपरिधानार्थेनोत्पन्नो न नियोजनार्थेन परिधानार्थ एव तु तस्मिन् वचनात्पशुर्नियुज्यते प्रकृतौ च कार्यार्था धर्मास्तच्छेषभूते साधनेऽनुष्ठिता नाशेषभूते परिधौ भवितुमर्हन्ति यूपोत्पत्त्यर्थाश्च परिव्याणादयो, न चेह यूपोऽस्ति अयूप एव हि परिधौ पशुर्बध्यते तेनार्थलोपादपि न परिधौ खले वाल्यामिव यूपधर्माः कर्तव्या इति प्राप्तेब्रूमः—यद्यपि परिधानार्थेन परिधिरुत्पादितस्तथाऽपि नियोजने विनियोगात्पुरोडाशकपालस्येव तुषोपवापशेषत्वमस्त्येव, यद्यपि तादर्थ्यं नास्ति तथापि नियोजनसाधनत्वात्साधननिवेशिनो धर्मान् लभेतैव, न हि तादर्थ्यप्रयुक्तधर्माः किन्तु साधनत्वप्रयुक्ताः व्रीहिभिर्यजेत यूपे पशुं बध्नातीत्यादिभिर्हि साधनत्वेन विधीयमाना व्रीह्यादयो धर्मैः प्रोक्षणपरिव्याणादिभिः सम्बध्यन्ते, तादर्थ्यं तु सदप्यशाब्दं न धर्मान्वयं भ[1]जंते, न चोपयुज्यते तादर्थ्यं धर्माणां कार्यं गच्छतां तत्साधनमेव द्वारमपेक्षितमस्ति च परिधेरपि साधनत्वं, न च यूपाख्यमेकं किञ्चिदस्ति यदुत्पत्त्युपयोगिनः परिव्याणादयः परिधौ लुप्तार्थाः स्युः, छेदनादिविधयो हि सर्वे परस्परानपेक्षाः काष्ठगतं दृष्टमदृष्टं वा यथायथं

---

१ लभत इति पा॰ ।

कार्यं गमयन्ति, सर्वाणि च तानि कार्याणि नियोजनस्याङ्गं तत्र परिधा-वसम्भवतां छेदनादीनां लोपेऽपि सम्भवन्तः परिव्याणादयो न लोपनीयाः खले व्यल्यामपि अञ्जनपरिव्याणादयो भवन्त्येवेति वक्ष्यते, तस्मात्परिधौ यूपधर्माः कर्त्तव्याः ॥

शतादौ प्रणीताधर्म्मानुष्ठानाधिकरणम् ।

सू॰ परायन त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ १४ ॥

अभ्युदयेष्ट्यां दधिशृतयोः किं प्रणीता धर्माः कर्त्तव्या ने? ति चिन्तायां प्रणीताकार्ये अपणे तयोः परिधेरिव नियोजने विनियोगाभावादकरणमु-त्पवनादीनामसत्यपि विनियोगेऽर्थादपि तावत्साधनत्वमस्तीति साधन-निवेशिनो धर्माः कर्त्तव्याः ॥

बृहद्रथन्तरयोर्धर्म्मव्यवस्थाऽधिकरणम् ।

सू॰ एकार्थत्वादविभागः स्यात् ॥ १५ ॥

ज्योतिष्टोमे बृहद्रथन्तरे पृष्ठसाधनत्वेन विहिते तयोर्धर्मा. रथन्तरे प्रस्तूयमाने सम्मीलयेद्बृहति प्रस्तू[1]यमाने समुद्रं मनसा ध्यायेदित्यादयः किमुभयेऽपि धर्माः उभयत्र कर्त्तव्याः? उत यथाश्रुती? ति संशये "उभयोरेक कार्यत्वात्कार्यसाधनगोचराः। धर्मद्वयोर्द्वयेऽपि स्युर्व्रीहिधर्मा यवेष्विव। ननु चान्यथा रथन्तरेण स्तुतिः साध्यते शूरादिप्रकारेण अन्यथा च बृहता चित्रा दिप्रकारेण तेन साधनभावप्रकारभेदात् साधननिवेशिनो धर्मा न सङ्कीर्येन्ते, यथा व्रीहिधर्माः सुवादिष्वेककार्येष्वपि न संभवन्ति कारकभेदादेव-मिहापि, नैतदेवं यदेव हि हिरथन्तरं पृष्टं भवतीति शास्त्रविहितं साम्नो-ऽक्षराभिव्यञ्जकत्वेन साधनत्वं तेनांशेन सम्मीलनादिधर्माः सम्बध्यन्ते साधनविधिना हि सम्बध्यमाना धर्मविधयो यदेव विधौ विवक्षितं साध-नरूपं तेनैव सम्बध्यन्ते, शूरादिप्रकारभेदस्तु अविवक्षितो वस्तुस्वभाव-कृतो न धर्मव्यवस्थायां हेतुर्भवितुमर्हति। किं चायमभिव्यज्यमानानामृचां भेदो यच्छूरादिरूपता साम्नोऽस्त्वक्षराभिव्यक्त्यात्मकमेकरूपमेव साध-नत्वं तस्मात्सङ्कर एवात्र युक्तो व्रीहियवादिधर्माणामिव संमीलनादीना-

१ प्रस्तूयमाने इति पा०।

मिति प्राप्ते ब्रूमः—"साम्नोर्व्यवस्थाया यस्माच्चिह्नं शोमीलनादिषु । तस्माद्व सङ्करो युक्तो न त्वेवं प्रोक्षणादिषु" ॥ व्रीहिग्रहणं कारकविशेषोपलक्षणमिति कृत्वा यवेष्वपि प्रोक्षणादयः क्रियन्ते, तदिहापि यदि रथन्तरग्रहणं साधनमात्रोपलक्षणं स्यात्तत एकमेव रथन्तरं बृहद्वा सर्वधर्मविधिषु गृह्येत यतस्तु क्वचिद्रथन्तरं क्वचिच्च बृहद्गृह्यते तन्नूनमिह रथन्तरादिस्वरूपमपि विवक्षितमिति गम्यते, तस्माद्व्यवस्था, किं च नानयोरेककार्यत्वम् अन्यद्धि पृष्ठं रथन्तरेण साध्यते, अन्यच्च बृहता । ननु पृष्ठैःस्तुवत इति वाक्योत्पन्नपृष्ठानुवादेन बृहद्रथन्तरयोर्विधानादेककार्यत्वमनयोर्नैवं यदि पृष्ठैःस्तुवत इत्युत्पत्तिः स्यात्तत उत्पपत्ति गतया बहुत्वसङ्ख्यया बहूनि पृष्ठानि स्युः, तत्र सप्तमे यत्सूत्रभाष्यकाराभ्यां ज्योतिष्टोमे पृष्ठबहुत्वं नास्तीत्युक्तं तद्विरुध्येत, तस्माद्रथन्तरं पृष्ठं भवतीति रथन्तरविशिष्टं पृष्ठं विधीयते पृष्ठ—शब्दस्य स्तुतिवाचित्वं वाक्यशेषात्तुणवाक्यैश्चावगम्यते, तस्माद्भिन्नस्तोत्रसाधनत्वात्साम्नोस्तन्निबन्धनानां धर्माणामाज्यावधादिधर्माणामिव व्यवस्था सिद्धिः, स्तोत्रयोश्चादृष्टार्थत्वात् प्रयाजादेरिव नैकार्थ्ये नानाकार्ययोश्च स्तोत्रयोर्वचनवशाद्विकल्पः, तस्माच्च[1] धर्मसङ्करः ॥

कण्वरथन्तरे बृहद्रथन्तरधर्मसमुच्चयाधिकरणम् ।

सू० अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन् ॥ १९ ॥

टी० वैश्यस्तोमे श्रूयते "क एव रथन्तरं पृष्ठं भवती"ति तत्र संशयः किं कण्वरथन्तर बृहद्रथन्तरयोः स्थानापन्नं कार्यप्रयुक्तान् रथन्तरधर्मान् बृहद्धर्मांश्च गृह्णद्विकल्पेन गृह्णाति? उत समुच्चयेने? ति "विकल्प एव तेषां स्यात् प्रकृतावसमुच्चयात् । मिथो ऽनपेक्षस्तद्धर्मैः प्रकृतौ साधिता स्तुतिः ॥ उच्यते "पृथङ्निर्देशसामर्थ्याद्व्यवस्था प्रकृतौ कृता । इदं त्वप्राकृतं साम द्वयोः कार्ये विधीयते, तच्च द्वयोरपि कार्ये कुर्वद्धर्मानपि समुच्चयेन गृह्णातीति भाष्यकारः वार्त्तिककारस्तु विकल्पमेव मन्यते, तथा हि यद्यपि तावत्प्रकृतावेकैव पृष्ठस्तुतिर्धर्मेणां प्रयोजिका तथाऽपि तेषां सामद्वारत्वात्साम्नोश्च

[1] च संस्कार इति पा० ।

वैकल्पिकत्वाद्धर्माणां च पृथङ्‌निर्देशेन व्यवस्थितत्वात् केचिद्धर्मा रथन्तररूपसाधनद्वारेण स्तुत्यपूर्वं साधितवन्तः केचिद्बृहद्द्वारेण, एवमेव विकृतावप्यतिदेशेन कदाचिद्रथन्तरं स्वधर्मयुक्तं पृष्ठसाधनं कदाचिद्बृहत्, एवं प्राप्ते कण्वरथन्तरतयोः कार्ये विहितमपि यथाप्राप्तयोः कार्यविधानात्कदाचिद्रथन्तरकार्यं कदाचिद्बृहत्कार्यं विहितम्भवति न सर्वदा द्वयोः कार्यं, ततश्च कदाचित्कस्यचिद्धर्मान् गृह्णाति न सर्वदा सर्वा स्तुतिरपि प्रकृतावन्योन्यनिरपेक्षैर्धर्मैः साधिता, विकृतावपि न समुच्चयमपेक्षते किमुत यदा द्वे स्तुती प्रकृतौ वचनाद्विकल्पेनानुष्ठिते विकृतावपि तथैव प्राप्ते तयोश्च वचनाद्विकल्पेनानुष्ठीयमानयोः साधनत्वेन विधीयमानं कण्वरथन्तरमन्यतरधर्मान् गृह्णातीति व्यक्तमेतत्तस्माद्विकल्पः ॥

द्विसामके बृहद्रथन्तरधर्मयोर्व्यवस्थाधिकरणम् ।

सू० उभयसाम्नि चैवमेकार्थापत्तेः ॥ १७ ॥

यत्र बृहद्रथन्तरयोः प्रकृतितोऽविकल्पे प्राप्ते समुच्चयो विधीयते संसव उभे कुर्यादित्यादौ तत्र किमुभयोरथन्तरधर्मा उभयोश्च बृहद्धर्माः कर्त्तव्या? उत रथन्तरे रथन्तरधर्माः बृहति च बृहद्धर्मा एवे? ति संशये द्वाभ्यामपि संहत्यैकैकस्य कार्यं साध्यत इति द्वयोरपि द्वयधर्मप्राप्तौ उच्यते यद्येकैकस्य कार्ये द्वयं विधीयेत ततः स्यादेवं चोदकेन विकल्पेन प्राप्तयोः पृष्ठयोरिह स्वधर्मयुक्तयोरेव समुच्चयविधिस्त्वयम् ॥ एवं हि समुच्चयमात्रविधानाल्लाघवमप्राकृतकार्यता च साम्नोर्न कल्पिता भविष्यति । तस्मात्प्रकृतिवदिहापि धर्मा व्यवस्थिताः ॥

सौर्यादिषु पार्वणहोमाननुष्ठानाधिकरणम् ।

सू० पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभीज्या हि ॥ १८ ॥

"स्रुवेण पार्वणौ होमौ जुहोती"ति तद्धितश्रुत्या पर्वदेवत्यौ होमौ किं विकृतिष्वतिदिश्येते ने? ति संशयस्तदर्थमिदं विचार्यते—किं पर्व-शब्दः कालवचनः कालोऽस्य देवता तस्य चासंस्कार्यत्वादारादुपकारकौ होमौ? उताग्नेयादिसमुदायवचनः समुदायदेवत्यौ होमौ? तत्संस्कारार्थाविति तत्र काले शब्दस्य मुख्यत्वात्कालाभीज्येह गम्यते। एणातिदेशनकर्मत्वात्कर्मण्यपि

च मुख्यना पृणातेर्दानकर्मणः पर्व-शब्दः स च दीयतेऽस्मिन्नित्यधिकरणव्युत्पत्त्या कालेऽपि मुख्यः, भावव्युत्पत्त्या कर्मण्यपि, तत्र प्रकरणात्सामर्थ्यायिकत्वालाभाच्च कर्मवचनमङ्गीकृत्य तत्संस्कारार्थतां होमयोरध्यवस्यामः, तेषां च कर्मणान्तन्त्रेणाभिहितानामग्नीषोमयोरिव व्यासक्तं देवतात्वं नैकैकशः तेन समुदायस्य देवतात्वात्तस्य च विकृतिष्वभावादतद्विकारत्वाच्च सौर्यादेस्तत्र होमयोरप्रवृत्तिः समुदायिविकारा हि सौर्यादयो न समुदायविकाराः ॥

दर्शपूर्णमासयोर्होमद्वयस्य व्यवस्थाधिकरणम् ।

## सू० उभयोरविशेषात् ॥ १९ ॥

किमेतौ होमावुभावप्युभयोः पौर्णमास्यमावास्ययोः कर्तव्यावुत विभज्य पौर्णमास्यां पौर्णमासीदेवत्योऽमावास्यायाममावास्यादेवत्य? इति तत्र प्रकरणाविशेषादुभावप्युभयत्रेत्याशङ्क्य संस्कार्यवशत्वात् संस्काराणां सूक्तवाकन्यायेन निष्कर्षस्तेनैव च न्यायेन गतत्वान्नेदमधिकरणान्तरं, पूर्वस्यैव तु प्रयोजनसूत्रद्वयमिदमुभयोरविशेषात् यद्भोज्या वा तद्विषयाविति ऊहसिध्यर्थमवान्तरकार्यनिरूपणं प्रस्तुतमिति तत्प्रसङ्गात्प्रयाजयोरवान्तरकार्यनिरूपितम् ॥

समिदादीनां यागनामधेयताऽधिकरणम् ।

## सू० प्रयाजेऽपीति चेत् ॥ २० ॥

समिधो यजति तनूनपातं यजतीत्यत्रापि किं कर्मसम्बन्धिनः समिदादीन् देवतात्वेनोद्दिश्य तत्संस्कारार्थं यागविधानम्? उतारादुपकारकयागविधानमिति संशये पूर्ववत्सामर्थ्यायिकत्वलिप्सया संस्कारविधिः, द्वितीया च देवताऽभिधाने समर्थैव "विष्णुं यजती"त्यादिदर्शनादिति प्राप्ते ब्रूमः "उद्देशपूर्वकस्त्यागो यजिना ह्यभिधीयते । त्यागे च नास्ति कर्मत्वं देवतायाः कथंचन उद्देशांशगतं तु कर्मत्वं[1] च यागेऽप्युपचर्य विष्णुं यजतीत्यादिनिर्देशनं, न चेह विधावुपचारो युक्तः यागास्त्विह केवला विधीयन्ते, तेषां व श्रुत्यादिभिः कार्यविशेषानवगमात् प्रकरणेनारादुपकारकत्वं समिदादिशब्दास्तु मन्त्रवर्णप्राप्तदेवतां निमित्तीकृत्य नामधेयानि देवता एव चानुवदन्ति न चानुवाद उपचारो दोषस्तस्मादारादुपकारकाः प्रयाजाः ॥

इति शास्त्रदीपिकायां नवमस्य द्वितीयः पादः । (शेषमग्रे)

---

१ त्यागेऽप्युपचर्येति पा० ।

# खण्डनखण्डखाद्यम् ॥

## अथ चतुर्थः परिच्छेदः ।

(*Continued from page* 224. VOL. XII.)

मू० (१) [a] ननु तथापि भावात्मके तस्मिन्नीश्वरे विधायकं किञ्चित्प्रमाणं वक्तव्य(२)मिति चेत् किं पुनर्भावत्वं * विधित्वमिति? *—चेन्न, [b] पर्यायाप्रश्नात् * स्वरूपसत्त्वमिति? *—चेन्न, [c] अभावस्यापि तथाभावात् [d] प्रतिस्वं व्यावृत्तत्वेनाननुगतत्वापत्तेश्च * अस्तीति प्रतीतिविषयत्वम्? *—इति चेन्न, अभावो घटस्यास्तीतिप्रतीति सम्भवेनाभावस्यापि [e] तथात्वप्रसङ्गात् [f] नास्तीतिप्रतीतिविषयत्वेपि घटादेर्भावत्वानिवृत्तेः ॥

टी० ॥ भावत्वखण्डनं पूर्वखण्डनेन सङ्गमयितुमाह—। [a] "नन्वि"ति। विधित्वमिति यदि भावत्वपर्यायस्तत्राह । [b] "पर्याये"ति । अथ विधिमुखप्रत्ययवेद्यत्वं तदये दूष्यं स्वरूपसत्त्वं यदि सत्तासंबन्धस्तदाग्रे दूष्यं स्वरूपमेव सत्त्वं चेत्तत्राह—। [c] "अभावस्यापी"ति ॥ तत्रैव दोषान्तरमाह—। [d] "प्रतिस्वमि"ति । प्रति व्यक्तीत्यर्थः ॥ [e] "तथात्वप्रसङ्गादि"ति । भावत्वप्रसङ्गादित्यर्थः किञ्चास्तीतिप्रतीतिविषयत्वं यदि भावत्वं तदा घटाभावो नास्तीत्यनेन प्रकारेणानुभूयमानस्य घटस्य भावत्वं निवर्त्तेत नचैवमतोस्तीतिप्रतीतिविषयत्वमेव न भावत्वमित्याह नास्तीति यद्वास्तीतिप्रतीतिविषयत्वमेव चेद्भावत्वं तदा नास्तीतिप्रतीतिविषयत्वमभावत्वं वाच्यं तच्च न सम्भवति घटाभावो नास्तीतिभावस्यापि ताद्रूप्येण प्रतीतेरित्याह—। [f] "नास्ती"ति । यद्वा घटोऽस्ति घटो नास्तीत्युभयत्रापि

(१) { प्रमाणादिपदार्था ये तार्किकादिप्रकल्पिताः ।
तेषामवाच्यता चात्र परिच्छेदे प्रकीर्त्यते ॥ }

(२) यद्यपि न पार्य्यते ईश्वरसद्भावेप्रमाणं प्रष्टुं तथापि भावत्वात्तस्य विधायकप्रमाणमन्तरेणासिद्धेर्विधायकप्रमाणं वाच्यमिति समयपङ्क्तेरर्थः ।

घटस्य प्रमीयमानत्वेनास्तीतिप्रतीतिविषयत्वमभावत्वं(१) कथं न निरुक्त-मित्याह—। "नास्ती"ति। केचित्तु "तर्हि नास्तीतिप्रत्ययाविषयत्वे सत्यस्तीति प्रतीतिविषयत्वं भावत्वमित्याशङ्कासम्भवीदं लक्षणमित्याह नास्तीत्या" भास(२)माहुः॥

मू० [a] "अस्तीति चार्थो वा शब्दो वा विवक्षितः नाद्यः [b] तस्यानिरुक्तेः * सत्ता तदर्थ? *—इति [c] चेन्न, समान्यादीनां तदभावादभावत्वापत्तेः स्वरूपसत्त्वं च निरस्तं नापि द्वितीयः [d] अभावोऽस्तीति प्रतीतेरुक्तत्वात् [e] वर्त्तते इत्याद्याकारेण च प्रतीयमानस्याभावत्वप्रसङ्गात् * सोऽप्यस्तिपर्याय? *—इति चेन्न, [f] उभयसाधारणैकार्थनिर्वचनमन्तरेण पर्यायत्वस्य प्रतिपादयितुमशक्यत्वात् [g] यत्रैकस्यास्तिपदप्रयोगस्तत्रैवापरस्य वर्तते इति प्रयोगात् * सामान्येन तावत्पर्यायत्वं शक्याधिगमम्? *—इति चेन्न,

टी० ॥ [a] "अस्तीति चे"ति। अन्त्यर्थस्य सत्तादेः प्रतीतिर्विवक्षिता अस्तीतिशब्दोल्लेखिनी प्रतीतिर्वा विवक्षितेति विकल्पार्थः॥ [b] "तस्ये"ति। अस्तिशब्दार्थस्येत्यर्थः सत्तावत्त्वं भावत्त्वं सामान्यादौ नास्तीत्याह—। [c] "ने"ति॥ [d] "अभावोऽस्ती"ति। अस्तिशब्दोल्लेखिप्रतीतिविषयत्व(३)मभावेतिव्याप्तं लक्षणमित्युक्तत्वादित्यर्थः। अस्तीतिशब्दोल्लेखस्य तन्त्रत्वे दूषणान्तरमाह—। [e] "वर्तत" इति। यद्यपि वर्तत इत्युल्लेखेपि कदाचिदस्तीत्युल्लेखोऽस्त्येव तावतैव तत्रापि लक्षणं गतं तथाप्युल्लेखो वस्तुस्वरूपनिरुक्तौ न तन्त्र(४)मित्येवंपरो ग्रन्थः [f] "उभये"ति। अभिन्नप्रवृत्तिनि-

(१) पुस्तकान्तरे "भावत्वमि"ति पाठः। तत्र नास्तीति प्रतीतिविषयत्वमिति पदच्छेदः।

(२) आभासम्=अर्थाभासम्।

(३) अस्तिशब्दोल्लेखि प्रतीतिविषयत्वं लक्षणमभावेऽतिव्याप्तमित्यन्वयः।

(४) "न तन्त्रमि"ति प्रतिज्ञायां "शुक्तौ रजतोल्लेखेपि तत्सत्त्वाभावादि"ति हेतुर्द्रष्टव्यः।

मित्तानां पदानां पर्यायत्वादत्र च तदास्तीति न पर्यायत्वमित्यर्थः ययोरेकत्रार्थे प्रयोगस्तावेव पर्यायौ ननु प्रवृत्तिनिमित्ताभेदेऽपि तत्र तन्त्रमिति शङ्कते—। [g] "यत्रे"ति ॥

मू० प्रमेयाभिधेयादिशब्दानाम [a] तथात्वेऽप्यपर्यायत्वात् [b] यत्रेत्यस्य प्रवृत्तिनिमित्तार्थत्वे च तन्निर्वचनप्रसङ्गस्तदवस्थः स एवार्थो(२)भावत्वमुच्यतां किं शब्दोल्लेखगवेषणया * [c] अपरप्रतिषेधात्मकत्वं भावत्वम्? *—इति चेन्न, [d] व्यवच्छेद्यासम्भवेन परपदवैयर्थ्यात् [e] भावाभावयोः परस्परप्रतिषेधात्मकत्वस्वीकाराच्च * [f] तथापि भावे नास्तीत्यभावप्रतिपत्तिवदभावो नास्तीतिभावस्याप्रतीतिः? *—इति चेन्न,

टी० ॥ [a] "तथात्वेपी"ति । एकधर्मिवाचकत्वेपीत्यर्थः ॥ "ननु यत्रेति । धर्मिमात्रं नोक्तं येनातिप्रसङ्गः स्यादपितु प्रवृत्तिनिमित्तमेव तथोक्तं भवति हि घटकलशपदयोरभिन्नं प्रवृत्तिनिमित्तं वाच्यं ननु प्रमेयाभिधेययो(३)रपि प्रमाविषयत्वाभिधानविषयत्वयोः प्रवृत्तिनिमित्तायोर्भेदादित्याशङ्क्याह—। [b] "यत्रे"ति ॥ [c] "अपरे"ति । अभावस्य भावविरहात्मकतया तद्व्यवच्छेद इत्यर्थः प्रतिषेधात्मकं यत्तत्परप्रतिषेधात्मकमेव भवति ननु स्वप्रतिषेधात्मकमपीति व्यवच्छेद्याभावात्परपदवैयर्थ्यमित्याह—। [d] "व्यवच्छे-द्ये"ति तर्ह्यप्रतिषेधात्मकत्वमेव लक्षणमस्तु किं परपदेनेत्याशङ्क्यासम्भवं तत्र दोषमाह—। [e] "भावाभावयोरि"ति । नन्वभावो नास्तीत्याकारा यदि भावप्रतीतिः स्यात्तदा प्रतिषेधात्मकत्वं भावस्यापि भवेदित्यसम्भवः स्यात्त्वेवमित्याह—। [f] "तथापी"ति ।

(शेषमग्रे)

(२) "स एवार्थः"—इत्यतः प्राक् "शक्यत्वे वा"—इत्यधिकः पाठः केषुचित्पुस्तकेषु दृश्यते सचाऽयुक्तत्वादिह बुद्धिरुपेक्षणीयः ।

(३) प्रमेयाऽभिधेययोः प्रमेयाभिधेयपदयोरित्यर्थः ।

॥ ॐ नमो गणेशाय ॥.

# काशिकाव्याख्या पदमञ्जरी ।

(*Continued from page* 233. Vol. XII.)

"कर्त्तृस्थे चाशरीरे कर्म्मणि" ॥ नयतेरात्मनेपदविधानात्तत्सम्बन्ध्येव कर्त्ता लकारवाच्यः प्रत्यासत्तो गृह्यतइत्याह । 'नेयतेः कर्त्तेति' । 'तदेकदेशोपि शरीरमिति' । अपिशब्दोवधारणे, इह शरीरस्यैव चैतन्यविशिष्टस्य कर्त्तृत्वं लौकिकाः प्रतियन्ति न तद्व्यतिरिक्तस्य बुद्धीन्द्रियादिमतश्चेतनस्य, न च शरीरमेव शरीरस्थं भवति अतस्तदेकदेश एव तद्ग्रहणेन गृह्यतइत्यर्थः, 'अत्र क्रोधाद्यपनयनफलं कर्त्रभिप्रायमिति स्वरितञित इत्येव सिद्धे नियमार्थमिदं कर्तृस्थे कर्म्मण्यशरीरस्थएवेति, अथ कथं विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषव इति । केचिदाहुः । अपगमे वर्तमानादिदमात्मनेपदविधानं भवति, अत्र तु करोत्यर्थे प्राप्त्यर्थे[1] वा वर्तते ऽनेकार्थत्वाद्धातूनामिति ॥

"वृत्तिसर्गतायनेषु क्रमः" ॥ 'सर्ग उत्साह इति' । सृष्टश्चेद्धास्नणवधे 'येनेन्द्रलोकापजयाय सृष्ट इत्यादौ दर्शनात्सृजिरुत्साहार्थः । वृत्त्यादिष्विति किम् । अपक्रामति ॥

"उपपराभ्याम्" ॥ 'उपपराभ्यामिति किमिति' । उपसर्गनियमः किमर्थ इत्यर्थः । 'संक्रामतीति' । 'क्रमः परस्मैपदेष्वि' ति दीर्घः ॥

"आङ उद्गमने" ॥ 'आक्रामति माणवकः कुतुपमिति' । अवष्टभ्नातीत्यर्थः । ह्रस्वा कुतूः कुतुपः, कुत्वा डुपच् । कुतपमिति पाठे कुतपो दर्भसंस्तरः । 'आक्रामति धूमो हर्म्यतलमिति' । उद्गमने क्रमिरकर्म्मकस्तस्माद्धर्म्यतलादिति पञ्चम्यन्तं पठितव्यं, यद्वा उद्गमनपूर्विकायां व्याप्तावत्र क्रमिर्द्रष्टव्यः, इह तु नभः समाक्रामति चन्द्रमाः क्रमादिति क्रमिर्व्याप्तौ वर्तते नोद्गमने ॥

---

[1] प्राप्ताविति पा० ।

"वेः पादविहरणे" ॥ 'विक्रामत्यजिनसन्धिरिति'। द्विधा भवति स्फुटतीत्यर्थः ॥

"प्रोपाभ्यां समर्थाभ्याम्" ॥ अन्योन्यसाहचर्यात्प्रोपयोरुपसर्गयोर्ग्रहणं न प्रातिपदिकान्तकर्म्मप्रवचनीययोर्नापि क्रियान्तरसम्बन्धिनोर्नाप्यनर्थकयोरित्याह। 'प्र उप इत्येताभ्यामुपसर्गाभ्यामिति'। 'तुल्यार्थाविति'। एतेन समोऽर्थो ययोरिति समर्थौ शकन्ध्वादित्वात्पररूपं संशब्दस्यैव वा ऽनेकार्थत्वात्तुल्यार्थत्वमिति दर्शयति। ननु 'समर्थः पदविधिरि' त्यादौ सम्बन्धार्थत्वं प्रसिद्धं, सत्यम्, इह तु धात्वर्थं प्रति पारतन्त्र्याच्च परस्परेण सम्बन्धार्थत्वं धातुना चोपसर्गयोः सम्बन्धो ऽव्यभिचारी तस्मात्पूर्वोक्त एवार्थः। 'प्रक्रमतइति'। आरभतइत्यर्थः ॥

"अनुपसर्गाद्वा" ॥ 'अप्राप्तविभाषेयमिति'। उपपराभ्यामित्यस्य नियमार्थत्वात् वृत्त्यादिसूत्रमनुपसर्गविषयमेवेति न तत्रायं विकल्प इति भावः ॥

"अपह्नवे ज्ञः" ॥ 'शेषाद्धित्यादि'। असत्यस्मिन् सूत्रे ऽयमविशेष एव भवतीति भावः। 'सोपसर्गश्चेति'। तेना 'नुपसर्गाज्ज्ञ' इत्यनेन कर्त्रभिप्राये क्रियाफले न सिद्ध्यतीति भावः। 'अपजानीतइति'। 'ज्ञाजनोर्जा' ॥

"अकर्मकाच्च" ॥ 'अकर्त्रभिप्रायार्थमिदमिति'। अथ कर्त्रभिप्राये कथं तत्राह। 'कर्त्रभिप्राये हीति'। ननु सोपसर्गात्कर्त्रभिप्रायेप्यनेनैवात्मनेपदमेषितव्यम् ओषधस्यानुजानीते ओषधस्यानुजिज्ञासतइति तस्मात्सर्पिषो जानीतइत्युदाहरणाभिप्रायमेतद्वेदितव्यम्। 'कथं वायमकर्म्मक इति'। सर्पिष इति कर्म्मणि शेषत्वेन षष्ठी न माषाणामश्नीयादितिवत्, तेन सर्पिरादिना ज्ञेयेन सकर्म्मक इति मत्वा प्रश्नः। 'अकर्म्मकादिति किमिति'। यदि सर्पिरादि करणत्वेन विवक्षितं तर्हि करणादिति वक्तव्यमित्यभिप्रायः। एवमुच्यमाने सकर्म्मकादपि स्यादेवेति दर्शयति 'स्वरेणेति' ॥

"सम्प्रतिभ्यामनाध्याने" ॥ उत्कण्ठास्मरणं, 'मातुरिति'। अधीगर्थदयेशामिति षष्ठी। ननु शेष इति तत्रानुवर्त्तते तेन कर्म्म शेषत्वेन

विवक्षितव्यमिति अकर्मकत्वात्पूर्वेणात्रात्मनेपदप्रसङ्गः, अनाध्यानइत्यस्य तु मातरं संजानातीति व्यावर्त्यं स्यात्तत्र कर्मत्वेन विवक्षिता, नैष दोषः। अनाध्यानइति विभज्यते तेन पूर्वयोगस्यापि शेषो भविष्यति ॥

"भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः" ॥ 'भासनादिष्विति'। अत्रापि किं विद्यातोर्विशेषणं किंस्विद्धात्वर्थस्य। उपसान्त्वनमुपच्छन्दनं धातोर्भासनादिधात्वर्थस्य भासमानइति हेतौ लटः शानजादेशप्रयोगेण भासनं हेतुत्वेन विशेषणमित्याह। शिष्यैस्तूयमानो भासते तथा चोपर्युपरि शास्त्रार्थस्य प्रतिभासनात् सुष्ठु वदनं भवति तेजोभङ्गे तु न शक्नुयाद्वदितुं, जानाति वदितुमिति शकधृषेत्यादिना तुमुन्, अत्र वदत्यर्थो ज्ञानस्य विषयः ज्ञानं विषयि। 'तद्विषयमित्यादि'। अत्र यत्नस्याविष्करणरूपस्य वदत्यर्थस्य कर्म्म, 'विमतिपतिता इति,' हेतुगर्भविशेषणं, प्रयुञ्जानो विमतिर्हेतुत्वेन विशेषणमित्याह। विमतौ हि सत्यां विचित्रभाषणरूपो वदत्यर्थो निवर्तते। 'उपच्छन्दयतीति'। भद्रे भजस्व माम् इदन्ते दास्यामीति स्वाभिलषिते प्रवर्तयतीत्यर्थः ॥

"व्यक्तवाचां समुच्चारणे" ॥ 'मनुष्याः प्रसिद्धा इति'। यद्यपि कुक्कुटादिरुतमपि स्वरूपेण व्यक्तमस्येदं रुतमस्येदमिति, मनुष्यवाक्तु व्यक्ततरा भवति वर्णात्मकत्वाद् अर्थावगतिहेतुत्वाच्च, अतस्तएव गृह्यन्ते, शुकशारिकादीनां तु पुरुषप्रयत्नवशेन क्वाचित्कं व्यक्तवाक्त्वं न [1]स्वाभाविकमिति न तेषां ग्रहणम्. 'वरतनु सम्प्रवदन्ति कुक्कुटा इति'। अपनय पादसरोजमङ्कतः शिथिलय बाहुलतां गलार्पितां, क्व च वदनेंशुकमाकुलीकृतम्, पूर्वपादाः। क्वचित्तु कृत्स्न एव श्लोकः पठ्यते, तत्र वरतनुरिति बहुव्रीहौ यदि ह्रस्वान्तस्तनुशब्दः ततः 'संबुद्धौ चेति'. गुणप्रसङ्गः दीर्घान्ते तु नदीलक्षणः कप् प्राप्नोति, के चिदाहुः, तनुशब्दः स्त्रीजातौ कविभिः प्रयुज्यते तस्माद् 'ऊङुत' इति ऊङि कृते कर्म्मधारयोऽयमिति ॥

'अनोरकर्म्मकात्' ॥ 'व्यक्तवाचामिति वर्त्ततइति'। न तु समुच्चारणइति सर्वानुवृत्तौ वचनमिदमनर्थकं स्यादिति भावः, तद्व्यक्तवाक्सम्बन्धिनो

[1] सार्वत्रिकमिति पा॰ २।

वदेरिति सूत्रार्थमाह । 'व्यक्तवाग्विषयादिति' । 'अनुः सादृश्यइति' । तेन कलापस्येति तुल्यार्थयोगे शेषलक्षणा षष्ठीति भावः । 'यथेत्यादि' । वदनमात्रसादृश्ये तात्पर्यमिति कर्म्म न विवक्षितमिति भावः । 'अनुवदतीति' । पुनर्वदतीत्यर्थः ॥

"विभाषा विप्रलापे" ॥ संवत्सरान् वदन्तीति सांवत्सराः, ज्योतिषिका, एवं मौहूर्तिकाः ॥

"अवाद्ग्रः" ॥ गिर इति पाठे धात्वनुकरणत्वाद् विभक्ताविक्त्वं, ग्र इति तु पाठे रूपमात्रानुकरणं द्रष्टव्यं, 'तस्य ह्यवपूर्वस्येति' । नियतविषयाण्यपि क्रियाविशेषणानि भवन्ति यथोपयोदयः कृभ्वस्तिभ्योन्यविषया न भवन्तीति भावः ॥

"समः प्रतिज्ञाने" ॥ 'प्रतिज्ञानमभ्युपगम इति' । के चिदाहुः परोपदेशनिरपेक्षमात्मनैव विप्रतिपन्नस्य पक्षस्य परिग्रहोभ्युपगमः । परेण प्रार्थितस्यार्थस्य नियमवचनमेतावद्दास्यामीति अस्मिन्काले दास्यामीत्येवं रूपः प्रतिश्रवः, परेण युक्त्या साधितस्यार्थस्य सम्माननं समीचीनमुक्तमत्र भवतेत्येवं रूपमङ्गीकरणमिति, प्रतिज्ञासामान्यावान्तरभेदा एते न तु पर्याया इति । वृत्तिकारस्तु परस्परविषये ऽङ्गीकरणादिव्यवहारदर्शनात् पर्यायत्वमेव मन्यते ॥

"उदश्चरः सकर्म्मकात्" ॥ 'उत्क्रम्येति' । उल्लङ्घ्येत्यर्थः । 'उच्चरतीति' । उपरिष्टाद्गच्छतीत्यर्थः ॥

"समस्तृतीयायुक्तात्" ॥ 'विभक्तिर्गृह्यतइति' । तत्रैव तृतीयाशब्दस्य मुख्यत्वात् । यद्येवं तया सह धातोः सम्बन्धो न भवति नहि तृतीया धातुवाच्या नापि धातुस्तृतीयान्त इत्यत आह । 'तयेत्यादि' । तृतीयार्थेन धात्वर्थस्य योगादौपचारिको धातोस्तृतीयायोग इत्यर्थः । 'यद्यप्यत्रेति' । न हि चेष्टारूपसञ्चरणमन्तरेण करणं सम्भवति अतोश्रुतेपि करणपदे तपसा श्रुतेन वेति गम्यमानत्वात्तदर्थयोगस्य सम्भवः । 'तृतीया त्विति' । एतदर्थमेव हि पूर्वमुक्तं विभ-

क्तिर्यद्यत इति। तृतीयायुक्तादिति वा ऽनर्थकं स्यात्। यदि तदर्थ-योगः स्यात् सर्वत्रैवं तदर्थभावादिति भावः॥

"दाणश्च सा चेच्चतुर्थ्यर्थे"॥ 'वक्तव्यमेवैतदिति'। सूत्रे चे-च्छब्दश्चशब्दश्चार्थे, अनेकार्थत्वान्निपातानामिति, केचिद्दाणस्तृतीयायुक्ता-दात्मनेपदं भवति सा च तृतीया चतुर्थ्यर्थे वेदितव्येति व्याचक्षते, एवमपि अशिष्टव्यवहार इति वक्तव्यमेव, अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहार आचारः तस्मिन्नित्यर्थः। 'दास्या सम्प्रयच्छतइति'। यो दास्या सह भुञ्जानस्तया दत्तं स्वयं भुङ्क्ते स्वयं च तस्यै ददाति तद्विषयोऽयं प्रयोग इत्याहुः। 'कथमात्मनेपदमिति'। न कथं चित् तस्मादित्युत्तरस्येत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादिति भावः। 'विशेषणषष्ठीति'। एवं च पूर्वसूत्रेऽप्यश्वेन समुदाचरतइत्यादावपि भवितव्यम्॥

"उपाद्यमः स्वकरणे"॥ इह स्वस्य सतो रूपान्तरेण यत्करणं तत्स्वकरणमिति न गृह्यते किं तर्हि यदा ऽस्वं स्वं करोति तदा भवि-तव्यं, च्विप्रत्ययस्तु विकल्पितत्वान्न भवति। 'पाणिग्रहणविशिष्टमिति'। पाणिग्रहणं नाम कश्चित्कन्यासंस्कारस्तद्विशिष्टमित्यर्थः। भाष्ये त्वस्वस्य सतः स्वत्वापादनमेव स्वकरणमित्युक्तं, भट्टिकाव्येपि तदनुगुणः प्रयोगः उपायंस्त महास्त्राणि, उपायंसत नासतं, नोपयंस्त दशानन इति। देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छति, यज्ञदत्तसम्बन्धिनीं भार्यां दास्यादिरूपेण स्वीकारोतीत्यर्थः। पाणिग्रहणाभावाद् वृत्तिकारमते युक्तं प्रत्युदाहरणं भाष्यकारमते त्वत्रापि भवितव्यम्॥

"ज्ञाश्रुस्मृदृशां सनः"॥ 'अदृशेरपीति'। अवः सूत्रएव निर्दे-शाद् दृश उपसंख्यानात्॥

"नानोर्ज्ञः"॥ 'पूर्व्वेणेति'। अनन्तरसूत्रेण यत्प्राप्तं तत्प्रतिषिध्यते, कुत एतत् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति। 'तथा चेति'। अन-न्तरस्य प्रतिषेध इत्युक्तम्, एवं सति सकर्म्मकस्यैवायं प्रतिषेधः सम्पद्यते अनन्तरयोगस्य सकर्म्मकविषयत्वादकर्म्मकाविषयत्वाद्द 'कर्म्मकाच्चेति'

प्रागेव विहितत्वात् तेनाकर्म्मका 'पूर्ववत्सन' इत्यात्मनेपदं भवत्येव औषधस्यानुजिज्ञासत इति । औषधेन प्रवर्तितुमिच्छतीत्यर्थः ॥

"प्रत्याङ्भ्यां श्रुवः" ॥ 'उपसर्गग्रहणं चेदमिति' । परस्परसाहचर्यात् । 'देवदत्तं प्रतीति' । लक्षणेत्थंभूतेत्यादिना प्रतिः कर्मप्रवचनीयो नोपसर्गः ॥

"शदेः शितः" ॥ यद्यत्र शदेः परो यः शित् तत आत्मनेपदं भवतीत्येवं व्यधिकरणे पञ्चम्यावाश्रित्य व्याख्यायेत ततोऽपि विकरणे सत्यनेन विधिना भवितव्यं सार्वधातुके च परतो विकरणो विधीयते ततश्च प्रागेवास्माद्विधेः सार्वधातुकं भवच्छेषत्वात्परस्मैपदं स्यात्, तस्मिंश्च सति तन्निमित्ते शिति विकरणे कृते परस्मैपदस्य निवृत्तिर्न सिध्येत्, नहि निर्वृत्तस्य निवृत्तिर्वचनशतेनापि शक्यते कर्तुमिति इमं व्यधिकरणपक्षे दोषं दृष्ट्वा सामानाधिकरण्ये पञ्चम्याविति दर्शयन्नाह । 'शदिर्यः शिदिति' । कथं पुनः शदिः शिद्भवति विकारणे हि शकार इद् भवति तत्राह । 'शिद्भावीति' । शिद्भावी यस्मात् स तथोक्तः, शिद्भावित्वाद् उपचारेण शदिरेव शिदित्युक्तमित्यर्थः । 'शितो वा सम्बन्धीति' । शित इत्यस्य षष्ठ्यन्ततां दर्शयति, कश्च शदिः शितः सम्बन्धी यस्तस्य प्रकृतिः प्रागेव च शिदुत्पत्तियोग्यतया तत्प्रकृतित्वमस्त्येव । 'शीयत इति' । पाघ्रादिसूत्रेण शीयादेशः ॥

"म्रियतेर्लुङ्लिङोश्च" ॥ लुङ्लिङोरिति स्थानषष्ठीयं विषयसप्तमी वा । 'नियमार्थमिति' । यदि नियमः क्रियते ङित्करणं किमर्थं यावता ऽप्राप्ते विधिरेवास्तु इह मा हि मृतेति लुङि तीस्यनुदात्तेदिति ङित्लक्षणः सार्वधातुकनिघातो यथा स्यात् तिङ्ङिघातोत्र 'हि चे' ति प्रतिषिद्धः ॥

"पूर्ववत्सनः" ॥ 'पूर्ववदिति' । तेन तुल्यमित्यादिना तृतीयान्ताद्वतिर्न पञ्चम्यन्तात्, लक्षणाभावात्, यथा च ब्राह्मणेन तुल्यं वैश्यादधीत इत्युक्ते ब्राह्मणादिवद् वैश्यादधीत इति पञ्चम्यर्थो गम्यते तथेहापि पूर्वस्मादिव सन्नन्तादप्यात्मनेपदमित्यर्थो लभ्यते तुल्यार्थैरिति हि तृतीया सर्वविभक्त्यर्थानन्तर्भावयति । 'यदि सनः पूर्वो यो धातुरिति' । एतेन सन्न

इति पूर्वस्यावधिनिर्देशो न त्वात्मनेपदापेक्षया परपञ्चमीति दर्शयति। यद्येवं सनन्तादात्मनेपदमिति न लभ्येत सन इत्यस्य सकृच्छ्रुतस्यावधिनिर्देशेनोपक्षीणत्वाद् अत आह। 'तद्वत्सनन्तादपीति'। अवधित्वेनापि तावत्सनः श्रुतत्वात् प्रत्यासत्त्या तदन्तादेव विधिर्विज्ञायतइति भावः। अथैवं कस्मान्न विज्ञायते सनन्तादात्मनेपदं भवति पूर्ववदिति श्रोतो ऽन्वयः तत्र कुतः पूर्ववदित्यपेक्षायां सन्निहितत्वात्सन एव पूर्ववदिति विज्ञास्यतइति। एवं मन्यते, एवं विज्ञायमाने अयमेव योगः पूर्वस्यावधिः सम्भाव्येत यथा 'पूर्वत्रासिद्ध' मित्यत्र तत एव योगात् पूर्वत्रेति, ततश्चायमर्थः स्याद् अनुदात्तङित इत्यारभ्येतः पूर्वं ये धातवो निर्दिष्टास्तेभ्यः सनन्तेभ्यस्तद्वदेवात्मनेपदं भवतीति ततश्चोत्तरो विधिः सनन्तान्न स्यात् 'भुजोऽनवने' बुभुक्षतइति, तस्मात्सनः पूर्ववदित्येव श्रोतोऽन्वय आश्रय इति। यद्ययं कार्यातिदेशः शास्त्रातिदेशो वा विज्ञायेत तदा सप्रकृतौ प्रयोगान्तरे दृष्टमित्येव निमित्तनिरपेक्षं कार्यं शास्त्रं वातिदिश्यमानमिहाप्यतिदिश्येत शिशत्सति मुमूर्षति, शीयते म्रियतइत्यत्र दृष्टत्वादिति मतेऽनयोः पक्षयोर्दोषं दृष्ट्वा निमित्तातिदेशमाश्रित्याह। 'येन निमित्तेनेति'। निमित्तस्य तुल्यत्वात्तद्द्वारकं यदात्मनेपदविधेस्तुल्यत्वं तदाश्रीयतइत्यर्थः। 'पूर्वमिति'। सनुत्पत्तेः प्राक् प्रयोगान्तरइत्यर्थः। पूर्वस्मादिति युक्तः पाठः, तथा च सनन्तादपीति सङ्गच्छते, यद्यपि प्रकृतिगतं ङित्त्वादिकं सनन्ते धातौ वचनशतेनापि प्रापयितुमशक्यं शिशयिषति। तथापि प्रकृतिगतमेव तत्सता व्यवधानेऽपि सनन्तादात्मनेपदस्य निमित्तं भवतीत्यतिदेशार्थस्तावता च निमित्तातिदेशवाचो युक्तिः। 'आसिसिषतइति'। इटि कृते 'अजादेर्द्वितीयस्ये' ति सिशब्दस्य द्विर्वचनम्। 'निविविक्षतइति'। 'हलन्ताच्चेति' सनः कित्त्वं व्रश्चादिषत्वं 'षढोः कः सि'। 'आचिक्रंसतइति'। आङ आत्मनेपदनिमित्तत्वात् स्नुक्रमोरितीड् नैव भवति। निमित्तातिदेशाश्रयणस्य फलमाह। 'इहेति'। कारणमाह। 'नहीति'। 'शिशयिषतेऽपीति'। शिद्रा-

१ सकृच्छ्रुतत्वादिति पा॰ २।

ङित्वादिकमपीत्यर्थः । आदिशब्देन लुङ्लिङोर्ग्रहणम्, तच्चेह नास्ति कृते सनि तदन्तमेव वशिद्धावि न शद्रिम्रियतिभ्यां, शिशयिषतइत्यादौ तु कृतेऽपि सनि तदानीमपि ङित्वादिकं प्रकृतिगतं विद्यतइति भावः । यदि तर्हि निमित्तातिदेशः, अनुचिकीर्षतीत्यत्रापि प्रसङ्गः, गन्धनादेरर्थस्य ङित्वस्य चात्मनेपदनिमित्तस्य सत्यपि परस्मैपदे निमित्तत्वात्, कार्यातिदेशे तु न दोषः, 'अनुपराभ्यां कृञः' इति परस्मैपदेनापवादेनात्मनेपदस्य बाधितत्वादत आह । 'यस्य चेति' । न योग्यतामात्रेण निमित्तत्वं किन्तर्हि कुर्वद्रूपस्येति सुकर्मोरित्यत्र वक्ष्यतइति भावः । यदि कुर्वद्रूपं निमित्तं जुगुप्सतइत्यादौ कथं, नह्यत्र प्रकृतिगतमनुदात्तेत्त्वं तत्रात्मनेपदं कदाचिदपि करोति नित्यसन्त्वाद् गुपादीनामत आह । 'इहेत्यादि' । न वात्रानेनात्मनेपदं किं तर्हि अनुदात्तङित इत्यनेनेत्यर्थः । कथं पुनः समुदायस्य जुगुप्सादेरनुदात्तेत्त्वमत आह । 'अवयवइति' । अवयवे ह्यचरितार्थं लिङ्गं सामर्थ्यात्समुदायस्य विशेषकं भवति । यद्येवं गोपयति तेजयतीत्यादावपि प्रसङ्गः, अथ यं समुदायं योऽवयवो न व्यभिचरति तत्र कृतं लिङ्गं तस्य विशेषकं भवति णिजन्तं च व्यभिचरति विनापि तेन जुगुप्सतइति गुपेः प्रयोगादित्युच्यते, यद्येवं सनन्तादपि न स्याद् विनापि तेन गोपायतीत्यत्र गुपेः प्रयोगात्, वक्तव्यो वा विशेषः, अयमुच्यते गुप गोपनइत्यस्य सन्विधौ ग्रहणं तस्माच्च नित्यसनेव भवति नापरः प्रत्ययः गोपायतीत्यादिकस्तु प्रयोगो गुपू रक्षणइत्यस्य, स चान्य एव, अवश्यञ्चैतदेवं विज्ञेयमन्य एव सन्प्रकृतिः तस्माच्च सनेव भवतीति, अन्यथा निन्दाया अन्यत्र यथा णिज् भवति तथा लङादिरपि स्यात्, एवं तिजिप्रभृतयोऽपि क्षमाद्यर्थे यत्र सन्विष्यते तत्रानुदात्तेतो नित्यसनन्ताश्च, क्षमादिभ्योऽन्यत्र तु यत्र णिज्विष्यते तत्राननुबन्धका एव चुरादौ पठितव्याः ॥

"आम् प्रत्ययवत् कृञोऽनुप्रयोगस्य" ॥ नन्वामन्तस्याधातुत्वाददृष्टमात्मनेपदं तत्कथं कृञोऽतिदिश्यते, स्यादियमनुपपत्तिः, यदि प्रत्ययग्रहणं न क्रियेत कृतेऽपि वा तस्मिन् प्रत्ययग्रहणे कर्मधारयस्तद्गुणसंविज्ञानो वा बहुव्रीहिराश्रीयेत इह त्वतद्गुणसंविज्ञानो बहुव्रीहिः, धातुरन्यपदार्थस्तदाह ।

'आम् प्रत्ययो यस्मादिति' । तद्गुणसंविज्ञाने ऽवयवेन विग्रहः समुदायः समासार्थ इति आम् प्रत्ययो यस्येति विग्रहः स्यात्, प्रतियोगिनि षष्ठीनिर्देशात् तत्र तस्येति षष्ठ्यन्ताद्वतिरित्याह । 'आम् प्रत्ययस्येवेति' । 'कृञो नुप्रयोगस्येति' । समानाधिकरणे षष्ठ्यौ अनुप्रयोगशब्दः कर्मसाधनः । 'ईक्षां चक्रइति' । ईक्ष दर्शने ईह चेष्टायां लिट् इजादेश्चेत्याम्, 'आम' इति लेर्लुक् । अकर्त्रभिप्रायार्थो ऽयमारम्भ इति ब्रुवता विध्यर्थमेवैतदित्युक्तं तत्र दोषमुद्भावयितुमाह । 'यदीति' । किं पुनः कारणं विध्यर्थत्वमङ्गीकृत्य तदनुगुणो दोष उद्भाव्यते न पुनर्नियमार्थत्वमङ्गीकृत्य तदनुगुणो दोष उद्भाव्येत, सत्यम्, अकर्त्रभिप्राये पाचयाञ्चक्रउब्जांचकारेति प्राप्ते आम्प्रत्ययवदेव तत्र विधिनियमसम्भवे विधिरेव न्यायान् तस्मादेवमुच्यते उब्ज् आर्जवे उम्भ पूरणे, उभयमित्यादिपरिहारः । 'कथमिति' । नैकेनैव यत्नेनोभयलभ्यमिति भावः । 'ईक्षांबभूवेति' । 'भवतेः,' 'भुवो वुग् लुङ्लिटोः' । 'कथं पुनरिति' । कृञ इत्यत्र स्वरूपग्रहणं मन्यमानस्य प्रश्नः । प्रत्याहारग्रहणमिति' । यदि तत्र स्वरूपग्रहणं स्याद् इह कृञ्ग्रहणमनर्थकं स्याद् अन्यस्यानुप्रयोगस्याभावादिति भावः । अत एव विपर्ययोपि न भवति तत्र स्वरूपग्रहणं स्याद् इह प्रत्याहारग्रहणमिति, इह हि प्रत्याहारग्रहणे भ्वस्त्योरप्यात्मनेपदविधिः प्रयोजनं, यदि चानुप्रयोगविधिना कृञ् एवानुप्रयुक्तः स्यात् तदा भ्वस्त्योरनुप्रयोगाभावादात्मनेपदविधिरनुपपन्नः स्यात् तस्मादिह स्वरूपग्रहणम्, आमनुप्रयोगविधौ प्रत्याहारस्येति सिद्धम्, 'अभिविधौ सम्पदा च' ति सम्पदोपि तत्रान्तर्भावादनुप्रयोगः प्राप्तः 'सनाद्यन्ता धातव' इत्यतो धात्वधिकाराद्धातूपसर्गसमुदायस्य न भवति, योऽत्र धातुस्तस्यापि न भवति अर्थविप्रतिषेधादिति तत्रैव वक्ष्यामः ॥

"प्रोपाभ्यां युजेरयज्ञपात्रेषु" ॥ 'युजिर्योगइति' । युज समाधावित्यस्य न दैवादिकस्यानुदात्तत्वादेव सिद्धं युजेरिति च विवक्षित इकारो न त्वागन्तुकः, यज्ञपात्रविषयता चास्यैव सम्भवतीति भावः । 'प्रयुङ्क्तइति' । 'रुधादिभ्यः श्नम्' 'श्नसोरल्लोपः' कुत्वचर्त्वे, अनुस्वारपरसवर्णौ ।

'स्वराद्यन्तोपसृष्टादिति'। स्वरः अ इ,आदिरन्तो वा यस्य स स्वराद्यन्तः। तेनोपसर्गेण सम्बन्धः, स्वराद्यन्तोपसृष्टः सम् निस् दुस् इत्येतान् वर्ज्जयित्वा सर्वएवोपसर्गास्संगृहीताः ॥

"समः सुटि" ॥ इह 'शर्परे विसर्ज्जनीय' इत्यस्यावकाशो यत्र कुप्वोरसम्भवः पुरुषःत्सरुकः 'कुप्वोः ᳲकᳲपौ च' त्यस्य यत्र शर्परौ कुपू न सम्भवतः पुरुषः करोतीति शर्परयोरुभयोः प्रसङ्गे पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति 'शर्परे विसर्ज्जनीय' इति नित्यं विसर्ज्जनीय एव भवति तेन 'समः सुटि' इतिसूत्रे विसर्ज्जनीयस्यैव पाठः समो गमृच्छीत्यत्रेवेति, एवं हि द्विःसमो ग्रहणं न कर्त्तव्यमिति भावः। 'सङ्कुवतइति'। अदादित्वाच्छपो लुक्, 'आत्मनेपदेष्वनत' इति झस्याद्रादेशः, अचि श्नुधात्वित्यादिनोवङ् ॥

"भुजोनवने" ॥ 'अनवनप्रतिषेधेनेत्यादि'। संसर्गवद्विप्रयोगोपि विशेषस्मृतिहेतुः, यथा दोग्ध्रीपर्यायो धेनुशब्दः संसर्गिभिः विशेषेऽवस्थाप्यते सवत्सा धेनुरानीयतां सकिशोरा सवर्करेति, तथा ऽवत्सा ऽकिशोरा ऽवर्करेति यस्या आनयने दृष्टः संसर्गः सैव तत्र गृहीता आनीयते तद्वदिहापीत्यर्थः ॥ (शेषमग्रे)

---

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम् ।

## श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम् ।

### तत्र प्रथमाध्यायस्यावशेषः ।

*(Continued from page 263 Vol XII.)*

इन्द्रप्राणाधिकरणम् । सू० उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २८ ॥

भा० पूर्ववाक्ये त्रिपादस्यामृतं दिवीति दिवोऽधिकरणत्वेन निर्दे-

शात् इह च दिवः पर इत्यवधित्वेन निर्देशादुपदेशस्य भिन्नरूपत्वेन पूर्ववाक्योक्तं ब्रह्म परस्मिन्न प्रत्यभिज्ञायते इति चेन्न उभयस्मिन्नप्युपदेशेऽर्थस्वभावैक्येन प्रत्यभिज्ञाया अविरोधात्, यथा वृक्षाऽग्रे श्येनो वृक्षाग्रात्परतः श्येन इति तस्मात्परमपुरुष एव निरतिशयतेजस्को "दिवः परो ज्योतिर्दीप्यत इति प्रतिपाद्यते एतावानस्य महिमा अतो ज्यायांश्च पूरुषः पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवीति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य "वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसस्तु पारे" इत्यभिहिताऽप्राकृतरूपस्य तेजोऽप्यप्राकृतमिति तद्युक्तया स एव ज्योतिश्शब्दाभिधेय इति निरवद्यम् ॥ समाप्तं ज्योतिरधिकरणम् ।

टी० सू० "उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्" यथा वृक्षाग्रे श्येन इति सप्तम्यन्तर्बहिरधरोर्ध्वभागस्थितिसाधारणी, पञ्चमी तु उपरिस्थित्यसाधारणी, अत उभाभ्यां स्थानविक्षेपात् उपरि स्थितिरेव विवक्षितेति भावः । सूत्रार्थं परमसाध्येन घटयति "तस्मादि"ति, स खल्वात्मस्वरूपे दीप्तिरप्ति तत्कथं ज्योतिर्दीप्यत इत्युक्तज्योतिःशब्दाभिधेयत्वमिति शङ्कां परिहरन् अधिकरणार्थं निगमयति "एतावानि"ति, पुरुषसूक्तवाक्योपादानं विग्रहविशेषज्ञापनार्थम् । ज्योतिरधिकरणं समाप्तम् । अवान्तरसङ्गतिमाह–

सू० निरतिशयदीप्तियुक्तं ज्योतिश्शब्दाभिधेयं प्रसिद्धवन्निर्दिष्टं परमपुरुष एवेत्युक्तम्, इदानीं कारणत्वव्याप्तामृतत्वप्राप्त्युपायतया उपास्यत्वेन श्रुत इन्द्रप्राणादिशब्दाभिधेयोऽपि परमपुरुष एवेत्याह–

सू० प्राणस्तथाऽनुगमात् ॥ २९ ॥

कौषीतकिब्राह्मणे प्रतर्दनविद्यायां "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च" इत्यारभ्य वरं वृणीष्वेति वक्तारम् इन्द्रं प्रति त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति प्रतर्दनेनोक्तः[1] "स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वेति श्रूयते तत्र संशयः किमयं हिततमोपासनकर्मतया–

टी० "निरतिशये"ति, ज्योतिश्शब्दाभिधेयमिति आकाशप्राणतेजसां क्रमोपपत्तेः अत एव प्राण इत्यस्यानन्तरं ज्योतिश्चरणाभिधानादित्यधिकरणं सङ्गतमिति भावः । प्रसिद्धवन्निर्दिष्टमिति अनेनाधिकरणयोः पौर्वापर्यनियम उक्तः सर्वाणि ह वा इमानि भूतानीति पूर्वस्मात् पूर्वाधिकरणद्वयविषयवाक्ययोः प्रसिद्धवन्निर्देशो दृश्यते, अत्रापि "अथ यदतः पर इति यच्छब्देन प्रसिद्धवन्निर्देशो दृश्यते तस्मात् ज्योतिरधिकरणं पूर्वाधिकरणद्वयेन सङ्गतम् । एवं सत्युत्तराधिकरणस्य ज्योतिरधिकरणानन्तरभावित्वं प्राप्तमिति भावः । अवान्तरपेटिकानुगतमर्थमाह "कारणत्वव्याप्ते"ति, पूर्वाधिकरणे परमपुरुषस्य ज्योतिश्शब्दाभिधेयत्वमुक्तं तदयुक्तं, परमपुरुषादन्यस्येन्द्रादिशब्दवाच्यस्य वेदान्तवेद्यत्वादिति शङ्काया सङ्गतिरित्यर्थः । तत्र कारणत्वाक्षेपकलिङ्गभूयस्त्वमनुसन्धेयम् । सू० प्राणस्तथाऽनुगमात्, तत्रेति इन्द्रस्य प्रियं धामोपजगामेत्युपक्रमे इन्द्र–शब्दनिर्दिष्टत्वात् प्राणोऽस्मि प्रज्ञात्मा स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत इति प्राण–शब्देन निर्दिष्टत्वाच्चेन्द्रप्राण–शब्दनिर्दिष्ट इत्युक्तम्, प्राणशब्दस्य परमात्मलिङ्गप्रतिपादकवाक्यस्थत्वेन सिद्धान्तहेतुद्योतकत्वात् सूत्रे प्राण–शब्देन धर्मी निर्दिष्टः न त्विन्द्र–शब्देन, इन्द्रशब्दनिर्दिष्टस्य विचारविषयत्वमार्थ-

१ प्रतर्दनेनोक्ते'इति पा० ।

मिति सूत्रकाराभिप्रायः इति भावः। जीवमात्रलिङ्गसद्भावेऽपि विशेषाकाङ्क्षायां जीवधर्मस्य इन्द्रशब्दवाच्यप्रकृतजीवविशेषनिष्ठत्वप्रतीतेर्जीवो वेति शिरोऽन्तरं परोक्तमयुक्तमिति भावः। प्राणलिङ्गे सत्यपि प्राणोऽस्मीति सामानाधिकरण्येन प्राणस्य जीवविशेषणत्वप्रतीतेः प्राधान्येन प्रतिपाद्यत्वशङ्काया असम्भवात् प्राणो वेति चानुपन्यस्तम्। कारणवाक्यप्रतिपाद्यं ब्रह्म किं प्रसिद्धजीवभाव इन्द्रः? उत परमात्मेति विचारः, तदर्थं हिततमोपासनम्न*

इन्द्रप्राणशब्दनिर्दिष्टो जीव एव? उत तदतिरिक्तः परमात्मे? ति, किं युक्तं जीव एवेति, कुतः इन्द्र–शब्दस्य जीवविशेष एव प्रसिद्धेः, तत्समाधिकरणस्य प्राण–शब्दस्याऽपि तत्रैव वृत्तेः अयमिन्द्राभिधानो हि जीवः प्रतर्दनेन त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इत्युक्तः मामुपास्स्वेति स्वात्मोपासनं हिततममुपदिदेश हिततमश्चामृतत्वप्राप्त्युपाय एव जगत्कारणोपासनस्यैवामृतत्वप्राप्त्युपायता "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये इत्यवगता, अतः प्रसिद्धजीवभाव इन्द्र एव कारणं ब्रह्मेत्याशङ्कायामभिधीयते सू० "प्राणस्तथानुगमा"दिति, अयमिन्द्रप्राण–शब्दनिर्दिष्टो न जीवमात्रम् अपि तु जीवादर्थान्तरभूतं परं ब्रह्म

टी० कर्मतयेन्द्रप्राणशब्दनिर्दिष्टः किं प्रसिद्ध इन्द्रः? उत परमात्मे? ति, तदर्थमानन्दादिगुणाः किं गौणाः? उत मुख्याः? तदर्थं किमुपक्रमावगतत्वाष्ट्रहननादिलिङ्गानुरोधेनानन्दादिवर्णनम्? उत आनन्दादिलिङ्गानुगुणतया त्वाष्ट्रहननादिवर्णनं? तदर्थं मामुपास्स्वेति किं स्वोपासनमुच्यते? उत स्वावस्थपरमात्मोपासनमि? ति विचारः, यदा स्वोपासनोक्तिः तदा त्वाष्ट्रवधाद्यनुगुणम् आनन्दादेर्वर्णनीयत्वेन आनन्दादिगुणानाम् अमुख्यत्वाद्धिततमोपासनकर्मतयोक्त इन्द्र इति जगत्का-

रणं प्रसिद्धजीवभाव इन्द्र इति पूर्वपक्षे फलफलिभावः, यदा स्वावस्थपरमात्मोपासनोपदेशः, तदाऽऽनन्दादिगुणानुगुणं त्वाष्ट्रवधादेर्वर्णनीयत्वादानन्दादिगुणानां मुख्यत्वाद्धिततमोपासनकर्मभूतेन्द्रप्राणशब्दनिर्दिष्टः परमात्मेति सर्ववेदान्तवेद्यं जगत्कारणं ब्रह्म परमात्मेति, राद्धान्ते फलिफलिभावः जीवविशेष एव प्रसिद्धेरिति अनेन जीवमात्रपक्षस्यानुदयस्सूचितः, प्राण—शब्दस्य कथं जीवपरत्वमित्यत्राह "तत्समानाधिकरणस्ये"ति, अनेन प्राधान्येन प्राणपरत्वशङ्कानुत्थानमप्यर्थात्सूचितम् । इन्द्रस्य जीवत्वे कथं कारणस्य जीवानतिरिक्तत्व? मित्यत्राह "अयमि"ति, स्वात्मोपासनं हिततममुपदिष्टमस्तु ततः किम् इन्द्रस्य जगत्कारणत्व? इत्यत्राह "हिततम"इति, ततः कि? मित्यपेक्षायां मुमुक्षूपास्यत्वस्य कारणत्वव्याप्तिं.दर्शयति "जगदि"ति, 'अत इति पूर्वपक्षोपसंहारः । राद्धान्तं प्रतिजानीते "अयमि"ति, उपपादयति—

सू० स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत इतीन्द्रप्राणशब्दाभ्यां प्रस्तुतस्यानन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि तथा सत्येवोपपद्यते ।

सू० न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ ३० ॥

यदुक्तम् इन्द्रप्राणशब्दनिर्दिष्टस्यानन्दोऽजरोऽमृत इत्यनेनैकार्थ्यादयं परं ब्रह्मेति तन्नोपपद्यते मामेव विजानीहि प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमु[1]पास्स्वेति, वक्ता ह्यीन्द्रस्त्रिशीर्षाणं त्वाष्ट्रमहनमित्येवमादिना त्वाष्ट्रवधादिभिः प्रज्ञातजीवभावस्य स्वात्मन एवोपास्यतां प्रतर्दनायोपदिशति,

१ अमृतमित्युपास्स्वेति पा० ।

टी० "स एव" इति, अनुगमः—पूर्ववाक्यप्रतीतस्य उत्तरवाक्यसम्बन्धः स्ववाक्यानभिव्यक्तस्य सिद्धान्तहेतोः उत्तरवाक्याभिव्यक्ततयाऽनुगमादित्युक्तम् आकाशाधिकरणे ज्योतिरधिकरणे च, सिद्धान्तहेतोर्हि स्ववाक्यपूर्ववाक्याभिव्यक्ततयाऽनुगमादित्यनुक्तिः सेोऽत्र तथा पदं साधकाकारपरामर्शित्वेन व्याचष्टे "आनन्दाजरे"ति, प्राण-परमात्मा तथाऽनुगमात् परमात्मत्वानुगुण्येन अनुगमादिति सूत्रयोजना, तथा—शब्दस्य साध्याकार परामर्शित्वमप्यभिप्रयन्नाह 'तथा सत्येवे'ति, । तथा सतीन्द्रप्राणशब्दनिर्दिष्टे परस्मिन् ब्रह्मणि सत्येवेत्यर्थं, प्राणः परमात्मा तथाऽनुगमात् परमात्मतयाऽनुगमादिति योजना अनुगमक्रियाविशेषणं तथा—शब्दः बुद्धिस्थसाध्यसाधकधर्मवत्तयाऽनुगमो विवक्षित इत्यभिप्रायः । आद्यसूत्रं स एष प्राण एवेत्यादिवाक्यमात्रविषय व्याख्यातं न तु परैरिव वाक्यान्तरस्थहेतवोऽप्यत्र विवक्षितत्वेनोक्ताः, अध्यात्मसम्बन्धभूमेति द्वितीयसूत्र एव बहुवाक्यस्थहेतुबाहुल्यस्य विवक्षितत्वावगमात्, आनन्दादिगुणप्रतिपादकवाक्यस्य प्राणशब्दचिह्नितत्वात्तद्गतहेतुपरत्वेन इह प्राण—शब्दचिह्नितसूत्रव्याख्यान युक्तं प्राणशब्दचिह्नितस्याऽपि प्राणोऽस्मीत्यादेरत्रानुदाहरणमन्यविशेषणभूतपरमात्मलिङ्गत्वात्, प्राणोऽर्पिता इत्यस्यानुदाहरणं तु सूत्रान्तरैकार्थ्यात् श्री: । सू० न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्, निषेध्याध्याहारेण नञर्थमाह "यदुक्तम"ति, त्वाष्ट्रवधादीत्यत्रादि-शब्देन सालावृकदेतिप्रधानदैत्यातिसन्धानपौलोमनिरासेन्द्रशब्दा विवक्षिताः । ततः किमित्यत्राह—

सू० अत: उपक्रमे जीवविशेष इत्यवगम्यते सत्यानन्दोऽजरोऽमृत इत्यादिभिरुपसंहारस्तदनुगुण एव वर्णनीय इति चेत् परिहरति—अध्यात्मसम्बन्धभूमा ह्यस्मिन्नात्मनि यः सम्बन्धः सोऽध्यात्मसम्बन्धः तस्य भूमा-भूयस्त्वं बहुत्वमित्यर्थः आत्मन्याधेयतया संबध्यमानानां बहुत्वेन सम्बन्धबहुत्वं, तच्चास्मिन् वक्तरि परमात्मन्येव हि सम्भवति

"तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिता स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत" इति भूतमात्रा-शब्दनाचेतनवस्तुजातमभिधाय

टी० "अत"इति, उपक्रमो बलीयानित्यर्थः, विकारशब्दाचेति चेत्रेतिवत् सूत्रे सिद्धान्तखण्डे निषेधवाचिशब्दाभावात् खण्डान्तरस्य सिद्धान्तपरत्वद्योतनमय परिहरतीत्युक्तम्, भूम-शब्दोभूयस्त्व-शब्देन व्याख्यातः भूम-शब्दस्य प्रकृतिं दर्शयितुं बहुत्वमित्युक्तम्, आपेक्षिकं हि बहुत्वं पूर्वपक्षयुक्तिबहुत्वादपि बहुतरमिति भावः । सम्बन्धबहुत्वनिबन्धनमाह सम्बध्यमानायामि"ति, सम्बन्धः कीदृश ? इत्यत्राह "आधेयतये"ति, अस्मिन्निति पदं व्याचष्टे "तच्चे"ति, । आधेतया सम्बन्धे श्रुतिमाह "तद्यथे"ति, न केवलमुपसंहारवचनमात्रं,किन्तु पूर्वमप्यस्तीति बतुन्वाभिप्रायेण स एष प्राण एवेत्यादिकमुपात्तम् । पूर्वापात्तश्रुत्यर्थमाह "भूतमात्रे"ति, । ननु कथं प्रज्ञामात्रा-शब्देन चेतनवर्गाभिधानं ? वाग्घ्राणचक्षुः श्रोत्रजिह्वाः पाणिपादोपस्थशरीरमनांसि च प्रतिपाद्य, "ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अभिभूतं यद्‌ ह वै दश भूतमात्रा न स्युः न प्रज्ञामात्राः स्युः यद्‌ ह वै न प्रज्ञामात्राः स्युः न भूतमात्राः स्यु"रिति, भूतमात्राः प्रज्ञामात्राश्च प्रत्येकं दशसङ्ख्याः परस्परसाकाङ्क्षा उक्ताः, तत्र प्रज्ञामात्रा-शब्दो गन्धादिचतुष्टयवागादिव्यापारचतुष्टयशरीरसुखदुःखमन्तव्यविषयज्ञप्तिपरः । यद्वा भोग्या गन्धादयः शरीरानुप्रविष्टभूतांशाश्च भूतमात्राः दशेन्द्रियाणि प्रज्ञामात्राः प्रत्येकं दशसङ्ख्याश्रवणबलादनुक्ताः पदार्थाश्च अजहल्लक्षणया विवक्षिता इत्यभ्युपेत्यं प्रज्ञामात्रा-शब्दस्य जीवपरत्वे दशसङ्ख्याविरोधात् । एवं ताश्च ताश्च दश दशोक्ताः, न ह्यन्यतरतो रूपं किंचन सिध्येत् नो एवैतदनेत्यासामुभयविधानामपि परस्पराविनाभावमुक्त्वा तत्र दृष्टान्तमाह "तद्यथा रथस्ये"ति वाक्येन, न च वाच्यं यो वै प्राणस्सा प्रज्ञा या प्रज्ञा स प्राणस्सह ह्येतावस्मिञ्छरीरे वसतस्सहोत्क्रामत इति प्रकृतजीवविषयोऽयम् (शेषमग्रे)

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

## विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

श्रीगणेशाय नमः ।

---

(*Continued from page* 245. Vol. XII.)

—एतद्द्विलोपे क्विप्समासगा ॥ ८८ ॥

एतद्द्विलोपे, एतयोर्द्वयोर्धर्मवाचकयोर्लोपे· क्विपा यथा—

सविता विधवति, विधुरपि सवितरति, दिनन्ति यामिन्यः,
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥

यद्यप्याचारे क्विब्विधानात् तस्यैव च समानधर्मरूपत्वेन क्विपि धर्मलोपो नास्ति, तथापि क्विप एव लोपाद्धर्मलोपव्यवहारः· अत एव च समानार्थकत्वेपि क्यङ्ऽत्र नोपात्तः, तस्यालुप्तत्वेन धर्मलोपाभावात् । समासगा यथा—

परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।
सम्परायप्रवृत्तो ऽसौ राजते राजकुञ्जरः ॥

अत्र राजाऽयं कुञ्जर इवेत्युपमा ॥ ८९ ॥

धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते ।

तद्धिते तु नेयम्, उपमानलोपे तद्धितस्यैवाभावात्· नापि श्रौती, उपमानाप्रयोगे इवादेरप्रयोगात् । तत्र समासगा यथा—

ढुंढुंल्लंतो मरिहसि[क] कंटअकलिआइं केअइवणाइं ।
मालइकुसुमसरिस्स भमर ! भमंतो ण पावहिसि ॥

'कुसुमसरिस्स'मित्यत्र 'कुसुमेन सम'मिति पाठ इयमेव वाक्यगा ॥ ऽ ॥

क्वचि वाद्युपमेयासे–

आसे निरासे। उदाहरणम्–

अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः सहस्रायुधीयति[ख] ॥

अत्र यद्यपि विशेषणद्वारेणोपात्तः कर्त्रैवोपमेय,स्तथापि न तथात्वेन, किन्तु कर्मत्वेन, अन्यथा क्यचो ऽसङ्गतत्वापत्तेः तथाचात्मानं सहस्रायुधीयतीत्यर्थ इत्युपमेय आत्मा लुप्त इति यथोक्तोदाहरणमेतत्। 'हंसायते' इत्यादौ कर्तैवोपमेयः। तस्य चानुपादाने वाक्यमेव न पर्याप्यत इतिविशेषात् क्यङि नेयं सम्भवति। यद्यपि द्विलोपे ऽन्यदपि भेदत्रयं सम्भवति, यथोपमानोपमेययो, रुपमानधर्मयो, रुपमानधर्मयोरिति, तथापि तेषूपमाया. प्रसङ्ग एव नास्तीति न न्यूनत्वमाशङ्कनीयम् ॥–॥

त्रिलोपे तूपमेयातिरिक्तत्रितयलोप एव सम्भवतीत्युक्तम्। सापि समासमात्र, अन्यत्र बोधकाभावात्। तत्राप्यार्थ्येव, इवादेर्लोपादित्येक विधैवेत्याह–

–त्रिलोपे च [ग]समासगा ॥ ९० ॥

यथा -

तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा ।
स्मरशरविसराहतान्तरा मृगनयना .नजते[घ] मुनेर्मनः ॥

अत्र यदि मृगशब्देन लक्षणया तल्लोचने विवक्ष्येते, तदा नेदमुदाहरणम्। यदा तु मृगलोचने इव नयने यस्या इत्यर्थो विवक्ष्यते, तदा "सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्चे"त्यनेन मृगलोचनेत्युप-

(क) ढुंढुंल्लन्तमरीहसीति, ढुंढुंणन्तो मरिहसीति च पा० ।
(ख) स सहस्रायुधीयतीति पाठान्तरम्। विवृतावपि तदनुसारि ।
(ग) त्रिलोपेऽर्त्विति पा० ।
(घ) ०' विलब्धविग्रहा । स्मरशरविशराञ्चितान्तरा मृगनयना हरते"– इति पा० ।

मानपूर्वपदस्य नयनशब्देन बहुव्रीहावुपमानवाचिनि मृगलोचनेतिपूर्वपद उत्तरपदभूतस्य लोचनशब्दस्य लोप उपमेयभूतस्य नयनमात्रस्योपादानादिदमुदाहरणम्। केचित्तु, उपमानमात्रोपादानेऽपि त्रिलोपा सम्भवति, यथा,'ऽयमाऽऽयःशूलिक' इति। अत्राऽयःशूलेन क्रूर आचार उपमेय,स्तीक्ष्णत्वादिश्च[क] साधारणधर्मः। नच तयोरेकमप्युपात्तं, नाऽपीवादिरिति मन्यन्ते, तच्च युक्तम्। यतः क्रूरस्याचारस्यायःशूलतया ऽध्यवसायादतिशयोक्तिरियं, नतूपमा, अन्यथाध्यवसानमूलातिशयोक्तेर्निर्विषयत्वापत्तेः। तदेवं धर्मलोपे पञ्च, उपमानलोपे द्वौ, द्योतकलोपे षट्,धर्म वाद्योर्लोपे द्वौ, धर्मोपमानयोर्लोपे द्वौ, तद्[ख]द्योतकोपमेयलोपे चैकः, त्रिलोपेत्वेक इत्यूनविंशतिर्लुप्ताभेदाः, पूर्णाभेदाः षडित्येवमप्यर्वविंशतिः। नन्वन्येऽप्युपमाभेदाः सम्भवन्ति तथाहि, एकस्यैवोपमेयस्य बहूपमानसम्बन्धो मालोपमा। सा च द्विधा, साधर्म्यस्याभेदाद्भेदाच्च। तत्राद्या यथा–

अनयेनेव राज्यश्री,र्दैन्येनेव मनस्विता, ।
मम्लौ सा च[ग] विषादेन, नलिनीव[घ] हिमाम्भसा, ॥

अत्र म्लानिरेव सर्वोपमानसाधर्म्यम्। अन्त्या यथा–

ज्योत्स्नेव नयनानन्दः, सुरेव मदकारणम्, ।
प्रभुतेव समाकृष्टसर्वलोका, नितम्बिनी ॥

अत्र ज्योत्स्नादीनां नयनानन्दहेतुत्वादयः साधारणधर्मा भिन्नाः ॥

पूर्वपूर्वोपमेयस्योत्तरोत्तरमुपमानत्वे रशनोपमा। [ङ]सापि द्विधा, साधर्म्याभेदात्तद्भेदाच्च। तत्राद्या यथा–

अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थिततेः ।
भणितिरिव मति,र्मतिरिव चेष्टा, चेष्टेव कीर्त्तिरतिविमला ।

अत्रामलत्वमेव सर्वासूपमासु साधारणो धर्मः। अन्त्या यथा–

(क) तीक्ष्णत्वादि चेति पु०।
(ख) तदित्येकञ्च नास्ति।
(ग) सा ऽथेति क्वचित्।
(घ) पद्मिनीवेति पा०।
(ङ) रशनोपमेति नातियुक्तः पाठः।

मतिरिव मूर्त्तिर्मधुरा, मूर्त्तिरिव सभा प्रभावचिता, ।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ॥

अत्र मूर्त्यादीनां मधुरत्वादयो धर्मा भेदवन्तः· न एते भेदाः किमिति नोक्ता इति चेत्, उक्ता एव, उक्तभेदान्तर्भावात्· तथापि तेन रूपेण किमिति नोक्ता इति चेत्, एवंविधवैचित्र्यसहस्रसम्भवात्, सर्वेषामाख्यातुमशक्यत्वात् ॥ ९० ॥ (इत्युपमा १)

## उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।

## अनन्वयः–

उपमानान्तरव्यवच्छेदाय यदेकस्यैवोपमानोपमेयत्वे भेदोपचारेणोपनिबध्येते, सो ऽनन्वयः· तदेतदुक्तम्–"उपमानान्तरसम्बन्धाभावो ऽनन्वय" इति, बहुव्रीहिसमासात्· यद्वा, संज्ञायोगनिर्वचनं तत्, अनन्वयः सम्बन्धाभावः, स चार्थादुपमानाद्रितरेण उपमेयभिन्नेनेति· एवकारो वैचित्र्यविशेषस्फोरणार्थः· 'एकवाक्यगे' इति विपर्यासोपमाव्यावर्त्तनाय· तत्र हि वाक्यद्वये तथाभावः· उदाहरणम्–

न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव, ।
यावद्विलासायुधलास्यवासास्ते तद्विलासा इव तद्विलासाः ॥

अत्र दशाविशेषादिभेदाद्भेदोपचारः ॥–॥ (इत्यऽनन्वयः २)

## –विपर्यास उपमेयोपमा तयोः ॥ ९१ ॥

तयोः उपमानोपमेययोर्विपर्यास उपमेयोपमानभावः, अर्थाद्वाक्यद्वये, एकवाक्ये तथाऽसम्भवात्, 'मुखमिव चन्द्र' इत्यत्र निन्दाभिव्यक्तौ प्रतीपरूपत्वात्, उपमेयोपमेति यौगिकी संज्ञा· विपर्यासश्चायमुपमानान्तरव्यवच्छेदार्थः· उदाहरणम्–

कमलेव मति,र्मतिरिव कमला, तनुरिव विभा, विभेव तनुः, ।
धरणीव धृति,र्धृतिरिव धरणी, सततं विभाति बत यस्य ॥ ९१ ॥ (३)

## सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।

समेनेत्यत्र 'सहैकरूपतये'ति शेषः· तेन प्रकृतस्य सम्भविनोऽर्थस्य समेनासम्भविना सहैकरूपतया यत्सम्भावनं, तदुत्प्रेक्षालङ्कार इत्यर्थः· सा चेयं हेत्वादिसम्भावनाभेदाद्बहुप्रकारा· तत्र हेतूत्प्रेक्षा यथा—

उन्मेषं यो मम न सहते जातिवैरी निशाया,-
मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः ।
नीत शान्तिं प्रसभमनया वक्त्रकान्त्ये,ति हर्षा-
ल्लग्ना,मन्ये,ललिततनु ! ते पादयोः पद्मलक्ष्मीः(क) ॥

अत्र पद्मलक्ष्म्याः कामिनीचरणयोः स्वभावलग्नत्वं यथोक्तहर्षहेतुकलग्नत्वतादात्म्येन सम्भावितम् । स्वरूपसम्भावनं यथा—

लिम्पतीव तमोऽङ्गानि, वर्षतीवाञ्जनं नभः, ।
असत्पुरुषसेवेव दृष्टिर्विफलतां(ख)गता ॥

अत्र गम्यमानं तमसो व्यापनादि लेपनादिरूपतया सम्भावितमिति स्वरूपोत्प्रेक्षेयम्· अत एव 'तमसो लेपनकर्तृत्वमत्रोत्प्रेक्ष्य'मित्यलङ्कारसर्वस्वकारमतमप्यपास्तम्, विवक्षितविवेकेन लेपनमात्रस्योत्प्रेक्षणात्· एवं फलाद्युत्प्रेक्षाप्यूहनीया ॥ ८ ॥ (इत्युत्प्रेक्षा ४)

**ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः ॥ ९२ ॥**

भेदो वैधर्म्यम्· संशयस्तु कविप्रतिभानिर्मित एवालङ्कारो नतु स्वारसिकः स्थाणुपुरुषादिविषयोऽपि, वैचित्र्याभावात्· अत्र 'संशयः ससन्देह' इति लक्षणम्· 'भेदोक्तौ तदनुक्तौ चे'ति विभागः· तत्र भेदोक्तौ यथा—

अयं मार्तण्डः किं, न खलु(ग) तुरगैः सप्तभिरितः,
कृशानुः किं, सर्वाः प्रसरति दिशो नैष नियतम्, ।

(क) ०"ल्लग्नां मन्ये ललिततनु ते पादयोः पद्मलक्ष्मी"मिति केचित् पठन्ति ।
(ख) निष्फलतामिति पा० ।
(ग) स खल्विति पा० ।

कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं(क)
समालोक्याऽऽजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥

अत्र मार्तण्डत्वादीनां सन्देहे सप्ततुरगत्वादीनि वैधर्म्याणि तदाश्रयेणोक्तानि. नचायं व्यतिरेकालङ्कारः, तस्य सन्देहानुयायितया तेनैव व्यपदेशौचित्यात्. ननु भट्टोद्भटेन भेदोक्तौ निश्चयगर्भ एवायं स्वीकृतो, नतु निश्चयान्तोऽपि. तत्किमस्यापि स एव पन्थाः. नेत्युच्यते. कुत एतत्. भेदोक्ताविति विभजनाद् निश्चयान्तस्यापि तत्सम्भवाद्, वैचित्र्यानुभवाच्च. यथा–

इन्दुः किं, क्व कलङ्कः, सरसिजमेतत् किमम्बु कुत्र गतम्, ।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि! निश्चितं परतः ॥

तत्किं भट्टोद्भटेनायमुपेक्षितः. प्रतीयमानवस्त्वाख्ये तादृशवैचित्र्याभावादिति गृहाण । भेदानुक्तौ यथा–

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः,
शृङ्गारैकरसः स्वयं नु मदनो, मासो नु पुष्पाकरः, ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥

अत्र च शङ्क्यमानस्य प्रजापत्यादेः कस्यापि न वैधर्म्यमुक्तम् ॥ ९२ ॥ (५)

## तद्रूपकमभेदो य उप(ख)मानोपमेययोः ।

अभेदः, अभेदारोपः. बीजं तु तत्रातिसाम्यम्. अभेदश्चात्रानपह्नुतभेदयोर्विवक्षित इति नापह्नुतावतिव्याप्तिः ॥ ऽ ॥

तदेतद् द्विविधं, सावयवं निरवयवं च. तत्राद्यं समस्तवस्तुविषयमेकदेशविवर्त्ति च. द्वितीयं तु शुद्धमात्रमित्यार्थे विभागे लक्षणमाह–

## समस्तवस्तुविषयं, श्रौता आरोपिता यदा ॥ ९३ ॥

आरोपिता आरोप्यमाणाः. ते सर्वेऽपि यद्यारोपविषयवच्छाब्दा

(क) चिरादिति पा. । *
(ख) तद्रूपकमभेदोऽयमुपेति पु. नार्हम्. तद्रूपकमभेदो यदुपेति पा० ।

एव भवन्ति, तदा समस्तवस्तुविषयं नाम रूपकं, समस्तं वस्तु आरोप्यमाणं विषयः शब्दप्रतिपाद्योऽत्रेतिव्युत्पत्तेः· 'आरोपिता' इति बहुवचनम्, विवक्षितमित्यारोप्यद्वयस्थले नाव्याप्तिः· उदाहरणम्—

ज्योत्स्नाभस्मच्छुरणधवला, बिभ्रती तारकास्थी,-
न्यन्तर्द्धानव्यसनरसिका, रात्रिकापालिकीयम् ।
द्वीपाद्वीपं भ्रमति, दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥

अत्र पादत्रये ज्योत्स्नादिषु भस्मत्वादिकमारोप्यमाणं सर्वं शाब्दम्· नन्विदं रूपकोदाहरणं न युज्यते, साधकबाधकाभावेन रूपकोपमयोः सन्देहात्सन्देहलक्षणसङ्करौचित्यादिति चे,द्ववेदेवं, यद्यन्तर्धानव्यसनरसिकत्वं विशेषणं न स्यात्· तद्धि रूपकपरिग्रहे साधकं, कापालिक्यान्तत्सम्भवा,द्रात्रावसम्भवाच्च· उपमापरिग्रहे तु रात्रेरेव प्राधान्यात्तस्यानन्वय एव स्यात् ॥ ९३ ॥

श्रौता आर्थाश्च ते यस्मि,न्नेकदेशविवर्त्ति तत् ।

'ते' इत्यारोपिताः· तथाच, यत्र केचिदारोप्यमाणाः शब्दोपात्ताः, केचिदर्थसामर्थ्यादवसेया,स्तदेकदेशविवर्त्ति, एकदेशे विशेषेण वर्त्तत इतिव्युत्पत्तेः· उदाहरणम्—

तस्स रणतेउरए करे कुणंतस्स मंडलग्गलअं ।
रससमुहीवि सहसा परंमुही होइ रिउसेणा ॥

अत्र रणे अन्तःपुरत्वमारोप्य शाब्दं, मण्डलाग्रलतायाः नायिकात्वं रिपुसेनायाः प्रतिनायिकात्वं चारोप्यं न शाब्दं, किन्त्वन्तःपुरत्वारोपसामर्थ्यादेवावसीयते, अन्यथा तस्यापर्यवसानात्· अत एकदेशे विशेषेण वर्त्तनादेकदेशविवर्त्ति ॥ ९ ॥

साङ्गमेतत्—

साङ्गं, सावयवम्, एतत्, उक्तप्रकारवदित्यर्थः· साङ्गत्वमनेकरूपकसमुदायः· एकस्मिन् रूपके द्वितीयस्याङ्गत्वेनावस्थानात्, अङ्गशब्दस्य हेत्वर्थकत्वात् ॥–॥

—निरङ्गं तु शुद्धं—

निरङ्गम्, अद्वितीयम्, तच्छुद्धमेवेत्यर्थः· यथा—

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्,
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्, ।
अनिद्रं यच्चान्तः स्वपिति, तदहो वेद्म्यऽभिनवां
प्रवृत्तो ऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥

अत्र प्रेममात्रे लतिकात्वारोपः ॥—॥

अथ साङ्गस्यैव वैचित्र्यान्तरमाह—

—माला तु पूर्ववत् ॥ ९४ ॥

यथैकत्र बहूपमानयोगे मालोपमा, तथैकत्रानेकधर्मारोपे मालारूपकमित्यर्थः· यथा—

सौन्दर्यस्य तरङ्गिणी, तरुणिमोत्कर्षस्य हर्षोद्गमः,
कान्तेः कार्मणकर्म, नर्मवचसामुल्लासनावासभूः, ।
विद्या वक्रगिरां, विधेरनवधिप्रावीण्यसाक्षात्क्रिया,
बाणाः पञ्चशिलीमुखस्य, ललनाचूडामणिः, सा प्रिया ॥ ९४ ॥

नियतारोपणोपायः स्यादारोपः परस्य यत् ।
तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥ ९५ ॥

'नियतस्य मुख्यस्या,रोपो वस्त्वन्तरतादात्म्यप्रतीति, स्तस्योपायः कारणं यः, परस्यामुख्यस्या,रोपो, वस्त्वन्तरतादात्म्यप्रतीति,स्तत्परम्परितम्, रूपणानां कार्यकारणभावरूप. परम्परा संजाताऽत्रेति योगा'दिति केचित्· वस्तुतस्तु, नियतमारोपणं उपायो यत्र, आरोपणं विना यदारोपणं न सम्भवत्येवेति यावत्· एवं भूतोऽन्यस्य यत्राऽऽरोपः, स तथा· एवं च, एकरूपणानन्तरं परम्परितम्, कार्यकारणभावपरम्परा संजाता अत्रेतिव्युत्पत्तेः· श्लिष्टइत्यादि· तदेतद्विविधम्, उपायभूते रूपक आरोप्यारोपविषययोर्वाचकस्य श्लिष्टत्वाद्, भिन्नरूपत्वाच्चेत्यर्थः· तत्राद्यं यथा—

विद्वन्मानसहंस ! वैरिकमलासङ्कोचदीप्तद्युते !
दुर्गामार्गणनीललोहित ! समित्स्वीकारवैश्वानर ! ।
सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीम ! प्रभो !
साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥

अत्र विदुषां मानसं मानसं सरोविशेष इत्यारोपहेतुकं राज्ञो हंसत्वारोपणम्, तत्र चारोपविषयारोपणीययोर्हृदयसरोविशेषयोः श्लेषवता मानसशब्देनैवाभिधानम्, एवमग्रेऽपि, तत्र, वैरिकमलायाः सङ्कोच एव कमलानामसङ्कोचः, दुर्गाणाममार्गणमेव दुर्गाया मार्गणम्, समितां स्वीकारः एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्यामप्रीतिः, विजयः परपराभव एव विजयोऽर्जुनः, एवमारोपहेतुकं सूर्यत्वाद्यारोपणमिति, ननु श्लेषस्य शब्दपरिवृत्त्यसहतया शब्दालङ्कारत्वमित्युक्तं, वक्ष्यते च, तथाच, श्लेषपरम्परितमुभयालङ्कारो युज्यत इति तदवसर एव वक्तुमुचितत्वात् किमित्यर्थालङ्कारमध्ये पठित इति चेत्, सत्यमेतत्, तथापि श्लेषापवादकं (क)रूपकमित्यलङ्कारसर्वस्वकारादिप्रसिद्ध्यनुरोधेनोक्तम्, तथाप्रसिद्धौ किं बीजमिति चेत्, मानसत्वादीनामार्थत्वम्, इदं हि तैरेकदेशविवर्तीत्युच्यते ।

द्वितीयं यथा—

आलानं जयकुञ्जरस्य, दृषदां सेतुर्विपद्वारिधेः,
पूर्वाद्रिः करवालचण्डमहसो, लीलोपधानं श्रियः, ।
संग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो,
राजन्! राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥

अत्र जयादेर्भिन्नशब्दवाच्यकुञ्जरत्वारोपे सति भुज आलानत्वाद्यारोपो युज्यते, इदमुदाहृतभेदद्वयं परम्परितं मालारूपम्, अमालारूपमपि तद् द्रष्टव्यम्, तत्र श्लिष्टे वाचके यथा—

अलौकिकमहालोकप्रकाशितजगत्त्रयः(ख) ।
स्तूयते देव! सद्वंशमुक्तारत्नं न कैर्भवान् ॥

(क) श्लेषापवादकरूपकमिति पु० ।
(ख) ०त्रय! —इति सम्बुद्धिः क्वचित् ।

अत्र वंशोऽन्ववाय एव वंशो वेणुरिति । भेदभाजि यथा–

निरवधि च निराश्रयं च यस्य स्थितमनिवर्त्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान्स कूर्ममूर्त्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥

अत्र लोकशब्दाद्विवेन वल्लिपदेनारोप्यमाणमुक्तम्· परम्परिते चारोप्यारोपविषयानेकत्वेपि नालङ्कारानेकत्वम्, सम्भूयैव वैचित्र्यप्रकर्षाधायकत्वात्· एवं मालारशनयोरपि द्रष्टव्यम्· यद्यपि रशना[(क)]रूपमपि रूपकं सम्भवति, यथा–

किसलयकरैर्लतानां, करकमलैः, कामिनां मनो जयति, ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां, मदनः ॥

इत्यादि· तथापि, न तादृशं वैचित्र्यवदिति न पृथग्लिखितम् ॥ ९५ ॥

(इति रूपकम् ६)

प्रकृतं यन्निषिध्यान्यत्साध्यते, सा त्वपह्नुतिः ।·

प्रकृतमुपमेयं,न्निषिध्या ऽसत्यतया व्यवस्थाप्या,न्यदप्रकृतमुपमानं, यत्साध्यते सत्यतया व्यवस्थाप्यते, सा ऽपह्नुतिः· सा च शाब्दी वार्थी चेति द्विधा· तत्राद्या यथा–

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये!
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।
अमुष्येयं, मन्ये, विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥

अत्र 'कलङ्को नैवाय'मिति शाब्दो ऽपह्नवः । आर्थस्तु बह्वीभिर्भङ्गिभिरालोक्यते· तत्क्वचित्कपटार्थशब्दोपादानात्· यथा–

'बत सखि! कियदेतत्पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन् रागिलोके, तथाहि[(ख)] ।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥ (शेषमग्रे)

(क) रसनेति पु० ।
(ख) तथापीति पु० ।

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# ॥ शास्त्रदीपिका ॥

## भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

### विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

*(Continued from page* 277 VOL. XII.*)*

## अथ तृतीयः पाद आरभ्यते ॥

विकृतौ मन्त्रगतव्रीह्यादिशब्दानामूहाधिकरणम् ।

सू० प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥

न्त्राणामिदानीमूहश्चिन्त्यते "अग्नये जुष्टं निर्वपामी"ति "व्रीहीणां मेधसुमनस्यमान" इत्येतौ मन्त्रौ किं सूर्यादिषु नीवारादिषु च ऊहितव्यौ? उत नेति संशये "प्रकृतौ यादृशो मन्त्रश्चोदकेन हि तादृशः । प्राप्यते विकृतौ तस्माच्चोहस्तत्रावकल्पते ॥ ननु कार्यद्वारेण मन्त्राः प्राप्यन्ते कार्यं चापूर्वीयदेवताप्रकाशनं नाग्निस्वरूपप्रकाशनमित्युक्तं फलदेवतयोश्चेत्यत्र, तस्मादिहापि सूर्य एव प्रकाशयितव्यः, न चाग्निपदं तत्प्रकाशने समर्थमिति सूर्यपदं प्रक्षेप्तव्यम्, उच्यते सत्यं, सूर्य एव प्रकाश्यः, स तु चोदकप्राप्तेनाग्निपदेनैव गुणवृत्त्या प्रकाश्यते तद्यथैन्द्र्या गार्हपत्यमुपतिष्ठत इति वचनादिन्द्रपदेनैव गुणवृत्त्या गार्हपत्यम् उपस्थीयते, तथेहापि प्रकृतस्यैवाग्निपदयुक्तस्य मन्त्रस्य सूर्यप्रकाशनाय चोदकेन विनियुक्तत्वात्तेनैव सूर्यं प्रकाशयिष्यामः, अन्यथाऽर्थवशेन मन्त्राणामन्यथाभावकरणे गार्हपत्यवशादैन्द्रोऽपि मन्त्र ऊहितव्यः स्यात्तस्माद्देवतावशेन मन्त्राणामन्यथाभावो यत्प्रकृतावग्निः प्रकाशितो विकृतौ सूर्य इति, न तु पठितपदोद्धारः पदान्तरप्रक्षेपश्च युक्त इति प्राप्तेऽभिधीयते "प्रकृतौ यादृशं रूपं मन्त्राणां हि विवक्षितम् । तादृगेवातिदेष्टव्यं विकृतौ नाविवक्षितम् ॥ प्रकृतावग्निपदं न स्वरूपविवक्षया पठितमग्निपदयुक्तो मन्त्रः कथं नाम स्यादिति

यदि ह्येवं भवेत् ततस्तेनैव यथा कथंचित्प्रकाश्येत सूर्यः देवतावाचिपदविवक्षया त्विदं पठितं देवतावाचिपदयुक्तो मन्त्रः कथं नाम स्यादित्येवमभिसन्धायाग्निपदं पठितं तस्यैव प्रकृतौ देवतावाचित्वात् अवश्यं हि देवतापदयुक्तमन्त्रमधिजिगांसमानैरग्निपदमेवाध्येतव्यम्, अतस्तद्रूपविवक्षयाऽग्निपदं पठितं तथा दृष्टार्थं भवति स्वरूपविवक्षयां त्वदृष्टार्थतैव स्यात्तेन च विकृतावपि देवतावाचिपदयुक्तमन्त्रप्रयोग एव कर्त्तव्यः, न चाग्निपदस्य तादृप्यमस्ति, अतः सूर्यपदप्रक्षेपः, एवं व्रीहिपदमपि हविःप्रकृतिद्रव्यवाचिपदाभिप्रायं न स्वरूपाभिप्रायमिति नीवारादिषूहसिद्धिः बहुषु तद्वाचिषु सत्सु व्रीह्यादिपदमेव पठितं ततो नियमादृष्टमात्रं कल्प्यते अवघातादिवत्, स्वरूपं त्वपूर्वीयसाधनविशेषवाचिपदविवक्षया प्रयुक्तं दृष्टार्थत्वात्तस्मादूहः, ऐन्द्री तु स्वरूपेणैव गार्हपत्ये विनियुज्यत इति वैषम्यम् ॥

पौण्डरीकेषु हविःषु स्तरणमन्त्रस्योहाधिकरणम् ।

सू० आतिनैमित्तिकं यथास्थानम् ॥ २ ॥

क्वचिच्छ्रूयते "पौण्डरीकाणि बर्हींषि भवन्ती"ति प्रकृतावस्ति बर्हिर्मन्त्रः "दर्भैः स्तृणीत हरिते"ति तत्र दर्भ-शब्दस्थाने पुण्डरीकपदमूहितव्यं, पूर्वेणैव न्यायेन हरितपदस्थाने ऽपि किं रक्तपदमूहितव्यं नेति संशयः दर्भ-शब्देनैव सिद्धे प्रकाशने हरिताभिधानमदृष्टार्थं प्रकृतौ तस्माद्विकृतावपि हारित्यमेवादृष्टार्थमभिधातव्यमित्यनूहः, स्यादेवं यद्यदृष्टार्थं स्यादनेनापि तु गुणद्वारेण स्तरणद्रव्यमेव प्रकाश्यते अर्थाभिधानपरत्वान्मन्त्राणामतः पुण्डरीकाण्यपि स्वगुणद्वारेण प्रकाशयितुं रक्तपदं प्रयोक्तव्यम् ॥

अग्नीषोमीयपशौ लौकिकयूपस्पर्शप्रायश्चित्ताधिकरणम् ।

सू० लौकिके दोषसंयोगादपवृक्ते चि चोद्यते निमित्तेन प्रकृतौ स्यादविभागित्वात् ॥ ३ ॥

प्रासङ्गिकमिदमधिकरणं यद्येकं यूपमुपस्पृशेत् एष ते वायो इति, ब्रूयाद्यदि द्वावेतौ ते वायू इति, यदि बहून् एते ते वायव इत्यादि, वाक्यं

लिङ्गदर्शनत्वेन पूर्वाधिकरणे प्रस्तुतं तत्रेदं विचार्यते किं वैदिके यूपोच्छ्रयणादिविषये स्पर्शे प्रायश्चित्तम्? उत लौकिके? उताभयत्रे? ति विशेषाश्रवणादनियमः प्रकरणान्फलकल्पनापरिहाराच्च वैदिक एवेति प्राप्ते उच्यते "दोषनिर्हरणायेदं प्रायश्चित्तं विधीयते। दोषश्च प्रतिषिद्धं स्यात्प्रतिषेधश्च लौकिके" ॥ यूपो वै यज्ञस्य दुरिष्टमामुञ्चते तस्माद्यूपो नोप[1]स्पृश्यते इति प्रतिषिध्य पश्चादिदमुच्यते यद्येकमुपस्पृशेदित्यादिप्रतिषेधश्च रागप्राप्ते लौकिके वैदिकस्य विहितत्वेन प्रतिषेधानर्हत्वात्प्रतिषेध्यानुष्ठाने प्रत्यवायोत्पत्तेः प्रतीकारापेक्षायां प्रायश्चित्तविधिरपेक्षितार्थो भवति तस्माल्लौकिके प्रायश्चित्तम् ॥

द्विपशुयागे पाशमन्त्रयोरेकवचनान्तबहुवचनान्तपदयोर्द्विवचनान्तेनोहाधिकरणम् ।

सू० अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ ४ ॥

अग्नीषोमीयपशावेकवचनान्तः पाशमन्त्रः "अदितिः पाशं प्रमुमोक्त्वेत"मिति तथा बहुवचनान्तो ऽपि "अदितिः पाशान्प्रमुमोक्त्वेतानि" इति तयोरग्नीषोमीये निवेशमुपरितने ऽधिकरणे वक्ष्यति तयोर्द्विपशुकेषु मैत्रं श्वेतमालभेत वारुणं कृष्णमित्यादिषु चोदकेन प्राप्तयोर्भवति संशयः किमेकवचनान्तस्याप्रवृत्तिः? बहुवचनान्तस्यानूहेन प्रवृत्ति? रुत बहुवचनान्तस्याप्रवृत्तिरेकवचनान्तस्योहेन प्रवृत्ति? रुतोभावपि यथायथमूहेनानूहेन च प्रवर्त्तेते? किं वोभयोरपि द्विवचनेनोहितयोः प्रवृत्ति? रिति तत्रैकवचनस्य समवेताभिधायित्वेन विकृतावपि द्विसंख्यां वक्तुं विकारः स्याद् बहुवचनस्य त्वेकस्मिन्नसमवेताभिधायित्वेन निर्देशमात्रार्थत्वाद् विकृतावपि तथैव सम्भवादनूहः, न चाविकारसम्भवे विकारो युक्त, तस्मादेकवचनान्तस्याप्रवृत्तिरितरस्य त्वविकारेण प्रयोग इति प्रथमः पक्षः सकलाभिधानसम्भवे विकलाभिधानमन्याय्यं, तस्मात्संख्याविशिष्टपाशप्रकाशनार्थमेकवचनान्तस्योहितस्य प्रवृत्तिः, बहुवचनान्तस्य त्वविवक्षितसंख्याकपाशमात्रप्रकाशनेनासमग्राभिधानत्वादप्रवृत्तिरिति द्वितीयः पक्षः, द्वयोरपि चोदकेन प्राप्तयोर्यथायथमूहेनानूहेन च विकल्पेन प्रयोग इति तृतीयः, गृह्णीम एत-

[1] नोपस्पृश्य इति पा० ।

द्वयोः प्रवृत्तिरिति न तु बहुवचनस्यानूहस्तदपि द्वयोरसाधुत्वादूहितव्यं प्रकृतावेकस्मिन् पाशे छन्दसि बहुवचनस्य प्रयुक्तत्वात्तथैवाङ्गीकृतं न त्वेवं द्वयोः प्रयोगः छन्दसि दृष्टः, तस्मात्स्वायत्ते प्रयोगे सत्यसाधुप्रयोगासम्भवात् द्विवचनं प्रक्षेप्तव्यं तस्मादुभयोरूह इति सिद्धान्तः ॥

आग्नीषोमीयपशौ पाशैकत्वपाशबहुत्वाभिधायिमन्त्रयोर्विकल्पाधिकरणम् ।

सू० विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वात् ॥ ५ ॥

पशावग्नीषोमीये पाशमन्त्रावेकवचनबहुवचनान्तौ। तत्र बहुवचनान्ते संदेहः किं प्रकृतावेवाग्नीषोमीये निविशते? उत बहुपाशकेषु पशुगणेषूत्कृष्यत? इति एकस्मिन् बहुवचनस्या[1]समर्थत्वादुत्कर्षे प्राप्ते ऽभिधीयते "प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणः। उभयोः प्रकृतौ भावान्नोत्कर्षोऽस्यात्र कल्पते। पाशप्रातिपदिकार्थान्वितं विभक्त्यभिहितं कर्मकारकं प्रकृतावपि पाशकर्मकोन्मोचनाभिधानेन सम्भवन्नोत्कर्षं सहते, संख्यामात्रं त्वसम्भवदपि गुणत्वान्न प्रातिपदिकं प्रधानभूतं कारकं वाऽलमुत्क्रष्टुम्, अविवक्षिता चेह संख्या पाशकर्माभिधानमात्रेण व्यवहारसिद्धेः, अतो निर्देशमात्रार्थं बहुवचनं कर्ममात्रं तत्र विवक्षितम्, अतोऽपि न संख्यावशेन मन्त्रोत्कर्षः बहुवचनस्य त्वेकस्मिन् प्रयोगोऽवयवबहुत्वाभिप्रायेण छान्दसः ॥

दर्शपूर्णमासयोर्द्विपत्नीकेप्रयोगे पत्नीसंनह्येतिमन्त्रस्यानूहाधिकरणम् ।

सू० अपूर्वे त्वविकारोऽप्रदेशात्प्रती[2]येत ॥ ६ ॥

दर्शपूर्णमासयोः "पत्नीं संनह्ये"ति मन्त्रः किमेकद्विबहुपत्नीकेषु प्रयोगेषु सर्वेष्वविकारेण प्रयोक्तव्य? उत द्विबहुपत्नीकप्रयोगयोर्द्विवचनबहुवचनाभ्यामूहितव्य? इति संशये, तत्रैकपत्नीके समवेताभिधायित्वसम्भवादेकवचनमन्याय्यनिगदन्तस्माद् द्वित्वबहुत्वयोरूहः, नैतदेवं, यद्येकपत्नीप्रयोगाभिप्रायमाम्नानं स्यात्तत एकवचनस्य समवेतसंख्याभिधानरूपस्य

१ बहुवचनस्यासमवेतार्थत्वादिति पा० ।

२ प्रतीयते इति पा० ।

सम्प्रतिपन्नरूपत्वात्समवेतसंख्याभिधानमिह विवक्षितमिति कृत्वा द्विपत्नीके बहुपत्नीके च प्रयोगे समवेतसंख्याभिधानार्थमूह्येत, सर्वप्रयोगाणां तु समानाप्रधानत्वात्सर्वाभिप्रायेणेदमाम्नातं द्वयोर्बहुषु चैकवचनस्य सम्प्रतिपत्त्यभावाच्च समवेतसंख्याभिधानरूपेण प्रयुक्तमिति शक्यमध्यवसातुं निर्देशमात्रार्थन्तु एकवचनमदृष्टार्थं चैकत्वमभिधातुं प्रयुक्तमित्यापद्यते, ततश्च द्विबहुपत्नीके प्रयोगे एकवचनमेव प्रयोक्तव्यमित्यविकारः, न चैकवचनानुरोधेनैकपत्नीप्रयोगे मन्त्रोनाम्नातेति वक्तव्यं पाशवत्प्रातिपदिकबलेन सर्वत्र प्रवृत्तेः संख्याश्चाविवक्षितत्वेनानेकपत्नीकात्प्रयोगान्मन्त्रं व्यावर्त्तयितुमसमर्थाः तस्मात्सर्वत्राविकारेण प्रयोगः ॥

द्विपत्नीके विकृतिप्रयोगेऽपि पत्नीसंचत्व्येति मन्त्रस्यानूहाधिकरणम् ।

## सू० विकृतौ चापि तद्वचनात् ॥ ७ ॥

विकृतौ पत्नी-शब्दः किं द्विपत्नीकबहुपत्नीकप्रयोगयोरूहितव्यो नेति संशये प्रकृतौ द्वयोर्बहुषु च पत्नीषु एकवचनाम्नानसामर्थ्यात्तत्प्रयुक्तं विकृतौ त्वाम्नानाभावात् द्विबहुत्वयोरेकवचनमसाधुत्वाच्च प्रयोक्तव्य तस्मादूहः नैवं निर्देशमात्रार्थमदृष्टार्थं चैकवचन न तत्समवेतसंख्याभिधानार्थमित्युक्तम्, अतो विकृतावपि तथैव कर्त्तव्यमित्यनूहः, न चासाधुत्वं द्वित्वबहुत्वयोरेकवचनस्य छान्दसत्वात्, पाशे तु द्वयोर्बहुवचनप्रयोगस्य छान्दसत्वाभावादसाधुत्वं स्यादिति विशेषः ॥

सवनीयपशूनामग्नीषोमीयसमानविधानत्व प्राप्ते अध्रिगुरिति मन्त्रे ऽनूहाधिकरणम् ।

## सू० अध्रिगुः सवनीयेषु तद्वत्समानविधानाश्चेत् ॥ ८ ॥

तृतीये ऽध्याये संस्थापशवः समानविधाना इति पूर्वपक्षे समानविधानत्वं यदुक्तं तस्येदं प्रयोजनं पूर्वाधिकरणसिद्धमनेन सूत्रेण कथ्यते यदा समानविधानास्तदोक्थ्येऽश्यादिषु द्विबहुपशुकेऽपि सवनीयगणे प्रवर्त्तमानः प्रास्मा इत्यध्रिगुप्रैषगत एकवचनान्त शब्दः पत्नी-शब्दवदेव नोहितव्यः, विकारपक्षे तूहितव्यः । ननु समानविधानत्वे यथा प्रास्मा इति पुंल्लिङ्गनिर्देशात्सारस्वत्यामप्रवृत्तिस्तथैकवचननिर्देशात् द्विब-

द्रुत्वप्रवृत्तिः स्यात्, नैवं पुंल्लिङ्गस्य मेध्यामत्यन्तासम्भवात् युक्ता निवृत्तिरेकवचनन्तु प्रतिव्यक्तिगतैकत्वाभिप्रायेण गणेऽपि सम्भवात् नात्यन्तानुपपन्नं, पाशानिति बहुवचनमिवावयवाभिप्रायेणैवोपपन्नमिति नेतव्यम्। अपि च "जात्याख्यायामेकस्मिन् बहुवचन बहुषु चैकवचनं स्मर्यते अतोऽपि न वचनयोरनुपपत्तिः, लिङ्गं त्वन्यलिङ्गे ऽत्यन्तानुपपन्नमिति वैषम्यम्॥

नीवाराणां व्रीहिप्रतिनिधित्वे मन्त्रे व्रीहि-शब्दस्यानूहाधिकरणम्।

सू० प्रतिनिधौ चाविकारात्॥ ९॥

अतस्य द्रव्यस्यापचारे नीवारादिषु प्रतिनिहितेषु व्रीहीणां मेधस्सुमनस्यमान इति व्रीहि-शब्दः किमूह्येत नेति संशये नीवारादिषु व्रीहिशब्दस्यासामर्थ्यादूहप्राप्तावुच्यते यदि नीवारा व्रीहिवत्साधनं भवेयुस्ततस्तत्प्रकाशनार्थं नीवारपदं प्रक्षिप्येत न त्वेवं किं तर्हि नीवारगता ये व्रीह्यंशास्ते ऽत्र साधनमित्युक्तं, ते च व्रीहिगता इव नीवारगता अपि व्रीहिशब्देनैव शक्यन्ते प्रकाशयितुमित्यविकारेण प्रयोगः॥

द्विपशुयागे चक्षुर्गमयतादिति मन्त्राणामनूहाधिकरणम्।

सू० संसर्गिषु चार्थस्यास्थितपरिमाणत्वात्।॥ १०॥

ज्योतिष्टोमे ऽग्नीषोमीये पशावध्रिगुप्रैषः तत्र संसर्गिणोऽर्थाश्चक्षुरादयः "सूर्यं च चक्षुर्गमयतादित्यादयस्ते द्विपश्चादिषु पशुगणेषु किं द्विवचनबहुवचनाभ्यामूहितव्या नेऽति संशये सर्गिणां तेजःप्रभृतीनां स्वतः सङ्ख्याव्यवहाराभावात् औपाधिको भेदव्यवहारः, सद्विह चक्षु शब्दस्य तेजोवचनत्वादसति स्वतः सङ्ख्याभात्वे ऽधिष्ठानापेक्षत्वे च तयोर्द्वित्वेन द्विवचनप्रसङ्गात् पशूपाधिकमेकवचनम् अस्य शब्देन पशोरुपात्तत्वात्तदौपाधिकमेव विज्ञायते, अतः पशुभेदेन पशुसङ्ख्यावशेनोह इति प्राप्त उच्यते अधिष्ठानाविर्गतं तेजः प्रदीपप्रभावदेकीभवतीति तदभिप्रायादेकवचनं न त्वौपाधिकं न चाधिष्ठानाभिप्रायश्चक्षुः शब्दस्तयोः सूर्यगमनासम्भवात् द्वित्वात्तयोरेकवचनानुपपत्तेः तस्मान्निर्गततेजोऽभिप्रायं बहूनामपि च पशूनां सवि-

हितानि निर्गतानि चानुषाणि तेजांसि अनेकप्रदीपप्रभावदेकीभवन्ति तस्मादनूहः ॥

द्विपशुयागे अधिगुप्रैषे एकधेत्यस्य शब्दस्याभ्यासाधिकरणम् ।

सू० एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यादसर्वविषयत्वात् ॥ ११ ॥

तत्रैव एकधास्य त्वचमाच्छ्यतादिति श्रुतं, तत्रैकधा-शब्दः पशुगणेषु किमविकारेण प्रयोक्तव्यः? उताभ्यासेन विकर्त्तव्यः? इति संशयः, तदर्थमिदं विचार्यते, किं प्रकृतौ येन प्रकारेणाभिधानं कृतं तेनैव प्रकारेण विकृतावपि कर्त्तव्य-मुतान्यथापि सम्भवति इति,? तत्र यद्यपि प्रकृतावेकत्वात् त्वचः साहित्याभिधानं न सम्भवतीत्येकप्रयत्नसाध्यत्वम् एकधा-शब्देनोक्तं नावयवश आच्छ्यतात्किं त्वेकधा एकेन प्रयत्नेनेति, तथाऽपि विकृतावार्षेयोद्धकानुग्रहाय बह्वीनान्त्वचान्देशतः कालतो वा साहित्यमेकधा गाः पाययतीति वदभिदधद्विकारेणैव त्वगाच्छेदनं प्रकाशयिष्यतीति प्राप्ते ब्रूमः "प्रकृतौ यस्य शब्दस्य यादृशोऽर्थो निरूपितः। तादृगेवातिदेशेऽपि स हि कार्यपरो यतः" ॥ कार्यप्रधानो ह्यतिदेशो न शब्दस्वरूपपरः तेन प्राकृतमेकप्रयत्नसाध्यत्वं प्रत्येकं त्वचामभिधातुमेकधेत्येवमभ्यसितव्यम् ॥

द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम् ।

सू० मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात्तस्य चान्याय्यनिगदत्वात्सर्वत्रैवाविकारः स्यात् ॥ १२ ॥

तत्रैव श्रुतम्, "उपनयत मेध्यादुर आशासानामेधपतिभ्यां मेधमि"-ति केषांचित्तु मेधपतये मेधमिति तत्र चतुर्द्धा संशयः किमुभयोर्विकृतिष्वविकारः? उत द्विवचनस्य? देवतापर ऊहः? एकवचनस्य तु यजमानपरः? अथवोभयोर्यजमानपर? एव, अथवोभयोरपि देवतापर ऊह? इति तत्र मेधपति-शब्देन मेधस्य पशोः स्वामी यजमानो देवताभूतौ चाग्नीषोमौ उभयेऽप्यभिधीयन्ते, तेन द्विवचनमेकवचनं चोभयमप्यन्याय्यनिगदन्तस्मादनूह इति प्रथमः पक्षः, सम्भवत्यर्थवत्त्वे नान्याय्यनिगदता युक्ता, तस्माद् द्विवचनान्तो देवतावचनस्तेनासौ देवताविवृद्धावूहितव्यः, एकवच-

नान्तस्तु स्वामिवचनः स्वामिविवृद्धाविति द्वितीयः, एकोऽयं मन्त्रः शाखाभेदेन क्विविद्द्विवः समाम्नातस्तत्र यजमानपरत्वे मेधपतये यो मेधस्त-माशासाना इति सम्बन्धः, देवतापरत्वे मेधपतिभ्यामाशासाना इति, नेदमेकस्य वाक्यस्य वचनव्यक्तिद्वयं सम्भवति, तस्मादुभाभ्यामपि यजमानस्य देवताया वा नियमेनाभिधानं, तत्र देवतापरत्वे सत्यग्नीषोमयोर्द्वित्वात् एकवचनमनुपपन्नं, यजमानपरत्वे तु द्विवचनं पत्न्यभिधानपरत्वेनावकल्पते, तस्मात्स्वामिपरावुभावपि स्वामिवशादूहितव्याविति तृतीयः, सिद्धान्तस्तु मेधमाशासाना इत्युक्ते किमर्थमाशासाना इत्यपेक्षा भवति, तत्र मेधपतिभ्यामाशासाना इत्यपेक्षितार्थपूरणाय सम्बध्यते, न च यजमानायाशास्यते तस्यैव हि स देवताभ्यां आशास्यते, तस्माद्देवतावचनमेकवचनन्तर्हि कथम् अग्नीषोमयोरुभयोर्व्यासक्तं देवतात्वं तेन देवतात्मनातयोरेकत्वात्तदभिप्रायमग्नीषोमौ देवतेति द्विवचनं त्वधिष्ठानापेक्षन्तेन द्विवचनम् अधिष्ठानसङ्ख्यावशादेकवचनं च देवतासङ्ख्यावशाद्विकृतिषूहितव्यमिति ॥

बहुदेवत्यपशावपि एकवचनान्तमेधपतिशब्दस्य विकल्पाधिकरणम् ।

सू० नियमो बहुदेवते विकारः स्यात् ॥ १३ ॥

वैश्वदेवादिषु बहुदेवत्येषु पशुषु द्विवचनिगदस्य मेधपति-शब्दस्योहो सन्दिग्ध एकवचनिगदोऽपि तद्वदेवोह्यः, एकवचनान्तता तु निवर्तते? उताविकारेण प्रवर्तेत? इति चिन्तायामेकवचनस्य बहुत्वसामर्थ्यादूहो देवतारूपैकत्वात्तु प्रकृतिवदनूह इति पूर्वाधिकरणप्रयोजनमात्रमिदमधिकरणं न तु किंचित्प्रतिपाद्यमस्ति यद्वोत्तराधिकरणोपोद्घातत्वेन पूर्वाधिकरणसदृशमेवानुकीर्तितम् ॥

एकार्थान्याम एकवचनान्तमेधपति-शब्दस्योहाधिकरणम् ।

सू० अर्थान्तरे विकारः स्याद्देवतापृथक्त्वादेकाभिसमवायात्स्यात् ॥ १४ ॥

आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्य' इत्यादिषु पशुगणेषु किमेकवचनिगदस्याविकार? उत विकारेण प्रयोग? इति संशये गणाभिप्रायेण पूर्ववदनूहं मन्वानस्योत्तरं 'देवतात्मन एकत्वादविकारः पुरोदितः। तद्रूपस्य तु भिन्नत्वे कोनामोहं निवारयेत् ॥

॥ इति शास्त्रदीपिकायां नवमस्य तृतीयः पादः ॥ (शेषमग्रे)

# सिद्धान्तमुक्तावली

## प्रकाशानन्दविरचिता ।

(*Continued from page* 262. VOL. XII.)

एतावता ऽपि द्वैतद्रष्टुरव्युत्पादनात् नहि शुद्धस्य कूटस्थस्य द्वैतद्रष्टृत्वमुपपद्यते मोक्षकाले ऽपि द्वैतदर्शनप्रसङ्गात् । ननु मोक्षस्य नित्यत्वेन सर्वदा सत्वात्सर्वोहि कालो मोक्षकाल एव विमुक्तश्च विमुच्यते इति शास्त्रात् अन्यथा मोक्षस्य कादाचित्कत्वेनानित्यत्वप्रसङ्गः तथाच मोक्षकाले द्वैतदर्शनप्रसङ्गो नानिष्ट इदानीं तद्दर्शनादिति चेन्न सार्वलौकिकानुभवविरोधात् नहि द्वैतदर्शनकाले कश्चन मोक्षमनुभवति नहि सर्वलोकविरुद्धमर्थं श्रुतिरपि प्रतिपादयति अन्यथा शिलाप्लवनवाक्यानामपि स्वार्थे प्रामाण्यप्रसङ्गः । ततो न सर्वः कालो मोक्षकालः सर्वलोकानुभवविरोधादिति । हन्त तर्हि ये सर्वेऽनुभवितारस्ते एव द्वैतद्रष्टारस्त्वयैव निश्चितास्तथाच स्वाधीननिश्चये द्वैतद्रष्टरि कः प्रश्नः ।

The above argument is rejected because it does not explain the original question, sc. Who is the seer of duality? For the unrelated, unchanging Self or Witness cannot be the seer of duality; if this were so, there would be a vision of duality even at the time of moksha, emancipation.

Here one (sc. the pupil) may argue that the above conclusion, viz. a vision of duality at the time of moksha, is not an unsatisfactory one, as duality is seen now (during moksha); for since moksha is eternal it exists always, hence the time of moksha is *all time* according to the passage—and the freed is free—otherwise, if moksha were *occasional*, it would be non-eternal. The above is to be rejected because it contradicts universal experience, for while knowledge of duality lasts no one experiences moksha. Nor does Veda teach what contradicts common experience: if such were the case it would follow that (Vedic) sentences declaring that stones float would have to be regarded as literally true; hence the time of moksha is not *all time*, for this would contradict common experience. Well then, since you have yourself ascertained that all who know duality are seers of it, you cannot ask a question in regard to the seer of duality thus proved by you (sva) to exist.

किमत इदमतो भवति एतेषां यद् द्वैतदर्शनं तदेव सच्चिदानन्दपरिपूर्णात्मस्वरूपमोक्षाविर्भावप्रतिबन्धकमिति गृहाण । अस्तु तर्हि तेषां प्रतिबन्धो मम द्वैताऽद्रष्टुः कुतो न मोक्ष आविर्भवतीति चेत् तर्हि त्वं किमेतेभ्यो भिन्नो येन द्वैताऽद्रष्टृत्वं भवेत् । कः संशयः नहि तानात्मत्वेनानुभवामि तेषां सुखदुःखादीनां मम लेपाभावात् । अहो आश्चर्यं ताननेकविधानेव देवतिर्यङ्मनुष्यादिभेदभिन्नान्पश्यन् द्वैतं न पश्यामीति वदतस्ते वचः कथं श्रद्धेयं स्यात् नहि मुमुक्षोः संन्यासिनस्तत्त्वबुभुत्सोरिदमुचितं यदसत्याभिधानमिति । ननु त्वत्तोऽभिन्न एवाहं तथा च ममासत्याभिधानमापादयतस्तवैवासत्याभिधानमायातीति चेत् तर्हि कोऽहं त्वयात्मत्वेन दृष्टः किं स द्वितीयोऽद्वितीयो वा ।

What follows from this, you ask? This, namely that the vision of duality those seers have is just that (already mentioned) hindrance to moksha whose manifestation is the absolute Self, (Sacchidānanda): thus understand. A hindrance may exist (the pupil replies) in the case of those seers of duality; but why is moksha not manifest to me who am not a seer of duality (having been taught by Veda through you my teacher)? What! (asks the teacher) are you different from those persons that you say you are not a seer of duality? Doubtless I am! For I do not know them as myself: their joys and sorrows touch me not. Strange indeed! What trust can be placed in your statement; for while you behold those persons sc. that varied complex of gods, men and animals, you say, I see not duality! Such untruthfulness is improper in one aspiring to moksha, a sannyāsin and seeker after Reality! Since I am identical with you (retorts the pupil) the charge of untruthfulness recoils on you. The teacher replies, in knowing me as identical with yourself, was I known as one with a second; or as one without a second?

यद्याद्यस्तर्ह्ययमप्यपरो दोषो यत्त्वं विद्वांसं तवैवाचार्यं मां ब्रह्मरूपेण पर्यवसितं द्वैतवार्तानभिज्ञं सद्वितीयं कल्पयसि एकमेवाद्वितीयं नेह नानास्ति किंचन इतिशास्त्रविरोधश्च। अस्तु तर्हि अद्वितीयपक्ष उक्तदोषविरहादिति चेत्। हंत तर्हि कुतो मामद्वितीयमात्मत्वेन ज्ञातवानसि। त्वद्वचनादुदाहृतशास्त्राच्चेति चेत् एवं तर्हि प्रबुद्धोसि नातः परं प्रष्टव्यमस्ति नह्यात्मनि विदिते ऽपरमविदितं वस्त्वस्ति यत्प्रष्टव्यं स्यात्। अस्त्यनात्मेति चेन्न आत्मनो वा अरे दर्शनेन श्रुत्या मत्या विज्ञानेनेदं सर्वं विदितमितिश्रुत्या आत्मदर्शनेनेतरत्सर्वं दृष्टं भवतीति उक्तत्वात्। ननु इदमनुपपन्नं यदात्मदर्शनेनेतरत्सर्वं दृष्टं भवतीति कुत इति चेत् तथाहि किमितरत्सर्वमात्मनो भिन्नमभिन्नं वा।

If the former, a further fault of yours is that me, your teacher attained to Brahman-hood and unconscious of the least trace even of duality, you imagine to exist as one with a second: and your view contradicts the Veda passage—One without a second: there is no duality here. Grant then the second alternative, because from it the above fault is absent. Then (rejoins the teacher) how do you know me one without a second as identical with Self? Through your statement and that of the Veda text quoted above. In this case you have attained the highest knowledge: nothing remains for you to question: when Self is known, nothing remains to be questioned. The not-Self remains (says the pupil). No! For we have declared that by seeing Self all else becomes seen, in accordance with the passage—Indeed by seeing, hearing, pondering, knowing Self, all this becomes known The pupil again argues that it is impossible that by the knowledge of Self al else should become known. To the teacher's question, Why so?—he replies:—Is all else different from or identical with Self?

नाद्यः अन्यदर्शनेनान्यस्य द्रष्टुमशक्यत्वात् नहि घटे दृष्टे पटो दृष्टो भवतीति शक्यं वक्तुम् अन्यथा तयोरभेदापत्तेः । न द्वितीयः आत्मानात्मनोर्विरोधात् परमार्थसत्यात्माऽभिन्नस्य नेतिनेत्यादिना निषेद्धुमशक्यतया बाधानुपपत्तेश्च अन्यथा आत्मनोऽपि बाधिततया शून्यमेवावशिष्येत । तस्मादात्मदर्शनेन सर्वमेव दृष्टं भवतीत्यनुपपन्नम् । नैषदोषः ।

आत्मसत्तैव द्वैतस्य सत्ता नान्या यतस्ततः ।
आत्मन्येव जगत्सर्वं दृष्टे दृष्टं श्रुते श्रुतं ॥ ५६ ॥

आत्मसत्तातिरिक्ताया द्वैतसत्ताया अभावात् आत्मनि दृष्टे सर्वं द्वैतं दृष्टं भवति यथा रज्जुस्वरूपे दृष्टे तत्राध्यस्तानां स्रग्दण्डादीनां स्वरूपं दृष्टं भवति तद्वत् आत्मनि दृष्टे सर्वं दृष्टं भवतीति नानुपपन्नम् ।

Not different. For by seeing one thing a second thing cannot be seen; thus, a piece of cloth cannot be said to be seen when an earthen pot is seen: if so it would follow that the pot and the cloth were identical. Nor can it be said that all else is identical with Self. For Self and not-Self are contradictories: and because sublation of not-Self would be impossible, since that which is identical with the absolutely real Self could not be negated as in the Śruti passage—Not this, not this:—otherwise, on Self also being proved false, blank non-entity (śūnya) would remain. Hence the statement, that by seeing Self all else becomes seen, is untenable.

There is no fault here replies the teacher:—

Reply: Self, Brahman, is All. To know Self, is to know All: this is Emancipation.

Since the existence of duality is indeed the existence of Self and no other, all the world is seen and heard when Self is seen and heard. ...LVI.

For duality has no existence apart from that of the Self; hence when Self is known, all duality is known; for just as when the rope is known, the things surmised in it sc. the garland or stick (which may be mistaken for it) are also known, so too it is not contradictory that when Self is known all else should be known.

अत एव विधिनिषेधशास्त्रयोरपि नानुपपत्तिः तद्यथा इदं सर्वं यदयमात्मा सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम् एतदात्म्यमिदं सर्वम्। ब्रह्म वा इदमग्र आसीत्। अहं मनुरभवं सूर्यश्चेति। यत्रत्वस्य सर्वमात्मैवाभूत्। नारायण एवेदं सर्वं यद्भूतं यच्च भाव्यम् इत्यादि-विधिशास्त्रं तथा निषेधशास्त्रमपि नेह नानास्ति किञ्चनेति अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति। अतोन्यदार्तं। नतु तत् द्वितीयमस्ति नैवेह किञ्चनाग्र आसीत्। नासदासीन्नोसदासीदित्यादि। भवति हि लोके रज्ज्वां स्रगाद्यध्यासिनं प्रत्युपदेश इदं सर्वं रज्जुरिति नेह स्रगादिरस्तीति तयाप्युभयोरुपदेशयोर्मध्ये कतरः श्रेयानिति चेत् यद्यप्युभयोरेकार्थत्वमेव तथापि विधेरस्ति कश्चिदतिशयः।

Hence also no contradiction attaches to the injunctory and prohibitory Śruti passages Of the former kind are the following:—This everything, all is that Self. O dear One! Existent alone was this in the beginning, one without a second. All this consists of this Self. Brahman indeed, was this in the beginning. (Seeing this, the Ṛishi thought) - I was Manu and the sun. But when to one all has become Self All this that is, and is to be, is Nārāyaṇa. Of the latter kind are the following:—There is no diversity here Now follows the declaration, No! No! For beyond this No there is nothing. Other than this (Brahman) is perishable. There is no second. There was no diversity here in the beginning Entity was not, non-entity was not.

Indeed, in every day life, the instruction given to the man who mistakes a piece of rope for a garland or the like is either - all these imaginary things are that rope, or— no garland or the like exists here. Still it may be asked, which of these two forms of instruction is the better? Though both perform the same function, the injunction has the advantage.

तत्र हि परिदृश्यमानानां या सत्ता सा आत्मैवेत्युक्ते तदन्यन्नास्त्येव आत्मैव परिपूर्ण इतिज्ञानं साक्षादेवाविर्भवति निषेधे त्वर्थान्निषेधाधिष्ठानतया । कथं तर्ह्युभयप्रवृत्तिः विधिनैव पुरुषार्थस्य पर्यवसितत्वादितिचेन्न अधिकारिभेदेनोभयोरुपयोगात् । कश्चिद्धि संसारदुःखेनात्यन्तमुपहतचेतास्तन्निवृत्तिमेव प्रथमतः कामयते तं प्रत्यादौ निषेधवाक्यमेवोपयुक्तं विधिवाक्यं तु पश्चात् यथा सर्पमारोप्य भिया कम्पमानं प्रति नायं सर्प इतिनिषेध एवादौ न तु विधिः । यस्त्वत्यन्तमनुद्विग्नः किमस्य जगतस्तत्त्वमित्येवं जिज्ञासते तं प्रतीदं सर्वं यदयमात्मा इत्येवोत्तरं न्याय्यं निषेधस्तु पश्चात् ।

For in this case when it is enjoined that the existence of all things seen is indeed the Self, then the knowledge that nothing other than Self exists, that Self is absolute, directly manifests itself: whereas in the case of the negation the knowledge is gained indirectly through inference that Self is the substrate to which the negation refers. How then it may be asked, do both find scope: since the aim of man (sc. moksha) would be reached through the injunction alone? Not so, for both forms of instruction are of service according to the varying qualifications of those who seek moksha. Thus, he whose mind is utterly overthrown by the pains of life desires first of all the cessation of these pains: in his case the prohibitory text is certainly the first to be of service, after which the injunctory text avails. To illustrate:—he who fancying he sees a snake trembles with fear needs, in the first instance, the prohibition sc. this is no snake that you see—, but does not need the injunction sc. this that you see is a rope or stick &c. Again in the case of the man who quite undisturbed by this world, desires to know what reality underlies it, the fitting answer is—All this world is Self. After this may come the prohibitory text.

यथा सर्पमध्यस्य तत्प्रतीकारज्ञानान्निर्भयः पृच्छति किमिदं पुरोवर्त्तीति तं प्रति रज्जुः इत्येवोत्तरं नतु निषेधः । तस्मादवस्थाभेदेनोभयोरुपयोगान्न कस्यापि वैयर्थ्यमतो विधिनिषेधाभ्यां परिपूर्णसच्चिदानन्दः प्रत्यगात्मेति सिद्धम् ।

२६ ननु तथापि कोऽसौ द्वैतद्रष्टेति अद्यापि न निश्चितम् इति चेत् यस्त्वं पृच्छसि । कोऽहमिति चेत् ब्रह्मैव । एवं तर्हि ब्रह्मणो विकारित्वापत्तिरितिचेत् कोऽयं विकारो द्वैतं तद्दृष्टिर्वा । नाद्यः द्वैतस्य सर्वस्य ब्रह्मातिरिक्तस्य निषिद्धत्वात् नहि यन्नास्ति तत्कस्य चित्परिणामः यथा नरशृङ्गम् । ततोऽस्य वैलक्षण्यं दृष्टिरेवेति चेत् तर्हि प्राप्ताप्राप्तविवेकेन दृष्टिरेव परिणामोऽस्तु तदतिरिक्तदृश्याभावात्

Thus for him who fancying he sees a snake and knowing the antidote for its poison can fearlessly ask,—What is (really) this thing before me?—the fitting answer is—You see a snake—and not the prohibition, sc.—This that you see is no snake. To sum up—neither form of Śruti is useless, for both find scope under varying circumstances. Hence it has been proved by both injunctory and prohibitory texts that the absolute Intelligence, Existence, Bliss, is the Self within.

Objection : Pariṇāmavāda follows : Self must be *materially* changed into not Self, for duality is a fact of experience Reply No ! the change is illusory—Vivarttavāda —For the indivisible Self could not be *materially* changed.

29. 'But the pupil may again urge that the question, who this seer of duality is, has not yet been decided. You who question me are that seer of duality says the teacher. Then who am I? asks the pupil—You are really Brahman. Then (rejoins the pupil) it follows that Brahman suffers modification. What (inquires the guru) is this modification? Is it duality; or the vision of duality? Not the former, for all duality as distinct from Brahman has been negated (by Veda); nor indeed can the non-existent, e. g. the horns of a man, be a modification of anything. It may be said, the difference between duality (asya) and the above example (tataḥ) is the fact of a vision of duality. Well then, it follows through induction (prāptāpraptaviveka cf. p. 106) that vision *only* is the pariṇāma, material modification, of Brahman; for apart from it things visible exist not.

ओमिति चेन्न दृष्टेः फलरूपाया आत्मरूपान्तर्भावेन तत्परिणामत्वानुपपत्तेः नहि स्वयं स्वस्य परिणामः कार्त्स्न्यैकदेशविकल्पेन परिणामपक्षानुपपत्तेश्च । ननु विवर्तपक्षेप्ययं दोषः समान इति चेत् न विवर्त्तस्वरूपापरिज्ञानात् नह्यधिष्ठानस्वरूपातिरिक्तं विवर्त्तो नाम किञ्चिद्वस्त्वस्ति यदाश्रित्य कार्त्स्न्यैकदेशविकल्पावतारः स्यात् किन्त्वधिष्ठानमेव दोषवशाद्विलक्षणाकारेण भासमानं विवर्त्त इत्युच्यते । स एव विलक्षणाकारः कस्येति चेत् वस्तुतो न कस्यापि अधिष्ठाने तस्य बाधात् अन्यत्राप्रतीतेः । भङ्ग्यन्तरेणासत्ख्यातिव्युत्पादनमेवैतदिति चेन्न ख्यातेरप्यध्यस्तत्वात् असत्ख्यातिवादिना च चार्वाकेण तथाऽनभ्युपगमात् सर्वशून्यवादिनस्तु पूर्वं निरस्तत्वात् ।

This is so, replies the pupil. No! (rejoins the guru) for it is impossible that this vision or product, as included within the Self, should be at pariṇāma of Self: since a thing is not a pariṇāma of itself; and because the pariṇāma view is vitiated by the alternative assumptions of whole or a part of Self undergoing pariṇāma (cf. Ved. Sū. II, 1, 26.) Nor may it be argued that the same fault attaches to the vivartta view; for you have not understood the meaning of vivartta. A vivartta, forsooth, is no reality existing apart from its substrate, in regard to which the above alternatives may find place; but what is termed a vivartta is nothing but the substrate itself, which through some defect appears under a different form. But *different form* of what? asks the pupil. Of nothing really; for this *different form* has its destruction in, *i. e.* by knowledge of, its substrate (Self), since this *different* or not-Self form, is not perceived in another substrate. Then (rejoins the pupil) this is simply a teaching of asatkhyāti under another guise. Not so, says the guru; for in our view the khyāti (perception) also is illusory, which the Chārvāka or holder of asat khyāti will not admit (as he holds that the khyāti is real): moreover we have overthrown him who holds to a universal blank (cf. p 72).

किमिदं ख्यातेरध्यस्तत्वमितिचेत् वस्तुतो निष्प्रकारिकायाः सप्रकारकत्वेन भानमेवेति गृहाण। तस्यैव प्रकारस्य स्वरूपं वाच्यमितिचेत् वस्तुतो निर्विकल्पकख्यातिस्वरूपमेव। तथैव तर्हि प्रत्येतव्यमिति चेत् उचितमेव तद्विदस्य ननु भ्रान्तस्य तस्य भ्रान्तत्वादेव। किं तेनाधिकं प्रतीतमिति चेत् न किमपि। कथमसौ भ्रान्त इति चेत् अन्यप्रतीतेरन्यविषयत्वाभिमानादेव यथा लोके रज्जुं प्रत्येति सर्पमभिमन्यते अयं सर्प इति। कोऽसावभिमान इतिचेत् परमार्थस्थितविषयस्य भासमानस्याप्यसत्त्वनिश्चयः। यदि वस्तुतो रज्जुप्रत्यय एव कथं तर्हि सर्पोल्लेखितया स प्रत्ययः परिस्फुरतीतिचेत् आकारसाम्यात् दोषवशाच्चेति वदामः।

But what is this illusory character of perception? Know (replies the guru) that it consists in the appearing in consciousness of that which is really predicateless as possessing a predicate (khyāti, here=chaitanya, Self). But (rejoins the pupil) the nature of the said predicate you should explain. It is really nothing but the predicate-less Self (khyāti). Then it should be perceived as such. True enough (rejoins the guru) in the case of him who knows Self (tat); but not in the case of the deluded man, simply because he is deluded. What, then, over and above (the real substrate) does this deluded man perceive? Nothing really. Why then call him deluded? Because he fancies that his perception of one thing makes known something different: thus, in common life, he sees a rope and fancing it to be a snake, says—this is a snake. But what is this fancy of his? It is his conviction as to the non-existence of a really existing thing, sc. the rope, which is even present to his consciousness. But if he really has a perception of the rope, how does that perception present itself to him so as to make him use the word snake? This, we reply, is due to similarity (between rope and snake) and to certain defects (of eye-sight &c, which stand, generically, for Nescience).

अत एव बाधोत्तरं मन्यते रज्जुरेव सर्पतया मया प्रतिपन्नेति । तत्किं सर्पो न प्रतिपन्न एव । कः संशयः । एवं तर्ह्यनुभवविरोध इति चेन्न भ्रान्तानुभवविरोधेऽप्यविरोधात् तस्य किं प्रतीतं किं न प्रतीतमिति विवेकविरहात् अभ्रान्तस्य तदनुभवाभावेनानुभवविरोधाभावात् ।

३० नन्वेवं सति अधिष्ठानं तत्प्रतीतिश्चेति द्वयमेवं दृष्टान्ते अतिरिक्तप्रतीतिप्रत्येतव्ययोरसत्त्वस्य व्युत्पादनात् दार्ष्टान्तिके त्वधिष्ठानं तत्प्रतीतिश्च द्वयमप्यात्मैव स्वयंप्रकाशे प्रतीत्यन्तरानभ्युपगमात् तथा च तदतिरिक्तस्य विवर्तस्य दर्शयितुमशक्यतया गतं विवर्तवादेन ततोतिस्फुटः स्वसिद्धान्तपरित्याग इति चेत्

Hence after the false perception of the snake has been destroyed, his consciousness takes the form—this rope indeed was perceived by me in the shape of a snake. What! did he not perceive a snake at all! Certainly not. Then, in this way consciousness is violated. Not so; because in contradicting the consciousness of a *deluded* man, no violence is done, for he does not discriminate between what he perceives and what not; and because no violence is done to the consciousness of the *undeluded* man, in that he was not conscious of the snake at all.

30. The pupil argues that since the rope alone is perceived (evam sati, cf. supra) there are, in the example, two things only, viz. substrate or rope, and the cognition of it; for the non-existence of any cognition or cognised object other than these has been taught: whereas, in the illustrated case, both substrate and cognition of it are the Self alone, for in regard to self-luminous Self, a second cognition (making Self known) is not to be assumed. And so, (continues the pupil) since a vivartta distinct from Self cannot be shown, the vivartta doctrine is done away with: hence the teacher clearly abandons his own doctrine.

Objection: Vivarttavāda, then, is false also.
Reply: Yes! false for him who knows the truth; but a way to the truth for him who knows it not. cf. pp 116-7.

न। तस्य बालव्युत्पत्तिमात्रप्रयोजनतया उपनिषत्तात्पर्याविषयत्वात् अन्यथा विपरीतदृष्ट्यैव द्वैतापत्तेः। मिथ्यैव सा दृष्टिरिति चेत् किमिदं मिथ्यात्वं त्रैकालिकासत्त्वम् असत्त्वाविशेषे ऽपि कदाचित्प्रतीयमानत्वं वा । नाद्यः इष्टापत्तेः । न द्वितीयः तत्प्रतीत्यैवाद्वैतक्षतेस्तादवस्थ्यात् । साक्ष्येव तत्प्रतीतिरिति चेत् न तस्यासङ्गत्वात् असङ्गो ह्ययं पुरुष इति श्रुतेः साक्षिणः कादाचित्कत्वानुपपत्तेश्च ।

No! (replies the latter) for vivartta doctrine is not the final aim of the Upanishads, in that it serves only to instruct the uninitiated: otherwise, from the false perception of duality would follow duality as something real. But (replies the pupil) that perception is false. What does falsity mean? Does it mean non-existence in time, present past and future? Or, since non-existence is a unity indivisible, does falsity mean that the object is perceived temporarily, (occasionally)? * The former definition will not avail you (says the guru), for that is the meaning of the term accepted (by us Vedantins). Nor will the latter avail, for even through such occasional perception, Monism (the final teaching of the Upanishads) is overthrown all the same. But (argues the pupil) that occasional perception is the Witness itself. No, because the Witness is unrelated, as declared in the passage—For this Person is unrelated:—and because temporary character cannot attach to the Witness.

---

* असत्त्वं मिथ्या इत्युक्ते गगनकमलादौ अतिव्याप्तिस्तन्निवारणाय कदाचित्प्रतीयमानत्वमिति कादाचित्कप्रतीतिविषयत्वम् इति यावत् । प्रतीतिरत्र अपरोक्षा विवक्षिता । असत्त्वं नाम सद्विलक्षणत्वम् । कादाचित्कप्रतीतिविषयत्वं वृत्तिव्याप्यत्वेन आत्मन्यप्यस्ति इतितदर्थं विशिनष्टि असत्त्वाविशेषेऽपीति । N. D's gloss.

The qualification *occasionally* excludes a sheer non-entity, sc. a sky-lotus, which is never perceived. Again, perception of Self as an object, effected as this is through a vṛitti or modification of the antaḥkaraṇa (vṛittivyāpyatvenā) might be considered *occasional*, but is excluded from the context by the mention of non-entity.

किञ्चात्मनो द्वैतदृष्टिः प्रमाणसिद्धा भ्रान्तिसिद्धा वा। नाद्यः अद्वैतागमविरोधात्। नेतरः भ्रान्तिसिद्धपदार्थस्यासत्त्वनियमात्। अन्यथा भ्रान्तित्वानुपपत्तेः। तथा चात्मनो द्वैतदृष्टिः कदाचिदपि नास्त्येव। तथा च यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यतीत्यादि आत्मनोऽविलुप्तदृष्टिस्वभावस्य द्वैतदृष्टिं वारयति।

बालान्प्रतिविवर्त्तोऽयं ब्रह्मणः सकलं जगत्।
अविवर्त्तितमानन्दमास्थिताः कृतिनः सदा॥

इति स्मृतिरपि आत्मनो द्वैतदर्शनाभावमनुमन्यते।

Further, is this vision of duality pertaining to Self effected by a pramāṇa (trustworthy source of knowledge), or by an erroneous cognition? Not by the former, for this would contradict Śruti passages teaching advaita; nor by the latter, for the rule is that the thing made known by erroneous cognition is non-existent; otherwise the cognition could not be said to be erroneous. Thus vision of duality never indeed pertains to Self. So also Śruti debars vision of duality from Self whose nature is unbroken vision, as in the passage,—when he does not see, he still is seeing, though he sees not.

Smṛiti also approves the same, thus,—For the uninitiated it is taught that the whole world is this vivartta of Brahman. The wise hold it to be Bliss unmodified.

*(To be continued.)*

*A. V.*

# खण्डनखण्डखाद्यम् ॥

## अथ चतुर्थः परिच्छेदः ।

(*Continued from page* 280 Vol XII).

मू० [a] "तावतापि लक्षणानिरुक्तेः * [b] अपरप्रतिषेधमुखेन प्रतीयमानत्वमेव भावत्वम् ? *–इति चेन्न, [c] चक्षुरादिभिर्भावत्वाग्रहणप्रसङ्गात् नहि प्रतीयमानत्वं चक्षुरादिग्राह्यम् [d] अभावोनास्तीति प्रतीतेर्निर्विषयत्वप्रसङ्गाच्च [e] नहीयं भावविषया भवत्यन्ते परनिषेधमुखेन प्रतीयमानत्वात् नाप्यभावविषयैव तन्निषेधार्थत्वात् * [f] नैवं प्रतीतिरेव स्यात् ? *–इति चेन्न, [g] शाब्द्याः प्रतीतेः सम्भवात् ।

टी० ॥ एतादृशप्रतीतिविरहेपि स्वाभावप्रतिषेधात्मकत्व वस्तुसिद्धं दुरपह्नवं भावस्येत्यसम्भवस्तदवस्थ एवेत्याह–। [a] 'तावतापी''ति ॥ ननु परप्रतिषेधमुखेन प्रतीयमानादभावादपरप्रतिषेधमुखेनप्रतीयमानत्व भावस्य विशेषः स एव लक्षणमिति कथं लक्षणानिरुक्तिरित्याह–। [b] "अपरे''ति । प्रतीतेश्चक्षुरवेद्यत्वेन तद्घटितं भावत्वमपि चक्षुरवेद्यं स्यादित्याह–। [c] "चक्षुरि''ति । यदि परप्रतिषेधमुखेनाप्रतीयमानत्वं भावत्वं भवेत्तदा दोषान्तरमाह–। [d] "अभाव''इति । निर्विषयत्वमेवोपपादयति–। [e] "नहीं''ति । भावेषु सर्वदा विधिमुख एव प्रत्ययो नतु निषेधमुखोपीति शङ्कते–। [f] "नैवमि''ति । आकाङ्क्षादिमहिम्ना शब्दादेतादृशी प्रतीतिः स्यादेवेत्याह–। [g] "शाब्द्या" इति ।

मू० आकाङ्क्षादिमद्भिः पदैः प्रतिस्वं संसर्गबोधनात् [a] "अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि" * प्रत्यक्षप्रतीतेस्तथा विवक्षितत्वा(१)दयं न दोष ? *– इति चेन्न,

(१) "अभावो नास्तीति प्रतीतेर्निर्विषयत्वप्रसङ्गाच्च'–इति सिद्धान्त्युक्तमाक्षिप्य समाधत्ते–यद्यपीत्यादिना ।

[c] सर्वस्य भावस्य प्रत्यक्षत्वानङ्गीकारात् * सेश्वरपक्षे सर्वं प्रत्यक्षम् ? *—इति चेन्न, [d] तेन तेषामपरप्रतिषेधात्मकतया ग्रहणे प्रमाणाभावात् * [e] तेषां विधिरूपतया तथैव ग्रहणम् ? *—इति चेन्न, [f] विधिरूपत्वस्यानवधारणात् * [g] यदपरप्रतिषेधात्मकतया शब्देनापि बोध्यते तत्तावद्भावरूपम् ? *—इति चेन्न, [h] परपदवैयर्थ्यात् ।

टी० ॥ ननु विषय एव न कश्चित्तादृशो यत्र शब्दोपि प्रतीतिं जनयेदित्यत आह—। [a] "अत्यन्ते"ति । यद्यप्य(१)सत्ख्यातिवादिनं प्रति प्रतीतेर्निर्विषयत्वापादनं न दोषः अन्येषां मते योग्यताविरहात् प्रतीतिरियं न शब्दादपि अन्यथाख्यातिश्चेत्तदा सत्येव विषयस्तथापि खण्डनान्तरावष्टम्भेनेदमुक्तं ॥ [b] "तथे"ति । अपरप्रतिषेधमुखत्वस्येत्यर्थः । अतीन्द्रियभावाव्याप्तिमाह—। [c] "सर्वस्ये"ति ॥ [d] "तेने"ति । ईश्वरेण परमाण्वादीनामपरप्रतिषेधमुखेन प्रतीयमानत्वं नतु परप्रतिषेधमुखेनेत्यत्र प्रमाणाभावादित्यर्थः ॥ ईश्वरस्यातीन्द्रियेषु विधित्वेनैव भानमिति नाव्याप्तिरित्याह—। [e] "तेषामि"ति । विधित्वं भावत्वमेव पर्यवस्येत्तच्चानिरूपितमेवेत्याह—। [f] "विधी"ति । नन्वतीन्द्रिये भावे यद्यप्यपरप्रतिषेधात्मकतया प्रत्यक्षेण न भानं तथापि शब्देन तादृशी प्रतीतिरस्त्येवेत्याह—। [g] "यदि"ति । अत्रापि पूर्ववत् परपदवैयर्थ्यमित्याह—। [h] 'परे'ति ।

मू० [a] तत्त्यागेप्यचाक्षुषादित्वापत्तेः * [b] सुरभि चन्दनमित्यादाविवाक्ष्योपनीतभागवत्तच्चाक्षुषत्वं भविष्यति ? *—इति चेन्न, [c] तथाविधविषयेण विशिष्टाया बुद्धेर्विषयविशेषणताग्रहे स्वाश्रयोंशतः स्यात् तेनोपलक्षितायास्तथात्वे चाभा-

(१) "तथाविषयत्वात्"—इति क्वाचित्कस्त्वपपाठः ।

वविशिष्टभावग्रहार्थस्याभावस्य तत्त्वापत्तेः तेन [d] यदेवंविधं तद् भावरूपमिति च ब्रुवतैवं विधत्वात् भावत्व मन्यद्वाच्यम्

टी० ॥ ननु परपदत्यागेनैव लक्षणमस्त्वित्यत आह–। [a] "तत्याग"-इति । प्रतीतिगर्भभावत्वस्याचाक्षुषत्वापत्तिरित्यर्थः ननूपनीतमेव प्रतीयमानत्वं चक्षुषापि गृह्यतामित्याह–। [b] "सुरभी"ति । विषयविशिष्टा प्रतीतिरुपनीता सती विशेषणं भवतीति विषयांशे विषयवृत्त्यावंशत आत्माश्रयः अथोपनीतायां प्रतीतौ विषय उपलक्षणं प्रतीतिश्च पुनर्विषयेप्युपलक्षणं तदा विशिष्टस्य तद्विशिष्टाश्रयतायामात्माश्रयो न भवति किंतु घटाभाववद्भूतलमितिप्रतीत्या विषयीक्रियमाणस्याभावस्यापि भावत्वं स्यात् प्रतिषेधानात्मकतया या भूतलप्रतीतिस्तया भावस्याप्युपलक्षितत्वादित्याह–। [c] "तथाविधे"ति । प्रतीतौ वा विषय उपलक्षणं तथापि स एव दोषः ग्रहार्थस्याभावस्येति पाठे ग्रहस्यार्थो विषयो योऽभावस्तस्येत्यर्थः दोषान्तरमाह–। [d] "यदेवंविधमि"ति । यत्परप्रतिषेधानात्मकतया प्रतीयमानं तद्भावस्वरूपमिति । त्वयोच्यते तथाच लक्षणाल्लक्ष्यतावच्छेदकं भावत्वमन्यदेव त्वया वक्तव्यं तच्च दुर्वचमित्यर्थः ।

मू० [a] अभेदे च यदेवंविधं तद्भावरूपमिति नियमानुपपत्तेः [b] अस्योपलक्षणत्वे चोपलक्ष्यत्वस्यान्यस्य वाच्यत्वात् अस्यैव भावार्थत्वे वाऽभावो नास्तीति प्रीयमानस्य भावस्य भावत्वाभावप्रसङ्गात् [c] भिन्नं च भावत्वं न सम्भवति षट्पदार्थव्यतिरेकप्रसङ्गादिति यच्च किञ्चिद्भावत्वं तत्स्वात्मन्यस्ति नो वा अस्ति चेत्स्वात्मनि वृत्तिविरोधः नास्तित्वे [d] त्वस्यान्यप्रतिषेधमुखेनाप्रतीयमानस्याभावत्वप्रसङ्ग इति

टी० ॥ अथ लक्षणस्य लक्ष्यतावच्छेदकरूपादभेदमेव मन्यसे तदा लक्षणलक्ष्यतावच्छेदकयोर्यो नियमः समव्याप्तिस्तदनुपपत्तिः अभेदे व्याप्यभावात् भवति पृथिवीत्वगन्धवत्त्वयोः समनियमो भिन्नयोर्नत्वभिन्नयोरित्याह-। [a]"अभेदे चे"ति ॥ ननु यल्लक्षणत्वेन दर्शितं तदुपलक्षणं नचोपलक्षणेनापि नियमोऽङ्गीक्रियते येनाभेदे तदनुपपत्तिः स्यादित्यत आह-। [b]"अस्ये"ति । यल्लक्षणत्वेनोक्तं तच्चेदुपलक्षणं तथापि भावत्वमुपलक्ष्यतावच्छेदकमन्यदेव वक्तव्यं नह्युपलक्ष्यतावच्छेदकं भवतीत्यर्थः भवतु वा लक्ष्यतावच्छेदकमेव रूपं लक्षणं तथापि प्रतिषेधानात्मकतया प्रतीयमानत्वं लक्षणमव्यापकमित्याह-। [c]"अस्ये"ति। अभावो नास्तीति भावस्यापि परप्रतिषेधमुखेन प्रतीयमानत्वादित्यर्थः ननु लक्षणभिन्नमेव भावत्वं किञ्चित्स्यादित्यत आह-। [d]"भिन्नं चे"ति । विकल्पितप्रकारभिन्नत्वे तस्य सप्तमपदार्थत्वापत्तिरित्यर्थः ॥ [e]"स्वस्ये"ति । अपरप्रतिषेधमुखेन(१) प्रतीयमाने भावत्वे लक्षणमव्यापकमित्यर्थः । ननु यद्यपि भावत्वस्वरूपं(२)सत्तासंबन्धवत्त्वमेव तच्च सत्तायां सत्सु(३) च घटादिष्वविशिष्टं सामान्यादिष्वेकार्थसमवायेन समवाये च स्वरूपसंबन्धेनैवं सर्वत्रेति नाव्याप्त्यतिव्याप्ती लक्षणं तु सत्तासंबन्धबोधविषयत्वं तस्य चानुगतत्वेपि न दोषः नहि लक्ष्यलक्षणयोरैक्याद्यन्त्रनियमः सत्तासंबन्धवत्त्वेपि सत्तासंबन्धवत्त्वमस्त्येव तच्च तदेवान्यद्वेति न दोषः प्रमेयत्वे प्रमेयत्ववत् तथापि सत्ताखण्डनाभिप्रायोत्रापीति भावः ।

मू० * [a]"नन्वेवमीश्वरे प्रमाणानुपदर्शनात्तदभाव एवापद्यते इति चेत् ? *—अभावत्वं किमभिधीयते * निषेधात्मकत्वमिति चेत् ? *—तद्यदि प्रतिक्षेपात्मकत्वं तदा भावेप्यस्ति भावाभावयोर्द्वयोरपि परस्परप्रतिक्षेपात्मकत्वस्वीकारात् * [b]अथा-

(१) अपरप्रतिषेधमुखेन=परप्रतिषेधाऽनात्मकत्वेनेत्यर्थ इति न व्याख्यानव्याख्येययोर्वैयधिकरण्यम् ।

(२) "लक्ष्यतावच्छेदकम्"-इति शेषः ।

(३) सत्सु=सत्तावत्सु ।

भावत्वमेव ? *—तदा न निवृत्तः पर्यनुयोगः [c] एतेन निषेधमुखेन प्रतीयमानत्वमिति निरस्तम् * भावविरोधित्वम् ? *—इति चेन्न, सर्वभावविरोधित्वं वा तद्विशेषविरोधित्वं वा नाद्यः असिद्धेः ।

टी० ॥ अभावत्वखण्डनाय सङ्गतिङ्करोति—। [a] "नन्वेवमि"ति । यद्यपि प्रमाणानुपदर्शनमात्रेण नाभावपर्यवसानं तथापि सङ्गतिमात्रार्थमेतदुक्तम् । [b] "अथाभावत्वमेवे"ति । प्रतिषेधात्मकत्वमित्यपुपरञ्जनीयं । [c] "एतेने"ति । निषेधशब्देनाभावाभिधाने पर्यनुयोगानिवृत्तिः प्रतिक्षेपाभिधाने च भावेऽतिव्याप्तिरिति पूर्वोक्तदोषेणेत्यर्थः अभावोनास्तीतिप्रतीत्या निषेधमुखेन भावस्यापि प्रतीयमानत्वादित्यर्थः ।

मू० [a] नहि घटाभावो भूतलादि विरुणद्धि नापि द्वितीयः [b] भावानामपि केषाञ्चित्तथाभावात् * अथ सहानवस्थानं विरोधो विवक्षितः स भावानां नास्ति ? *—इति चेन्न, गोत्वाऽश्वत्वादौ [c] तस्यापि भावात् * एकविधावन्यनिषेधः [d] स ? *—इति चेन्न, [e] भेदे भावभेदयोरेव प्रसङ्गात् [f] * एकविधिरेवान्यनिषेधः स ? *—इति चेन्न, निषेधस्याभावार्थत्वे भावार्थत्वे वासिद्धेः * नास्तीतिप्रतीयमानत्वम् ? *—इति चेन्न, घटाभावो नास्तीति घटस्य तथाप्रतीयमानतया [g] ऽभावत्वापत्तेः ॥

टी० ॥ [a] "नही"ति । सहानवस्थानं प्रतियोग्यनुयोगिभावो वा विरोधे वाच्यस्तदुभयं च घटाभावस्य भूतलादिना न भवतीत्यर्थः ॥ [b] "भावानामि"ति । उत्तरसयोगेन कर्मणो विभागस्य च वध्यघातकविरोधदर्शनादतिव्याप्तिरित्यर्थः [c] "तस्यापी"ति । सहानवस्थानस्यापीत्यर्थः । [d] "स" इति । विरोध इत्यर्थः नीलविधौ पीतानिषेधोऽस्तीति तत्रातिव्याप्तिरित्याह—। [e] "भेदे" इति । नीलपीतयोर्न परस्परप्रतिषेधात्मकत्वं किंतु

परस्परविरहव्याप्यत्वमात्रमतो नातिव्याप्तिरिति शङ्कते—। [f] "एकेति । निषेधपदं यद्यभावार्थकं तदा तदनिरूपणादेवासिद्धिरथ भावार्थकं तथाप्यसिद्धिर्नहि निषेधपदं भावमभिधत्ते इत्यर्थः भावार्थत्वे एकविधिना-परनिषेधोऽपि तु विधिरेवेत्य(१)सिद्धिरित्यप्याहुः ॥ [g] "अभावत्वापत्तेरि"ति । अभावलक्षणस्य भावेतिव्याप्तेरित्यर्थः यद्वा लक्षणस्य लक्ष्यतावच्छेदकधर्म-व्याप्यत्वेन भावेचेल्लक्षणं गतं तदा तस्याभावत्वापत्तिरित्यर्थः ॥

मू० [a] अस्तीतिभावत्वनिरुक्तौ यदुक्तं दूषणं तदापत्तेश्च * प्रतियोगिनिरूपणाधीननिरूपणत्वम् ? *—इति चेन्न, [b] प्रतियोगिनः परार्थत्वेतिप्रसङ्गात् विरोध्यर्थत्वे तदनिरुक्तेः [c] असदर्थत्वे नञर्थस्यासिद्धेः अतीतानागतज्ञानादौ विषयादिनातिप्रसङ्गात् यच्च किञ्चिदभावस्य लक्षणमुच्यते स भावोभावो वा [?] नाद्यः भावस्याभावानाश्रितत्वात् [d] विषयिधर्मेण च कथमपि तथात्वे तन्निर्वाच्यं स्यात् ॥

टी० ॥ [a] "अस्ती"ति । अस्तीतिप्रतीयमानत्वं भावत्वमत्रास्ति शब्दार्थो वा विवक्षितस्तच्छब्दोल्लेखमात्रं वा आद्येऽसिद्धिरन्त्येऽतिप्रसङ्गः किंचाभावस्य प्रतीतिगर्भत्वे तदज्ञानुपत्वाद्यापत्तिरित्यादिदूषणमत्राप्यूह्य-मित्यर्थः ॥ [d] "प्रतियोगिन" इति । परनिरूपणाधीननिरूपणत्वं बुद्धि संयोगादावतिव्यापकं विरोधिनिरूपणाधीननिरूपणत्वं च विरोधानिरुक्त्या दुर्वहमित्यर्थः ॥ [c] "असदि"ति । असन्निरूपणाधीननिरूपणत्वं च ज्ञान-संयोगादौ नास्ति तत्र सत एव विषयस्य संयोगिनश्च निरूपकत्वादभा-वस्य त्वसतो घटादेर्निरूपकत्वं तदसत्त्वं देशतः कालतो वेति यदि तदा नञर्थाभाव एव वाच्यः सचाद्याप्यनिरूपित एवेत्यर्थः क्वचिन्नार्थस्येति पाठः तत्रापि नञर्थस्येत्यर्थः ॥ [d] "विषयो"ति । प्रमेयत्वाभिधेयत्वादि-र्विषयीधर्मो भाव एवाभावेपि वर्तत इति यदि तदा स विषयीधर्मः क्वचि-न्निर्वाच्यः स्यादित्यर्थः ॥

(१) इति शब्दस्तस्मादित्यर्थं । तस्माल्लक्षणस्याऽसिद्धिरित्यर्थः ।

मू० * [a] "अन्यदेव तद्वत्?*—इति चेन्न, [b] तद्वद्भावस्याभावत्वे स्ववृत्ते [c] भावत्वे च व्याघातात् न द्वितीयः [d] तस्यात्मनि वृत्तौ विरोधापत्तेः अवृत्तावव्यापकत्वप्रसङ्गादिति [e] *प्रतिक्षेप्यविशिष्टमेव यत्प्रतिभाति सोभाव?*—इति चेन्न, प्रतिक्षेपानिरुक्तौ प्रतिक्षेप्यानिरुक्तेः विशिष्टशब्दार्थश्च निर्वचनीयः स्यात् [f] तच्च विशिष्टं विशेषणविशेष्यतत्सम्बन्धेभ्यो भिन्नमभिन्नं वा नाद्यः।

टी० ॥ "अन्यदेवे"ति। तद्बुद्धिविषयिधर्मवदेव किञ्चिद्भावरूपप्रभावलक्षणं स्यादित्यर्थः तद्वद् अभाववत् षट्पदार्थातिरिक्तमन्यदेव लक्षणमभावस्ये"त्यर्थ इत्यन्ये ॥ [b] "तद्वदभावस्ये"ति। तद्वान् लक्षणवान् योऽभावस्तस्येत्यर्थः लक्षणविशिष्टोऽप्यभावो यद्यभाव एव तदा तत्रापि तल्लक्षणं वाच्यमिति तदा स्वविशिष्टे स्ववृत्तावंशत आत्माश्रय इति भावः ॥ [c] "भावत्वे" इति। लक्षणविशिष्टोऽप्यभावो भाव इति वाक्यमेव व्याहतं नहि भावोऽभावो भवतीत्यर्थः ॥ [d] "तस्ये"ति। अभावस्य यल्लक्षणं तदभावात्मकमेव यदि तदा तत्रापि तल्लक्षणाङ्गीकारे स्ववृत्तित्वमनङ्गीकारे चाव्याप्तिरित्यर्थः प्रतिक्षे"प्येति। निषेध्यविशिष्ट एवभावो भासते भवति हि घटाभावः पटाभाव इत्यादिप्रतीतिरिति शङ्कार्थः प्रतिषेधप्रतियोगी हि प्रतिषेध्यः प्रतिषेध एवाद्यापि न निरूपित इत्यर्थः यद्यपि सत्तात्यन्ताभावत्वमभावत्वं सचात्यन्ताभाव एक एवेति तदनुगतधर्मज्ञानं विनाप्याकाशादिवद्ग्रहीतुं शक्यते एव सामान्यादौ च सत्तावत्त्वमेकार्थसमवायादिति न तत्रातिव्याप्तिः नच सत्तात्यन्ताभावेऽव्याप्तिस्तत्रापि तद्बुद्धेः नहि सत्तायामपि सत्ता तथापि सत्तैव नास्तीत्यभिप्रायः(१) विशिष्टत्व-

(१) अस्तु वा यथा कथं चित्प्रतिक्षेप्यस्य निरुक्तिर्विशिष्टशब्दार्थ एवा निर्वचनीय इति विशिष्टानिर्वचनीयता प्रपञ्चेन विशिष्टखण्डनखण्डाद्विशिष्टपदसम्भिन्नं लक्षणमनुचितमित्यभिप्रेत्याह-विशिष्टखण्डनेनेति-

खण्डनेन लक्षणामात्रमेव खण्डितं स्यादित्यभिप्रेत्य विशिष्टं खण्डयति–। [f] "तत्रे"ति।

मू० [a] दण्डपुरुषसंबन्धमन्तरेण [b] दण्डिनोऽन्यस्याप्रतीतेः दण्डिनमानयेत्युक्ते तदानयनप्रसङ्गाच्च * [c] तत्सम्बन्धेनोपलक्षितत्वात्तथा ? *–इति चेन्न, [d] अतद्वत उपलक्ष्यत्वेतिप्रसङ्गात् [e] तद्वतश्चान्यत्वात् * [f] सम्बन्धो हेतुः स च तदधिकरण एव ? *–इति चेन्न,

टी० ॥ अतिरिक्तं विशिष्टमनुपलब्धिबाधितमित्याह–। [a] "दण्डे"ति। व्यवहाराविषयत्वादपि तन्नास्तीत्याह–। [b] "दण्डिनमि"ति। दण्डपुरुषसम्बन्धातिरिक्तं किमपि तत्र न व्यवह्रियत इति भावः ननु दण्डपुरुषयोः सम्बन्धेन विशिष्टमुपलक्षितमतो विशिष्टे प्रतीतिव्यवहारौ भवन्तौ दण्डपुरुषावादायैव भवत इत्याह–। [c] "तत्संबन्धेने"ति। तद्विशिष्टं तया व्यवहारविषयः तथाच विशेषणविशेष्ये अपि व्यवहारविषयाविति भावः विशेषणविशेष्याभ्यां विनाकृतं विशिष्टमुपलक्ष्यं ताभ्यां विशिष्टं वा आद्यं दूषयति–। [d] "अतद्वत" इति तद्विनाकृतस्योपलक्ष्यत्वे दण्डिनमानयेत्युक्ते कुण्डलिनमानयेत्यतिप्रसङ्ग इत्यर्थः ॥ अन्त्यं दूषयति–। [e] "तद्वत" इति। दण्डपुरुषविशिष्टं चेदुपलक्ष्यं तदा विशिष्टस्यान्यत्वेन दण्डपुरुषयोरानयनाभावप्रसङ्गस्तदवस्थ एवेत्यर्थः। [f] "सम्बन्ध" इति। विशिष्टताघटकः सम्बन्धः स च विशेषणविशेष्योभयाश्रय इति विशिष्टे प्रतीतिव्यवहारौ विशेषणविशेष्ययोरपि भवत इत्यर्थः ॥

मू० [a] संबन्धात्तदधिकरणसंबन्धान्यत्वापत्तेरिति नैष पन्थाः * [b] तत्सम्बन्धिनि तद्व्यवहार ? *–इति चेन्न, [c] तस्यापि विशिष्टत्वेनान्यत्वापत्तौ व्यवहारविषयगतविशेषस्य वक्त-

मशक्यत्वात् [d]एवं परम्पराकल्पनायामप्यनवस्थामाच नतु व्यवहार्य्यगतो विशेषः कश्चित् [e]द्वितीये तु प्रत्येकं दण्डिव्यवहारप्रसङ्गो विशेषाभावात् न ते प्रत्येकं दण्डि-पदार्थाः किन्तु मिलिताइति चेत् इति किं ते च मेलकं चाभिधीयते उत तेभ्योन्य एव कश्चित् [f]आद्ये प्रत्येकं स एव प्रसङ्गः मेलकेप्यधिकः ॥

टी० ॥ "संबन्धादि"ति । केवलात्संबन्धात्तदधिकरणसंबन्धो विशिष्ट इति तस्याप्यन्यत्वापत्तिरित्यर्थः तथाच संबन्धस्य केवलस्य विशेषणविशेष्ये आश्रयो नतु तदधिकरणस्य विशिष्टस्यापीति संबन्धोपि विशेषणविशेष्यगोचरव्यवहारं प्रति न तन्त्रमित्यर्थः यद्वा(१) "संबन्ध" इति । विशिष्टव्यवहारजनकस्य संबन्धस्य दण्डपुरुषावाश्रयाविति तत्रापि व्यवहार इत्यर्थः । "संबन्धादि"ति । केवलः संबन्धोपि न विशिष्टव्यवहारहेतुः किन्तु तदधिकरणदण्डादिविशिष्टः सचान्य एवेति दण्डादौ नानयनाद्यन्वय इत्यर्थः एष विशेषणविशेष्यादन्यद्विशिष्टमिति पन्था न भवतीत्यर्थः । [b]"तत्संबन्धिनी"ति । विशिष्टं यद्यप्यन्यत्तथापि विशेषणविशेष्यसंबन्ध्येव तथाच विशिष्टे व्यवहारस्तदुभयगोचरः स्यादित्यर्थः ॥ [c]"तस्यापी"ति । विशिष्टमात्रं न दण्डपुरुषसंबन्धि किं तु दण्डपुरुषीयत्वविशिष्टं तच्चान्यदेवेति नैतदपि व्यवहारनियामकमित्यर्थः ननु पुरुषीयत्वविशिष्टमपि यद्विशिष्टं तदपि परम्परया पुरुषसंबन्ध्येवेति स्यादेव । पुरुषे आनयनादिव्यवहार इत्यत आह–। [d]"एवमि"ति । पुरुषीयत्वेनापि विशेषणेन विशिष्टमात्रं न विशिष्टं किंतु विशिष्टविशेष एवं तत्र-तत्रापीत्यवनस्थेत्यर्थः ॥ दण्डपुरुषसंबन्ध एव यदि विशिष्टं तदाह–। [e]"द्वितीय" इति ते च मेलकं चेति सर्वेषां विशिष्टव्यवहारापत्तिरित्याह–। [f]"आद्य" इति ।

(१) "सम्बन्धो हेतुः"–इत्यत आरभ्य पूर्वोत्तरपक्षयोरर्थान्तरमाह–यद्वेति ।

मू० [a] द्वितीयस्तु प्रतीतिव्यवहारविरोधा [b] त्पूर्ववदेव निरस्तः * एकज्ञानारूढो वा [c] ऽविरलनानाज्ञानारूढो वा अनेकश्च संबन्धश्च संबन्धश्च विशिष्टपदार्थ? *—इति चेन्न, [d] घटपटाविति बुद्धावारूढौ घटपटौ संबन्धश्च घटपटरूपो विशिष्टः स्यात् [e] घटत्वपटत्वतत्संबन्धानां तद्बुद्धावारूढानामभ्युपगमेन संबन्धस्यापि तद्बुद्ध्यारोहाभ्युपगमध्रौव्यात् । [f] अन्यथा घटत्वविशिष्टरूपो घटः पटत्वविशिष्टरूपश्च पटः कथमभ्युपगन्तव्यस्तच [g] नव घटपटावित्यपि विशिष्टमेव स्वतन्त्रयोर्घटपटयोः परस्परासम्बन्धद्वयोस्तच व्यवहरणात् न पुनर्यथा दण्डी पुरुषस्तथा घटीपटः पटीघट इति वा तच व्यवहारः ॥

टी० ॥ [a] "द्वितीयस्त्वि"ति । तेभ्योऽधिकं चेन्मेलक(१)मित्यर्थः । [b] "पूर्ववदि"ति । विशिष्टस्य भिन्नत्वपक्षे यद्दूषणं तदिहापीत्यर्थः ॥ [c] "अविरले"ति । भिन्नजातीयज्ञानान्तरितज्ञानधारारूढ इत्यर्थः । तथाचैकज्ञानविषयत्वावच्छिन्ना दण्डपुरुषसंबन्धा एव विशिष्टपदार्थ इति न प्रत्येकं विशिष्टव्यवहारप्रसङ्गो न वा तदुभयगोचरव्यवहारानुपपत्तिरिति भावः । एवं च सति समूहालम्बनारूढौ घटपटौ द्वावप्येकं विशिष्टं स्यादित्याह—। [d] "घटपटावि"ति । ननु घटपटाविति बुद्धेः संबन्धविषयता नास्तीत्यत आह—। [e] "घटत्वे"ति । समूहालम्बनस्य घटत्वपटत्वसमवायविषयकत्वादित्यर्थः अन्यथा विशिष्टप्रतीतिरेव न स्यादित्याह—। [f] "अन्यथे"ति । ननु तदुभयं विशिष्टमेवास्त्वित्यत आह—। [g] "अन्योन्योपरक्तभानाभावान्न तदुभयं विशिष्टमित्यर्थः ॥

(शेषमग्रे)

(१) मेलकम्=विशिष्टमित्यर्थः ।

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

(Continued from page 290 Vol XII)

"णेरणौ यत्कर्म णौ चेत्स कर्त्तानाध्याने" ॥ अत्र णेरिति यद्यपि सामान्यनिर्देशस्तथापि पुच्छभाण्डादिणिङ् न गृह्यते ऽणौ कर्म्मणो णावसम्भवात्, कर्मणिङस्त्वा 'याद्य आर्द्धधातुके वे' ति वचनादण्यन्तावस्था स म्भवति कर्म्मण श्च कर्तृत्वं कमिष्यते योषितं देवदत्तः कामयिष्यते योषित्स्वयमेवेति, तथापि ङित्त्वादेव सिद्धे सो ऽपि न गृह्यतइति णिच एव ग्रहणमित्याह । 'णिचश्चेति कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदमिति' । 'अकर्त्रभिप्रायार्थं इति' । उपलक्षणमेतत्, कर्त्रभिप्राये पदान्तरेण द्योतिते 'विभाषोपपदेन प्रतीयमान' इति विकल्पं बाधित्वा नित्यो विधिर्यथा स्यादित्यपि द्रष्टव्यम्, अत्रैकवाक्यतायामयमर्थो भवति ण्यन्तादात्मनेपदं भवत्यण्यन्तावस्थायां यत्कर्म्म ण्यन्तावस्थायां यदि स कर्त्ता भवति आध्यानादन्यत्रेति, तत्र कर्म्मान्तरनिवृत्तिर्न कृता स्यात् ततश्चेहापि प्रसज्येत आरोहन्ति हस्तिनं हस्तिपकास्तानारोहयति हस्तीति, किं च उक्तेर्थे णेरणौ कर्म्मणीत्येतावदेव वाच्यं कर्त्तरीत्येव ण्यन्तादात्मनेपदं भवति अणौ कर्म्मणि कर्त्तरीत्युक्ते को नाम विवक्षितोर्थो न सिद्ध्यति स इत्येतच्चानर्थकं यत्तदोर्नित्यसम्बन्धादेवाध्याहारतः सिद्धेः, तस्माद्यथाश्रुतमात्र न विवक्षितमिति मत्वा पृच्छति । 'कथमिति' । इतरोपि वाक्यभेदाश्रयणेन परिहरति । 'अणौ यत्कर्म्मेत्यादि' । णेरात्मनेपदं भवति आध्यानादन्यत्रेत्येकं वाक्यं, ततो ऽणौ यत्कर्म्मेति द्वितीयम्, अत्र वाक्ये यत्तदोर्नित्यसम्बन्धाद्यच्छब्देन तच्छब्द आक्षिप्यते कर्म्मान्तरस्य चानिर्देशाद् उद्देश्यतयापि श्रुत कर्म्मत्वमेव विधीयते तच्च विधीयमानं सामर्थ्याण्णेरिति सन्निहितत्वाण्ण्यन्तावस्थायामेव विधीयते किं तत्सामर्थ्यम् अणौ यत्कर्म्मेत्यनुवादसामर्थ्यादेवाणौ कर्म्मत्वसिद्धेस्तत्रैव तद्विधानस्यासम्भवः, तदेवमणौ यत्कर्म्मेत्येतावत एवाणौ यत्कर्म्म णौ चेत्तत्कर्म्मेत्ययमर्थो भवति, अनेन

च कर्मान्तरनिवृत्तिः क्रियते न त्वणौ कर्मणो णौ कर्मभावः प्रतिपाद्यते स कर्तेति वाक्यान्तरेण तस्य कर्तृत्वप्रतिपादनात् एकस्य युगपदेकस्यां क्रियायां कर्मत्वकर्तृत्वयोरुभयोरसम्भवात्, ततो णौ चेदिति तृतीयं वाक्यम् अणौ यदित्येवाणौ यत्प्रतिपाद्यं वस्तु णौ चेत्तदेव प्रतिपाद्यमित्यर्थः, ततः स कर्तेति चतुर्थम्, अत्राणौ यत्कर्म णौ चेदिति सर्वमनुवर्तते। अनाध्यानइत्येतदपि प्रसज्यप्रतिषेधे पञ्चमं वाक्यं, तत्र वृत्तिकारेण त्रीणि वाक्यानि स्वबाचा दर्शितानि ण्यन्तादात्मनेपदं भवतीत्येकं वाक्यम्, अणौ यत्कर्म णौ चेत्तदेव कर्मेति द्वितीयम्, स एव कर्ता भवतीति तृतीयम्, णौ चेद्ग्रहणं समानक्रियार्थमिति तु वक्ष्यत्यतस्तदपि वाक्यमभ्युपगतमेव । 'आरोहन्तीत्यादि'। (१) अणौ कर्मप्रदर्शनार्थमिदमुक्तमिदं तत्रोदाहरणम् आरोहयते हस्ती स्वयमेवेति, आङ्पूर्वो रुहिः न्यग्भवनोपसर्ज्जने न्यग्भावने वर्तते न्यग्भवन्तं हस्तिनं न्यग्भावयतीत्यर्थः। यदा तु हस्तिनः सौकर्यातिशयप्रतिपादनाय हस्तिपकव्यापारो न विवक्ष्यते तदा न्यग्भावमात्रे रुहिर्वर्तते तत्र च हस्तिनः कर्तृत्वम्, उक्तं च

निवृत्तप्रेषणं कर्म्म स्वक्रियावयवे स्थितम् ।
निवर्तमाने कर्मत्वे स्वकर्तृत्वेवतिष्ठते ॥

इति। अस्य च कर्तुः कर्मस्थक्रियेषु कर्मकार्याण्यतिदिश्यन्ते 'कर्मवत्कर्म्मणा तुल्यक्रिय' इति, तद्यथा लूयते केदारः स्वयमेवेति लुनातिर्हि द्विधाभवनोपसर्जने द्विधाभावने वृत्तः कर्तृव्यापाराविवक्षायां द्विधा भवनमात्रे वर्तते, दुहिस्तु कर्तृस्थक्रियत्वात् कर्मकार्याणि न लभतइत्येतावत्, ततो न्यग्भवनवृत्ते रुहेर्हस्तिपकव्यापारे णिजुत्पद्यते तदा च य एवार्थ आरोहन्ति हस्तिनं हस्तिपका इति स एवार्थ आरोहयन्ति हस्तिनं हस्तिपका इति। पुनः सौकर्यातिशयविवक्षायामविवक्षिते हस्तिपकव्यापारे न्यग्भवनमात्रे रोहिर्वर्तते आरोहयते हस्ती स्वयमेवेति । सुष्ठु न्यग्भवतीत्यर्थः । उक्तं च

(१) कर्मणोऽकर्मकत्वप्रतिषेधार्थमिदमिति २ पुस्तके ।

न्यग्भावनं न्यग्भवन रुहौ शुद्धे प्रतीयते ।
न्यग्भावनं न्यग्भवनं णयन्तेऽपि प्रतिपद्यते ॥
अवस्थां पञ्चमीमाहुर्ण्यन्तानां कर्मकर्त्तरि ।
निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते ॥

इति, एवं सिञ्चतेरप्यार्द्रीभवनोपसर्जनमार्द्रीभावनमर्थः, ततो निवृत्तप्रेषणमित्यादि पूर्ववत्, सेचयते हस्ती स्वयमेव, सेचनेत्यन्तमनुकूलो भवतीत्यर्थः । एव दृशेरपि कर्म्मव्यापारमात्रवृत्तेर्णिजुत्पत्तौ पुनस्तत्रापरोऽपि तदुदाहरणं, दर्शयते राजा स्वयमेव दर्शनेनाकूलो भवतीत्यर्थः । सोऽयं निवृत्तप्रेषणपक्ष उच्यते । अपरः प्रकारः । आरोहन्ति हस्तिनं हस्तिपकाः, तान् सौकर्यातिशयाद्धस्ती प्रयुङ्क्तइति हस्तिव्यापारे णिजुत्पद्यते, आरोहयति हस्ती हस्तिपकानिति तत्र सौकर्यातिशयप्रतिपादने तात्पर्यमिति कर्म्म न विवक्ष्यते ततोऽकर्म्मको भवति यथा नेह पच्यते नेह भुज्यतइति पाकमात्रप्रतिषेधे तात्पर्यमिति कर्म्माविवक्षायां भावे लो भवति, आरोहयते हस्ती स्वयमेव सुष्ठु न्यग्भवतीत्यर्थः । एष एव हि हस्तिन प्रयोजकव्यापारः, एवमितरयोरपि द्रष्टव्यं, सोऽयमध्यारोपितप्रेषणपक्ष इति गीयते, तदेवमुभयोरपि पक्षयोः सैव क्रिया याऽण्यन्तावस्थायां, न च कर्म्मान्तरमस्ति कर्तापि स एवेत्युदाहरणोपपत्तिः, स्वयमिति वचनं कर्त्रन्तरव्युदासार्थम् । 'णेरिति किमिति' । अणौ कर्म्मत्वानुवादेन णौ कर्तृत्वविधानात् प्राधान्याण्ण्यन्तादेव भविष्यतीति प्रश्नः । 'साध्वारोहतीति' । साधु न्यग्भवतीत्यर्थः, अत्र कर्म्मव्यापारमात्रे रुहिर्वर्तते कर्तृस्थक्रियत्वात्तु कर्म्मवद्भावाभावादात्मनेपदे न भवतः, शप्परस्मैपदे भवतः; अणौ यत्कर्म्मेत्यण्यन्तावस्थायामपि श्रुतत्वात्ततोऽपि स्यादिति भावः । ननु प्राधान्याण्ण्यन्तादेव भविष्यतीत्युक्तं, किमर्थमणौ यत्कर्म्म णौ चेत्स कर्तेत्ययमुपाधि,र्यस्मिन्नेव प्रयोगे संभवति तत्रैवात्मनेपदं युक्तं साध्वारोहतीत्यत्र च नायं प्रकारः सम्भवति, आरोहयते हस्तीत्यत्र तु णिचः प्रकृतिभूते रुहावण्यन्ते यत्कर्म्म ण्यन्ते स एव कर्त्तेति तत्रैव भविष्यति, सत्यं, तदेवमुत्तरार्थमवश्य णेरिति वक्तव्यमिहापि विस्पष्टार्थे

भविष्यतीति मन्यते । 'अणाविति किमिति' । कर्म्मत्वकर्तृत्वयोर्यौगपद्या-सम्भवात् णौ च कर्तृत्वस्य श्रुतत्वादवस्थान्तरे णावेव कर्म्मत्वं विज्ञास्यतइति प्रश्नः । 'गणयतीति' । गण संख्याने चुरादावदन्तः पठ्यते, अतो लोपस्य स्थानिवद्भावाद् उपधावृद्ध्यभावः, गण्यमानो गणो यदा गणन-क्रियायामानुकूल्यं प्रतिपद्यते तदा तद्व्यापारमात्रवृत्तेर्हेतुमण्णिचि पुनः कर्म्मव्यापारमात्रे आरोपितस्यैवायं प्रयोगः। 'गणयति गणः स्वयमेवेति' । अत्र णावेव गणः कर्म्म णावेव कर्ता इत्यात्मनेपदं न भवति, कर्मवद्भा-वेनापि न भवति कर्तृस्थक्रियत्वात्, गणनं हि संख्यानिमित्तः परिच्छेदो ज्ञानविशेषः । भाष्ये तु भागशोवस्थापने गणिर्वर्तते भागशोऽवतिष्ठमानं गणं गोपालकोवस्थापयतीत्यर्थमङ्गीकृत्य तत्रानुकूलत्वाद् गणस्यैव कर्तृ-त्वविवक्षायामस्ति कर्मस्थभावकत्वमिति कर्म्मवद्भावादात्मनेपदमुदाहृ-तम् । ननु चाणावकर्म्मकादित्यत्र वक्ष्यति हेतुमण्णिचो विधिरिति प्रति षेधोपि प्रत्यासत्तेस्तस्यैव न्याय्य इति तच्चेत्सत्यम् इदमपि प्रत्युदाहरण-मयुक्तमेव, उच्यते । युक्तं तत्र हेतुमण्णिचो विधिरिति तत्र बुधादिसूत्रे णेरिति वर्त्तते । बुधादिभ्यश्च हेतुमण्णिजेव सम्भवति इह तु सामान्येन ग्रहणं विशेषहेत्वभावात् । ननु चाणौ यत्कर्म्मेत्युच्यते चुरादीनां च नि-त्यण्यन्तत्वात्केवलानां प्रयोगाभावाद् अणौ कर्म्मणोऽसम्भवाद् अत्रापि हेतुमण्णिच एव विधिः, नेत्याह 'आधृषाद्वेति' विभाषितणिचामपि के-षां चित्सम्भवात्, भाष्ये तु हेतुमण्णिचो विधिरिति स्थितम् । 'लावयति दात्रं स्वयमेवेति' । करणस्य दात्रस्यापि तैक्ष्ण्यातिशयेन लवने यदा-नुकूल्यं तत्प्रतिपादनाय लावकान्प्रति प्रयोजकत्वविवक्षायां णिच् । इह ण्यन्तादात्मनेपदं भवत्यणौ यत्कर्म स चेत्कर्तेत्युक्ते गम्यतएतद् यस्माद् ण्यन्ताद्विधिः तत्रैवाण्यन्ते यत्कर्म्म स चेत्कर्त्तेत्यतो णौ चेद्ग्रहणमनर्थकं तत्राह । 'णौ चेद्ग्रहणं समानक्रियार्थमिति' । प्रयोज्यप्र योजकभावलक्षणेपि क्रियाभेदे मा भूत् णिच्प्रकृत्यर्थभूतायामेव क्रियायां यथा स्यादित्यर्थः, यथा पुनरयं शब्दार्थस्तथोक्तं पुरस्तात् । 'आरोहयमाणो हस्ती भीतान् सेचयति मूत्रेणेति' । येन प्रयोज्यप्रयोजकभावलक्षणेपि

क्रियाभेदे आत्मनेपदं वार्यते एतेनानेन धातुभेदादत्यन्तभेद इति मत्वै-तत्प्रत्युदाहृतं भीताश्चात्रारोहयति: कर्म । 'आरोहयमाणा इति' । 'णिचश्चे' त्यात्मनेपद शानच्,भीता आरोह्यमाणा भीत्या मूत्रयन्ति तेन हस्ती सिच्यते, कर्माविवक्षायां तु सेचयतेरकर्मकत्वम् । उद्देशप्रतिनिर्देशात् लब्धे यस्सग्रहे पुनस्तद्ग्रहो वाक्यभेदेन कर्मान्तरनिवृत्तये इत्याह । 'यत्सग्रहणमनन्यकर्मार्थमिति' । स्थलमारोहयति मनुष्यानित्यत्र कर्मान्तरमप्यस्ति मनुष्याः, रुहेर्गत्यर्थत्वान्मनुष्याणां कर्मसंज्ञा, कथं पुनरत्राणौ कर्मणो णौ कर्तृत्वं यावता स्थलमणौ कर्म हस्ती तु णौ कर्ता, स्यादेतत् । आरोहयमाण इत्यत्राणौ कर्मणो हस्तिन एव कर्तृत्वं स एव च स्थलमारोहयतीत्यत्रापि कर्त्तेति । एवमपि प्रत्यासत्तेरेवात्र न भविष्यति, तथाहि । णयन्तादात्मनेपदं भवति अणौ यत्कर्म णौ चेत् स कर्त्तेत्युक्ते प्रत्यासत्तेरेतद्गम्यते येन णिचा णयन्तादात्मनेपदं विधित्सितं तेनैव णिचा ऽण्यन्ते तत्प्रकृतिभूते धातौ यत्कर्म स एव चेत्कर्ता तस्मिन्नेव णयन्त इति, अत्र च यत्रायमुपाधिः कृतमेव तत्रात्मनेपदम् आरो-हयमाण इति, यत्र तु न कृतं स्थलमारोहयतीति न तत्रायमुपाधिरिति नैवात्मनेपदप्रसङ्गः, इह तर्हि आरोहन्ति हस्तिनं हस्तिपकाः, तानारोह-यति हस्तीति, किं पुनरत्र नेष्यते, वृत्तिकृता नेष्यते भागवृत्तिकारेण त्विष्यते, तथा माघः प्रयुङ्क्ते, करेणुरारोहयते निषादिनम् इति । 'कर्त्तेति किमिति' । भावकर्मणोः सिद्धत्वात् कर्त्तर्येव भविष्यतीति मन्यते । अणौ यत्कर्म तस्मिन्नेव कर्त्तरि यथा स्यात् कर्त्रन्तरे मा भूदित्येवमर्थं कर्तृग्रहण-मिति दर्शयन्नाह । 'तानारोहयति महामात्र इति' । गत्यर्थत्वात्त्र रुहेः हस्तिपकानां कर्मसञ्ज्ञा । यद्येवं कर्मान्तरसम्भवादेवात्र न भविष्यति, नैतदेवम् । अस्तीत्यत्राणौ कर्मणो हस्तिनो णावपि कर्मत्वेनान्वयः । न वा सति कर्तृत्वविधौ कर्मान्तरस्यावृत्तिर्लभ्यते । यद्वा प्रयोजक-व्यापारमात्रे तात्पर्यादत्रा हस्तिपकाः कर्मत्वेनाविवक्षितास्तदेदं प्रत्यु-दाहरणं द्रष्टव्यम् । 'वनगुल्मंस्येति' । कर्मोपलक्षणमेतत्, न त्वत्र वनगुल्मस्य कर्मत्वमस्ति शेषत्वेन विवक्षितत्वात्तस्माद्वनगुल्ममिति प्रद-

र्शनीयं, 'स्मरयत्येनमिति' । स्मृ आध्याने घटादिः, वनगुल्मस्य रमणीयत्वप्रतिपादनाय प्रयोजकत्वे विवक्षिते णिच् । 'एनमिति' । बुध्यर्थत्वात्कोकिलस्य कर्म्मसंज्ञा । एतदप्युपलक्षणम् । अत्र हि कर्म्मान्तरसद्भावादेव प्राप्तिर्नास्ति कर्म्माविवक्षायां प्रत्युदाहरणं द्रष्टव्यं, 'ननु चात्र कर्म्मकर्तरि मूलोदाहरणानीति' ननु चाध्यारोपितप्रेषणपक्षे आरोहयतो हस्तिनः कर्म्मत्वाभावात्कर्मणा समानधातो तुल्यक्रियत्वाभावात् पचत्योदनं देवदत्तो राध्यत्योदनं स्वयमेवेतिवत्कर्म्मवद्भावो न प्राप्नोति । सत्यम् । आरभ्यएवास्मिन् सूत्रे सोपि पक्षः सम्भवात् प्रदर्शित, अनारम्भे तु निवृत्तप्रेषणपक्षप्रक्रियैवाश्रयिष्यते, ननु तत्रापि व्यापारद्वयाभिधायिषु रुहादिषु भवत्येव ये तु केवलकर्तृव्यापारवाचिनो दृश्यादय. तेषु कथं, नहि दृशिः कर्म्मव्यापारं कं चिदाचष्टे, स्यादेतत्, विषयभावापत्तिः कर्मव्यापारस्तदापादनं कर्तृव्यापार इति, यद्येवम् इच्छापि दृश्यर्थः स्यात्, नन्वत्रापि विषयभावापत्तिः तदापादनं च विद्यते, अथ दर्शनविषयभावापादनं दृश्यर्थः, ननु तदेव निरूप्यते किं नाम तद्दर्शनम् इति । अत्रोच्यते । मा नामाख्यातकर्म्मव्यापारो,ऽस्ति तावत्कर्म्मणोपि व्यापारः कारकत्वात्तत्र णिजुत्पत्तिदशायां तावत्येव वर्त्तिष्यते उदाहरणदशायां यत्नोपीति मन्यते तथा च रुहिः कर्तृयुक् कर्म्मणाभिधेय इति युक्तं केवलकर्तृव्यापारवाचिनां गमिदृशिप्रभृतीनां कर्तृस्थक्रियत्व, कथं तु विक्लित्युपसर्जनविक्लेदवचनः पचिः द्विधाभवनोपसर्जनद्विधाभावनवचनश्च लुनातिः कर्म्मस्थक्रिय', न्यग्भवनोपसर्जनन्यग्भावनवचनस्तु रुहिः कर्तृस्थक्रियः । उच्यते । रुहिरपि गत्यर्थः तथा च 'यद्वितुपरं छन्दसी' त्यत्र भाष्यकारो वक्ष्यति हस्तिनमारोहती त्यत्र हि उपरिगमनलक्षण एव रुहेरर्थः, तत्पुनर्न्यग्भवनहेतुत्वाद् न्यग्भावनमित्युच्यते उपरिगमनरहितं तु न्यग्भावनमात्रं रुहेरर्थो न भवति, यदा खलु क चिद्भूमावेव तिष्ठन् वृक्षस्य शाखां हस्ताभ्यामवनमयति तदा नासावारोहतीत्युच्यते तस्माद्गतिविशेष एव रुहेरर्थः, कस्तर्हि क्रियाणां कर्म्मकर्तृस्थतायां हेतुः । उक्तमत्र

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥

इति, विशेषदर्शनेन शब्दानुसारेण वा क्रियायास्तात्स्थ्यं कथ्यते एतच्च कारणगतमारोहस्य कर्तृस्थत्वं प्रतिपादयति न तु कर्मस्थतां नहि हस्तिनमारोहति वृक्षमारोहति पर्वतमारोहतीत्यादौ कर्म्मभेदेप्यारोहणे रूपभेदः प्रतीयते यथा घृतमांसतन्डुलादिषु पाकः, न च हस्ती न्यग्भवत्वित्येवं कारकव्यापारः किं तर्हि हस्तिपका उपर्यासीरन्निति, पाके तु तण्डुलादिगतो विक्लित्त्यादिरूपो विशेषो यथा स्यादित्येव कारकव्यापारः, तस्मात्कर्मभेदे रूपभेदादुदृश्यस्य च कर्म्मगतत्वात् पचिः कर्म्मस्थक्रियः, विपर्ययादुहि. कर्तृस्थक्रिय इति सिद्धम् । एवं चारुह्यते हस्ती स्वयमेवेति कर्मवद्भावं प्रदर्शयन्तो भाष्यकारविरोधादुपेक्ष्याः, 'दृशिः कर्तृस्थभावक इति' । अथ सिचि. कस्मादुपेक्षितः कर्मस्थक्रियत्वाद् आर्द्रीभवनं ह्यत्र प्रधानं तदर्थत्वात्कर्तृकव्यापारस्य, किमर्थं तर्ह्युदाहृतः विशेषाभावात् नह्यत्रानेन कर्मवत्कर्म्मणेत्यनेन वा आत्मनेपदे सति कश्चिद्विशेषः, तेनापि सति यक्चिणौ न भवतः, णिश्रन्थिग्रन्थीति प्रतिषेधात् । भाष्येपि कर्म्मवद्भावात् सिद्धिमाशङ्क्याध्यानप्रतिषेधार्थमित्युक्त्वा स्मरतेः कर्तृस्थभावकत्वात् कर्म्मवद्भावस्य प्राप्तिर्नास्तीत्यभिधायोक्तम् एवं तर्हि सिद्धे सति यदाध्यानप्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवत्येवञ्जातीयकानाम् आत्मनेपदमिति । किमेतस्य ज्ञापने प्रयोजनं पश्यन्ति भृत्या राजानं दर्शयते भृत्यान् राजा स्वयमेव अत्रात्मनेपदं. सिद्धं भवतीति । 'एवं जातीयकानामिति' । कर्तृस्थक्रियाणामित्यर्थः । एवं च ब्रुवता विध्यर्थमेतदित्युक्तं भवति विशेषप्रतिषेधेन सामान्यविधेरनुमानात्, अत्र दर्शयते भृत्यान् राजेत्येतदेकमुदाहरणमनुपपन्नं कर्म्मान्तरसद्भावात् । तत्र वृत्तिकारस्त्यजेदेकं कुलस्यार्थ इति न्यायाद् उदाहरणमेतद्धर्षयितव्यं मन्यते ऽस्मिन्नुदाहरणे कर्मव्यापारमात्रे विवक्षिते सिद्धं भवतीत्यर्थः । अन्ये त्वाहुः । अस्मादेवोदाहरणादणौ ये कर्तृकर्म्मणी तद्व्यतिरिक्तकर्म्मान्तरसद्भावएवात्मनेपदं न भवति यथा स्थलमारोहयति मनुष्यानिति इह त्वणौ कर्तृणां

भृत्यानां णौ कर्म्मत्वमिति, एवं स्मारयत्येनमिति कोकिलस्य कर्म्मत्वेऽपि प्रत्युदाहरणमुपपन्न करेणुरारोहयते निषादिनमिति प्रयोगश्चोपपन्न इति तेषां सूत्राक्षराण्येव तावदधिकानि भाष्यं च सर्व्वमुदाहरणवर्जमनुपपन्नम् ॥

प्रयोगाणां तु निर्वाहो णिचश्चेत्यात्मनेपदात् ।
जयादित्यस्य हृदयं गूढमेतत्प्रकाशितम् ॥

"भीस्म्योर्हेतुभये" ॥ भयमनिष्टापातशङ्कासाधनमात्रं लौकिको हेतु', न वान्तरेण साधनं क्रिया संभवतीति विशेषणसामर्थ्यात् कृत्रिम त्वाच्च पारिभाषिकस्य हेतोर्ग्रहणमित्याह । 'हेतुः प्रयोजक इत्यादि' । 'तत श्चेद्भयं भवतीति' । यद्येवं स्मयत्यर्थो न विशेषितः स्यात् नहि स्मयतेर्भयमर्थो ऽत आह । 'भयग्रहणमिति' । चित्तविकारस्योपलक्षणमित्यर्थः । 'विस्मयोऽपि तत एवेति' । अत्र चेद्भवतीत्यनुषङ्गः, 'भीषयतइति' । 'भियो हेतुभये षुक्' । 'भाययतइति' । 'बिभेतेर्हेतुभय' इति वैकल्पिकमात्वम् एवं च अत्र षुक् न भवति तद्विधावाकारप्रश्लेषात् । 'विस्मापयतइति । "नित्यं स्मयते' रित्यात्वम् । अर्तिह्रीत्यादिना पुक्. 'कुञ्चिकयेति' । करणादत्र भयं न हेतोः, यद्यपि तद्व्यापारे णिज्विधानात् प्रयोजकसाध्यमेव भयं तथापि विशेषणोपादानसामर्थ्यादेव विज्ञायते ऽन्यनिरपेक्षाद्धेतोरेव यद्भयमिति, एवं च मौण्डेनं भाययतीत्यत्रापि गुणगुणिनोर्भेदविवक्षायां न भवति, उदाहरणे तु तादात्म्यस्य विवक्षितत्वाद्धेतोरेव भयम् ॥

'गृधिवञ्च्योः प्रलम्भने" 'परिहरतीत्यर्थ इति' । वर्ज्जयतीति यावत् ॥

"लियः सम्मानशालीनीकरणयोश्च" ॥ 'विशेषाभावादिति' । निरनुबन्धकपरिभाषा तु 'वामदेवाड्ड्यड्ड्यौ' वित्यत्र ज्ञापिता प्रत्ययग्रहणविषयैवेति मन्यते । 'समानने शीलीनीकरणे च वर्तमानादिति' । संमाननं विषयो न धात्वर्थः । यदाह 'पूजामधिगच्छतीत्यर्थ इति' । धात्वर्थे तु पूजयतीति वाच्य स्यात्, यथा न्यक्करोतीत्यर्थ इति । अकर्म्मकश्चायमस्मिन् प्रयोगे पूजाख्यस्य कर्म्मण आत्मनेपदसहितेन धातुनैवोपात्तत्वात्

पुत्रीयतीतिवदित्याहुः । 'जटाभिरिति' । हेतौ तृतीया यस्य हि जटाः सन्ति लोके स पूज्यते ॥

"मिथ्योपपदात् कृञोऽभ्यासे" ॥ उपोच्चारितं पदमुपपदं मिथ्याशब्द उपपदं यस्य स तथोक्तः । 'मिथ्याकारयतइति' । आत्मनेपदेनैवाभ्यासस्य द्योतितत्वान्नित्यवीप्सयोरिति द्विर्वचनं न भवति । 'सदोषमिति' । एतेन मिथ्याशब्दस्यार्थमाचष्टे, अस्यैव विवरणं 'स्वरादि दुष्टमिति' । आदिशब्देन रूपं गृह्यते । 'असकृदिति' । अभ्यासं दर्शयति । 'उच्चारयतीत्यर्थ इति' । णयन्तस्य करोतेरुच्चारणे वृत्तिरनेकार्थत्वाद्धातूनाम्, एवं च प्रकृतिभूतः करोतिरुच्चारणे वर्त्तते ऽकर्म्मकश्च ॥

"स्वरितञितः कर्त्रभिप्राये क्रियाफले" ॥ कर्त्तारमभिप्रैतीति कर्त्रभिप्रायं, कर्म्मण्यण्, क्रियाफलं चेह कर्मैवेति नास्ति नियमस्तेनाकर्म्मकेभ्योऽपि यजिप्रभृतिभ्यः स्वर्गादिके फले कर्तृगामिन्ययं विधिर्भवत्येव । 'कर्त्तारञ्चेदिति' । क्रियाफलस्य कर्तृगामित्वद्योतनायात्मनेपदं भवतीत्यर्थः । यदि यच्च यावच्च क्रियानन्तरभावि फलं तत्र कर्तृगामिन्ययं विधिर्भवति इहापि स्याद् यजन्ति याजकाः पचन्ति पाचका इति, दक्षिणादेः कर्तृगामित्वादित्यत आह । 'प्रधानभूतमिति' । किं पुनस्तदित्यत आह । 'यदर्थमिति' । यदुद्दिश्येत्यर्थः । 'क्रिया आरभतइति' । सामग्रीसमवधानात्मिका ऽऽद्या प्रवृत्तिरारम्भो यामन्तरेण याजकादीनामप्रवृत्तिः, स्वर्गादिकं हि फलं प्रेप्सु सामग्रीं समवधाप्य प्रवर्तयति सा प्रवर्तिता यथायथं प्रवर्त्तते, कथं पुनरेतल्लभ्यते प्रधाने फले कर्त्रभिप्रायइति, प्रधानत्वादेव । किञ्च यत् किंचन फलं सर्वत्र कर्त्रभिप्रायं भवति, ननु यत्र क्रियाभ्यासमात्रे तात्पर्यं तत्र न किञ्चित्फलं कर्तृगामि तत्रापि किञ्चित्फलं कर्तृगामि किं कौशलं, पुनःपुनरभ्यासे हि क्रियासु कौशलं भवति तस्मात्प्रधाने फले कर्त्रभिप्रायइति सिद्धम् । 'यजत इति' । केचिदाहुः । देवतायै इदं न ममेत्येवं विधो मानसः सङ्कल्पो याग इति तेषां यजन्ति याजका इति ऋत्विग्व्यापारे प्रयोगो नोपपद्यते,

अन्ये त्वाहुः । होमादिष्वभिष्टादिऋत्विग्व्यापारो याग इति तेषां यजतिव्यापारप्रयोगो नोपपद्यते, एवं तर्ह्युभयं यजेरर्थः ऋत्विग्व्यापारश्च यजमानव्यापारश्च, तदुक्तं यज्ञादिषु चाविपर्यासो नानाक्रियाणां यज्यर्थत्वादिति । 'न तदर्थः क्रियारम्भ इति' । ननु ऋत्विजामारम्भस्तदर्थ एव, नैतदेवम्, आद्या प्रवृत्तिरारम्भ इत्युक्तं सा च यजमानस्य स्वर्गमहं लभेयेति न पुनरिमे दक्षिणां लभेरन्निति यथा ऽवघाते क्रियमाणे स्वेदश्च भवति वैतुष्यं च भवति भृतिश्च लभ्यते, अथ च वैतुष्यार्थ एवावघातः तद्वदत्रापि, तदुक्तं हरिणा

यस्यार्थस्य प्रसिध्यर्थमारभ्यन्ते पचादयः ।
तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम् ॥

इति । 'इह स्वामिदासौ पचत इति' । क्रियामात्रविवक्षायां परस्मैपदं भवति स्वामिगते तु धर्म्मे दासआरोपिते स्वामिदासौ पचेते इत्यात्मनेपदं भवति, अथाभिप्रग्रहणं किमर्थं, विप्रकृष्टेपि फले यथा स्या,-द्विविधं क्रियाफलं दृष्टम् अन्नपुत्रवृष्टिशत्रुवधादिकम्, अदृष्टं च स्वर्गादि, तत्र पूर्वं प्रत्यासन्नमवश्यंभावीति प्रधानम् इतरत्तु विधुरप्रत्ययोपनिपाते सति व्यभिचारसंभवाद्विप्रकृष्टत्वाच्चाप्रधानं, संभवति ह्यविकलमनुष्ठितु यागस्यापि मध्ये वैराग्योत्पत्तौ मोक्षार्थप्रवृत्तौ सत्याम् अनुत्पत्तिः स्वर्गस्य, ततश्चेह तस्य ग्रहणं न स्याद् अभिप्रग्रहणे तु सति अभिराभिमुख्ये वर्त्तते प्रशब्दस्त्वारम्भेऽइति कर्त्तारं प्रत्याभिमुख्येन क्रियाफलं चेत्तत्प्रैति एतुम् आरभते एवमात्मनेपदं भवतीत्यर्थो भवति, तथा च यद्यपि स्वर्गादिकं स्वरूपेणान्नादिवत् तदानीं नैति तस्य त्वङ्कुरावस्था कर्त्तारमेतीति तद्द्वारेण फलमेवैतुमारभतइति सर्वत्र सिध्यति फलस्यैव ह्यङ्कुरावस्था पूर्वशब्दवाच्या ॥

( शेषमग्रे )

॥ श्री. ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

श्रीगणेशाय नमः ।

(Continued from page 306 Vol XII)

अत्र च्छलशब्दबलान्'न सभृङ्गाणि सहकाराण्य,पि तु सकालकूटाः शराः' इति प्रतीयते । क्वचित्परिणामादिशब्दवशात् यथा–

अमुष्मिन्(क)लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः, ।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥

अत्र 'धूमशिखा रोमावलिवपुः परिणमती'ति परिणामशब्दार्थवशा नेयं रोमावलिः, किन्तु धूमशिखे'ति प्रतीयते एवं भङ्ग्यन्तरैरप्यूह्यम् यथा "इदं ते केनोक्त'मित्यादौ ॥ ८ ॥ (इत्यपह्नुतिः ७)

**श्लेषः स, वाक्य एकस्मिन्यत्रानेकार्थता भवेत् ॥ ९६ ॥**

परिवृत्तिसहानामेव पदानामेकवृन्तगतफलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थश्लेषः· यथा–

उदयमयते, दिङ्मालिन्य(ख)निराकुरुतेतरा,
नयति निधनं निद्रामुद्रां, प्रवर्त्तयति क्रियाः, ।

(क) अमुष्मिंल्लावण्येति सर्वत्रास्ते ।

(ख) दिग्मालिन्यमिति पु० ।

रचयतितरां स्वैराचारप्रवर्तनकर्त्तनं, [क]

बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥

अत्र विभाकरनामा राजविशेषो मार्तण्डश्चेत्युभयार्थो 'न्युदयमयत' इत्यादीनि वाक्यानि· नचायं द्वितीयार्थस्य ध्वनिरेवेति शङ्कनीयं, संयोगादीनामभावेनाभिधाया अनियन्त्रणाद्द्वयोरपि वाच्यत्वात् ॥ ९६ ॥ (८)

## परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः—

परम् अप्रकृतम्· भेदकानि, विशेषणानि· श्लिष्टान्यनेकार्थानि· तेन, प्रकृतार्थविशेषणवाचिमात्रशब्दस्य श्लेषमहिम्ना यत्र प्रकृतार्थकेन वाक्येनाऽप्रकृतार्थनिर्वचन, सा समासोक्तिः, संक्षेपेणाऽर्थद्वयोक्तिः· 'मात्र'ग्रहणादत्र विशेष्यपदस्यापि श्लिष्टत्वं तद्व्युदास,स्तस्य श्लेषत्वात्· उदा०—

लहिऊण तुम्ह बाहुप्फंसं जीए स कोवि उल्लासो ।

जअलच्छी तुह विरहे णहुज्जुला दुब्बलाणं सा ॥

अत्र विशेष्यवाचिनो जयलक्ष्मीशब्दस्य परमऽप्रकृतार्थत्वं नास्ति· श्लिष्टत्वं चोपलक्षणम्, औपम्यगर्भादीनामपि सम्भवात्· यथा "विलिखति कुचा"वित्यादाविति प्राचीनः पन्थाः· अत्र नव्याः—परोक्तिरिति परशब्देन सामान्यतः प्रकृतमप्रकृतं वा विवक्षितम्· तेन यत्राप्राकरणिकविशेषणा सा स्यात् प्राकरणिकमुच्यते, तदपि संगृह्यते, तत्रापि वैचित्र्याविशेषा,दन्यत्रानन्तर्भावाच्च, यथा "सपाप्रे सकलाङ्गे"त्यादि· अत्र ह्यप्रकृतस्य भृङ्गस्य विशेषणसामर्थ्यात्प्रकृतस्यामत्पुरुषस्य प्रतीतिरित्याहुः· तन्न युक्तम्, अप्रस्तुतप्रशंसयैव तत्संग्रहात्, "येनास्यभ्युदितेने"तिवत्· वृत्तौ चाप्रस्तुतप्रशंसाप्रकरणे तत्र समासोक्तिपदं श्लिष्टविशेषणत्वमात्रपरम् ॥—॥ (९)

## —निदर्शना ।

## अभवद्वस्तुसम्बन्ध उपमापरिकल्पितः ॥ ९७ ॥

यथाश्रुतमात्रेणाऽसम्भवी वस्तुसम्बन्धो यत्रोपमां कल्पयित्वा पर्य-

(क) खण्डनमिति पा० ।

वस्यति, सैका निदर्शना, दृष्टान्तकरणात्मकनिदर्शनरूपत्वात्· सा च द्विधा, अवान्तरवाक्यभेदे तदभेदे च· तयोराद्या [क]यथा-

क्व सूर्यप्रभवो वंशः, क्व चाल्पविषया मतिः, ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥

अत्रा'ऽहं सागरन्तितीर्षुरस्मी'त्यस्यासम्बद्धार्थकतया 'उडुपेन सागरतरणवद् मदीयमत्या सूर्यवंशवर्णनमसम्भावित'मित्युपमायाः कल्पनम् । अन्त्या यथा-

उदयति विततो[ख]र्ध्वरश्मिरज्जावऽहिमरुचौ, हिमधाम्नि याति चास्तम्, । वहति गिरिय विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥

अत्रान्यलीलोद्वहनस्यान्येनासम्भवाद्वारणेन्द्रलील'सदृशीं लीला मित्युपमायां पर्यवसानम्· एवं च 'पूर्वोदाहरणे वाक्यार्थे उपमाक्षेपकं, इह तु पदार्थमात्र'मिति व्याख्यानमनादेयम्, अत्रापि लीलापदार्थमात्रस्यानाक्षेपकत्वात् । एषा मालारूपापि दृश्यते, यथा-

दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्गं,
मादातुमिच्छति[ग] करेण शशाङ्कबिम्बम्,
मेरुं लिलङ्घयिषति ध्रुव,मत्र देव!
यस्ते गुणान् गदितुमुद्यममादधाति ॥ ९७ ॥ (१०)

स्वस्वहेत्वन्वयस्योक्तिः क्रियथैव च साऽपरा ।

यत् क्रियथैव स्वस्य स्वहेतोश्चान्वयो हेतुहेतुमद्भावरूपः ख्याप्यते, सा ऽपरा निदर्शना· यथा-

उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् [घ] ।
शैलशेखरगतः पृषत्कणश्चारुमारुतधुतः पतत्यधः ॥

(क) अनयोराद्येति पु· ।
(ख) विहितेति पु· ।
(ग) इच्छत्स्विति पु· तु न युक्तम् ।
(घ) ध्रुवम्· शैलशेखरगतो दृषत्कणइति पु· ।

अत्र 'पते' त्यपदप्रतिपाद्यस्य पातरूपस्य कार्यस्य लाघवे सत्युन्नतपदप्राप्तिरूपस्य कारणस्य च तथासम्बन्धः 'पतति'पदप्रतिपाद्यया पातक्रियया प्रतिपाद्यते· तथा च लाघवे सत्युन्नतपदप्राप्तिः पाते हेतु, र्यथा पृषत्कस्येतिदृष्टान्तपर्यवसानान्निदर्शनात्वमिति ॥ ऽ ॥ ( इति निदर्शना ११ )

**अप्रस्तुतप्रशंसा या, सा सैव[क] प्रस्तुताश्रया ॥ ९८ ॥**

प्रशंसा, वर्णना· सैव, अप्रस्तुतप्रशंसैवेत्यर्थः· प्रस्तुताश्रया, प्रकृतप्रतिपत्तिहेतुः· एतच्चालङ्कारत्वबीजमतिप्रसक्तमिति निवारयति—अप्राकरणिकेन प्राकरणिकाक्षेपो ऽप्रस्तुतप्रशंसा· प्राकरणिकेनाप्राकरणिकाक्षेपः समासोक्तिरिति विवेकः ॥ ९८ ॥

तां विभजते—

**कार्ये, निमित्ते, सामान्ये, विशेषे, प्रस्तुते सति ।**
**तदन्यस्य वच,स्तुल्ये तुल्यस्यैवे,ति [ख] पञ्चधा ॥ ९९ ॥**

'से'त्यनुवर्त्तते· कार्यादिपञ्चके प्रस्तुते तदन्यस्य कारणादिपञ्चकस्याप्रस्तुतस्य वर्णनमिति सा पञ्चधेत्यर्थः· तत्र कार्ये प्रस्तुते कारणस्य वर्णनं यथा—

याताः किन्न मिलन्ति सुन्दरि ! पुन,श्चिन्ता त्वया मत्कृते
नो कार्या, नितरां कृशासि, कथयत्येवं साबाष्पे मयि, ।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥

अत्र 'प्रस्थानात्किं निवृत्तोसी'ति· कार्ये पृष्टे कारणस्य प्रियया भाविमरणोत्साहस्य वचनम्· 'कि'शब्दः प्रश्नार्थ इति न कारणप्रस्तावः । कारणप्रस्तावे कार्यवचनं यथा—

राजन् ! राजसुता न पाठयति मां, देव्योपि तूष्णीं स्थिताः,
कुब्जे ! भोजय मां, कुमारसचिवैर्नाद्यापि किं भुज्यते, ।

(क) सा वा सैवेति प्रायः प्रकाशेषूपलभ्यते ।
(ख) तुल्यस्येति चेति पाठः प्रकाशेषूपलभ्यते ।

इत्थं राजशुक^(क)^स्तवारिभवने मुक्तो ऽध्वगैः पञ्जरा-
च्चित्रस्थानऽवलोक्य शून्यवलभावेकैकमाभाषते ॥

अत्र 'प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गता' इति शत्रुपलायने कारणे प्रस्तुते तस्याभावशाविशेषरूप कार्यमुक्तम्। सामान्ये प्रस्तुते विशेषवचनं यथा–

एतत्तस्य मुखात् क्रियत्, कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः, शृण्वऽन्यदस्मादपि, ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्याद्दीयमाने शनैः
कुत्राड्डीय गतो ममेत्यनुदिनं निद्राति नान्तः शुचा ^(ख)^ ॥

अत्र 'जडानामस्थल एव ममत्वसम्भावना भवती'ति सामान्ये प्रस्तुते पुरुषविशेषस्य ममत्वविशेषो ऽभिहितः। विशेषे प्रस्तुते सामान्यवचनं यथा–

सुहृद्वधूबाष्पजलप्रमार्जनं करोति वैरप्रतियातनेन ^(ग)^यः ।
स एव पूज्यः, स पुमान्, स नीतिमान्, सुजीवितं तस्य, स भाजनं श्रियः ॥

अत्र 'श्रीकृष्ण निहत्य नरकासुरवधूनां दुःखं यदि शमयसि, तदा त्वमेव श्लाघ्य' इति विशेषे प्रस्तुते सामान्यमुक्तम्। तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः, विशेषणविशेष्यवाचिनां सर्वेषामपि श्लिष्टत्वस्य, विशेषणमात्रवाचिनां वा श्लिष्टत्वस्य, श्लेषाभावेपि सादृश्यमात्रस्यैव वा प्रकृताक्षेपहेतुत्वात्। आद्यो यथा–

पुंस्त्वादपि प्रविचलेद्यदि, यद्यधोपि
यायाद्, यदि प्रणयने नमहानपि स्यात्, ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन ॥

अत्र पुंस्त्वादित्यादिविशेषणानां पुरुषोत्तमेनेति विशेष्यस्य च

(क) नाथ ! शुक इति प्रायः प्रकाशः ।
(ख) नान्तः शुचेति पा० ।
(ग) यातनेनेति पु० ।

श्लेषात् सत्पुरुषप्रतिपत्तिः।(क) नच श्लेष एवायम्, 'अवयवशक्तेः समुदायशक्तिर्बलीयसी'तिन्यायात् प्राग्विषूपस्थितौ सत्पुरुषस्याक्षेपेणोपस्थितेः श्लेषसत्त्वेऽप्यप्रस्तुतस्य प्रथमोपस्थित्यैवाऽप्रस्तुतप्रशंसात्वात् । द्वितीयो यथा–

येनास्यऽभ्युदितेन चन्द्र ! गमितः क्लान्तिं, रवौ तत्र ते
युज्येत प्रतिकर्त्तुमेव, न पुनस्तस्यैव पादग्रहः, ।
क्षीणेनैतदनुष्ठितं यदि, ततः किं लज्जसे नो मना,-
गस्त्वेवं, जड़धामता तु भवतो, यद्व्योम्नि विस्फूर्जसे ॥

अत्र विशेष्यवाचि चन्द्रपदं न श्लिष्टम् । तृतीयो यथा–

आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन, ।
क्षारीकृतं च, वडवादहने(ख) हुतं च,
पातालकुक्षिकुहरे विनिवेशितं च ॥

अत्र श्लेषाभावेऽपि सादृश्यमात्रेणासत्पुरुषाक्षेपः। यथा वा मम–

कौटिल्यं नयने निवारयतरां, शीघ्रां गतिं शीलय,
व्यक्तार्थां कुरु भारतीं, विहसिते ऽप्यौद्धत्यमायोजय, ।
कुग्रामप्रमदाविलासरसिकः कान्तस्त्वया ऽऽमोदितो,
नायं नन्दिनि ! नागरीजनसमाचारैः समाकृष्यते ॥

इयं च त्रिधा काचि(ग)द्वाच्यार्थे प्रतीयमानार्थानध्यारोपमात्रेण, काचित्प्रतीयमानार्थाध्यारोपेण, काचित्त्वंशभेदेन तदध्यारोपानारोपाभ्याम्. तत्राद्या यथा–

अब्धेरम्भःस्थगितभुवनाभोगपातालकुक्षेः
पोतोपाया इह हि बहवो लङ्घनेऽपि क्रमन्ते,(घ) ।

(क) प्रतीतिरिति पु० ।
(ख) वड़वावपने–इति तु प्रायः ।
(ग) क्षमन्ते–इति प्रकाशः ।
(घ) ग्राके'टर्कमिति क्वचित् ।

आहो रिक्तः कथमपि भवेद्वैव दैवा,त्तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यत्र कल्पः ॥

अत्र पुरुषेष्वितेऽर्था अबाधिता एवेति न प्रतीयमानार्थाध्यारोपः । द्वितीया यथा-

कस्त्वं भोः, कथयामि दैवहतकं मां विद्धि शाखोटकं,(क)
वैराग्यादिव वक्षि, साधु विदितं, कस्मादिदं कथ्यते, ।
वामेनात्र वट,स्तमध्वगजनः सर्वात्मना सेवते,
न च्छायापि परोपकारकरणे(ख) मार्गस्थितस्यापि मे ॥

अत्र शाखोटके सम्बोध्यत्वोच्चारयितृत्वादिकमनुपपन्नमिति प्रतीयमानाध्यारोपः । तृतीया यथा-

सो ऽपूर्वा रसनाविपर्ययविधि,स्तत्कर्णयोश्चापलं,
दृष्टिः सा मदविस्मृतस्वपरदि,क्किं भूयसोक्तेन वा, ।
सर्वं विस्मृतवानसि भ्रमर हे ' यद्वारणो ऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः ! क एष ग्रहः ॥

अत्र हस्तिनो रसनाविपर्यासः, शून्यकरत्वं, मदश्च, वाच्यस्य भ्रमरस्य सेवनाभावहेतुत्वेन वाच्यानि, न च तद्धेतवः, मदस्तु प्रत्युत सेवने हेतुरिति तदंशे प्रतीयमानपुरुषाध्यारोपापेक्षा· कर्णचापलं तु भ्रमरस्यासेवने हेतुरेवेति तदंशे नाध्यारोप इति ॥ ९९ ॥ (इत्यऽप्रस्तुतप्रशंसा ११)

**निगीर्याध्यवसानं तु प्रकृतस्य समेन यत्, ।**
**प्रस्तुतस्य यदन्यत्वं, यद्यर्थोक्तौ च कल्पनम्, ॥ १०० ॥**
**कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः; ।**
**विज्ञेया ऽतिशयोक्तिः सा-**

प्रकृतस्योपमेयस्य, समेनोपमानेन, निगीर्याध्यवसानं द्रढीयसी बुद्धि,-स्सैकातिशयोक्तिः· यच्च तदेव वस्त्वन्यत्वेन विविक्ताकारवस्त्वन्तरत्वेनाध्य-

(क) क्वाचित्त्रयस्थाने क्वचित्त्रयं पु· ।
(ख) करणो, करिणो इति तु नास्तियुक्तं स्तः ।

वसीयते, सा द्वितीया· यत्र 'चे'च्छब्देन 'यदि'शब्देन वा यद्यर्थोक्तौ कल्पनमर्थादसम्भविनोऽर्थस्य, सा तृतीया· यत्र कार्यकारणयोः प्रसिद्धस्य पौर्वापर्यस्य विपर्ययो वैपरीत्य, कारणस्य शीघ्रकारिताप्रतीतये,[क] सा चतुर्थीति चतस्रोऽतिशयोक्तयः· तत्राद्या यथा–

कमलमनम्भसि, कमले च कुवलये, तानि[ख] कनकलतिकायाम्, ।
सा च सुकुमारसुभगे,त्युत्पातपरम्परा केयम् ॥

अत्र मुखादि कमलादित्वेनाध्यवसितम्· यथा वा मम–

कलसे[ग] परममहत्त्वं, तिमिरस्तोमस्य सोमसहवास·, ।
वियति च शैवलवल्ली, शिव शिव कुसुमेषुसर्गसौभाग्यम् ॥

द्वितीया यथा–

अण्ण लडहत्तणअं, अण्णं विअ कावि वत्तणच्छाआ, ।
सामा सामण्णपआवइणो रेहव्विअ ण होइ ।

स्पष्टम् ।

तृतीया यथा–

राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः, ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥

चतुर्थी यथा–

हृदयमधिष्ठितमादौ मालत्याः[घ] कुसुमचापबाणेन, ।
चरमं रमणीवल्लभ ! लोचनविषयं त्वया भजता ॥

॥ १०० ॥–॥ (इत्यतिशयोक्तिः १२)

–प्रतिवस्तूपमा तु सा, ॥ १०१ ॥

(क) प्रतीयत इति तु पु· न युक्तम् ।

(ख) कमले कुवलयमातानीति पा ।

(ग) कलश इति पु· ।

(घ) मालत्या इति पा· तु न युक्तम्· कुट्टनीमताख्यनिबन्धस्यमिदं पद्यं हि मालतीनामवेश्याविषयकं तद्दूतीवाचोयुक्तितया कल्पितोपदेशरूपम्· मालविकाग्निमित्रस्थं मालविकादूत्या राजानं प्रति तदवस्थावेदनरूपमिति तु महेश्वरादीनां कल्पनामात्रम्, मालविकाग्निमित्रे सर्वथैवास्याऽभावादिति ।

सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।

एकस्य सामान्यस्य सामान्यधर्मस्य वाक्यद्वये उपमानोपमेयवाक्ययोर्यत्र द्विरवस्थिति र्योच्छब्दभेदेन, अभिन्नस्य शब्दस्य दुष्टत्वात्, सा प्रतिवस्तूपमा, वस्तुनो वाक्यार्थस्योपमानत्वात्· अत्र 'द्वि,द्वये' इत्यनेकोपलक्षके, मात्रानुरोधात्· सा च द्विधा, अमालारूपा मालारूपा च· तत्राद्या यथा–

देवीभावं गमिता परिवारपदं कथं भजत्येषा, ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥

अत्र परिवारपदत्वपरिभोगयोग्यत्वयोरनर्थान्तरत्वादुदाहरणत्वमित्येके · 'कथं भजति' 'न खल्वि'त्यनयोरेकार्थतया तथात्वमित्यपरे ।
अन्त्या यथा–

यदि दहत्यनलो, ऽत्र किमद्भुतं, यदि च गौरवमद्रिषु, किं ततः. ।
लवणमम्बु सदैव महोदधेः· प्रकृतिरेव सतामविषादिता ॥

अत्र 'किमद्भुत'मित्यादिभिरद्भुताभावस्य वाक्यचतुष्टयेप्युपादानान्मालात्वम्· चतुर्थवाक्य चोपमेयवाचि ॥ १०१ ॥ ऽ ॥ (इति प्रतिवस्तूपमा १३)

दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिविम्बनम् ॥ १०२ ॥

एतेषामुपमानोपमेयसाधारणधर्माणां सर्वेषां प्रतिविम्बन दृष्टान्तः·, दृष्टोऽन्तो निश्चय उपमानिर्वाहको ऽत्रालङ्कार इतिव्युत्पत्तेः· स च द्विधा साधर्म्यवैधर्म्याभ्याम्· तत्र साधर्म्येण यथा–

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम्, ।
आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः ॥

अत्र साधर्म्यस्यापि प्रतिविम्ब एवेति प्रतिवस्तूपमाभेदः । वैधर्म्येण यथा–

तवाहवे साहसकर्मशर्मणः पाणिं(क) कृपाणान्तिकमानिनीषतः ।

(क) करमिति पा· ।

भटाः परेषां विशरारुतामगु(क),र्दधत्यवाते स्थिरतां हि पांसवः(ख) ॥

वैधर्म्यविपर्यये साधर्म्यपर्यवसानमिति दृष्टान्तालङ्कारत्वम् ॥१०२॥ (दृष्टा १४)

सकृद्वृत्तिस्तुधर्मस्य प्रकृताप्रकृतात्मनाम्, ।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥ १०३ ॥

प्रकृताप्रकृतात्मनामर्थादुपमानोपमेयभूतानां धर्मिणां साधर्म्यस्य क्रियादेः सकृद्वृत्तिरेकवारमेवोपादानं च,तदेक,मेकस्यस्यैव वाक्यदीपकत्वेन प्रदीपसाम्यात्· कारकस्य च बह्वीषु क्रियासु सैव सकृद्वृत्तिरेव, द्वितीय-दीपकम्· 'इति' शब्दः प्रकारे· तेनोक्तप्रकारद्वयवद्दीपकमित्यर्थः· आद्यं यथा·

किवणाणं धणं, णाआणं फणमणी, केसराइं सीहाणं, ।
कुलबालियाणं थणआ, कुतो छिप्पंति अमुआणं ॥

अत्र 'छिप्पन्ती'ति सकृदुपात्तम्· कुलपालिकानां स्तना उपमेयाः ।

अन्त्यं यथा–

स्विद्यति, कूणति, वेल्लति, विवलति, निमिषति, विलोकयति तिर्यक्, ।
अन्तर्नन्दति, चुम्बितुमिच्छति, नवपरिणया वधूः शयने ॥

अत्र 'वधू'रिति कारकस्य सकृद्वृत्तिः ॥ १०३ ॥

मालादीपकमाद्यं चेद्यथोत्तरगुणावहम् ।

गुणावहमुपकारकम्· यथा–

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवा! ऽऽकर्णय येन येन सहसा यद्यत्समासादितम्, ।
कोदण्डेन शराः, शरैररिशिर,स्तेनापि,भूमण्डलं,
तेन त्वं, भवता च कीर्त्तिरतुला,कीर्त्या च लोकत्रयम् ॥

स्पष्टम्· मालोपमादीनां बहूपमानसम्बन्धाचापरो विशेष इति न ते लक्षिताः·, इदं तु पृथग्लक्षितम्, उत्तरोत्तरमुपकार्योपकारकतया परस्पर-संसर्गेण मालाभावमापन्नानां सकृद्धर्मनिर्देशरूपत्वेनाधिकविशेषानुप्रवेशा-दिति ॥ ऽ ॥ (इति दीपकम् १५) (शेषमग्रे)

(क) ०मयुरिति पा· ।
(ख) पांशवइति पु· ।

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

(Continued from page 314 vol XII)

## अथ चतुर्थः पादः आरभ्यते ।

षड्विंशतिरस्य वङ्क्रय इत्यादौ समस्योहाधिकरणम् ।

सू० षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गणस्य प्रविभ[1]क्तत्वादविकारे हि तासामकार्त्स्न्येनाभिसम्बन्धो विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥

तत्रैव षड्विंशतिरस्य वङ्क्रय इति श्रुतम्, तद्धि पश्वादिषु पशुगणेषु चोदकप्राप्तं पञ्चधा संदिह्यते, किं षड्विंशतिरस्येत्युभयपदाभ्यासः? उताविकारेण प्रयोगः? उत षड्विंशतिपदगतमेकवचनं द्विवचनं बहुवचनाभ्यामूहितव्य? मथवा ऽस्येत्येतत्पदमभ्यसितव्य? माहोस्वित्सर्वपशुगता वङ्क्रीः समस्य तासामियत्ता वक्तव्ये? ति, तत्र षड्विंशतिसङ्ख्याया अस्य-पदाभिधेयस्य च पशोर्यः सम्बन्धस्तत्प्रधानमिदं वाक्यं, ततः प्रतिपशु तत्सम्बन्धं प्रकाशयितुं षड्विंशतिपदमस्य-पदं चाभ्यसनीयम्, अयमेवात्र प्रधानतः पूर्वपक्षः, इतरे तु सम्भवमात्रेणोपन्यस्य दूष्यन्ते,-तत्र द्वितीयः पक्षः, अकरणभूतोऽयमदृष्टार्थो मन्त्रस्तस्मादविकारः, तृतीयस्तु यद्यप्यकरणः तथाऽपि शमितॄणामन्यूनावदानोद्धरणाय पार्श्वयोः साकल्यं स्मारयन्दृष्टार्थ एव, तत्र षड्विंशतिसङ्ख्या प्राधान्येनं प्रकाश्या, तेन द्वयोः पश्वोः षड्विंशतिसङ्ख्ये प्राकाशयितुं षड्विंशती अनयोर्वङ्क्रय इति, ननु षड्विंशति-शब्दे

१ अविकारेणेति पा० ।

सङ्ख्याप्रधाने सङ्ख्येयेषु वङ्क्रिषु षष्ठी स्यात्सत्यं, यथा सिद्धान्ते वङ्क्रीणां प्राधान्ये सङ्ख्याशब्दस्य लक्षणया सामान्याधिकरण्यन्तया सङ्ख्याप्राधान्ये वङ्क्रि-शब्दो लक्षणया सङ्ख्यासामानाधिकरण्यं प्रतिपत्स्यते, चतुर्थेन्तु पशु-प्रधानमिदं स हि चोदितः सङ्ख्या त्वचोदिता, तस्मात् षष्ठ्यन्ताभिधेयः पशु-रेवात्र प्रधानं, तद्विशेषणं सङ्ख्या वङ्क्रयश्च षड्विंशतिर्वङ्क्रिकोऽयं पशुरिति ततश्चैकैकं पशुं भेदेन प्रकाशयितुमस्य-पदमभ्यसितव्यं, सिद्धान्तस्तु "वङ्क्री-यत्ता प्रकाश्येह पार्श्वसाकल्यसिद्धये। ता इति प्रतिनिर्देशादपि तासां प्रधा-नता। वङ्क्रयोऽत्र प्रधानन्ता एव षड्विंशति-शब्देनेयत्तया प्रकाश्यन्ते, अन्य-नयोः पार्श्वयोरवद्यतीति वचनाद्यद्यपि पशुश्चोदितस्तथाऽप्यसौ हृदयादि-द्वारेणैव साधनं न साक्षादिति वक्ष्यामः, तस्माद् वङ्क्रयः प्रधानन्तथा च ता अनुष्टोच्यावयतादिति तासामेवोत्तरत्र प्रतिनिर्देश उद्धरणं चोच्यते पशुप्रा-धान्ये हि तमिति स्यात्, सङ्ख्याप्राधान्ये तामिति, तस्माद्वङ्क्रीयत्तापरत्वात्सम स्याभिधानम्। ननु यद्यपि वङ्क्रीयत्तापरमिदं तथाऽपि प्रतिपशुभेदेन वङ्क्री-णामुद्धरणात् भेदेनैव पशोर्वङ्क्रय इयत्त्वेन वक्तव्या इति षड्विंशतिपदा-भ्यास एव न्याय्यस्तथा चाश्वलायनादयो यज्ञसूत्रकारा मन्यन्ते नेति भगवान् जैमिनिः, स हि मन्यते, यथैव प्रकृतौ द्वयोः पार्श्वयोस्त्रयोदशत्रयोदशसु वङ्क्रिषु पृथक् पृथगुद्ध्रियमाणास्वपि समस्तानामेवेयत्तोक्ता षड्विंशतिरस्य वङ्क्रय इति, तथा विकृतिष्वप्युद्धारभेदमतन्त्रीकृत्य प्रयोगसमवेतसमस्त-वङ्क्रीयत्ता मन्त्रेण प्रकाशयितव्या[1], तस्माद् द्विपञ्चाशदनुयोर्वङ्क्रयोऽष्टस-प्ततिरेषां वङ्क्रय इत्येवं समस्ताभिधानमेव न्याय्यम्॥

चतुस्त्रिंशद्वाजिन इत्यनेन आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपविशेषवच-नाधिकरणम्।

सू० अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वै-शेषिकम्॥ २॥

अश्वमेधे श्रूयते "अश्वस्तूपरो गोमृगस्ते प्राजापत्या" इति तस्याश्वस्य चतुस्त्रिंशद्वङ्क्रयस्तत्र वैशेषिको मन्त्रः पठितः, चतुस्त्रिंशद्वाजिनो देवबन्धोर्व-ङ्क्रीरश्वस्य स्वधितिः समेती"ति तत्रेदं वचनमामनन्ति न "चतुस्त्रिंशदिति ब्रू-

[1] पृथक् पृथगुद्धार्यमाणास्विति पा०।

यात् षड्विंश[1]तिरित्येव ब्रूयादिति, तत्र भाष्यकारो ऽश्वस्य चतुस्त्रिंशदित्येवमादिसूत्रपञ्चकमेकाधिकरणत्वेन व्याख्यातवान् । वार्त्तिककारस्तु एतत्सूत्रं पृथक्कृत्य प्राप्तिसूत्रत्वेनाधिकरणान्तरत्वेन व्याख्यातव्यमित्युक्तवान् । तत्राधिकरणान्तरमेव द्रष्टव्य वैशेषिक्या त्वचः प्रतिषेधोऽश्य न चतुस्त्रिंशदिति ब्रूयादिति उत्तराधिकरणे वक्ष्यति । इह त्वत्र चिन्त्यते, किं निषिद्धमपि वैशेषिकं पक्षे स्यात् ? उत सर्वदा प्राकृतमेवेति तत्र पाठप्राप्त वैशेषिक गिरापदवत् प्रत्यक्षवचनबलाद्विकल्पवद्वाधितत्वात्प्राकृतमेवाधिगुवचनमिरापदवत्सर्वदा वक्तव्यमिति प्राप्ते ब्रूमः "इरापद हि प्रत्यक्षेण वचनेनाद्रिरापदस्थाने विहितं युक्तं यत्पाठप्राप्तं वैशेषिकं गिरापदं बाधते, तस्मिन् बाधिते ऽनुवाद एव गिरापदप्रतिषेध , न त्वेवमिह षड्विंशतिरित्येव ब्रूयादित्येतदेव गिरापदवद्विधिशक्तित्वात्प्राकृतस्य विधौ समर्थमतोऽत्र न चतुस्त्रिंशदित्येव प्रतिषेधं विधत्ते, तस्मिंश्च प्रतिषिद्धे षड्विंशतिरित्येव ब्रूयादिति वेदकप्राप्तानुवाद एव न त्वेव गिरापदप्रतिषेधादिरापदं प्राप्नोति येनानूद्येत, तस्यापि विधौ वाक्यभेदः, तेन तत्रेरापदविधिरेव वाक्यार्थः, इह तु प्रतिषेध एव विधेयः, स च प्राप्तिपूर्वकः, प्राप्तिश्च न शास्त्रमन्तरेण सम्भवतीत्यतोऽवश्यं वैशेषिकवचनस्य प्रापकं प्रकरणपाठानुमितं वाक्यं लाघवाय काममङ्गीक्रियतां अङ्गीकृते चास्मिन्नुभयोर्विधिप्रतिषेधयोः शास्त्रत्वाविशेषाद्विकल्पः, तस्माद्वैशेषिक[2]वचनमपि कर्त्तव्यम् ॥

आश्वमेधिकसवनीयाश्वस्य न चतुस्त्रिंशदिति ब्रूयात् इत्यनेन समस्ताया एव ऋचो निषेधाधिकरणम् ।

सू॰ तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ ३ ॥

तत्रैव संशयः किमश्वस्य पठितमेव चतुस्त्रिंशद्वाजिन इति वैशेषिकं कर्त्तव्यम् ? उत प्राकृतमपि, यदाऽपि प्राकृतं तदापि किन्तु परगोमृगयोरश्वस्य च समस्य वचनं षडशीतिरेषां वङ्क्रय इति, ? उत तूपरगोमृगयोः सामासिकं वचनं कृत्वाऽश्वस्य षड्विंशतिरस्य वङ्क्रय इति, एवमयथार्थमधि-

१ विंशतिरित्येव ब्रूयादिति पा॰ ।
२ वैशेषिकमपि इ त पा॰ ।

गुवचनं कर्त्तव्यमिति, तन्न न, चतुस्त्रिंशदिति ब्रूयात्षड्विंशतिरित्येव ब्रूयादित्यनेन पठितायामेवर्चि गिरापदवत् चतुस्त्रिंशदिति पदं प्रतिषिध्य षड्विंशतिपदमिरापदवन्निक्षिप्यते न त्वयं समा[1]म्नाताया ऋचः प्रतिषेधः, तस्मात्षड्विंशतिपदयुक्ता वक्तव्येति चोदकप्राप्ताध्रिगुवचनस्य निवृत्तिरिति प्राप्ते उच्यते "एवकारोपबद्धत्वान्न षड्विंशतिचोदना । चतुस्त्रिंशन्निषेधे च नानुवादोऽस्य सम्भवी । ऋच एव निषेधोऽतस्तथा सति च चोदकात् । प्राप्तं षड्विंशतिरिति ब्रूयादित्यनुकीर्त्यते ॥ न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयादित्येकमिदं वाक्यं तत्रैकोऽत्र विधिरितरोऽनुवादः, तत्र यदीरापदवत्षड्विंशतिर्विधीयेत ततश्चतुस्त्रिंशत्प्रतिषेधो गिरापदप्रतिषेधवदवकल्प्येत न त्वत्र षड्विंशतिपदमिरापदवच्छक्यं विधातुम् एवकारोपबन्धात्, एवकारार्थविशेषणं हि ब्रूयादिति न स्वयं विधित्वमेवकारार्थश्च निवृत्तिस्तस्मात् षड्विंशतिपदव्यतिरिक्तस्य निवृत्तिरिह विधीयते, एवं कृत्वाद्वैयमिति तु शक्नोति विधातुमिति विशेषः, तेन चतुस्त्रिंशत्प्रतिषेधोऽत्र विधीयते, तद्यदि पदमात्रं प्रतिषिध्येत न षड्विंशतिपदमनुवदितुं शक्यते प्राप्त्यभावात्, न हि पठितायामृचि चतुस्त्रिंशत्पदे प्रतिषिद्धे षड्विंशतिपदस्य प्राप्तौ प्रमाणमस्ति तस्मात्समस्ताया ऋचः प्रतिषेधः तथा सति हि षड्विंशतिरित्येव ब्रूयादिति चोदकप्राप्तत्वात्सम्भवत्यनुवादः, शक्नोति च चतुस्त्रिंशदिति प्रतीकग्रहणेनर्चं प्रतिषेद्धुं, गिरापदेन त्वनाद्यत्वात् ग्रहणं न शक्यमिति वैषम्यं, द्वितीयपूर्वपक्षवादी त्वाह प्राकृतेऽपि वचने क्रियमाणे षड्विंशतिरिति ब्रूयादिति वचनादेकमेव वक्तव्यमश्वेन समस्य वचनमिति, तदिदं मन्दं, न ह्यनेन षड्विंशतिपदं विधीयते चतुस्त्रिंशन्निषेधपरत्वाद् वाक्यस्य, तद्विधौ वाक्यभेदादेव शब्दोपबन्धाच्चाशक्यमिदं विधातुमित्युक्तं, तस्मादेषोऽत्र वाक्यार्थः—न चतुस्त्रिंशदिति पठितं ब्रूयात्किन्तु यथाप्राप्तमध्रिगुवचनमेवेति, तस्मात्समस्य वचनं, पक्षे च वैशेषिकमृग्वचनम् ॥

आग्नीषोमीयपशावुरूक-शब्देन वपाभिधानाधिकरणम् ।

सू० वनिष्ठुसन्निधानादुरूकेण वपाभिधानम् ॥ ४ ॥

(१) समस्ताया ऋच इति पा० ।

वनिष्टुमस्यमाराविष्टोरूकं मन्यमाना इति किमुरूक-शब्देनोलूकस्याभिधानं तत्सादृश्यबुद्ध्या वनिष्ठोर्लवनं प्रतिषिध्यते? । उत वपाभिधानम् उरूक-शब्दः वपोद्धरणकाले वपां मन्यमानावनिष्टुं माराविष्टेति । तत्र रलयोरेकत्वादुलूकाभिधाने प्राप्ते ब्रूमः ॥ न तावद्वनिष्ठोर्लवित[1]व्यस्य लवनं शक्यं निषेद्धुं सादृश्यबुद्धिनिषेधस्यादृष्टार्थत्वात् । तस्मादवयवव्युत्पत्त्या वपाभिधानं दर्शिता चावयवव्युत्पत्तिर्भाष्ये वपोद्धरणकाले सन्निधानाद्भ्रान्त्या वनिष्ठोर्लवनं प्रसक्तमाशङ्क्य तन्निवारणार्थवचनं दृष्टार्थं भवति तस्माद्वपाभिधानमिति वपाविवृद्धावूहः ।

अधि॰ ॥ प्रशसाबाहू इत्यत्र प्रशसा-शब्दस्य प्रशंसापरत्वाधिकरणम् ।

सू॰ प्रशसास्यभिधानम् ॥ ५ ॥

"प्रशसावाहू कृणुता"दिति किं प्रशसेति तृतीयान्तमस्यभिधानं असिना बाहू छेत्तव्या? विति उत द्वितीयाद्विवचनस्याकारादेशेच्छान्दसे तत्कारलोपे कृते प्रशंसावचनोऽयमिति । तत्र प्रशास-शब्दस्यासौ प्रसिद्धत्वात्तद्वचनं मन्यते न स्वधितिसाधने छेदने शक्यमसेः करणत्वं प्रकाशयितुं मान्त्रवर्णिकद्रव्यकल्पनायां चातिगौरवम् । तस्मात् प्रशंसावचनत्वं प्रशस्तौ वाहू कृणुतादविकलावित्यर्थः । एवं दृष्टार्थता भवति, तस्माद्बाहुविवृद्धावूहः ।

अधि॰ ॥ श्येनमस्य वक्ष इत्यादौ श्येनादिशब्दानां कार्त्स्न्यवचनाधिकरणम् ।

सू॰ श्येन-शला-कश्यप-कवषस्रेकपणष्वाकृतिवचनं प्रसिद्धसन्निधानात् ॥ ६ ॥

श्येनमस्य वक्षः कृणुतादिति श्येनसदृशमित्यर्थः तत्र संशयः किं सादृश्यमेवात्र विवक्षितम्? उत साकल्य? मिति तत्र सादृश्यमेवामी पिष्टपिण्डाः सिंहाः क्रियन्तामितिवत् विधीयते, तेन वक्ष उद्धृत्य कर्तनाद्युपायेन पक्षचरणचञ्च्वादिसम्पादनेन श्येनसंस्थानं कर्त्तव्यं नैतद् युक्तम् अदृष्टार्थतापसङ्गात् कर्तने च वक्षसो वैकल्याद्धविर्विनाशः स्यात् अतः साकल्यमत्र

१ लवितस्य लवनमिति पा॰ ।

विधीयते अविकलं हि यतः श्येनसदृशं भवति तदनेन प्रकारेणावैकल्यमेवोच्यते दृष्टार्थत्वात्, एवं शलादीपर्णीकश्यपे वासो कवषोरुसे कपर्णाष्टीवन्तीत्यपि साकल्यमेव ॥

दर्शार्थोद्धृताग्निनाशे प्रायश्चित्तरूपज्योतिष्मत्या अननुष्ठानाधिकरणम् ।

सू० प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थं हि विधीयते ॥ ७ ॥

अग्निहोत्रे श्रूयते "अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतो ऽग्निहोत्र उद्वायेदि"ति तत्र संशयः यदा दर्शार्थे नोद्धृतोग्निरग्निहोत्रकाले उद्वाति किं तदा ज्योतिष्मतीष्टिः कर्तव्या नेति तदर्थमिदं विचार्यते किमग्निविशिष्टोद्वाननिमित्तमिदं कर्माग्निहोत्रस्यारादुपकारकम् उतोद्वानपरीताग्निनिमित्तं तस्यैवाग्नेरुत्पादकं सामवायिकम् ? मिति किं प्राप्तम् "उद्वायेदिति लिङ्श्रुत्या धात्वर्थस्य निमित्तताम् । वदत्यग्नेस्तु वाक्येन तस्मादारादुपक्रिया । यदा हि वाक्यगम्याग्निनिमित्तत्वं तिरस्कारेण पदश्रुत्योद्वा[1]सनस्य निमित्तता तत उद्वासनस्य क्रत्वङ्गत्वेनासंस्कार्य आदग्नेस्तु विशेषणत्वेन कार्यान्वयाभावात् आरादुपकारकत्वमेवेति निमित्तस्य च प्रकरणेन विशेषणासम्भवाद्दर्शार्थस्याप्युद्धृतस्याग्नेरुद्वाने सञ्जाते निमित्तमिति कर्त्तव्येऽष्टिरिति प्राप्ते ब्रूमः "उद्वानस्याग्नियुक्तस्य नित्यत्वान्न निमित्तता । न च तस्याग्निना व्याप्तिः कदाचिदपि विद्यते । अग्निसम्बन्धस्तावदुद्वानपर्यायस्य विनाशस्यावयवशः सर्वदा विद्यमानो न निमित्तं भवति, न च विनाशस्य चिन्तितनिमित्तितादिषु सर्वदा वर्त्तमानस्याग्निना वा व्याप्तिः सम्भवति यो निमित्तं स्यादुद्वानपरीतस्य त्वग्नेर्निमित्तता युक्ता, कादाचित्की हि तेनाग्नेर्व्याप्तिर्न तु सदातनी, यद्यप्यग्नेरुद्वानसबन्धो नित्यः तथापि व्याप्तिरनित्या तेनाग्निरेवात्रोद्वानव्याप्तो निमित्तं तस्योद्वानपरीतस्य कार्यायोग्यस्योत्पत्त्यर्थमियमिष्टिरग्निहोत्राङ्गम् । अग्निहोत्रार्थस्य चाग्नेरुद्धृतस्योद्वातस्योत्पादनं कुर्वती अग्निहोत्राङ्गं स्यात् नान्यार्थस्य तस्माद्दर्शार्थेनाग्ना उद्धृत उद्वानेनैतत्प्रायश्चित्तम् ॥

---

[1] पदश्रुत्योद्वानस्येति पा० ।

धार्य्योद्धाने प्रायश्चित्तरूपज्यो-तिष्मत्यनुष्ठानाधिकरणम् ।

सू० धारणे च परार्थत्वात् ॥ ८ ॥

इदमाम्नायते "धार्यो गतश्रियः आहवनीय" इति तत्र यदा ध्रियमाणोऽग्निहोत्रकाल उद्धाति तदा किमिष्टिः कार्या? उत नेति संशये अग्निहोत्रार्थं उद्धाते प्रायश्चित्तमिदं श्रुतं धार्यस्य चास्ति तादर्थ्यं सर्वार्थं धार्यते ह्यसौ । सर्वकर्मणां धार्यमाणोऽग्निः प्रत्येकमङ्गम् अतोऽग्निहोत्रार्थताऽप्यस्तीति तदुद्धाने कर्त्तव्येष्टिः, नैवम् "अन्यार्थमुद्धृतो ह्येष गतश्रीत्वेन धार्यते । धारणस्य निमित्तं तन्नाद्धारस्याश्रुततः" ॥ न हि गतश्रीत्वेन पुरुषस्याग्न्युद्धरणं श्रुतं येनोद्धरणमुद्धृतोवाऽग्निः सर्वार्थः स्यात् किं तु धारणमात्रं तेन यदा यं कञ्चित्कर्मविशेषमधिकृत्याग्निमुद्धरति तदा तस्य धारणमात्रं गतश्रीत्वेन करोति यस्मिंश्च कर्मण्युपसम्प्राप्तेऽग्निरुद्धृतस्तदर्थमेवोद्धरणम् उद्धृतश्चाग्निस्तदर्थ एव निमित्तवशाद्धार्यमाणः प्रसङ्गादग्निहोत्रस्योपकरोति इति न तदुद्धाने प्रायश्चित्तम् ॥

दर्शार्थस्योद्धरणस्यामन्त्रकत्वाधिकरणम् ।

सू० न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ॥ ९ ॥

दर्शोपक्रमेऽग्न्युद्धरणे क्रियमाणे किमग्निहोत्राङ्गभूत उद्धरणमन्त्रो वाचा त्वाहोत्रेत्यादिः प्रयोक्तव्यो ने? ति संशयः तत्र "दर्शार्थेऽप्युद्धृते वह्नावग्निहोत्रं प्रवर्त्तते । साधनत्वप्रयुक्तश्च धर्मो नाङ्गमपेक्षते ॥ तेनाग्निहोत्रानङ्गभूतेऽप्युद्धरणे तदुपकारकत्वमात्रेण यागार्थयोर्दधिपयसोः प्रणीताधर्मा इव कर्त्तव्य एव मन्त्रः कालमनादृत्य, कालस्य गुणत्वेनासम्भवेऽपि मन्त्रस्यालोपो न्याय्यः । अयत्रोद्धरणमप्यवदग्निहोत्रस्याप्यङ्गमकालेऽपि क्रियमाणमन्यथाग्निहोत्रस्य प्रणयनलोपाद्वैगुण्यं स्यादिति प्राप्त उच्यते "काले खल्वनुपादेये प्राप्ते कर्म विधीयते । साङ्गं तस्मात्कालात्प्राङ्नाधिकारोऽस्ति कर्मणि" । अनधिकारिणा च क्रियमाणं निष्फलं स्यात्, तस्मान्नाप्राप्ते कालेऽग्निहोत्राङ्गमुद्धरणं तन्मन्त्रो वा कर्त्तव्यः ॥

प्रायणीयचरौ प्रदानधर्माणामननुष्ठानाधिकरणम् ।

सू० प्रदानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात् संसर्गाच्च मधूदकवत् ॥ १० ॥

"आदित्यः प्रायणीयः पयसि चरु"रित्यत्र संशयः किमेतत् पयश्चरुणा तुल्यं तद्देवतासम्बन्धिप्रदेयद्रव्यत्वेन विधीयते ततश्च प्रदेयधर्मैर्वत्सापाकरणादिभिः संबध्यते? उत चरोरेव श्रवणार्थं प्रणीता कार्ये विधीयते ततश्च न प्रदेयधर्मान् लभेतेति तत्र "चरोर्देवतया योगं पयसा चरुसङ्गतिं विदधद् । भिद्यते वाक्यमर्थद्वयविधानतः ॥ द्रव्यद्वयविशिष्टदेवतासम्बन्धविधौ त्वेकार्थविधानं तस्मात्पयः प्रातिपदिकार्थोऽपि देवतासम्बन्धी सप्तम्यर्थस्तु सह श्रपणादर्थसिद्धोऽनूद्यते अभ्युदितेष्टिवत् इति प्राप्ते ब्रूमः "चरुणा धारभूतेन पयसा च विशेषितः द्रव्यदेवतासम्बन्ध एकार्थोऽत्र विधीयते" पयसादित्यश्चरुरित्युभयविशिष्टद्रव्यदेवतासम्बन्धविधानान्नास्ति वाक्यभेदः, तत्र चरु प्रथमानिर्द्देशाद्धविः पयस्तु सप्तमीनिर्द्देशादाधारत्वेन सम्बध्यते, एवमवाक्यभेदे सति सप्तमीनिर्देशस्याविवक्षामङ्गीकृत्य तुल्यकल्पफलत्वमयुक्तमभ्युपगन्तुं तस्माच्च पयसि प्रदेयधर्माः ॥

अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम्

सू० अभ्युदये दोहापनयः स्वधर्मा स्यात्प्रवृत्तत्वात् ॥ ११ ॥

अभ्युदयेष्टावपि ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरु"मिति दधिशृतयोः सप्तमीनिर्द्देशात्पूर्ववत्प्रदेयधर्मा न कर्तव्या इति प्राप्तं तत्रोच्यते नापूर्वकर्मविधानादृतेनेकार्थविधिः सम्भवति न चेहापूर्वकर्मविधिः किन्तु पूर्वप्रवृत्तदर्शकर्मणि निमित्ते पूर्वमेवापनीतानां हविषां देवतान्तरसम्बन्धमात्रं विधीयत इति स्थितं षष्ठे, तद्यदि तण्डुलानां देवतान्तरसंम्बन्धे दधिशृतयोश्च प्रणीतार्थे विधिः स्यात्ततः प्राप्ते कर्मणि अनेकार्थविधानाद्वाक्यं भिद्येत, तस्मात्प्रदेयत्वेनैव प्रवृत्तयोर्दधिशृतयोर्देवतान्तरसंयोगमात्रं तण्डुलवद्विधीयते इति कर्त्तव्याः प्रदेयधर्माः ॥

पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानाधिकरणम् ।

सू० अपनयो वार्थान्तरे विधानात् चरुपयोवत् ॥ १२ ॥

"यः पशुकामः स्यात्सोऽमावास्यायामिष्ट्वा वत्सानपाकुर्यात् ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये स्थविष्ठास्तानिन्द्राय प्रदात्रे

दधंश्चरुमिति श्रुतं तत्राभ्युदयेष्टितुल्यश्रुतित्वात्तद्वदेव दधिपयसोः प्रदेयत्वं मन्वानः प्रदेयधर्मान्मन्यते अपूर्वकर्मविधानादप्राप्तप्रदानयोर्दधिपयसोः सप्तम्या अपणार्थमादित्यचरुपयोर्विधानमित्यकर्त्तव्याः प्रदेयधर्माः ॥

ज्योतिष्टोमे अपणानां प्रदेयधर्माननुष्ठानाधिकरणम् ।

सू० अपणानां त्वपूर्वार्थ(१)त्वात्प्रदानाथ विधानं स्यात् ॥ १३ ॥

ज्योतिष्टोमे श्रूयते "पयसा मैत्रावरुणं श्रीणाति सक्तुभिर्मन्थिन"मित्यादि तत्र संशयः किं पयःप्रभृतयः प्रदेयत्वेन सोमवद्विधीयन्ते ततश्च प्रदेयधर्माः क्रमादयः कर्त्तव्या ? उत सोमसंस्कारार्थत्वेन विधानादकर्त्तव्या ? इति, तत्र पयसासोमस्य मिश्रणं श्रूयते किमर्थं कथं नु नाम सोमे प्रदीयमाने पयोऽपि प्रदीयेतेति, एवं हि यागनिर्वृत्तिर्दृष्टमेव प्रयोजनं सोमसंस्कारार्थत्वे तु अदृष्टार्थता स्यादिति एतावता प्रदेयत्वं मन्यते, "द्वितीयया प्रधानत्वं सोमस्यात्रावगम्यते । तृतीयया च तादर्थ्यं पयसः प्रतिपाद्यते श्रुते चादृष्टं संस्कारकल्पना चैव दुष्यति । तस्मात्प्रदेयधर्माणां न पयःप्रभृतौ क्रिया ॥

अश्वमेधे ईशानाय परस्वतश्रुत्यनेन यागान्तरविधानाधिकरणम् ।

सू० पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ १४ ॥

अश्वमेधे "ईशानाय परस्वत आलभत"इति प्रकृत्य श्रूयते "पर्यग्निकृतानारण्यानुत्सृजती' ति तत्र सन्देहः किमीशानायालभत इत्यालम्भमात्रं विधीयते तेषां चालब्धानां पर्यग्निकरणविशिष्ट? उत्सर्गस्त्यागः पर्यग्निकरणवाक्येन विधीयते ? उतेशानायेति यागविधिः पर्यग्निकृतानारण्यानुत्सृजती ? ति, तत्रैव गुणविधिरिति तत्र सत्यपि देवतासंयोगे न यागविधिरालम्भमात्रं तु विधीयते यागविधित्वे 'सति पर्यग्निकरणवाक्येन किञ्चिद्विधेयं लभ्येत, न तावदुत्सर्गः, यागविधिनैव प्राप्तत्वाच्च पर्यग्निकरणं चोदकप्राप्तत्वात्, न पर्यग्निकरणोऽनन्तरकालम् उत्सर्गस्तस्यापि प्राप्तत्वात्, न पर्यग्निकरणानन्तर्यं आनन्तर्यशब्दाभावात्, न च कृप्तोप-

(१) त्वपूर्वत्वादिति पा० ।

कारपर्यग्निकरणविधानादपूर्वत्वं, न ह्यत्र पर्यग्निकरणं विधीयते सिद्धवदुपसर्जनीभूतपर्यग्निकरणनिर्देशात्र च पर्यग्निकरणान्ताङ्गरीतिविधिः प्राप्तत्वादेव, न च ततः परेषां पदार्थानां प्रतिषेधः प्रतिषेधकशब्दाभावात्, न च पर्यग्निकरणकाल उत्सृजतीति विधिः कालस्याशाब्दत्वात्कालविधौ तु कालान्तरं निवर्तेत नाङ्गान्तराणि तत्र चोदकप्राप्तसमस्ताङ्गयुक्त उत्सर्गः पर्यग्निकरणकाले कथमनुष्ठातुं शक्येत, तस्मादालम्भमात्रं देवतोद्देशेन पूर्ववाक्ये विधीयते परस्वतामुत्तरवाक्ये तेषामुत्सर्गं पर्यग्निकरणविशिष्टश्चोद्यते उच्यते—"विना यागेन न द्रव्यं देवतान्वयमृच्छति । द्रव्यदेवतसंयोगादतो यागो विधीयते" इशानायेति देवतान्वयं गम्यमानमशक्यमपह्नोतुं तच्च न कथंचिद्यागमन्तरेणालम्भमात्रादुपपद्यते, अतो यागविधिः विहिते च तस्मिन् यदि पर्यग्निकरणवाक्यस्य विधेयं न लभ्यते ततोऽनुवादो भवतु न चैतावता देवतासम्बन्धज्ञानमप्रमाणीकर्तुं शक्यं, न च नास्ति विधेय अपूर्वतापरत्वात् क्लृप्तोपकारप्राकृतपर्यग्निकरणाङ्गरीतिर्विधीयते तया प्रत्यक्षविहितया निराकाङ्क्षं ईशानप्रयोगवचनो न चोदकमपेक्षते तस्माद्यागविधिः, उत्तरं तु तत्रैव गुणविधिः ॥

आज्येन शेषं संस्थापयतीत्यनेन कर्मान्तरविधानाधिकरणम् ।

**सू० आज्यसंस्थाप्रतिनिधिः स्यात् द्रव्योत्सर्गात् ॥ १५ ॥**

"त्वाष्ट्रं पात्नीवतमालभेते"ति प्रकृत्य पर्यग्निकृतं पात्नीवतमुत्सृजती"ति श्रुत तत्र पुनः श्रूयते "आज्येन शेषं संस्थापयते"ति तत्र संशयः किं पूर्वस्मिन्नेव कर्मणि पशोरुत्सृष्टस्य स्थाने प्रतिनिधित्वेनाज्य विधीयते? किं वा कर्मान्तरविधिः? रिति तत्र शेषशब्दात्संस्थापयति-शब्दाच्च तत्रैव प्रतिनिधिविधिः, न कर्मान्तरं देवतान्तराभावात् । ननु पर्यग्निकरणान्ताङ्गरीतिविधानमित्युक्तं पूर्वाधिकरणे ततश्च तथैव निराकाङ्क्षस्य न शेषमस्ति उच्यते पूर्वाधिकरणे यागविधिरालभतिरित्युक्तं तदिह मृष्यामः पर्यग्निकरणान्ताङ्गरीतिनैराकाङ्क्ष्यं तु न मृष्यामहे शेषसंस्थापयति-शब्दानुपपत्तेः, किं तु यागस्यैव पशुनोपक्रान्तस्य चोदकप्राप्तेऽग्नीषोमीयविध्यन्तेऽनुष्ठीयमाने पर्यग्निकृतावस्थायामुत्सर्गः परित्यागः पशोर्विधीयते,

तस्मिन्नुत्सृष्टे साकाङ्क्षस्य कर्मशेषस्याज्येन संस्थापनं विधीयते कर्मान्तरस्य त्वनुपक्रान्तस्य स्वरूपमेव वक्तव्यं समापनं शेष-शब्दस्य चानुपपत्तिस्तस्मात्पूर्वत्रैव प्रतिनिधिराज्येनेतीति प्राप्ते ब्रूमः न प्रतिनिधिः सम्भवति तथा हि यदि पशोस्त्यागमात्रं क्रियेत तत उत्पत्तिवाक्यविहितदेवतासम्बन्धो नानुष्ठितः स्यात्तत्रैवं देवतासम्बन्धविधिरप्रमाणं स्यात्, असति च देवतासम्बन्धे यागविधित्वं न स्यात्सत्यतयज्यश्रवणादसति च यागे ऽग्नीषोमीयविध्यन्तस्याप्राप्तेः पर्यग्निकृतोत्सर्गः शेषं संस्थापनं चोभयमप्यनुपपन्नम् अथ देवतामुद्दिश्योत्सृज्येत ततः पशुसाधनके यागे पशुनैव मुख्येन साधिते किमर्थः प्रतिनिधिः देवतोद्देशेन चोत्सर्ग उत्पत्तिवाक्यसिद्धत्वान्न पर्यग्निकरणवाक्येन विधातव्या, तस्मात्पूर्वाधिकरणन्यायेन पर्यग्निकरणान्ताङ्गीतिविधानात्तथैव निराकाङ्क्षस्य पूर्वस्य कर्मणः समाप्तत्वान्न शेषमस्ति यस्मिन्नाज्येन संस्थापनमुच्येत, तस्मात्कर्मान्तरविधिरेवायमिति । न च देवता भावः प्राकृतपात्नीवतपदानुषङ्गादिह संस्थापयतीति प्रत्ययार्थेन भावनया आज्यप्रातिपदिकार्थोऽनुपात्तदेवतापदयुक्तः सम्बध्यते, तदयमर्थः पात्नीवतमाज्यं कुर्यादिति शेषसंस्था-शब्दौ च सादृश्यात्पूर्वो हि यागः पत्नीवद्देवत्यः पर्यग्निकरणमात्रे संस्थापितः सशेष इव तदनन्तरं चाज्ययागः पत्नीवद्देवत्य एव क्रियमाणस्तत्रैव शेषसमापनमिव भवति या ऽप्याज्यप्रातिपदिके तृतीया साऽपि संस्थासम्बन्धादनुवाद एव प्रातिपदिकार्थमात्रन्तु देवतासम्बन्धित्वेन विधीयते इति सिद्धं कर्मान्तरत्वम् ॥

प्राकृतार्थपतितान्यकार्यतो सन्त्रसामविषये च संस्कृते । एवमूहविधिरत्र चिन्तितो बाधचिन्तनमतः करिष्यते ॥

इति श्रीपार्थसारथिमिश्रकृतौ शास्त्रदीपिकायां नवमाध्यायस्य चतुर्थः पादः समाप्तः ॥ समाप्तश्चायमध्यायः ॥ श्रीः श्रीः श्रीः ॥

श्रीमते रामानुजाय मीमांसाद्वयगुरवे नमः ॥

(शेषमग्रे)

# खण्डनखण्डखाद्यम् ॥

## चतुर्थः परिच्छेदः ।

(*Continued from page* 336. VOL. XII.)

मू० [a] नचैकज्ञानारूढतैव तयोर्न मन्तव्या यतो घटपटाविति द्वित्वं तयोस्तद्द्वयानवगाहिता कथं विज्ञानेनावगाह्येतेति प्रत्यभिज्ञाप्रस्तावोक्तान् दोषानाह्वास्यामः [b] अत एवाविरलनानाज्ञानारूढतापि विशिष्टता निरवकाशा * [c] अथाप्रकाशमानासंबंधोनेक एकबुद्ध्यारूढस्तथा नचैवं घटपटौ तत्कथमुक्तदोषापत्तिः? *—इति चेन्न, [d] अप्रकाशमानोसंबन्धो ययोरित्ययमर्थो विशकलित इति घटत्वपटत्वव्यक्त्यादिवैशिष्ट्यमपि भज्येताविशेषात् * [e] अथ धर्मधर्मिसंबन्धाः स्वतन्त्रा एवैकबुद्ध्युपारूढास्तथा नच घटपटौ धर्मधर्मिरूपावित्यनतिप्रसङ्गः? *—इति चेन्न, [f] धर्मत्वस्यैकस्य दण्डादि गुणादिसाधारणस्य वक्तव्यत्वापातात् ॥

टी० [a] "नचेति । एकज्ञानाविषयत्वे द्वित्वमुभयगतं न प्रतीयेत् यथा प्रत्यभिज्ञानस्य स्मृत्यनुभवरूपत्वे तत्ताविशिष्टेदन्ताविशिष्टयोरभेदे न केनापि ग्रहीतुं शक्यः स्यादिति भयेन द्वयोरेकज्ञानविषयत्वमङ्गीक्रियते तथेहापीत्यर्थः [b] ॥ "अत एवे"ति । स्वतन्त्रयोर्विशिष्टत्वप्रसङ्गादेवेत्यर्थः ॥ ननु घटपटौ कथं विशिष्टं स्याद्यतस्तयोरसम्बन्ध एव प्रकाशते दण्डपुरुषौ नतु तथेत्याशङ्कते—। [c] "अथे"ति । असम्बन्धाविषयकैकज्ञानारूढयोर्विशिष्टत्वे घटपटयोः स्वस्वजातिवैशिष्ट्यमपि न स्यात् यतो विशकलितयोर्घटपटयोः घटत्वपटत्वयोस्तस्मिञ्ज्ञानेऽसम्बन्धस्यैव प्रकाशमानत्वादिति परिहरति—। [d] "अप्रकाशमाने"ति ॥ ननु धर्मो धर्मीतदुभयसम्बन्धश्च

विशिष्टपदार्थौ घटपटौ न धर्मधर्मिभावापन्नाविति नातिप्रसङ्ग इति शङ्कते—। [c] "अथे"ति । धर्मत्वमेकमनुगतं नास्तीतिनिरूपकाप्रतीतौ तदयं दुर्वहमित्याह—। [f] "धर्मत्वस्ये"ति ॥

मू० [a] सोऽप्येष्टव्य इति चेत् दुष्यतां परं तस्यापि वालुकावद्विशकलितस्योपगन्तव्यत्वेन [b] धर्म्येव किं न धर्मः स्यात् [c] *तथा प्रतीत्यभावान्न स्यात्?*—इति चेन्न, [d] त्वदुक्तैकप्रतीत्यारोहणस्याविशेषात्प्रतीतिरपि तथा किं न स्यात् [e] *मास्तु धर्मत्वमनुगतं तत्तद्रूपादिपदार्थस्वरूपमेव तथा विचित्रं यत्तदेव धर्मिणा संबन्धेन च सममेकबुद्ध्यारूढं विशिष्टं नान्यत्?*—इति चेन्न, [f] तेषां स्वरूपाणां भेदेन नानाभूतेषु विशिष्टेष्वनुगता विशिष्टबुद्धिर्न स्यात् [g] संबन्धमपि च तर्हि विलुम्पैव स्वभावादेव रूपादिकं तथाधिपमाधत्तां ।

टी० [a] "सोऽपी"ति । धर्मत्वलक्षण एको धर्मः प्रमेयत्वादिवदेष्टव्य इत्यर्थः । एवं सति धर्मत्वस्य केवलान्वयित्वेन क्वापि धर्मधर्मिभावस्य व्यवस्था न स्यात् अव्यवस्थितत्वमेव वालुकावद्विशकलितत्वं वैशिष्ट्या निवृत्त्या धर्मधर्मिभावस्य विशकलितत्वम् अव्यवस्थामेवाह—। [b] "धर्म्येवे"ति । प्राधान्येन प्रतीयमानो धर्मिधर्मस्तूपसर्जनतया प्रतीयमान इति प्रतीतिकृत एव विशेष इत्याह—। [c] "तथे"ति । तथाप्रतीतिरेवापन्नतामित्याह—। [d] "त्वदुक्ते"ति । उभयोरेकप्रतीत्यारोहाविशेषादिति भावः धर्मित्वं विशेषणत्वपर्यवसन्नं विशेषणत्वं च विशिष्टत्वनिर्वाह्यं चेत्तद्धर्मत्वमनुगतं मास्तु किंतु वस्तूनामेव रूपरसादीनामयं स्वभावविशेषो तद्घटादिना धर्मिणा समवायादिना च संबन्धेन सहैकबुद्ध्या विशिष्टं भवतीत्याशङ्कते—। [e] "मास्त्वि"ति । एवं तर्हि रूपादीनामेवम्भूतानामननुगतानामेव विशिष्टत्वे विशिष्टाकारानुगतप्रतीतिर्न स्यादिति परि-

हरति—। [f] "तैरपी"ति । दोषान्तरमाह—। [g] "संबन्ध इ"ति विलुप्त तिरस्कुर्वित्यर्थः यथा रूपादय एकबुद्ध्यारूढा विशिष्टव्यवहारभाजन भव"न्ति तथा समवायादिसंबन्धव्यवहारोऽपि तैरेवास्मदुक्तैरस्तु कृतं सम्बन्धेनेत्यर्थः ॥

मू० [a] एवमपि किं न स्यादिति चेत्, [b] तर्हि वराको धर्म्यपि विसृज्यतां यथा विना संबन्धं विशिष्टबुद्धौ रूपादिस्वभावसामर्थ्यात्समर्पिता तथा विना धर्मिणमप्यस्त्विति जितं जैनैः * [c] स्यादप्येवं यदि शुक्ल इत्येतावन्मात्राद्येव प्रतीयेत किंतु शुक्लः शङ्ख इत्यादिना प्रत्ययेन सामानाधिकरण्योल्लेखिना धर्म्यप्यानीयेत? *—इति चेत्, [d] शङ्खत्वजातिरूपाधेर्वा रूपादेरविरलनादृगवस्थितस्य वा स्वरूपवैलक्षण्यमेव तत्पदेऽभिषिच्यतां येन विनाप्यधिकरणं सामानाधिकरण्यव्यवहारः स्यात् [e] किंच नैतावन्मात्रं बुद्धिमादाय तदर्थगतवैचित्र्यान्तरखण्डने बुद्धिरेवस्वकारणसामर्थ्यात्तथोत्थिता तत्तद्व्यवहारान् सविचौ स्वीक्रियतां कृतमर्थव्यसनेन ॥

टी० भट्टमतं शङ्कते—। [a] "एवमि"ति । सम्बन्धश्चेत्तिरस्कृतस्तथा धर्म्यपि तिरस्क्रियतामिति धर्ममात्रमतत्कृतावृत्तिरूप विशिष्टज्ञाने भासत इति वादिभिर्बौद्धैर्जितमित्याह—। [b] 'तर्ही' ति । ननु गौरियमित्यादिप्रत्यये तथात्वेऽपि शुक्लः शङ्ख इत्यादिधीरस्तु धर्मिणमुल्लिखन्ती कथं तत्र प्रमाणं न स्यादित्याह—। [c] "स्यादपी"ति । शङ्खत्वजातिरेव रूपेण सहैकज्ञाने भासमाना सामानाधिकरण्यव्यवहारं करोति यद्वा धर्मवैलक्षण्यमेव धर्मिपदेऽभिषिच्यतां किं धर्मिणेत्याह—। [d] "शङ्खत्वे"ति । दूषणान्तरमाह—। [e] "किञ्चे"ति । नैतावन्मात्रं न विशिष्टविलोपधर्मिविलोपमात्रं बुद्धिमादायापितु सकलार्थविलोप एव बुद्धिमादायेत्यर्थः ॥

मू० "तस्मात् "प्रत्येतव्यस्य वैचित्र्यं प्रत्ययोल्लेखसाक्षिकम् । धियं निवेश्य तुम्पद्भ्यो भङ्गं साक्ष्येव दच्छति" यत्तु केनचिदभावस्य स्थाने तन्मात्रधीरभिषिक्ता तत्तस्य परमुचितं "गुरुर्धियमभावस्य(१) स्थाने स्थानेऽभिषिक्तवान् । प्रसिद्ध एव लोकेऽस्मिन् बुद्धबन्धुः प्रभाकरः" अपि च एकबुद्ध्यारूढोऽनेकस्य सम्बन्धस्य विशिष्टपदार्थ इति पक्षे योऽयमेवं रूपवैलक्षण्यभाग् विशिष्ट इति कथ्यते सोऽप्येवं विशिष्टोविशिष्टादिलक्षण्येन बोध्यमानो ज्ञानमन्त्यमाद्यैव स्यादिति तच्च तत्रापि ज्ञानान्तरानिवेशनेऽनवस्था क्वचिदप्यनिवेशे तस्याभावादविशिष्टत्वे शेषस्यामूलमविशिष्ट्यापातः ॥

टी० विशिष्टखण्डनं कलाक्रमेण प्रपञ्चमिथ्यात्वे पर्यवसन्न तथा च तत्सत्त्ववादिनो भङ्ग एवेत्युपसंहरति ।—"'तस्मादि'ति । प्रत्येतव्यवैचित्र्ये तावत्तादूप्येणोल्लेख एव साक्षी स चेदुल्लेखो बुद्धिवैचित्र्यमात्रेण समाहितस्तदा स एव साक्षी प्रपञ्चसत्यत्ववादिभ्यो भङ्ग प्रयच्छतीत्यर्थ तावन्मात्रबुद्ध्यधीन एवाऽभावोल्लेख इति वादिन प्रभाकरमुपहसति-। "'गुरुरि'ति । अभावस्य स्थाने धियमभिषिक्तवान् गुरुस्तत्स्थाने समुचितं बुद्धबन्धुः प्रभाकर इति लोके प्रसिद्ध एव यतः बुद्धोऽप्यभाव पदार्थान्तरं नाङ्गीकरोति प्रभाकरोऽपि तथेति सिद्धान्तसाम्यादेवं बन्धुभाव इत्यर्थः गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः इत्यत्र तथाप्रसिद्धिरिति भावः किञ्च विशिष्टस्य बुद्धिघटितं यल्लक्षणं तल्लक्षणविशिष्टमविशिष्टेभ्यो विशिष्टं व्यावर्तनीयं ज्ञानान्तरमेतादृश निवेश्य चेत्तदाऽनवस्था ज्ञानान्तरं चेत्क्वचिद्गत्वा नानुसरणीयं तदा तल्लक्षणविशिष्टं न भवेदिति मूलपर्यन्त विशिष्टहानिरित्याह—। "'अपि चे'ति ॥

(१) स्थाने—इत्यव्ययं युक्तमित्यस्मिन्नर्थे—।

मू० [a]तद्योग्यतयेति चेत्तर्हि [b]योग्यतापि तद्विशेषणं [c]बालुकादिवदलग्नातिप्रसङ्गिकैवेत्युक्तमावर्तते। [d]एवमेकमिति ज्ञानमित्यारूढमित्यादिद्वारैरपि द्रष्टव्यं तथाहि [e]"अविशिष्टाद्विशिष्टस्य वैशिष्ट्ये यदि धीर्विशेत्। तद्बुद्धिधाराविश्रान्तिस्त्वाद्या मूलाविशिष्टते"ति [f]विशिष्टनिरासेन सर्वाणि लक्षणानि निरस्तानीति मन्तव्यं यथा गुणाश्रयो द्रव्यमित्यादि [g]इतोपि गुणाश्रयो द्रव्यमित्यसङ्गतं। तथाहि [h]कथमेतल्लक्षणमवधारणीयं सङ्ख्यारूपगुणवत्तया रूपादेरपि प्रतीतेः भ्रान्तिरसाविति चेत्पृथिव्यादौ कथमभ्रान्तिरिति वक्तव्यं नच बाधकाभावादिति चेत्तुल्यं गुणस्य गुणवत्तायां बाधकमस्माभिरवश्यं वक्तव्यम्। *निर्गुणा गुणा इति सिद्धान्तात्?*—इति चेन्न, [i]रूपादेर्गुणत्वस्यैव निश्चेतुमशक्यत्वात्

टी० ततोऽये ज्ञानान्तरयोग्यतामात्रघटितमेव विशिष्टं स्यादिति नानवस्था न वा मूलपर्यन्तं विशिष्टहानिः योग्यतायाः सर्वत्र सत्त्वादित्याशङ्कते– [a]"तदि"ति। तद्योग्यताया अपि वैशिष्ट्यं तत्र विशिष्टे ज्ञेयं चेत्तदा सैवानवस्था न ज्ञेयं चेत्तदा शेषासिद्ध्या सर्ववैशिष्ट्यासिद्धिरिति परिहरति–। [b]"तर्ही"ति। [c]'बालुकावदि"ति वैशिष्ट्यस्याद्याप्यसिद्धिरिति भावः लक्षणवैशिष्ट्यद्वारकं दोषमभिधाय तदीयतद्विशेषणवैशिष्ट्यद्वारकमाह–। [d]"एवमि"ति। [e]'अविशिष्टादि"ति। अविशिष्टात्पदार्थाद्विशिष्टस्य यद्वैशिष्ट्यं स्यात्तद्धीः सा चेत्तादृशबुद्धिधाराधीना तदाऽनवस्था न चेत् शेषासिद्ध्या सर्वासिद्धिरित्यर्थः। विशिष्टखण्डनप्रयोजनमनुवदन्नेव खण्डनान्तरसङ्गतिमाह–। [f]"विशिष्टे"ति॥ [g]"इतोपी"ति। वैशिष्ट्यखण्डनरूपलक्षणानुपपत्तिसमुच्चयः। [h]"कथमि"ति। रूपादीनामपि गुणाश्रयत्वदर्श-

नाद्द्रव्यमात्रवृत्तितया कथमेतद्व्रधारणीयमित्यर्थः ॥ [e] "रूपादेरि"ति । गुणत्वव्यवस्थापकानतिप्रसक्तधर्माभावादित्यर्थः गुणाकारानुगतमतिश्च न सर्वसाधारणीति भाव ॥

मू० [a] * सामान्यवानगुण इत्यादितल्लक्षणयोगात्तन्निश्चय इति सिद्धान्तात् ? *—इति चेन्न, [b] अगुण इति लक्षणांशस्याव्याप्यासिद्धेः सङ्ख्यावत्तया प्रतीतेर्विद्यमानत्वात् * [c] 'भ्रान्तिरसौ" ? *—इति चेन्न, परस्पराश्रयसङ्गात् [d] सङ्ख्यावत्तया प्रतीतेर्भ्रान्तित्वे गुणलक्षणसिद्धिस्तत्सिद्धौ च [e] 'बाधेन भ्रान्तित्वव्यवस्थापनं * [f] नच हेत्वन्तराद्रूपादेर्गुणत्वसिद्धौ बाधकसिद्धिः * दृष्टान्तस्यापि सङ्ख्यायोगिप्रत्ययाक्रान्तत्वेन प्रसक्तद्रव्यकोटिप्रवेशितया गुणत्वेनासिद्धे * [g] सङ्ख्यायाः सङ्ख्यावत्त्वेनवस्थाप्रसङ्गान्निःसङ्ख्यत्वव्यवस्थितौ दृष्टान्तत्वं भविष्यति ? *—इति चे [h] न्न, पृथक्त्वेनापि तस्याः सम्भावितद्रव्यकोटि प्रवेशत्वात् ॥

टी० ॥ [a] "सामान्यवानि"ति । सामान्यवत्त्वे सत्यगुणत्वमेव व्यवस्थापकमित्यर्थः ॥ कर्मण्यतिव्याप्तौ सत्यामेवाह—। [b] "अगुण" इति । अगुणत्ववत्त्वमसिद्धं संख्यादीनां गुणानां तत्र सत्त्वादित्यर्थः दोषान्तराभिधानाय पुनः शङ्कते । [c] "भ्रान्तिरि"ति । अन्योन्याश्रयमेव विशदयति—। [d] "सङ्ख्ये"ति ॥ [e] 'बाधेने"ति । निर्गुणेषु गुणेषु सङ्ख्यादिप्रतीतिबाधितविषयेत्यर्थः ॥ ननु रूपादयो गुणाः सामान्यवत्त्वे सत्यचलनात्मकत्वात् शब्दवदिति रूपादीनां गुणत्व संत्स्यति तथाच गुणवत्त्वप्रतीतेर्भ्रमत्वसिद्धिरिति नान्योन्याश्रयं इत्यत आह—। [f] "नचे"ति । शब्दस्यापि दृष्टान्तस्य सङ्ख्यारूपगुणवत्त्वेन द्रव्यत्वसिद्धावगुणत्ववत्त्वासिद्धेरित्यर्थः । ननु सङ्ख्यैवात्र दृष्टान्तोस्तु नहि सङ्ख्यापि सङ्ख्यावती येन

तस्या अपि द्रव्यत्वं भवेदित्याह–। [g] "सङ्ख्याया" इति । सङ्ख्यायामनवस्थाभयात्सङ्ख्या मावर्त्तिष्ठ पृथक्त्वं तु तत्र वर्त्तत एव तावता तस्यामपि द्रव्यत्वापत्तौ न दृष्टान्तत्वमित्याह–। [h] "ने"ति ॥

मू० [a] एवं पृथक्त्वस्यापि सङ्ख्यावत्तयेति जातीतरानाश्रयोऽकर्मरूपो गुण इत्यपि न, [b] जातिव्यापनात् * [c] जातिमात्राश्रय इत्यर्थ? *–इति चेन्न, [d] अभावाश्रयतया सर्वाव्यापनात् * जातिमात्रभावाश्रय? *–इति चेन्न, [e] उपाधीनामपि तदाश्रितत्वात* नोपाधीनामाश्रयो रूपादिः [f] किन्तु कथमपि संबन्धी तावतैवानुमानादिप्रवृत्तिः? *–इति चेन्न, [g] उपाधिसंबन्धं प्रत्यय्याश्रयत्वस्य सन्त्वात् । [h] अन्यथा यदि किञ्चिद्रूपमत्र नेष्यते तदा सामान्यविशेषानुमानं तत्र न स्यात् । व्यधिकरणयोर्गम्यगमकभावानभ्युपगमात् तस्माद्यदेतदेव लक्षणं तत्तावान्न जातिरूपं तदिदं यदि रूपादौ नास्ति तदानीमस्ति यद्यस्ति तदा नास्तीति चित्रेण लगित्युक्ते न लगति मा लगेत्युक्ते लगतीति । प्रवल्हिकामनुकरोति

टी० ॥ तर्हि पृथक्त्वमस्तु दृष्टान्त इत्यत आह–। [a] "एवमि"ति ॥ [b] "जातिव्यापनादि"ति । जातावपि जातिभिन्नधर्मानाश्रयत्वमकर्मत्वं चेत्यर्थः ॥ [c] "जातिमात्रे"ति । जातिश्च न तथेत्यर्थः एवं च सत्यसम्भव एव रूपादीनामपि रसत्वाद्यभावाश्रयत्वादित्याह–। [d] "अभावे"ति ॥ [e] "उपाधीनामपि"ति । प्रमेयत्वाभिधेयत्वादीनामित्यर्थः । उपाधयो न रूपादौ समवयन्तीति न तदाश्रय इत्यर्थः ॥ तर्हि रूपादिकं प्रमेयमभिधेयत्वादित्यादि कथं सदनुमानं स्यादपक्षधर्मत्वादित्यत आह–। [f] "किन्त्वि"ति ॥ [g] "उपाधी"ति । तथाच जातिमात्रभावाश्रयत्वमसम्भवीत्यर्थः ॥

[h] "अन्यथे"ति । चक्षुर्मात्रबहिरिन्द्रियग्राह्यत्वादिना रूपत्वादिकमपि नानुमीयेत समानाधिकरणयोरेव साध्यसाधनयोर्गम्यगमकभावाभ्युपगमादित्यर्थः यदि जातिमात्रभावाश्रयत्वं लक्षणं तत्र रूपादौ न स्वीकर्त्तव्यं तदा जातिमात्रभावाश्रयत्वं लक्षणं भविष्यति अन्यथा लक्षणरूपोपाधिसत्त्वादेव तल्लक्षणं दुष्टं भवेदित्यर्थः ॥ प्रवल्हिका प्रहेडिका

मू० अपि च गुणाश्रयो द्रव्यमित्यत्र कश्चाश्रयार्थः * समवाय? *—इति चेन्न, [a] गुणत्वादेरपि द्रव्यत्वप्रसङ्गाद्गुणावच्छिन्नस्य समवायस्य गुणत्वेऽपि विश्रान्तत्वात् । * [b] गुणः समवेतो यत्र स गुणसमवायीति विवक्षितम्? *—इति चेन्न, [c] यत्रेत्यस्याधिकरणार्थस्याद्याप्यनिरूपणेन तेनैव तद्व्याकारानुपपत्तेः * इहेतिप्रत्ययहेतुराधार? *—इति चेन्न, इह शङ्खे पीतिमेति प्रत्ययाच्छङ्खस्य पीतिमाधिकरणत्वप्रसङ्गात् * [d] भ्रान्तिरसौ यथार्थश्च प्रत्ययोऽत्र विवक्षित? *—इति चेन्न, [e] तदर्थासत्त्वनिरूपणव्यतिरेकेण तदप्रमाणत्वस्य बोद्धुमशक्यत्वात् नचात्रापीहेतिप्रत्ययस्यार्थः प्रतीतो यत्प्रतियोगिकमसत्त्वं तच्च निरूप्यते [f] पीतत्व प्रतियोगी तच्च क्वचित्सिद्धम्? *—इवेति [g] चेन्न, तस्य प्रमितत्वादेवासत्त्वानुपपत्तेः ॥

टी० ॥ [a] "गुणत्वादेरि"ति । गुणनिरूपितः समवायो यथा द्रव्ये [b] तथा गुणत्वजातावपीत्यर्थः गुण इति । गुणत्वे च न गुणः समवेत इति न तत्रातिव्याप्तिरित्यर्थः क्व गुणः समवेत इति नाद्यापि सिद्धमित्याह—। [c] "यत्रे"ति । यद्वा गुणाधिकरणत्वं द्रव्यत्वमित्यनेनोक्तं स्यात्तथाचाधिकरणमेव दुर्वचमित्याह—। [c] "यत्रे"ति ॥ [d] 'भ्रान्तिरि'ति । इहेतिप्रमाहेतुराधार इति लक्षणं विवक्षितमित्यर्थः विषयबाधगम्यं भ्रमत्वं विषयबाधश्च

न व्यवस्थित इत्याह । [e]"ने"ति । शङ्ख पीतिमेत्यत्र पीतिमा विषयस्त-द्बाधश्च तदसत्त्वं तथाचाऽस्याः प्रीतेर्भ्रमत्वमेवेत्याह–। [f]"पीतत्वमि"ति । पीतत्वं प्रमितं चेत्तदा तदसत्त्वं सामान्यतो वक्तुं न शक्यत इत्याह–। [g]"ने"ति ।

मू० *तस्य [a]तत्राप्रमितत्वम् ?*—इति चेन्न, [b]तत्रेत्याधारत्वानिरूपणादिति [c]एतेन समवायिकारणं द्रव्यमित्यपि लक्षणं निरस्तं [d]कथं निर्णेतव्यमिदं समवायिकारणमिदं नेति रूपादौ घटादौ च सङ्ख्यासमवायिकारणत्वयुक्तेस्तुल्यत्वात्सङ्ख्यैव नु रूपादौ नास्तीति चेद्धटादौ कथमस्ति प्रत्ययस्योभयत्र तुल्यत्वादित्युक्तमनुषञ्जनीयं[e] * द्रव्य एव सङ्ख्यास्वीकारे तत्संबन्धाद्गुणेऽपि तद्व्यवहारोपपत्तौ कल्पनालाघवाद्गुणे सङ्ख्याद्यस्वीकार ?*—इति चेन्न, [f]विपरीतमेव कुतो न स्यात् [g]सत्तासामान्याद्यपि च गुणादौ किमर्थमङ्गीक्रियते। द्रव्यद्वारैव तत्र तद्व्यवहारोपपत्तेः ननु [h]सामान्यार्थ एव कः तथाहि अनुवृत्तप्रत्ययकारणं सामान्यमित्यलक्षणं सामग्र्या सर्वकार्योत्पत्तेस्त[i]या तदेकदेशान्तरैश्च व्यभिचारात् ॥

टी० ॥ यद्यपि सामान्यतस्तदसत्त्वं नास्ति तथापि शङ्ख्ऽधिकरणेऽस्त्येवेत्याह–। [a]"तत्र"ति । तत्रेत्याधारत्वमेवोच्यते तच्च दुर्वचमेवेत्याह–। [b]"ने"ति । [c]"एतेने"ति । रूपादावतिव्यापकत्वेनेत्यर्थः । रूपादीनामपि समवायिकारणत्वादिति भावः एतदेवाह– [d]"कथमि"ति । रूपादौ सङ्ख्यैकार्थसमवायाधीनः सङ्ख्याप्रत्ययो नतु सामवायाधीन इत्याह–। [e]"द्रव्य एवे"ति । रूपादिसमवेतयैव संख्यया परम्परासंबन्धेन द्रव्येऽपि सङ्ख्याप्रत्ययः स्यादित्याह–। [f]"विपरीतमि"ति । सद्बुद्धिरपि सत्तैकार्थ

समवायादिना स्यादिति रूपादेः सत्तापि नाङ्गीक्रियतामित्याह । [g] "स-त्ते"ति ॥ [h] "सामान्यार्थे" इति । सामान्यशब्दार्थे इत्यर्थः । सामान्यरूपो वार्थे इत्यर्थः । अनुवृत्तप्रत्ययो भिन्नेष्वेकाकारप्रत्ययः सामग्रीति तत्का-रणत्वसाधनावष्टम्भेनोक्तं—। [i] "तये"ति । सामग्रीत्यर्थः ॥

मू० [a] असाधारणविशेषणात् * [b] अनन्यजातीयप्रयोजकत्वं च [c] तत् ।? *—इति चेन्न, [d] स्वसामग्र्यामपि प्रसङ्गतादव-स्थ्यात् । [e] भेदप्रतिपत्त्यादावपि प्रयोजकत्वाच्च । * [f] एत-त्प्रतिपत्तिप्रमाणकत्वम् ? *—इति चेन्न, स्वसामग्र्याम-प्यस्याः प्रमाणत्वात् * [g] एतदेकप्रमाणकत्वम् ? *—इति चेन्न, [h] अर्थक्रियाभेदादेरपि तत्र प्रमाणत्वात् * [i] एत-त्प्रतिपत्तिप्रमाकत्वम् ? *—इति चेन्न, [j] तद्विशिष्टस्यापि तत्त्वप्रसङ्गात् ॥

टी० ॥ अनुवृत्तप्रत्ययासाधारणकारणं सामान्यमिति लक्षणं शङ्कते—। [a] "असाधारणे"ति । असाधारणत्वेन विशेषणात् ॥ [b] "तद्वि"ति । तल्लक्षणमित्यर्थः ॥ एतदेव विवृणोति—। [c] "अनन्ये"ति । आत्ममनस्त-त्संयोगप्रभृतीनामन्यजातीयमपि कार्यं प्रति प्रयोजकत्वं सामान्यस्य त्वनु-वृत्तप्रत्ययमात्रं प्रतीत्यर्थः । [d] "स्वसामग्र्यामि"ति । असाधारणत्वादित्यर्थः । अनन्यजातीयप्रयोजकत्वस्य सामान्येप्यसंभव इत्याह—। [e] "भेदे"ति । सामान्ये हि वैधर्म्यं तच्च भेदप्रत्ययमपि प्रति कारणमेवेत्यर्थः । [f] "एत-द्वि"ति । अनुवृत्तप्रतिपत्तिः प्रमाणं यस्य तत्सामान्यमित्यर्थः । अनुगतमतिः स्वसामग्र्यामपि प्रमाणमिति तत्रातिव्याप्तिरित्यर्थः । [g] "एतदेके"ति । सामग्र्यामन्यदपि प्रमाणमिति भावः ॥ [h] "अर्थक्रिये"ति । कार्यभेदस्या-नाकस्मिकत्वादपि कारणगतनियतजातिभेदकल्पनमित्यर्थः ॥ [i] "एतत्प्र-तिपत्ती"ति । अनुवृत्तप्रत्यय एव प्रमा यत्रेत्यर्थः । [j] "तद्विशिष्टे"ति । सामान्यविशिष्टव्यक्तावपि तदेकप्रमाकत्वमिति तत्रातिव्याप्तिरिति भावः ॥ जातिवैशिष्ट्यांशे च तदेक प्रमाकत्वमावश्यकमिति भावः ।

मू० * [a]तदवच्छिन्नप्रमांशप्रमाकत्वम्? *—इति चेन्न, [b]तदसिद्धेवासिद्धेः * [c]इयं प्रतीतिर्येन विना नोपपद्यते(१)तत्सामान्यम्? *—इति चेन्न, [d]कारणान्तराणामपि तथात्वादिति अनुवृत्तं सामान्यमित्यप्यलक्षणं किमिदमनुवृत्तत्वं नाम * [e]अनेकाश्रितत्वम्? *—इति चेन्न, [f]अवयविना संयोगादिभिश्च व्यभिचारात् * नित्यत्वे सति? *—इति चेन्न, [g]समवायेन व्यभिचारात् अत एव न बहुवृत्तित्वेऽपि [h]* असंबन्धत्वे सति? *—इति चेन्न, [i]अणुभिर्व्यभिचारात् * [j]नित्यत्वे सत्यनेकसमवेतं सामान्यम्? *—इति चेन्न, विकल्पासहत्वात् एतल्लक्षणं नित्यमनित्यं वा स्यात् नाद्यः [k]स्वात्मनि वृत्तिविरोधात् ॥

टी० ॥ [a]"तदवच्छिन्नप्रमांशे"ति । व्यक्तेर्विशिष्टस्य च न जात्यंशाप्रमाविषयत्वं विषयभेदेन ज्ञानेऽप्यंशभेदादित्यर्थः । जातिसिद्धौ तदंशप्रमासिद्धेर्ज्जातिरेव लक्षणाभावान्न सिद्ध्यत्याह । [b]"ने"ति । अनुगतप्रत्ययान्यथानुपपत्तिप्रमाणकत्वं लक्षणं शङ्कते— [c]"इयमि"ति । आत्ममनस्त्वसंयोगादावतिव्याप्तिमाह— । [d]"कारणान्तरे"ति । [e]"अनेकाश्रितत्वमि"ति । स्वाश्रयान्योन्याभावसमानाधिकरणत्वमित्यर्थः । व्यासज्यवृत्तिसर्वपदार्थेष्वतिव्याप्तिमाह— । [f]"अवयवी"ति । [g]"समवायेने"ति । तस्यापि सम्बन्धिद्वयवृत्तित्वादित्यर्थः ॥ [h]"असंबन्धत्वे"इति । नित्यत्वेसंबन्धत्वे सत्यनेकाश्रितत्वमित्यर्थः । [i]"अणुभिरि"ति । संयोगवृत्त्या परमाणूनामनेकदिगवच्छेदेन वृत्तेरित्यर्थः ॥ [j]"नित्यत्वे"इति । समवायलक्षणा वृत्ति र्विवक्षितेति न परमाणावतिव्याप्तिरित्यर्थः । [k]"स्वात्मनी"ति । नित्यत्वे सत्यनेकसमवेतत्वरूपं लक्षणं यदि नित्यं तदा नित्यत्वांशेऽपि नित्यत्ववृत्तिरित्यशत आत्माश्रय इत्यर्थः ॥ (शेषमग्रे)

(१) नोत्पद्यते—इति बहुषु पुस्तकेषु दृश्यमानः पाठोऽपपाठ एव जातिमन्तरेण प्रतीतेरननुगतत्वेऽप्युत्पत्तावविरोधादिति भावः ।

॥ श्रीः ॥

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# अथ श्रीभाष्यं विशिष्टाद्वैतपरं, रामानुजदर्शनम् ।

## श्रुतप्रकाशिकासमेतं विषमपदटिप्पणीसहितम् ।

### तत्र प्रथमाध्यायस्यावशेषः ।

(*Continued from page 296. Vol. XII*)

सू० प्रज्ञामात्रा–शब्देन तदाधारतया चेतनवर्गं चाभिधाय तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य

टी० प्रज्ञामात्राशब्द इति मात्रान्तेन प्रज्ञा शब्देन व्यवहितवाक्यस्यकेवलप्रज्ञाशब्दनिर्दिष्टजीवप्रत्यभिज्ञानाभावात् अनन्तरपूर्ववाक्यप्रकृतदशसंख्यप्रज्ञामात्राणामेव स्वतः प्रत्यभिज्ञायमानत्वाच्चेति तदयुक्तम् अर्थविरोधात्,दृष्टान्तदार्ष्टान्तिकभावानुपपत्तेश्च प्रत्यभिज्ञानस्य भग्नत्वात्, न हि वागादीन्द्रियाणि भूतमात्राणामाश्रयः भूतसंघातरूपशरीरमेव हीन्द्रियाश्रय इत्यर्थविरोधः स्फुटः, तथा दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतमिति परस्परसाकाङ्क्षत्व पूर्ववाक्योक्तम् । अनेनाभिदृष्टान्तवाक्ये तु न परस्परसाकाङ्क्षत्वं प्रदर्श्यते,भूतमात्रा प्रज्ञामात्रास्वर्पिता इत्युक्त्वा प्रज्ञामात्रा भूतमात्रास्वर्पिता इति न ह्युक्तं, तथा सति हि परस्परसाकाङ्क्षत्वे दृष्टान्तता विवक्षिता स्यात्, अपि तु प्राणेऽर्पिता इत्येवोक्तं, प्राणश्च परमात्मा, अनन्तरमेव स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत इत्युक्तः, अतो दृष्टान्तदार्ष्टान्तिकभावानुपपत्तिः, अतः प्रत्यभिज्ञानभञ्जकहेतुसद्भावात् "तपसा चीयते ब्रह्म" "तस्मादेतद् ब्रह्मे"ति वाक्यद्वयस्थब्रह्मशब्दयोरिव पूर्वापरवाक्यस्थयोः प्रज्ञामात्रा–शब्दयोर्नैकार्थत्वम् । किंच द्वयोर्वाक्ययोर्मिथस्सन्निकृष्टत्वेऽपि अन्यतरस्य संभवन्मुख्यार्थस्तयोरैकार्थ्यश्रद्धया न त्याज्यः, तयोरेव ब्रह्म–शब्दयोस्तथा दर्शनात् प्रज्ञा–शब्दश्च इन्द्रियेष्वमुख्यः, जीवेषु तु मुख्यः तेषां ज्ञानस्वरूपत्वात्, प्रज्ञा–शब्दोऽपि तत्तदर्थविषयज्ञानपर इति

चेत्तर्हि दृष्टान्तविरोधः, शरीरगतानां भूतमात्राणां वैषयिकज्ञानैर्धार्यत्वाभावात्, एवमर्थविरोधादर्भिभिन्नार्थत्वे सति मात्रा-शब्दः संघातैकदेशाभिप्रायः, विशिष्टस्य ब्रह्मण एकदेशभूतानि हि चिदचित्तत्त्वानि । किञ्चास्मिन् प्रकरणे प्राण-शब्दस्येव प्रज्ञा-शब्दस्याऽपि बह्वर्थविषयप्रयोगदर्शनाच्चैकार्थनियतत्वम् अतश्च जीवविषयत्वं युक्तमाश्रयितुं विशेषतो जीवे प्रयुक्तत्वाच्च प्राण-शब्दस्तावन्मुख्यप्राणे प्रयुक्तः, यावदस्मिञ्छरीरे प्राणो वसति तावदायुरिति तथेन्द्रियेषु प्राणं प्राणन्तं सर्वे प्राणा अनुप्राणन्तीति, तथा परमात्मनि "यत्रैतत्पुरुषः स्वप्नं न कथंच न पश्यति अथास्मिन् प्राण एवैकधा भवती"ति तथा जीवेषु एतस्मादात्मनः प्राणाः यथाऽऽयतनं विप्रतिष्ठ[1]न्ते प्राणेभ्यो देवा देवेभ्यो लोका"इति, न चात्र बहुवचनान्तः प्राणशब्दः पञ्चवृत्तिप्राणपरः तस्य सुषुप्तौ उपरत्यभावाविष्क्रमणानुपपत्तेः, नापीन्द्रियपरः देवशब्देन पृथगुक्तत्वात्, न च देव-शब्दः प्रकाशरूपज्ञानवाची लोक-शब्देन तदुक्तेः अस्वारस्याच्च । न च लोक-शब्दो लोकनीयविषयपरः देवेभ्योलोका इत्यत्र विषयाणां ज्ञानतो निष्क्रमणाभावात्, ज्ञानैर्ग्राह्य इत्यर्थ इति चेन्न पञ्चम्यर्थैकरूप्यभङ्गादस्वारस्यात् । ग्राह्यपदाध्याहारप्रसङ्गाच्च अतोऽस्मिन् वाक्ये बहुवचनान्तः प्राणशब्दो जीवपरः प्राणसाहचर्या[2]ज्जीवे प्रयोगः, परमात्मनि तु प्राणशरीरकत्वात् तथा प्रज्ञा-शब्दश्च जीवे तावत्प्रयुक्तः "प्राणोऽस्मि प्रज्ञात्मे"ति, प्रज्ञारूप आत्मा प्रज्ञात्मा तथा "यो वै प्राणस्सा प्रज्ञा या प्रज्ञा स प्राणः स ह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतस्तस्यैषैव सिद्धिरेतद्विज्ञानं यत्रैतत्पुरुषः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवती"ति च । न चायं प्रज्ञा-शब्द उपरितनखण्डगतप्रज्ञाशब्दवन्मनोविषयः सहोत्क्रामत इति वचनात् तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति श्रुत्यन्तरैकार्थ्याच्च, तथा उत्तरत्र वागादीन्द्रियाणां जीवोपकरणत्वप्रपञ्चनेन पृथङ् निर्देशाच्चायं प्रज्ञा-शब्दो जीवपरः, अस्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्तीत्युपक्रम्य वागेवास्या एकमङ्गमदूदुहत् प्रा[3]ण एवा-

१ विप्रतिष्ठन्तीति पा० ।
२ जीवप्राणादिति पा० ।
३ प्राण एवास्या इति पा० ।

स्या एकमङ्गमदूदुहदित्येवमादिपर्यायैः पादपर्यन्तानां करणानां कृत्यमुक्त्वा प्रज्ञैवास्या एकमङ्गमुदूदुहदित्युक्तमत्र ह्यस्यां इति चतुर्थ्यन्तं पदं प्रज्ञा-शब्द-निर्दिष्टजीवपरं प्रथमान्तप्रज्ञा-शब्दो हि मनोवाची "नेतिं न विजिज्ञासीत नेतारं विद्याच मनो विजीज्ञासीत मन्तारं विद्या्दि"ति स्थानप्रमाणात् तस्माच्चतुर्थ्यन्तः प्रज्ञा-शब्दः प्रथमान्तप्रज्ञाशब्दवाच्यमनःकरणकजीव-विषयः, अतस्सहोत्क्रमणपृथग्व्यपदेशाभ्यां यो वै प्राणस्सा प्रज्ञेति प्रज्ञा-शब्दो जीवविषयः उत्क्रमणश्रुतिप्रत्यभिज्ञापकत्वात् वागादीनामुपकरणत्वाच्च, बुद्धिपरत्वमप्यनुपपन्नम्, अतो जीवविषयत्वं दृष्टं तथा मनसि च प्रज्ञा-शब्दः प्रयुज्यते न हि प्रज्ञापेता वाक् नाम किञ्चन प्रज्ञापयेदन्यत्र मनोमेऽभूदिति नाहमेतं नाम प्राज्ञासिषमिति, तथा इन्द्रियेषु च दश प्रज्ञामात्रा इति, अतः पूर्वं प्रज्ञा-शब्दनिर्दिष्टो जीवइह प्रज्ञामात्रा-शब्दोक्तः, जात्यभिप्रायेण एकवचननिर्दिष्टस्य व्यक्त्यभिप्रायेण बहुवचन-निर्देश उपपद्यते, यथा "सता सोम्य तदा सम्पन्नो भवति" "सति सम्पद्य न विदु सति संपत्स्यामहे"इति च। यद्वा मा भूत् प्रज्ञामात्रा शब्दस्या-र्थवैरूप्याश्रयणम् अनेनाभिदृष्टान्तवाक्ये प्रज्ञामात्रा-शब्दस्य भूतेन्द्रिया-भिमानिदेवताद्धपदशविधचेतनपरत्वं स्यात् तदानीमपि तदाधारतया चेतनाधारत्वं परस्यार्थसिद्धम् । एवमेतत्प्रकरणपर्यालोचनासुलभमुपप-त्तिजातं सर्वं भाष्य एव व्यक्तीभविष्यति, प्रज्ञामात्रा-शब्दन तदाधारत-येति न हीन्द्रियाणां पृथिव्यादिभूताधारत्वं युक्तमिति भावः। चेतनव-र्गमिति प्राकरणिकप्रज्ञा-शब्दैकवचन जात्यभिप्रायमिति भावः । तस्या-प्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्यति ता वा एता इत्यादि पूर्ववाक्योक्ते परस्परसाकाङ्क्षत्वे दृष्टान्तत्व न घटते प्रज्ञामात्रा-णामाधारान्तरकथनादिति भावः। तस्य च परमात्मत्वं कथ? मित्यत्राह–

सू० तमेवानन्दोऽजरोऽमृत इत्युपदिशति तदेतच्चेतनाचेतना-त्मककृत्स्नवस्त्वाधारत्वं जीवादर्थान्तरभूते तस्मिन् परमात्म-

१ पृथगुपदेशामिति पा० ।

न्येवोपपद्यत इत्यर्थः । अथवाऽध्यात्मसम्बन्धभूमा ह्यस्मिन् परमात्मासाधारणधर्मसम्बन्धोऽध्यात्मसम्बन्धः तस्य भूमा बहुत्वमस्मिन् प्रकरणे विद्यते तथा हि प्रथमं त्वमेव मे वर वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति मामुपास्स्वेति च परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राण-शब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते ।

टी० "तमेवानन्दोऽजर"इति, एवम् अर्थविरोधदृष्टान्तदार्ष्टान्तिकभाववैघट्यमुख्यत्वप्राकरणिकप्रयोगसाधारण्यैरनुगृहीतस्य श्रुतिवाक्यस्यार्थमुपन्यस्य सूत्रार्थमुपसंहरति "तदेतदि"ति, एव प्रथमयोजनाया तथ्यथा रथस्यारोष्वित्यादिवाक्यमेकमेव विषयः स्यात् स एष प्राण एवेति एतद्वाक्योदाहरणं वाक्यान्तराण्यपि परब्रह्मपराणि सन्तीति प्रदर्शनार्थं तेन उपक्रमस्वारस्यादपि समुदायस्वारस्यं प्रबलमिति फलितम् । एवमवयविस्वारस्यप्राबल्यस्यार्थसिद्धत्वादपि कण्ठोक्तत्वं युक्तमिति सूत्रान्तरेण योजयति "अथवे"ति, पूर्वयोजनायामध्यात्म-शब्दस्य आत्मनीत्यर्थः, अस्यां त्वात्मनि वर्त्तमानपरोऽध्यात्म-शब्दः उपसंहारवाक्यमुपक्रमबाधितमिति पूर्वपक्षिणोक्त तत्रेदमुत्तरमुक्त भवति उपक्रमोपसंहारौ वाक्यावयवौ तयोरवयवभूतयोः परस्परविरोधे उपक्रमप्राबल्य न त्ववयव्यवयविरोधे, अत्र त्वनेकावान्तरवाक्यैः पर्यालोचितैः प्रतिपन्नस्य महावाक्यार्थस्य अवयविनो विरोधे अवयवभूत उपक्रमो दुर्बलः यथा गङ्गायां घोषः प्रतिवसतीत्यादिषु घोषः प्रतिवसतीति पदाभ्यां प्रतिपन्नवाक्यार्थमुपक्रमस्थगङ्गापद न बाधते अपितु स्वयं तदानुगुणार्थं भवति तद्वदिति । तदेतदभिप्रयन् परमात्मासाधारणधर्मभूयस्त्वं दर्शयति "तथा ही' ति, हिततमं मन्यस इति वाक्यस्याप्रतर्दनादेरप्युपक्रमगतत्वे उपक्रमोपक्रमस्यापि महावाक्यान्तर्भावात्तदुक्तिः न तु तावन्मात्रस्य साधकत्वाभिप्रायेण लोकाधिपतिः लोकस्वामी सर्वेशः सर्वनियन्ता । ननु पा रक्षण इति धातोः पति-शब्दः तत्कथमत्र शेषिवाचित्वम् ? उच्यते न हि सर्वत्रावयवशक्तिरेव रूढिशक्तिरपि ह्यस्ति अन्यथागमेडैः

इति व्युत्पत्त्या गोशब्दस्य सर्वजङ्गमवाचित्वप्रसङ्गात् स्थितायां गोत्वाचकत्वप्रसङ्गाच्च अतः शेषिणि पति शब्दो रूढः अन्यथा "वृद्धौ च मातापितरौ साध्वी भार्या सुतश्शिशु. । अप्यकार्यशत कृत्वा भर्तव्या मनुरब्रवीदि"ति न्यायेन पितुस्सरक्षके पुत्रे पितरं-प्रति पतिशब्दप्रयोगप्रसङ्गादिति । सूत्रार्थं निगमयति 'तदेवमि''ति, अध्यात्मसम्बन्धभूमा ह्यस्मिन्निति सूत्राश परैरेवं व्याख्यातः, अध्यात्मसम्बन्ध प्रत्यगात्मसम्बन्ध तस्य भूमा बाहुल्यमुपलभ्यते अस्मिन्नध्याये आयुषः प्रभुत्वमिन्द्रियाणत्व शरीरोत्थापकत्व विषयेन्द्रियादिविज्ञानप्रतिप्रक्षेपेण प्रत्यगात्मवेदन चोपदिश्यत इति, अपरैश्च प्रज्ञादेहेन्द्रियमनःप्राणात्मनां सम्बन्धोऽध्यात्मसम्बन्ध. स भूयानिति व्याख्यातं, तदयुक्त मायुरधिपतित्वादीना मन प्राणसम्बन्धित्वादीना च परमात्मसाधकत्वाःभावात् इन्द्रसज्ञकदेवताविशेषे तात्पर्यनिषेधपरं सूत्रमिति चेन्न इन्द्रस्य शरीरेऽपि प्राणेन्द्रियमनःप्रभृतीना विद्यमानतया तत्प्रतिक्षेपासामर्थ्यात् अस्मिञ्छरीर इति निर्देशो हीन्द्रशरीरेऽपि हि सम्भवति "सदेव सोम्येद मितीद शब्दवत् सर्वनामपदस्य साधारणत्वात् प्रत्यगर्थविषयस्योपदेशस्य पराचीनदेवताविषयत्वमयुक्तमिति चेन्न, इन्द्रस्यापि स्वात्मानं प्रत्यहमिति प्रत्यक्तयाऽवभासात् प्राणोऽस्मि मामुपास्स्वेति हि तद्वाक्यम् इन्द्रमात्रस्य प्राधान्यतः प्रतिपाद्यता प्रतीयत इति चेन्न प्राणेन्द्रियमनआदिसंबन्धानां तत्प्रतिक्षेपासामर्थ्यात्, सौत्रवचनव्यक्त्यनुगुता च न स्यात् प्राण परमात्मेति प्रतिज्ञातमाद्यसूत्रे द्वितीयसूत्रस्थेन नञा परमात्मत्वमेव निषेध्य न परमात्मेति पूर्वपक्षिते तत्प्रतिसमाधानपरेण परमात्मैव प्राण इति प्रतिज्ञाय समर्थनीयं, न परमात्मेति वदन्त प्रति नेन्द्र इत्युक्ते कः प्रतिक्षेपः न घटोऽस्तीत्युक्ते न पट इतिवत् तयोर्विरोधाभावात्, परमात्मत्वे प्रतिज्ञाते मन.प्राणसम्बन्धादयस्तु न परमात्मत्वसाधनसमर्थाः । ननु नायं परमात्मा अपि त्विन्द्र इति प्रतिज्ञाते सति नेन्द्र इति प्रतिविधानमयुक्तमिति चेन्न त्वदुक्तयुक्तेरिन्द्रप्रतिक्षेपकत्वाभावात्, अस्तुवा तत्प्रतिक्षेपः ततः किं स तु परमसाध्यस्य परमात्मपरत्वस्योप–

सू० तथा "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्यः

उन्निनीषति एष एवासाधु कर्म कारयति तं यमधो नि-नीषती"ति सर्वस्य कर्मणः कारयितृत्वं च परमात्मधर्मः तथा तद्यथा "रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिता" इति, सर्वाधारत्वं च तस्यैव धर्मः तथा "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत इत्येतेऽपि परमात्मन एव धर्माः, एष लोकाधिपतिरेष सर्वेश इति च परमात्मन्येव सम्भवति तदेवमध्यात्मसम्बन्धभूम्नोऽत्र विद्यमानत्वात् परमात्मैवात्रेन्द्रप्राणशब्दनिर्दिष्टः, कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य स्वात्मन उपास्यत्वोपदेशस्सङ्गच्छत? इत्यत्राह—

सू० श्रीः शास्त्रदृष्ट्यातूपदेशो वामदेववत् ॥ ३१ ॥

प्रज्ञातजीवभावेनेन्द्रेण मामेव विजानीहि मामुपास्स्वेति उपास्यस्य ब्रह्मणः स्वात्मत्वेनोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः, अपि तु शास्त्रेण स्वात्मदृष्टिकृतः, एतदुक्तम्भवति अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि "ऐतदात्म्यमिदं सर्वम्" "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा यः आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्मवाचिनामहन्त्वमादि-

शब्दानां परमात्मन्येवपर्य्यवसानं ज्ञात्वा मामेव विजानीहि मामुपास्स्वेति स्वात्मशरीरं परमात्मानमेवोपास्यत्वेनोपदिदेशेति वामदेववत्—

टी० योगीति चेन्न परमसाध्यस्याव्यवहितसाधकहेतूपस्थापकत्वे सम्भवति परम्परया साधकार्थपरत्वेन निर्वाहानुपपत्तेः। उत्तरसूत्रं शङ्कायामवतारयति "कथं तर्ही" ति, प्रज्ञातजीवभावस्येति "इदि परमैश्वर्य" इत्यादिप्रकृतिप्रत्ययविभागेन परमात्मपरत्वमिन्द्रादिशब्दानामयुक्तं त्वाष्ट्रवधादिलिङ्गनिर्वाहानुपपत्तेः, तत्कथमिन्द्र—शब्देन परमात्मनिर्देश इति भावः। पूर्वं परमात्मपरत्वसाधकहेतुरुक्तः पूर्वपक्षयुक्तेः कः परिहार? इत्यपेक्षायां सूत्रावतार इत्यर्थः। सू० श्रीः शास्त्रदृष्ट्या तूपदेशो वामदेववत् कीदृश उपदेश? इत्यत्राह "प्रज्ञाते"ति, शास्त्रदृष्टिशब्दस्य व्यवच्छेद्यमाह "न प्रमाणान्तरे"ति, शास्त्रस्य दृष्टिः शास्त्ररूपा दृष्टिरिति च प्रतीतिः स्यादिति तद्व्यावृत्त्यर्थमाह "शास्त्रेणे"ति, कस्य दृष्टिरित्यपेक्षायां? स्वात्म—शब्दः स्वानुभवप्रत्यक्षेण आत्मावलोकने जीवमात्रप्रकाशः शास्त्रेण तन्मूलयोगेन चात्मानुभवे परमात्मपर्यन्ततया प्रकाश इति भावः। न हि प्रमाणविशेषेणान्यत्प्रमेयम् अन्यद्भवति। तच्च शास्त्रं कि? मित्यत्राह "एतदुक्तमि' ति, जीववाचिपदानां परमात्मसामानाधिकरण्योपपादिकां श्रुतिमुदाजिहीर्षन्नामरूपव्याकरणश्रुतिमाह "अनेने"ति, जीवेऽप्यनुप्रवेशं दर्शयितुमाह "एतदात्म्यमि"ति, तदेव स्पष्टयति "अन्तःप्रविष्ट"इति, शरीरत्वतल्लक्षणे दर्शयति "य आत्मनी"ति, पर्यवसानं ज्ञात्वेति नामरूपव्याकरणश्रुतिलब्धार्थ उक्तः, उपदिदेशेत्यन्तेन शास्त्रदृष्ट्या तूपदेश इत्यंशो व्याख्यातः। वामदेववदित्यंशं व्याचष्टे—

सू० यथा वामदेवः परस्य ब्रह्मणस्सर्वान्तरात्मत्वं सर्वस्य तच्छरीरत्वं शरीरवाचिनां शब्दानां शरीरिणि पर्य्यवसानं पश्यन्नहमिति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सा-

मानाधिकरण्येन मनुसूर्य्यादीन् व्यपदिशति "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च अहं कक्षीवान् ऋषिर्विप्र इत्यादि यथा च प्रह्लादः "सर्वगत्वादनन्तस्य स एवाहमवस्थितः । मत्तः सर्वमहं सर्वं मयि सर्वं सनातन" इत्यादि वदति, अस्मिन्प्रकरणे जीववाचिभिःशब्दैरचिद्विशेषाभिधायिभिश्चोपास्यभूतस्य परस्य ब्रह्मणोऽभिधाने कारणञ्चोद्यपूर्वकमाह—

सू० श्रीः जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह च तद्योगात् ॥ ३२ ॥

"न वाचं विजिज्ञासीत वक्तारं विद्यात्त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छम् इत्यादिजीवलिङ्गाद्यावदस्मिन् शरीरे प्राणो वसति तावदायुः अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति मुख्यप्राणलिङ्गाच्च नाध्यात्मसम्बन्धभूमेतीति चेन्न उपासात्रैविध्याद्धेतोः—उपासनात्रैविध्यमुपदेष्टुं तत्तच्छब्देनाभिधानम्

टी० "यथे"ति, शरीरिणि पर्यवसानं पश्यन्नित्यन्तेन तद्धैतत्पश्यन्नित्येतद्व्याख्यातम्, उक्तार्थविशदीकरणायाह "यथा च प्रह्लाद"इति, उत्तरसूत्रमवतारयति "अस्मिन्नि"ति, जीववाचिभिरित्यादि त्वाष्ट्रवधादिलिङ्गप्रतिपादनकारणमपि कथनीयमित्यभिप्रेतम्, उपरितनग्रन्थानुगुण्यात् कारणं प्रयोजनरूपम् उपदेष्टुमिति हि वक्ष्यते । चोद्यपूर्वकमाह न तूक्तार्थप्रतिक्षेपार्थकं चोद्यं विशेषणांशे तात्पर्यं प्रतीयत इति तस्य योजनमेव प्रष्टव्यन्तच्चोद्यरूपेण पृष्टवान् इत्यर्थः । सू० जीवमुख्यप्राणलिङ्गान्नेति चेन्ना-

पासात्रैविद्यादाश्रितत्वादिह तद्ग्रहणात् "न वाचं विजिज्ञासीत वक्तारं विद्यादिति न केवलं मद्वचनमेव विजानीहि वक्तारं माञ्च विजानीही-त्यर्थः, मुख्यः प्राणः पञ्चवृत्तिः, मुख्य-शब्दः इन्द्रियादिव्यावृत्त्यर्थः । नञो निषेध्याकाङ्क्षायामनतिविप्रकृष्टं सौत्र पदमध्याहृतम्, अध्यात्मेति हेतुत्वं विवृणोति "उपासने"ति, उपदेष्टुमित्यनेन प्रयोजनतया हेतुत्वं स्पष्टम् त्रैविद्यं विवृणोति—

भू० निखिलकारणभूतब्रह्मणः स्वरूपेणानुसन्धानं—भोक्तृवर्गशरीरकत्वानुसन्धानं भोग्यभोगोपकरणशरीरकत्वेनानुसन्धानञ्चेति त्रिविधमनुसन्धानमुपदेष्टुमित्यर्थः, तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेऽप्याश्रितम् ।

टी० "निखिले"ति, स्वरूपेणानुसन्धानम्—अद्वारकगुणविशिष्टानुसन्धान त्रिविधानुसन्धानस्य प्रमाणमूलत्वे सिद्धे ह्यय निर्वाह उपपन्नः स्यादिति शङ्कायाम् आश्रितत्वादित्येतद्व्याचष्टे "तदिदमि"ति, कुत्रेत्यपेक्षायां प्रकरणान्तरेष्वपीत्युक्तम्, आश्रितं प्रतिपन्नमित्यर्थः तत्स्पष्टं त्यादि सत्य ज्ञानमनन्तमिति देशकालवस्तुपरिच्छेदरहितस्य ब्रह्मणो ब्रह्मविदाप्नोतीति वेद्यत्वविधानात् प्रकरणस्य वेद्यब्रह्मप्रतिपादनपरत्वात् स यः एव विदिति निगमनवाक्येऽपि पूर्वोक्तसमस्तप्रकारविशिष्टवेदनप्रतीतेश्च चिदचिच्छरीरकत्वानुसन्धानमत्र विवक्षितमिति भाष्याभिप्रायः । ननु स यश्चायम्पुरुषे यश्चासावादित्ये स एक इत्युक्त्वाऽनन्तरं स य एवं विदिति वाक्येन जीवान्तर्यामिण आदित्यान्तर्वर्त्तिनश्च उपासनमुच्यते इति चेत् न स्थानभेदेन विद्याभेदप्रसङ्गात्, न चानुपपन्नः एतमानन्दमयमात्मानमुपसंक्रामतीत्यानन्दमयप्राप्तिफलश्रवणेन ब्रह्मविदाप्नोति परं तस्माद्वा एतस्मादात्मन इत्यादिताऽनन्दमयविषयविद्यैकत्वावगमात् । प्रकरणस्य सम्भवत्येकवाक्यत्वे वाक्यभेदानुपपत्तेश्च स यश्चायमित्यादिवाक्ये किमुच्यते इति चेत् त्रिविधानुसन्धानरूपैकविद्याया मोक्षफलकत्वेन विवक्षितत्वे सति तत्र स्वरूपेणावस्थितस्य अनुसन्धाने ज्ञानादिगुणवद्दिव्यविग्रहयोगस्याप्य-

नुसन्धेयतासिध्यर्थं पुण्डरीकाक्षमप्राकृतवपुरतिदिश्यते, तत्र स यश्चायं पुरुष इति विज्ञानमयादन्तरस्यानन्दमयस्यानुवादः, यश्चासावादित्य इति विग्रहातिदेशः । किञ्चानन्दमयप्रतिपादनानन्तरं ब्रह्मविदाप्नोतीत्युपक्रमाभिहितप्राप्तिविशदीकारार्थम् अथातोऽनुप्रश्ना इति प्रश्ना उपक्षिप्ताः पूर्वप्रतिपादनस्य बुभुत्साहेतुत्वमतश्शब्देनोच्यते उताविद्वानिति उत विद्वानिति पदं निपातस्येति छान्दसो दीर्घः, अथासपत्नानितिवत् अविद्वानिति पदे सति ह्याद्युदात्तत्वं स्यात् तत्पुरुषे तुल्यार्थैरित्यादिश्रवणात् अविद्वान् प्रति गृह्णातीति वत् अन्तोदात्तश्चेदं पदं तस्माद्विद्वानिति पदं कश्चन अविप्रकृष्टहृदयादिस्थानस्थामनवच्छिन्न ब्रह्मोपासीनो विद्वान् किमतः प्रेत्यामुं लोकं परमे व्योमन्नित्युक्तं लोकङ्गच्छतीत्येकः प्रश्न. उत गत्यनपेक्षमिहैव ब्रह्माप्नोतीत्यर्थसिद्धः प्रश्नः आहो विद्वानिति समश्नुता इति भोक्तृत्वं विवक्षितं कश्चिदहंग्रहेणोपासीनोऽपि विद्वान् अमुं लोकङ्गत्वा किं समश्नुते भोग्यभूतं ब्रह्मानुभवतीत्येकः प्रश्न । उत ब्रह्मस्वरूपेणैकी भवतीत्यर्थसिद्धः प्रश्नः एवं शास्त्रवैविध्यमूला गतिविशेषस्वरूपभेदभावाभावविषयाः प्रश्नाः बहुवचनविवक्षिताः, एतान् प्रतिवक्तुं जगत्कारणत्वौपयिकगुणविशिष्टस्यैव विलक्षणस्य ब्रह्मणः प्राप्यत्वादिज्ञापनाय सोऽकामयतेत्यादिना जगत्कारणत्वादिकं निरतिशयानन्दपर्यन्तं महिमानमुक्त्वा स यश्चायमित्यादि वदति सन्निकृष्टहृदयस्थं वा विप्रकृष्टरविमण्डलादिस्थानस्थं वा पूर्वोक्तं सत्य-

सू० "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्मे"त्यादिषु स्वरूपानुसन्धानं "तत्सृष्ट्वा तदेवानुप्राविशत" तदनु प्रविश्य सच्च त्यच्चाभवत् निरुक्तञ्चानिरुक्तञ्च निलयनं चानिलयनञ्च विज्ञानञ्चाविज्ञानञ्च सत्यं चानृतञ्च सत्यमभवदित्यादिषु भोक्तृशरीरतया भोग्यभोगोपकरणशरीरतया चानुसन्धानम् इहापि प्रकरणे तत त्रिविधमनुसन्धानं युज्यत एवेत्यर्थः ।

त्वादिलक्षणमानन्दादिगुणकं वा ब्रह्मोपासीनः सर्वोऽपि विद्वान् अस्माल्लोकात् प्रेत्य अवमयादिसमष्टिव्यष्टिविभूतिकं निरतिशयानन्दं परमात्मानं भोग्यभूतम्भोक्ता सन् अनुभवतीति प्रश्नस्योत्तरमुक्तम् । अतस्सर्वेषां विद्याविशेषनिष्ठानामर्चिरादिगतिमत्त्वम्भोक्तृभोग्यभावेन अवस्थानञ्च प्रतिपादयितुं सन्निकृष्टविप्रकृष्टस्थानविशेषोपलक्षणार्थं स यश्चायमित्याद्युक्तं, तस्मादादित्यान्तर्वर्त्तितया उपासनमानन्दवल्यां न विधित्सितम् । अत उक्तलक्षणत्रिविधोपासनमेव अत्र विवक्षितम् । एवम्भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतदित्यादीनि श्रुत्यन्तराणि च विवक्षितानि, त्रिविधोपासनस्य स्फुटतरत्वात् भोक्तृभोग्ययोरीश्वरविधात्वं कथमित्यपेक्षायां चिदचिदनुप्रवेशादीश्वरस्य तत्प्रकारित्वमिति त्रिविधोपासनपरश्रुत्यन्तरार्थविशदीकारहेतुत्वादानन्दवल्लीवाक्यमिहोदाहृतम् । अन्यत्त्वभिप्रेतम् । इह तद्योगादित्येतद्व्याचष्टे "इहापी"ति, आनन्दोऽजरोऽमृत इति स्वेन रूपेणानुसन्धानं, प्राणोऽस्मीत्यचिद्विशिष्टानुसन्धानं, मामुपास्स्वेति चिदचिद्विशिष्टानुसन्धानमिति त्रिविधानुसन्धानमिहोपपद्यत इत्यर्थः । त्रिविधानुसन्धाने कर्तव्येऽप्यत्र चिद्विशेषाचिद्विविशिष्टत्वोक्तिः कथं सामानाध्येन चिदचिद्विशिष्टानुसन्धानं हि प्रकरणान्तरोक्तमित्यपेक्षां प्रशमयन् अस्यन्यायस्य प्रतर्दनविद्यामात्रविषयत्वं च निवारयन् विशिष्टोपासनपरत्वचिह्नं च दर्शयति—

भा० एतदुक्तम्भवति यच्च हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणाञ्च परमात्मासाधारणधर्मयोगस्तदभिधायिनां शब्दानां परमात्मवाचिशब्दैः सामानाधिकरण्यं वा दृश्यते तच्च परमात्मनस्तत्तच्चि . चिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितमिति .

टी० "एतदुक्तम्भवती"ति, यच्चेति, अयं न्यायो न प्रतर्दनविद्यामात्रविषयः अपि त्वीदृशसर्वप्रकरणविषय इति भावः । सामान्येन चिदचिद्विशिष्टोपासनं हि विहितत्वात् स्वीक्रियते विधेर्वैयर्थ्यार्थञ्च, तथा

चिदचिद्विशेषशिष्टोपासनं विहितञ्चेत् तत्र तत्र चिदचिद्विशेषान्तर्यामित्वमनुसन्धेयमित्यभिप्रायेणाह "हिरण्यगर्भादी"ति, हिरण्यगर्भादिजीव विशेषाणामिति पदेन परमात्म-शब्देन च परमात्मा व्यवस्थितः "स ब्रह्मा स शिवस्सेन्द्र" इति श्रुतिः स्मर्यते। अनन्यपरेण नारायणानुवाकेन सर्वविद्यासूपास्यो नारायण एवेति निर्णीतत्वादिन्द्राद्युपासनेऽपि तदन्तर्यामि नारायण एवोपास्य इति भावः। पाशुपताधिकरणे तथानुवदिष्यमाणत्वात्। परमात्मपर्यन्तत्वविवक्षाज्ञापकं द्विविधं प्रदर्शयति "परमात्मासाधारणे"ति परमात्मासाधारणधर्मयोगात्तद्वाचिशब्दसामानाधिकरण्याच्च विशिष्टोपासनपरत्वमवगम्यत इत्यर्थः। अधिकरणार्थमुपसंहरति 'अत' इति, अत्र कैश्चिदेवं वर्णितं-प्राणव्यापारस्यापि परमात्मायत्तत्वात्तत्सङ्कीर्त्तनं जीवसंकीर्तनं तु तस्यौपाधिकभेदप्रतिक्षेपेण परब्रह्मरूपताज्ञापनार्थम्, अन्यथा त्रिविधमुपासनं प्रसज्येत ततश्च वाक्यभेदः स्यादिति तदयुक्तं नित्योपलब्ध्यनुपलब्धिप्रसङ्गः, अपीतौ तद्वत्प्रसङ्गादिति वत् प्रसङ्ग-शब्दस्याश्रुतत्वात् वाक्यभेदाभावाच्च एकवाक्येनैव हि विधीयते तम्मामायुरमृतमित्युपास्स्वेत्यत्र मामिति जीवविशिष्टता [1]युक्ता आयुरिति प्राणविशिष्टता आयुः प्राण इति ह्यनन्तरवाक्यम्, अमृतमिति स्वेन रूपेणावस्थितिरतः एवंविधपरमात्मानमुपास्स्वेत्येकवाक्यत्वमुपासात्रैविध्यविधानस्य वृत्तिकाराभिमतत्वात् तदनतिक्रमाय परैरेवं त्रिविधोपासनपरत्वेन योजनान्तरं कृतं तत्र ज्ञानक्रियाशक्तिद्वयाश्रयबुद्धिप्राणरूपोपाधिधर्मेण स्वधर्मेण च त्रिविधं ब्रह्मोपास्यमिति तदयुक्तं, जीवेश्वरभेदस्यान्तःकरणरूपोपाध्यवच्छेदकल्पितत्वाभावात् "यस्यात्मा शरीरम्मनोमयः प्राणशरीर" इति जीवप्राणयोः परमात्मानं प्रति शरीरतया प्रकारत्वस्य श्रुतत्वेन प्रकारान्तरेण त्रैविध्यकल्पनायोगाच्च। अन्ये त्वेवमाहुः उपासात्रैविध्येन वाक्यैकत्वं प्रज्ञाशरीरो जीवशरीरः प्राणशरीरश्च परमात्मोपास्यः तत्र प्रज्ञाशरीरे मनोमयः जीवशरीरो वाङ्मयः, वाक्-शब्दः शब्दपरिणामशक्तियोगात् परमाका-

१ जीवविशिष्टतोक्ता पा० ।

शविषयः, अतो वाङ्मयाकाशशरीरः आकाशशरीरत्वं च जीवशरीरत्वपर्यन्तं तस्यान्ते सुषिरं सूक्ष्मं तस्य मध्ये महानग्निरिति हृदयाकाशमध्येऽ-

सू० अतोऽचेन्द्रप्राण-शब्दनिर्दिष्टो जीवादर्थान्तरभूतः परमात्मैवेति सिद्धम ॥ समाप्तमिन्द्रप्राणाधिकरणम् ॥

इति श्रीमद्भगवद्रामानुजाचार्य्यचरणकृतौ शारीरकमीमांसाभाष्ये समन्वयस्य प्रथमस्याध्यायस्य प्रथमः पादः समाप्तः ॥ १ ॥

ग्नि-शब्देन जाठराग्निपरमात्मज्वालया संसृष्टं जीवमभिधाय तस्याशिखाया मध्ये परमात्मा व्यवस्थित" इत्याम्नानादिति, तदनुपपन्नं मनोमयादिव्यूहानाम् अप्रामाणिकत्वस्य पूर्वमेव दर्शितत्वात् । किञ्चास्मिन् प्रकरणे प्रज्ञा-शब्दस्य सहोत्क्रमणपृथग्व्यवहाराभ्यां स्थानप्रमाणेन च जीवप्रसिद्धः मनोविषयत्वोपपादनेन ईश्वरप्रज्ञाशक्तिवाचित्वाभावात् प्राण-शब्दस्य घटशब्दस्योदकाहरणशक्तिवाचित्वाभाववत् क्रियाशक्तिवाचित्वाभावाच्च, अतः प्रज्ञाप्राण-शब्दो न मनोमयप्राणमयवाचकौ । यदि प्रसिद्धमनोवाक्प्राणा एतत्कार्यभूताः विवक्षिताः तदस्मिन् प्रकरणे चक्षुःश्रोत्रादीनामपि प्रकृतत्वात्तेषाञ्च परमात्ममयत्वादुपासात्रैविध्यं विरुध्यते आकाशशरीरत्वं जीवशरीरपर्यन्तमित्यप्ययुक्तन्तस्य मध्ये महानग्निरित्यग्नि-शब्दस्य जीववाचित्वाभावात्, तत्र यस्त्वग्निरतो नित्यं स्थाल्यामग्निरिवार्पितः आत्मानं तं विजानीयादिति स्मृतिवचनन्तु न जीवस्य श्रुतावग्नि-शब्दवाच्यत्वे प्रमाणं, किन्तु स्थानस्थानिनोर्वैलक्षण्ये दृष्टान्तमात्रसमर्थकं, वाङ्मयस्य जीवशरीरकत्वमभवत्प्रक्रियया विरुद्धञ्च प्राणमयस्यान्तर्यामित्वाभ्युपगमात्, अन्तर्यामिणो जीवशरीरकत्वश्रवणाच्च "यस्यात्मा शरीरं स त आत्मान्तर्याम्यमृत" इति हि श्रूयते, तमोऽधिष्ठातृतयाऽभ्युपगतस्य वाङ्मयस्य जीवशरीरकत्वं श्रुतिविरुद्धञ्च, यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरमि-

त्यारभ्य एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इति समानप्रकरणे नारायणस्यैवान्तर्यामित्वश्रवणात्, धर्मैक्यात्सर्वमुपपन्नमिति चेन्न सर्वेषां व्यूहानां सर्वधर्मसम्भवेन व्यूहत्रयतद्व्यापारविभागव्यवस्थोपन्यासानुपपत्तेरतो यथोक्तमेव उपास्त्रैविध्यमिति सिद्धम् ॥

इन्द्रप्राणाधिकरणं समाप्तम् ।

इति श्रीहारीतकुलतिलकवाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसे(१)वासमधिगतभगवद्रामानुजाचार्यवरप्रणीतशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां प्रथमस्याध्यायस्य प्रथमः पादः ॥ १ ॥

(१) "गुरुभ्योऽर्थः श्रुतो यस्त्वि"ति प्राथमिकप्रतिज्ञानुरोधेन व्याख्यानान्तराणि निबध्नद्भिरिव प्रणीतायामित्येवमादि अविलिख्य प्रकाशिकाकृद्भिर्विलिखितायामिति व्यलेखि ।

---

अत्र पादे ११ एकादशाधिकरणानि गौणसूत्राणि तु विंशतिः । २० । सर्वसंकलने तु एकत्रिंशत् सूत्राणि ।



॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

(Continued from page 346 Vol XII)

"णिचश्च" ॥ अत्र कश्चिदाह । इदमात्मनेपदं चुरादिणिचो न भवति, कुतः ज्ञापकात्, किं ज्ञापकं, लक्षयतेः स्वरितेत्त्वमिति, नात्राप्राप्तभाषितमस्ति । पारायणेऽपि चुरादिणिच आत्मनेपदमुदाहृतम्, एष विधिश्चुरादिणिजन्तात्स्यादिति । कश्चन निश्चुनुते स्म । अप्राप्तवचनोऽत्र न किंचन दृष्टं, लक्षयतेः स्वरितेत्त्वमनार्षम् ॥

"समुदाङ्भ्यो यमोऽग्रन्थे" ॥ उद्यच्छति चिकित्सामित्यत्राधिगमपूर्वके उद्यमे यमिर्वर्त्तते चिकित्साशास्त्रमधिगन्तुमुद्यमं करोतीत्यर्थः ।

"अनुपसर्गाज्ज्ञः" ॥ सकर्म्मकार्थमिदम् अन्यत्रा 'कर्म्मकाच्चे' ति सिद्धत्वात् तदाह । 'गां जानीतइति' । 'स्वर्गं लोकं न प्रतिजानातीति' । 'संप्रतिभ्यामनाध्यान' इत्यनेनापि न भवति आध्यानविषयत्वात्, प्रजानातीति वा पाठः ॥

"विभाषोपपदेन प्रतीयमाने" ॥ अप्राप्तविभाषेयमित्याह । 'तदुपपदेनेति' । अत्र च स्वरितञित इत्यारभ्य पञ्च सूत्राण्यनुवर्तन्ते । 'समीपे श्रूयमाणमिति' । न तु पारिभाषिक, मसंभवात् । 'एवं पञ्चसूत्र्यामुदाहार्यमिति' । न केवलमुदाहृतयोर्द्वयोरपि तु पञ्चस्वपि सूत्रेष्वित्यर्थः । स्वं यज्ञं कारयते कारयति वा । स्वं व्रीहिं संयच्छते संयच्छतीति वा । स्व गां जानीते जानातीति वा ॥

"शेषात्कर्तरि परस्मैपदम्" ॥ 'आत्मनेपदनियमः कृत इति' । प्रकृत्याश्रयोऽर्थाश्रयश्च, अनुदात्तङितोरेवात्मनेपदं भावकर्म्मणोरेवेति । 'सर्वत इति' । सर्वाभ्यः प्रकृतिभ्यः सर्वेषु चार्थेष्वित्यर्थः । 'तदर्थमिति' । सर्वतःप्राप्तिनिवृत्त्यर्थमित्यर्थः । 'येन विशेषणेनेति' । अनुबन्धादिना । यातिवातीत्यनुबन्धशेषः, आविशति प्रविशतीत्युपसर्गशेषः, गन्धनादेरन्यत्र

करोतीत्यादिरर्थशेषः, गन्धनादिविशिष्टो हि कृञादिः शेषग्रहणेन पञ्चम्यन्तेन निवर्त्यमानो नागृहीतविशेषणन्यायेन विशेषणं गन्धनाद्यपि व्यावर्त्तयति शेषादेव नान्यस्मादिति । उपलक्षणमेतत्, कर्त्तर्येव नान्यत्रेत्यपि द्रष्टव्यं, 'पठ्यते गम्यतइति' । ननु क्रियमाणेपि कर्त्तरिग्रहणे यदि तावदेवं नियमः कर्त्तरि यदि भवति शेषादेवेति ततोशेषात्कर्त्तरि माभूत् शेषात्तु भावकर्म्मकर्तृषु त्रिष्वपि प्राप्नोति । अथाप्येवं नियमः शेषाद्यदि भवति कर्त्तर्येवेति ततः शेषाद्भावकर्म्मणोर्माभूदशेषात्तु त्रिष्वपि प्राप्नोति । उक्तोत्र परिहारो योगविभागोत्राभिप्रेत इति, तत्र प्रथमे योगे शेषादेवेति नियमः, द्वितीये तु कर्त्तर्येवेति, कर्म्मकर्त्तरीत्यपि भावकर्म्मणोरित्यत्रोक्त एवार्थो विस्मरणशीलाननुग्रहीतुं पुनरपि स्मारितः ॥

"अनुपराभ्यां कृञः" ॥ अत्रापि द्वितीयं कर्तृग्रहणमनुवर्त्तते। अनुक्रियते स्वयमेव पराक्रियते स्वयमेव ॥

"उपाच्च"॥ उपपूर्वो रमिर्निवृत्तिविनाशयोर्वर्त्तते उपरतोध्ययनाद् उपरतो निधनादिति, न चानयोरुभयोरप्यर्थयोः सकर्मकत्वमुपपद्यते तत्कथं सकर्म्मकस्योदाहरणम्, अत आह । 'उपरमयति यावदिति' । कथं पुनरण्यन्तो ण्यर्थे वर्त्तते ऽत आह । 'अन्तर्भावितण्यर्थ इति' ॥

"बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः" ॥ 'प्राप्नोतीति' । गम्यतइति वचनं तु प्राप्तिहेतुर्व्यापारः । 'कुण्डिका स्रावयतीति' । कुण्डिकायामुदकं कुण्डिकोदकव्यापारो वा कुण्डिकायां छिद्रवत्यामुपचर्यते, ननु स्पन्दनमपि द्रवद्रव्यकर्तृकं चलनमेव, तथा प्रसिध्यभावात् ॥

"निगरणचलनार्थेभ्यश्च" ॥ 'चलयतीति' । चल कम्पने घटादिः । 'आदयते देवदत्तेनेति' । गतिबुद्धीत्यादिना ऽणौ कर्त्तुः कर्मसंज्ञा प्राप्ता अत्तिखाद्योः प्रतिषेध इतिवचनान्न भवति ॥

"अणावकर्मकाच्चित्तवत्कर्तृकात्" ॥ 'अणाविति किमिति' । ण्यन्तस्य प्रयोज्येन कर्म्मणा सकर्म्मकत्वमवश्यम्भावीति मन्यमानस्य प्रश्नः । 'चेतयमानमिति'। चिती संज्ञाने चुरादिः । 'हेतुमण्णिचोवधिरिति' । बुधादिसूत्रादिह णिज्ग्रहणमनुवर्तते बुधादिभ्यश्च हेतुमत्येव णिच् सम्भवति

तस्मादिहापि तस्यैव ग्रहणमिति भावः । तत्र यथा ब्राह्मणा आनीयन्तामन्यत्राधीयानेभ्य इत्युक्ते प्रत्यासत्तेर्यदध्ययनं ब्राह्मणानां सम्भवति तदधीयानेभ्य इति गम्यते न त्वध्येतव्यमात्रमधीयानेभ्य इति तद्वदिहापि प्रतिषेधोऽपि तस्यैव गम्यते यज्जातीयस्य विधौ ग्रहणमिति । 'आरोहयमाणमिति' । णेरणावित्यात्मनेपदं शानच्च तत्रैवास्याकर्म्मकत्वमुपपादितं, प्रयुङ्क्तइति पाठः । प्रयोजयतीति पाठे णेरर्थो मृग्यः ॥

"न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः" ॥ लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणमिति पिबतिवसत्योर्ग्रहणं न पातिवस्त्यो:, तेनाणावकर्म्मकत्वविवक्षायां परस्मैपदं भवत्येव । 'पाययतइति' । 'शाच्छासाह्वाव्यावेपां युक्' । 'पादिष्विति' । धेडप्यस्मिन् सूत्रे पठितव्य इत्यर्थः । 'समीची इति' । प्रथमाद्विवचने 'वा छन्दसी' ति पूर्वसवर्णदीर्घः ॥

"वा क्यषः" ॥ 'लोहितायते इति' । अलोहितो लोहितो भवतीत्यत्रार्थे क्यष्, अकृत्सार्वधातुकयोरिति दीर्घः । 'पटपटायतीति' । पटच्छब्दस्य डाविषये द्विर्वचनम्, अव्यक्तानुकरणादिति डाच्, टिलोपः, 'नित्यमाम्रेडिते डाचि' । 'कथमिति' । न कथञ्चिदित्यर्थः । किं कारणमित्याह । 'यावतेति' । न नियमेन व्यावर्त्तितमात्मनेपदमनेन शक्यं प्रापयितुं नह्यशक्यार्थे वचनस्य व्यापारो वा वचनं तु केवलस्य तस्य प्रयोगार्थं स्यादिति भावः । एवं तर्हीत्यादि परिहारः, विकल्पित विभाषितं पाक्षिकमित्यर्थः । कथं पुनः परस्मैपदप्रकरणेन विच्छिन्नमात्मनेपदं शक्यं विधातुम् अत आह । 'तच्चेति' । ननु शाब्दः सन्निधिः सम्बन्धकारणं प्रतिषेधेन चापवादभूतस्य परस्मैपदस्य भावमात्रं प्रतिपाद्यते आत्मनेपदं तु स्वेन शास्त्रेण भवति न भावना तस्य सन्निधिर्भवति, उच्यते, तात्पर्यतोऽपि सन्निधिः सन्निधिरेवापवादापनयनस्य चोत्सर्गप्रवृत्तौ तात्पर्यं तेन परस्मैपदं भवतीत्यस्यात्मनेपदं भवतीति तात्पर्यार्थः । यद्वा इहापि प्रतिषेध एव विधेयः, स च पूर्व्वसूत्रवदिहात्मनेपदं प्रवर्त्तयिष्यति, किं तर्ह्युच्यतेऽनन्तरं सन्निधापितमिति, नन्वेवमिहैव सन्निधापितं भवति, स्यादेवं यदि परस्मैपदेन क्यषन्तादात्मनेपदं बाधितं स्याद् नियमेन तद्व्यावृत्तिः, तत्र

स्वविषये परस्मैपदप्रतिषेधो विकल्प्यमानः किं कारणमात्मनेपदं प्रवर्त्तयेत् पूर्वत्र त्वपवादमपनुयता प्रतिषेधेनात्मनेपदं प्रवर्त्यते तस्मादिहापि तदनुवृत्तिसामर्थ्याद् यादृशः प्रतिषेध आत्मनेपदप्रवृत्त्यविनाभावी प्रकृतः तादृश एव विधीयतइति मत्वोक्तम् । अनन्तरं सन्निधापितमिति यदात्मनेपदं विधीयते केनेदानीं परस्मैपदं पक्षे भवतीत्यत आह । 'तेन मुक्तइति'। इह 'प्रोपाभ्यां समर्थाभ्याम्' 'अनुपसर्गाद्वे' त्यनन्तरम् क्यष इति सूत्रङ्कर्त्तव्यम् क्यषन्तादात्मनेपदम्भवतीति नेदन्दुःखमनुभवितव्यम्भवति वा यहणञ्च न कर्तव्यम्भवति उत्तरमपि योगद्वयन्तत्रैव कार्यम्, तथा तु न कृतमित्येव ॥

"द्युद्भ्यो लुङि" ॥ द्युतेरेकत्वाद्बहुवचनमनुपपन्नमित्याशङ्क्याह । 'तत्साहचर्यादिति'। छत्रिन्यायेनेति भावः । 'लुठादयोपीति'। प्रत्यासन्नानामेव साहचर्यात् प्रतीतिः स्यादित्याशङ्कामपनेतुं दूरवर्तिनामुपादानं, क्वचित् श्वित्यादय इत्यनन्तराणामेव पाठः, 'कृपूपर्यन्ता इति'। तदनन्तरं वृत्करणात् एतदुक्तं भवतीत्याह । 'बहुवचननिर्देशादिति'। 'व्यद्युतदिति'। पुषादिसूत्रेणाङ्, न च तत एवाङ्विधानात् परस्मैपदं शक्यं विज्ञातुं, नित्यत्वप्रसङ्गात् लुङोन्यत्रापि प्रसङ्गाच्च, अनुदात्तेत्त्वं तु युजर्थं स्यात् ॥

"वृद्भ्यस्स्यसनोः" ॥ स्यसनोरिति सत्सप्तमी । 'द्युतादिष्वेव वृतादयः पठ्यन्तइति'। यद्येवमियं प्राप्तिर्वृद्भ्यः पूर्वा प्राप्तिं बाधेत ततश्चावृतदवर्त्तिष्टेति लुङि विकल्पो न स्यात्, तथा चोत्तरत्र चकारः क्रियते इमां प्राप्तिं पक्षे इतरा प्राप्तिर्न बाधेतेति, द्युतादिपाठसामर्थ्यात्सोऽपि भविष्यति । यद्वा लुङीत्यत्र स्वरयिष्यते, वर्त्स्यतीत्यादौ 'न वृद्भ्यश्चतुर्भ्य' इति इट्प्रतिषेधः ॥

"लुटि च क्लृपः" ॥ 'एवं नर्हीति'। सामान्यस्य विशेषो बाधक इति भावः । कल्प्तेत्यादौ 'तासि च क्लृप' इतीट् प्रतिषेधः ॥

इति हरदत्तविरचितायां पदमञ्जर्यां प्रथमाध्यायस्य तृतीयः पादः ॥

"आ कडारादेका संज्ञा"॥ 'आङ्मर्यादाभिविध्योरिति' समासस्य विकल्पितत्वादा कडारादितिनिर्देशः, समासे त्वाकडारमिति स्यात्। इह द्वौ कडारशब्दौ भवतः 'प्राक्कडारात् समास' 'कडाराः कर्म्मधारय' इति च तत्र को ऽवधिरित्यत आह। 'कडाराः कर्मधारयइति वक्ष्यतीति'। कुतः पुनरेतत् स्वातन्त्र्यात्, स्वतन्त्रो ह्यसौ प्रथमानिर्देशेन स्वयं कार्ययोगित्वात् प्राक्कडारादित्ययं तु परतन्त्रो ऽवधित्वेन स्वयं कार्ययोगित्वाभावात् व्याप्तेश्च न्यायात् एवं हि भूयसामनुग्रहो भवति। लिङ्गाच्च। यदयं 'तत्पुरुषो' 'द्विगुश्चे' ति द्विगोस्तत्पुरुषसंज्ञां शास्ति तज्ज्ञापयति अनुवर्त्तते द्वितीयेप्येकसंज्ञाधिकार इति, अन्यथा 'दिक्संख्ये संज्ञाया' मित्यत्र तत्पुरुषाधिकारादेव समावेशसिद्धेस्तदर्थो यत्नोपार्थकः स्यात्। किमर्थं पुनरियानवधिरुपादीयते न आ द्वन्द्वाद् इत्येवोच्येत नहि चार्थे द्वन्द्व इत्यतः परत्रास्योपयोगः। उच्यते। द्वन्द्वश्च प्राणितूर्येत्ययमप्यवधिः सम्भाव्येत ततश्च सम्बुद्धिसंज्ञामन्त्रितसंज्ञयोः समावेशो न स्यात्। 'का पुनरसाविति'। एका संज्ञा भवतीत्येतावत् सूत्रव्यापारस्तत्र विशेषादर्शनात् प्रश्नः। यां परानवकाशा चेति वचनाद् न्यायाच्च व्यवस्थेति भावः। ननु यद्यारब्धेप्यस्मिन् परत्वानवकाशत्वाभ्यामेव व्यवस्था वाच्या ऽनारब्धेप्यस्मिन् आभ्यामेव व्यवस्था भविष्यति नार्थ एतेन, तत्राह। 'अन्यत्रेति'। अयम्भावः। यत्र प्रयोजनमेकं भवति सहानवस्थानलक्षणो वा विरोधस्तत्रैवानवकाशः सावकाशं बाधते यथा नैवारश्चरुर्नखावपूतानामिति, नखावपनेन वैतुष्यफलकेन तत्फलकोवघातो बाध्यते, अष्टाश्रियूपः कर्त्तव्यो वाजपेयस्य तु चतुरस्र इति अष्टाश्रित्वचतुरश्रत्वयोर्विरोधात् बाध्यबाधकभावः, विप्रतिषेधोपि विरोधात्मकत्वात्तत्रैव भवति। न चासत्यस्मिन् सूत्रे संज्ञानामेतदुभयं भवति, अत एवान्यत्र समावेशो भवति तद्यथा कृत्कृत्यप्रत्ययसंज्ञानां तद्धिततद्राजप्रत्ययसंज्ञानां च, सति त्वस्मिन् सूत्रे एकस्यैकैवेति नियमाद्विरोधो जायते विरोधे च सति परत्वानवकाशत्वाभ्यां व्यवस्थां शक्यते वक्तुमिति, तत्रानवकाशाया उदाहरणमाह। 'वक्ष्यतीति'। 'शिक्षा भिक्षेति'। 'गुरोश्च हल' इत्यकारप्रत्ययः। यद्यप्यत्र समावेशेपि न कश्चिद्दोषस्तथापि

वस्तुतः समावेशो नास्तीत्येतावता इदमुदाहरणम् । सम्प्रति यत्र समावेशे सति दोषस्तद्दर्शयति । 'अततन्तदिति'। परस्यास्तूदाहरणं धनुषा विध्यतीति, शराणामपायं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकतमत्वमित्युभयप्रसङ्गे परत्वात्करणसंज्ञापादानसञ्ज्ञां बाधते तथा कांस्यपात्र्यां भुङ्क्त इत्यधिकरणसञ्ज्ञा धनुर्विध्यतीति कर्तृसंज्ञा, उक्तं चापादानमुत्तराणीति । इह गार्ग्यो धानुष्क इति अनवकाशाभ्यां भपदसंज्ञाभ्यामङ्गसंज्ञाया धातुप्रत्ययेषु सावकाशाया बाधः प्राप्नोति, ज्ञापकात्सिद्धं, यदयं 'सुपि च' 'बहुवचने झल्येत्' 'तद्धितेष्वचामादे' रिति स्वादिषु तद्धितेषु चाङ्गस्य सतः कार्यं शास्ति तज्ज्ञापयति समाविशत्यङ्गसंज्ञा भपदसंज्ञाभ्यामिति, द्वये हि स्वादयो यजादयो हलादयश्च तत्र याजादिषु भसंज्ञा हलादिषु पदसंज्ञेति अङ्गस्य यतः कार्यविधानमनुपपन्नं स्यात् । गुरुलघुसंज्ञे वर्णमात्रस्य विधीयेते नदीघिसंज्ञे तु तदन्तस्येति ताभ्यां समाविशतः, तद्यथा वात्सीबन्धुरिति 'नदी बन्धुनी' ति पूर्वपदान्तोदात्तत्वं वात्सीबन्धो इति गुरोरनृत इति प्लुतश्च भवति । विश्च ना च विनरौ 'द्वन्द्वे घी' ति पूर्वनिपातः विनोर्भाव वैनम् 'इगन्ताच्च लघुपूर्वात्' इत्यण्, विनराचष्टे इति विनयति प्रविनय्य गतः 'ल्यपि लघुपूर्वाद्' इत्ययादेशो भवति । भाष्ये त्विष्टविषये समावेशो न्यायान्तरेण साधितः प्राक्कडारात् परं कार्यमिति, तत्रायमर्थः । प्राक्कडारात् संज्ञाख्यं कार्यं परं भवतीति सञ्ज्ञाप्रकरणात् संज्ञैवात्र कार्यमित्युच्यते, परा सञ्ज्ञेत्येव तु नोक्तं विप्रतिषेधे वेति वक्ष्यति तत्र परं कार्यमित्यनुवृत्तिर्यथा स्यादिति तत्र यस्याः संज्ञायाः परस्याः पूर्वया ऽनवकाशया बाधः प्राप्तः सा परा भवतीति विधिरूपेणास्य प्रवृत्तिः । ननु अनवकाशयापि पूर्वया नैव परस्या बाधः प्राप्नोति विरोधाभावात् फलैक्याभावाच्च संज्ञानामन्यत्र समावेशस्य दृष्टत्वात् । सत्यम् । एतदेव ज्ञापयति भवत्यत्र प्रकरणे संज्ञानां बाध्यबाधकभाव इति तेन परयानवकाशया पूर्वा बाध्यते द्वयोश्च सावकाशयोर्विप्रतिषेधे परेति परैव भवतीति । नियमफलस्यापि सिद्धिरस्ति न्यासेऽङ्गसंज्ञा परा कार्या पूर्वे न भपदसंज्ञे, एवं सर्वत्र यत्र समावेश इष्टोऽस्मिन्यत्ते 'कर्तरण्' 'छन्दसि घस्' ऋत्विय इति अत्र 'सिति चे' ति

पदसंज्ञाविषये परं कार्यमिति वचनाद् भसंज्ञापि स्यात् ततश्च 'ओर्गुणः' प्राप्नोति सित्करणं पदत्वे सत्यवग्रहार्थं स्यात् 'शेषो बहुव्रीहि' रित्यत्र च शेषग्रहणं कर्तव्यम् अन्यथा 'अन्यपदार्थे च संज्ञाया' मिति अव्ययीभावविषये परं कार्यमिति वचनात् बहुव्रीहिसंज्ञापि स्यात् एकसंज्ञाधिकारे त्वव्ययीभावसंज्ञैव बाधिकेति शेषग्रहणमनर्थकं तदेव शेषग्रहणमेव प्रमाणं न्यासान्तरमपि सूत्रकारस्यैवाभिमतमिति ॥

"विप्रतिषेधे परं कार्यम्" ॥ 'विप्रतिषेध इति'। षिधु शास्त्रे, षिधु गत्यामिति भौवादिकयोरन्यतरस्य रूप तस्य हि सेधतिसवसञ्जस्वञ्जामिति षत्वमिति उपसर्गवशाच्च विरोधार्थत्व धातूना ह्युपसर्गवशाद न्यश्चार्थ उपजायते, तद्यथा प्रहार उपहारो ऽनुहारः संहार इति, षिधू संराद्धावित्यस्य तु दैवादिकस्य षत्व नास्ति सेधतिरिति शपा निर्देशात्, 'आदेशप्रत्यययोरि' ति विहितस्य तु 'सात्पदाद्यो' रिति निषेधः। ननु गतिकारकोपपदानां कृद्भिः सह समासवचन प्राक् सुबुत्पत्तेरिति वचनाच्चाय सकारः पदादिः, षत्वविषये परिभाषेय न भवति यदि स्याद् गोष्ठो भूमिष्ठ इत्यादौ सकारस्यापदादित्वा 'दादेशप्रत्यययो' रित्येव षत्वसिद्धेरम्बादौ गवादिग्रहणमनर्थकं स्यात्। परशब्दोय त्रिलिङ्गः परो देशः परा सेना परं कार्यमिति, अतोयमव्युत्पन्नः पचाद्यजन्तो वा न तु ऋदोरबित्यबन्त, तथा हि सति त्रिलिङ्गता न स्यात् ॥

क्तल्युट् नपुंसके भावे स्त्रियां क्तिबादयो यतः।
अतो घञाद्याः पुंस्येव यथा पाकश्चयो लव. ॥

वासरूपविधिर्वास्ति क्तल्युटतुमुन्खलर्थेषु वासरूपविधिर्नास्तीति वचनात्, स्त्रियामपि नास्ति अस्त्रियामितिप्रतिषेधात्, अतो भावघञादयः पुंस्येव कर्तृवर्जिते तु कारके पुंनपुंसकयोर्न कथं चित् स्त्रियाम्। 'परं कार्यमिति'। परं यत्कार्यमित्यादि तद्भवतीत्यर्थ., अथ वा यत्परं तत्कार्यं भवति कर्तव्यं भवतीत्यर्थः। 'अन्ये त्वाहुः'। न क्रियापदत्वेन कार्यशब्दस्यान्वयः नापि परं कार्यं भवति न तु शास्त्रमित्येवं शास्त्रादिव्यावृत्तये कार्यशब्दः किं तर्हि यत्कार्यं कृत्यर्हं परं तद्भवतीति वचन-

व्यक्तिः, अर्हे कृत्यप्रत्ययः किं सिद्धं भवति तुल्यबलविरोध, इति सिद्धं भवति, नह्यपवादादीनां सन्निधावुत्सर्गादीनां कृत्यर्हत्वं तैर्बाधितत्वादिति। 'विरोधो विप्रतिषेध इति'। तद्वाचित्वेनैव लोके प्रसिद्धत्वाद् विप्रतिषिद्धमित्युक्ते विरुद्धमिति गम्यते, तस्य विषयं दर्शयति। 'यत्रेत्यादि'। यत्र विषये वृत्तेभ्य इत्यादौ। 'अन्यार्थौ'। जातिपदार्थपक्षे ऽन्यत्र वृत्ताभ्यां वृत्तेष्वित्यादौ चरितार्थावित्यर्थः। व्यक्तिपक्षे तु तद्विषययोर्विद्ध्योरन्यत्र चरितार्थत्वासम्भवात् अन्योर्थः प्रयोजनमनयोस्तावन्यार्थौ द्वौ प्रसङ्गौ द्वे कार्ये दीर्घत्वेत्वादिके युगपत्प्राप्नुतः स विप्रतिषेधः विप्रतिषेधस्य विषय इत्यर्थः, तुल्यबलयोर्विरोधो यस्मिन् स तथोक्तः। 'परं कार्यं भवतीति'। यत्कार्यं कृत्यर्हं परं तद्भवतीत्यर्थः। तुल्यबलविरोधइत्यस्य व्यावर्त्यं दर्शयति। 'उत्सर्गापवादेत्यादि'। तत्र श्याद्व्यधेत्याकारान्तलक्षणो णप्रत्यय उत्सर्गस्तं परमप्यनुपसर्गे सावकाशं बाधित्वा ऽनवकाशत्वा 'दातश्चोपसर्गे' इति क एव भवति सुग्लः सुम्लः। रधेर्णिचि 'रधिजभोरचो' ति नुम् कृताकृतप्रसङ्गित्वान्नित्यः, 'अत उपधायाः' इति वृद्धिरनित्या नुमि कृते ऽकारस्यानुपधात्वादप्राप्तेः तत्र पूर्वोऽपि नुमेव भवति रन्धयतीति, अशिश्रियद् अदुद्रुवद् इत्यात्रान्तर्भूतचङपेक्षत्वाद् इयङुवङावन्तरङ्गौ बहिरङ्गं लघूपधगुणं परमपि बाधेते, अपवादादीनां तु परस्परसंप्रधारणायां नित्यादप्यन्तरङ्गं तस्मादपवादः। उक्तं च

परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्यमेव।
नित्यान्तरङ्गोपगमेन्तरङ्गं तस्माद्विधिः प्रातिपदो बलीयान्॥

इति। द्वयोरेकत्रोपनिपात उपपत्तिः परस्य नित्यस्य चेति अत्र उपसमस्तमप्युपपत्तावित्येतदनुषज्यते प्रतिपदं भवः प्रातिपदो ऽपवादः, अप्रवृत्तावित्यात्राकृतौ पदार्थे द्वयोरप्यन्यत्र कृतार्थत्वाद्विप्रतिषेधे सति परस्परप्रतिबन्धादप्रवृत्तिरेव प्राप्नोति, तद्यथा यो हि द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति यदा तमुभौ युगपत्प्रेषयतो नाना नादिक्षु च कार्ये भवतस्तदा यद्यसावविरोधार्थी भवति उभयोर्न करोति तत्र विध्यर्थमिदं परं भवतीति, तस्मिन् कृते यदि

पूर्वस्यापि निमित्तमस्ति तदपि भवत्येव । यथा भिन्धकीति, भिन्द्धि इति स्थिते परत्वाद्द्विर्भावे पुनः प्रसङ्गविज्ञानाद्धकज् भवति । व्यक्तौ तु पदार्थे सर्वव्यक्त्युद्देशेन शास्त्रस्य प्रवृत्तेस्तद्विषयोपनिपातिनोऽन्यत्र चरितार्थत्वाभावात्पर्यायेण प्रवृत्तौ प्राप्तायां नियमार्थमिदं विप्रतिषेधे परमेव भवति न पूर्वमिति । एतत्सूत्रारम्भाच्च पूर्वस्य लक्षणस्य तत्रानारम्भोऽनुमीयते, तदुच्यते 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे' ति तद्यथा जुहुतात् त्वमिति परत्वात्तङादेशे कृते स्थानिवद्भावेन प्राप्तं धित्वं न भवति, लक्ष्यानुरोधेन व्यक्त्याकृतिपदार्थाश्रयणादनयोः परिभाषयोर्विषयविभागो ऽवसेयः ॥

"यू स्त्र्याख्यौ नदी" ॥ अत्र ह्रस्वयोरिदुतोर्ग्रहणे यद्यपि सवर्णग्रहणाद्दीर्घयोरपि संज्ञा लभ्यते ह्रस्वयोरपि तु स्यात् ततश्च हे शकटे हे धेनो अत्रापि प्राप्नोति इह च शकटिबन्धु 'नदी बन्धुनी' ति पूर्वपदान्तोदात्तत्वं प्रसज्यते, इह च बहुशकटिः बहुधेनुरिति, 'नद्यृतश्चे' ति नित्यः कप्स्यात् । नैष दोषो, 'ङिति ह्रस्वश्चे' त्येतन्नियमार्थं भविष्यति ङित्येव ह्रस्वौ नदीसंज्ञौ भवतो नान्यत्रेति कैमर्थ्यान्नियमो भवति विधेयं नास्तीति कृत्वा, इह चास्ति विधेयं किं नित्या नदीसंज्ञा प्राप्नोति सा विभाषा विधेया ऽतो ह्रस्वयोरपि स्यादेवेति दोषं दृष्ट्वा दीर्घयोर्ग्रहणमिति दर्शयति । 'ई च ऊ च यू इति' । समासविधौ सुबधिकाराच्चैतद् द्वन्द्वस्य विग्रहवाक्यं किं तर्हि अर्थप्रदर्शनम् । अत्र चानुकार्यानुकरणयोरभेदविवक्षया विभक्तिर्न कृता क्व चित्तु विभक्त्यन्तमेव पठ्यते । ननु दीर्घयोर्ग्रहणे यू इति निर्देशो नोपपद्यते 'दीर्घाज्जसि चे' ति पूर्वसवर्णप्रतिषेधाद् अत आह । 'अविभक्तिकोयं निर्देश इति' । सुपां सुलुगिति लुप्तत्वाद् 'वा छन्दसी' ति पूर्वसवर्णेनापहृतत्वाद्वा नास्मिन् विभक्तिः श्रूयत इत्यविभक्तिकः । अन्ये तु नैवायं द्वन्द्वः किं तु पृथक् पदे इत्युक्तमित्याहुः । अविभक्तिकत्वं चानुकार्यानुकरणयोरभेदविवक्षया, 'स्त्रियमाचक्षाते स्त्र्याख्याविति' । ननु स्त्र्याख्या इति प्राप्नोति अनुपसर्गे को विधीयते यस्त्वातश्चोपसर्ग इति कः, अथ सकर्म्मोपपदे चरितार्थः कर्म्मण्यण् त्वया बाध्यते यथा वक्ष्यति अकाराद-

नुपपदात् कर्म्मोपपदे विप्रतिषेधेनेति तत्राह । 'मूलविभुजादिषु दर्शनादिति'। एवं च कृत्वा इदमपि सिद्धं भवति ॥

यस्मिन् दशसहस्राणि पुत्रे जाते गवान्ददौ ।

ब्राह्मणेभ्यः प्रियाख्येभ्यः सोयमुञ्छेन जीवति ॥

इति । इह ईदूतोरेवेयं संज्ञा विधीयेत तदन्तस्य वा, आद्ये पक्षे कृत्स्त्रियां न स्याद् आध्यै ब्राह्मण्यै हे लक्ष्मि हे यवाग्विति, समुदायो ह्यत्र स्त्र्याख्यो न त्वीदूत्मात्रं, इयूङोरेव तु स्यात्, स्त्रियां विधानादन्वयव्यतिरेकाभ्यां च स्त्र्याख्यत्वादिति द्वितीयं पक्षमाश्रित्याह । 'ईकारान्तइत्यादि'। वर्णग्रहणे सर्वत्र तदन्तविधिरिति तदन्तविधिलाभः, सुप्तिङन्तमित्यत्र सुप्तिङोः प्रत्ययत्वादन्यत्रापि प्रत्ययग्रहणेषु तदन्तविधिर्निवारित', कथं पुनर्ज्ञायते वर्णयोरेवेदं ग्रहणं न प्रत्यययोरिति, इयङुवस्थानप्रतिषेधात् । यदि तदन्तस्य संज्ञा कथं वक्ष्यति शीनद्योः परतः नद्यन्तादङ्गादुत्तरस्येति समुदायस्य नदीत्वात्तदवयवभूतावीदूतावपि तथोक्तौ । अन्ये त्वाहुः । वर्णयोरेव संज्ञा समुदायधर्म्मस्य स्त्रीत्वस्यावयवआरोपात् कृत्स्त्रियामपि भवति अत्र च लिङ्गमियङुवङ्स्थानप्रतिषेध इति, तेषां गुरुनदीसंज्ञयोः समावेशो न स्याद् एकविषयत्वात् । 'यू इति किमिति'। 'ङराम्नद्याम्नीभ्य' इत्यत्र पृथगाङ्ग्रहणाद् आपो न भविष्यतीति मन्यते । 'मात्रे दुहित्रे इति'। नद्यृतश्चेति ऋकारग्रहणमस्यर्थं स्याद् बहुपितृक इत्यत्रेत्यज्ञापकम् ऋकारान्तानां संज्ञाभावस्य । 'ग्रामणीः खलपूरिति'। क्विपोदाहरणमेतत्सम्बुध्यन्तं वा द्रष्टव्यम् । अथाख्यग्रहणं किमर्थं यावता यू स्त्रियामित्येतावता स्त्र्यर्थवृत्तित्व लभ्यते तत्राह । 'आख्याग्रहणमिति'। आङ्पूर्वस्य ख्या इत्यस्य धातोर्ग्रहणमित्यर्थः । क्व चित्त्वाख्यग्रहणं किमिति प्रश्नः 'शब्दार्थस्त्रीत्वइति'। आख्याग्रहणसमर्थ्यात्पदान्तरमनपेक्ष्य यौ स्वयमेव स्त्रियमाचक्षाते इत्याश्रीयते इष्वशनिप्रभृतीनां तूभयलिङ्गानां शब्दार्थएव स्त्रीत्वमिति ङिति ह्रस्वश्चेति नदीसंज्ञा भवत्येव, एवं पटुप्रभृतीनां गुणशब्दानामपि शब्दार्थ एव स्त्रीत्वं तथा च पटुरानीयतामित्युक्ते स्त्रियमप्यानीय कृतीभवति, अन्येस्त्वाहुः आख्याग्रहणसामर्थ्यान्नियम आश्रीयते स्त्रियमेव यावाचक्षाते न तु लिङ्गा-

न्तरयुक्तम् इति, ग्रामणीखलपूशब्दयोस्तु क्रियाशब्दत्वेन [1] त्रिलिङ्गत्वाच्च भवति [2] इष्विशनिप्रभृतीनां तु स्त्रीविषयत्वाभावेपि 'ङिति ह्रस्वश्च' त्यत्र केवलस्य स्त्रीशब्दस्यैवानुवृत्तिर्नाख्याग्रहणस्येति भवतीति तेषामाङ्पूर्वस्य ध्यायतेः क्विपि संप्रसारणे आध्यै ब्राह्मण्यै इत्यत्रापि न स्यात् तस्मात्पूर्व एव प्रकार आश्रयणीयः। कथं तर्हि प्रत्युदाहरणं ग्रामण्यै स्त्रियै इति खलप्वै स्त्रियाइति। उच्यते। क्रियाशब्दत्वेप्येतयोः पुंसि मुख्या वृत्तिः पुंसामेव स्वयमुचितो धर्म्मो यदुत ग्रामनयन नाम एवं खलपवनमपि आध्यानं तु स्त्रीपुंससाधारणमिति विशेषः, 'प्रथमलिङ्गग्रहणं च प्रयोजनं क्विब्लुप्समासाः,' यः शब्दः प्रथमस्त्रीत्वयुक्तद्रव्यमभिधाय पश्चाद्येन केन चित्प्रकारान्तरेण लिङ्गान्तरसंयुक्तं द्रव्यान्तरमाह तस्य तदानीमस्त्र्याख्यत्वादप्राप्ता संज्ञा विधीयते। क्विप् कुमारीमिच्छति कुमारीयति कुमारीयतेः क्विप् कुमारी ब्राह्मणः तस्मै कुमार्यै ब्राह्मणाय, 'लुप् लुम्मनुष्ये' इति लुप् खरकुट्यै ब्राह्मणाय यद्यप्यत्र युक्तवद्भावात् स्त्रीत्वमप्यस्ति तथापि स्वाश्रयस्य पुंसत्वस्यानिवृत्तेर्नाऽयं स्त्रियामेव वर्त्ततइति आख्याग्रहणादप्राप्तिः, समासः, अतितन्त्र्यै ब्राह्मणाय,। अवयवस्त्रीविषयत्वात् सिद्धं समासे तावदवयवस्तन्त्रीशब्दः स्त्रियामेव वर्ततइति तदानीमेव संज्ञा ततश्च वर्णसञ्ज्ञापत्ते समुदायस्य नद्यन्तत्वात् कार्यसिद्धिः, तदन्तपत्ते.त्वङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वचनात् अतितन्त्रीबन्धुरित्यत्रापि 'नदी बन्धुनी' ति स्वरः सिद्धः नद्या पूर्वपदस्य विशेषणात् क्विब्लुपोरपि पूर्वं स्त्रियामेव वर्तित्वात्, पश्चादपि तदपरित्यागेनार्थान्तरे वृत्तिः, तत्रार्थान्तरसंसर्गात्प्रागेवान्तरङ्गत्वात्प्रवृत्ता संज्ञा सत्यपि पश्चाल्लिङ्गान्तरयोगे तस्य च बहिरङ्गत्वान्न निवर्तिष्यते। यद्येवमियङुवङ्स्थानप्रतिषेधे यण्स्थानप्रतिषेधप्रसङ्गोवयवयोरियङुवङ्स्थानत्वाद् यथां ह्यवयवस्य स्त्रीविषयत्वात्समुदायस्य संज्ञा भवति तथावयवस्येयुवस्थानत्वात् समुदायस्य यणस्थानस्यापि प्रतिषेधप्रसङ्गो यथा धियौ आध्याविति, सिद्धं त्वङ्गरूपग्रह-

१ नानालिङ्गत्वादिति पा॰ २।
२ पटुप्रभृतीनामिति पा॰ २।

णाद् यस्याङ्गस्येयुवौ तत्प्रतिषेधादङ्गस्येयङुवङ्विधानसामर्थ्यादङ्गस्याक्षेपस्तेन यस्याङ्गस्येयङुवङौ निवर्त्तेते तस्य नदीसंज्ञा निषेधः, आध्यै इत्यत्र त्ववयवस्याङ्गत्वं नास्ति अङ्गस्यैनेकाच इति यण्विधानात् इयङुवङ्स्थानता नास्तीति निषेधाभावः, एतदर्थमेव तत्र स्थानग्रहणम् इयङुवङार्यदा स्थितिस्तदा प्रतिषेधो यथा स्याद् यदा त्वपवादेन बाधस्तदा मा भूदिति, एवं ङिति ह्रस्वश्चेत्यत्राप्यङ्गस्याक्षेपात् सोऽपि विधिरङ्गस्यैव स्त्रीत्वे भवति नावयवस्य शकट्यै अतिशकटये ब्राह्मणाय श्रियै अतिश्रिये ब्राह्मणाय ॥ (शेषमग्रे)

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

## विद्वच्चक्रचूड़ामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

श्रीगणेशाय नमः ।

*(Continued from page 356. Vol. XII.)*

**नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ॥ १०४ ॥**

नियतानां प्राकरणिकानामेवाऽप्राकरणिकानामेव वा (क) 'धर्म' इत्यनन्तरं यदुपादीयत इति शेष. सकृत्पदोपादानाद् यत्र प्रतिस्वं भिन्ना धर्मा, एकस्यैव वा सर्वत्रोपादानं, तत्र नातिप्रसङ्गः तत्र प्राकरणिकानामेव यथा—

पाण्डु क्षामं वदनं, सरसं हृदयं, तथालसं च वपुः, ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः ॥

(क) प्राकारणिकानामप्राकरणिकानामेव वेति पु· ।

अत्र प्रकृतानां विरहिणीवदनादीनामेव धर्मत्वेनावेदनाख्यो धर्म उपात्तो, न तूपमानरोगधर्मतया । अप्राकरणिकानामेव यथा—

कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का[(क)] ।
अमृत,ममृतरश्मि,रम्बुजन्म प्रतिहतमेकपदे तवाननस्य ॥

अत्र कामिन्या वर्णनीयत्वादप्राकरणिकानां कुमुदादीनामेव धर्मतया पूर्वार्द्धे 'का' पदव्यङ्ग्यो ऽधिक्षेप, उत्तरार्द्धे प्रतिहतत्वं चोपात्तम् ॥ १०४ ॥

(इति तुल्ययोगिता १६)

उपमानाद्यदन्यस्य व्यतिरेकः, स एव सः ।

अन्यस्य उपमेयस्य· व्यतिरेको विशेषणातिरेक आधिक्यम्· स एव, व्यतिरेकः· कश्चित्तु—[(ख)]यत्रोपमेयादुपमानस्य उपमानादुपमेयस्य वा आधिक्यं स व्यतिरेक इति लक्षणम्· कथमन्यथा

क्षीणः क्षीणोऽपि शशी भूयो भूयो विवर्द्धते,सत्यम्, [(ग)] ।
विरम, प्रसीद सुन्दरि! यौवनमनिवर्ति यातं तु ॥—

इत्यादिसंग्रहः· अत्र ह्युपमानभूतस्य शशिन उत्कर्षः, क्षयेऽपि पुनर्वृद्धिरित्याह· तन्न युक्तम्, अस्थैर्ये हि तस्योपमानता, तदाधिक्यं चोपमेये यौवन एवात्र विवक्षितम्· तस्मादुपमानस्योत्कर्षे व्यतिरेक इति रिक्तं वचः ॥ ऽ ॥

एनं विभजते—

हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ॥ १०५ ॥
शब्दार्थाभ्यामथाक्षिप्ते श्लिष्टे तद्वत्त्रिरष्टधा[(घ)] ।

व्यतिरेकस्य द्वौ हेतू, उपमेयगतमुत्कर्षनिमित्त,मुपमानगतमपकर्षनिमित्तं च तयोर्द्वयोरप्युपादानमित्येकः प्रकारः· अनुपादाने तु त्रयो भेदाः,

(क) पुरस्तादिति पाठस्त्वपर्यायप्राप्तो विस्मृतिविरुद्धश्च ।
(ख) 'केचित्त्वि'ति पा·, एवमुत्तरत्रा'ऽऽहु'रिति च ।
(ग) ०ऽभिवर्द्धते ऽतितरामिति, सुतरामिति नितरामिति च पा· ।
(घ) तद्वत्त्रिरष्ट स इति पा· ।

प्रथमस्यैव, द्वितीयस्यैव, उभयोरपि वा हेत्वोरनुपादानात्· तदेवं चत्वारो भेदाः· ते च प्रत्येकं त्रिधा, साधर्म्यस्य क्वचिदिवादिना शाब्दशक्तेः प्रतिपादानात् क्वचित्तुल्यादिशब्देनार्थशक्त्या, क्वचिदुभयाभावेप्याक्षेपेणेति द्वादश भेदाः· ते च प्रत्येकमश्लिष्टश्लिष्टशब्दा इति चतुर्विंशतिभेदः स इत्यर्थः· तत्राश्लिष्टभेदेषु हेत्वोरुक्तौ शाब्दे साम्ये यथा–

असिमात्रसहायस्य प्रभूतारिपराभवे ।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः ॥

अत्रोपमाने तुच्छत्व,मुपमेये महाधृतित्वं च हेतू· इवशब्द· सत्त्वाच्च शाब्दमौपम्यम्· अत्रैव तुच्छत्वमात्रस्य महाधृतिमात्रस्य वा द्वयोरपि वा क्रमेणानुपादाने हेत्वनुपादानभेदत्रयेपि शाब्दौपम्यभेदत्रयं द्रष्टव्यम् । हेतुद्वयोपादाने एवार्थसाम्ये यथा–

असिमात्रसहायोपि प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत्सगर्वोयं महाधृतिः ॥

अत्र तुल्यार्थे वितिरित्यार्थमौपम्यम्· अत्र पूर्ववदनुपादानभेदत्रयं द्रष्टव्यम् । हेत्वोरुक्तावेवाक्षिप्ते साम्ये यथा–

इयं सुनयना दासीकृततामरसश्रिया ।
आननेनाकलङ्केन निन्दती(क)न्दुं कलङ्किनम् ॥

अत्राकलङ्कित्वकलङ्कित्वे हेतू समुपात्तौ· इवादीनां तुल्यादीनां वाऽभावादाक्षिप्तमौपम्यम्· अत्रैव हेत्वनुपादाने भेदत्रयं पूर्ववद् द्रष्टव्यम्· नचाक्षिप्तभेद उपमायां शङ्कनीयः, जयत्यादिशब्दस्यावश्यकतया व्यतिरेकेण विषयापहारात् । अथ श्लिष्टभेदेषु हेत्वोरुक्तौ शब्दमौपम्यं यथा–

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः ।
अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः ॥

अत्र श्लिष्टो गुणशब्दः· तदर्थस्यातिगाढत्वभङ्गुरत्वे च हेतू समुपात्ते· इवार्थे·वतिरिति शाब्दमौपम्यम्· अत्रैव पूर्ववदनुपादाने भेदत्रयं द्रष्टव्यम् । तत्रैवार्थसाम्ये यथा–

(क) जयतीति पा· ।

अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः ।
न निशाकरवज्जातु कलावैकल्यमागतः ॥

अत्र कलाशब्दः श्लिष्टः· कलावैकल्यतदभावौ हेतू शब्दोपात्तौ· तुल्यार्थे वतिरित्यार्थमौपम्यम्· अत्रानुपादानत्रयं चिन्त्यम् । अयमेव माला-रूपो यथा—

हरवच्च विषमदृष्टि,र्हरिवच्च विभो! विधूतविततवृषः, ॥
रविवच्च चापि दुःसहकरतापितभूः कदाचिदसि ॥

पूर्ववत् । तत्रैवाक्षिप्ते साम्ये यथा—

नित्योदितप्रतापेन त्रियामामीलितप्रभः ।
भास्वता ऽनेन भूपेन भास्वानेष विनिर्जितः ॥

अत्र भास्वते'ति'प्रतापे'ति च श्लिष्टम्· पूर्वार्द्धोपात्तं हेतुद्वयम्· इवादे स्तुल्यादिशब्दानां चाभावादाक्षिप्तैवोपमा· अत्रैव पूर्ववदनुपादाने भेदत्रयं द्रष्टव्यम् । निर्जितजयत्यादिशब्दाभावेपि श्लिष्टविशेषणैरौपम्या-क्षेपादप्ययं भेदः सम्भवति· यथा—

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं,
बिम्बप्रभाधर,मकृत्रिमहृद्यगन्धम्, ।
यूनामतीव पिबतां रजनीषु यत्र
तृष्णां जहार मधु, नाऽऽननमङ्गनानाम् ॥

स्पष्टम् । श्लिष्टोक्तियोग्यपदस्य पृथगुपादानेऽप्येवंजातीयका भेदाः सम्भवन्ति, ते ऽनयैव दिशा द्रष्टव्याः ॥ १०५ ॥ ऽ ॥ ( इति व्यतिरेकः १७)

## निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥ १० ॥
## वक्ष्यमाणोक्तविषयः, स आक्षेपो द्विधा मतः ।

वक्तुमिष्टस्य प्राकरणिकत्वादऽवचनानर्हस्य, यो निषेध आक्षेपः· निषेधो निषेध इवेत्यर्थः· शब्दगत्या निषेधेप्यर्थगत्या विधेरेव प्रतिप्राप्तिः· तत्प्रयोजनमाह विशेषाभिधित्सये'ति· वक्ष्यमाणविषये ऽशक्य(क) वक्तव्यत्व,-

(क) सक्तेति, शक्तेति च पु· ।

मुक्तविषये ऽतिप्रसिद्धं चेति विशेषः· विभजते 'वक्ष्यमाणे'ति· तत्र वक्ष्यमाणविषयो यथा—

ए एहि किंवि कीएवि कए णं णिक्किव ! भणामि, अलमहवा, ।
अविआरिअकज्जारंभआरिणी मरउ, ण भणिस्सं ॥

अत्र विरहजनितदुर्दशातिशयो वक्ष्यमाणो निषिद्धः । उक्तविषयो यथा—

ज्योत्स्ना, मौक्तिकदाम, चन्दनरसः, शतांशुकान्तद्रवः,
कर्पूरं, कदली, मृणालवलयान्य,ऽम्भोजिनीपल्लवाः, ।
अन्तर्मानसमाऽऽस्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर
व्यापाराय भवन्ति, हन्त किमनेनोक्तेन, न ब्रूमहे ॥
॥ १०६ ॥ (इत्याक्षेपः १८)

## क्रियायाः प्रतिषेधेपि फलव्यक्ति,र्विभावना ॥ १०७ ॥

वैयाकरणमते क्रियैव हेतुरिति क्रियेत्युक्तम्· वस्तुतस्तु, कारणप्रतिषेधे कार्यवचनं विभावना· नच विरोधः, स्वाभाविकत्वस्य कारणान्तरस्य वा विभावनात्· उदाहरणम्—

कुसुमितलताभिरहताऽप्यधत्त रुज,मलिकुलैरदष्टापि ।
परिवर्त्तते स्म, नलिनी-लहरीभिरलोलिताप्यघूर्णत, सा ॥
॥ १०७ ॥ (इति विभावना १९)

## विशेषोक्ति,रखण्डेषु कारणेषु फलावचः ।

अखण्डेषु मिलितेषु प्रसिद्धकारणेषूक्तेषु कार्याभाववचनं विशेषोक्तिः· अत्राप्यप्रसिद्धे कार्याभावहेतौ पर्यवसानाद्द विरोधाभावः· सा च त्रिधा, अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता च· तत्राद्या यथा—

निद्रानिवृत्ता,वुदिते द्युरत्ने, सखीजने द्वारपदं पराप्ते, ।
श्लथीकृताश्लेषरसे भुजङ्गे, वचाल नालिङ्गनतो ऽङ्गना सा ॥

अत्र रागातिशयो निमित्तं चलनाभावे· सच विशिष्य वक्तुं शक्यत्वेपि नोक्त इत्यनुक्तनिमित्तेयम् । उक्तनिमित्ता यथा—

कर्पूर इव दग्धो ऽपि शक्तिमान् यो जने जने, ।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥

अत्र कर्पूरो(क) दाहमात्र उपमानं, नतु शक्तिमत्त्वेऽपीति भास्करः। शक्तिमत्त्व इति तु परमार्थः, ईषद्दग्धस्य तस्य सौरभाद्यतिशयित्वात्(ख) ।

भ्रूभ्यां प्रियाया भवता मनोभूश्चापेन चाऽऽपे घनसारभावः, ।
निद्रां यदाऽऽप्तोपदशामपेत्य सम्प्रत्यनेनाऽधिकवीर्यताऽऽर्जि ॥

इत्यादिनैवंप्रदर्शनात् अत्रावार्यवीर्यत्वं शक्तिमत्त्वे कार्याभावरूपे हेतुरुक्तः । अचिन्त्यनिमित्ता यथा–

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः, ।
हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥

अत्र तनुहरणेऽपि बलाहरणस्य हेतुर्विशिष्य वक्तुं न शक्यत इत्यऽचिन्त्यनिमित्तेयम् ॥ ५ ॥ ( इति विशेषोक्तिः २० )

**यथासङ्ख्यं, क्रमेणैव क्रमिकाणां समन्वयः ॥ १०८ ॥**

यथा–

एकस्त्रिधा वससि चेतसि चित्रमत्र
देव ! द्विषां च, विदुषां च, मृगीदृशां च ।
तापं च, संमदरसं(ग) च, रतिं च, पुष्णन्(घ)
शौर्योष्मणा च, विनयेन च, लीलया च, ॥

॥ १०८ ॥ ( इति यथासङ्ख्यम् २१ ) ॥

**सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।**
**यत्र सोऽर्थान्तरन्यासः, साधर्म्येणेतरेण वा ॥ १०९ ॥**

सामान्यं यद्विशेषेण समर्थ्यते, विशेषो वा सामान्येन, सोऽर्थान्तरन्यासः

(क) कर्पूरमिति पु ।
(ख) ०द्यतिशयितत्वादिति पु॰ ।
(ग) संमदभरमिति पा॰ ।
(घ) पुष्णन्शौर्येत्येव सर्वत्र पाठः ।

द्वयोरपि प्रत्येकं समर्थनहेतू साधर्म्यवैधर्म्ये चेति चतुःप्रकारोऽय मित्यर्थः तत्र विशेषेण सामान्यसमर्थनं साधर्म्येण यथा—

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥

सामान्येन विशेषसमर्थनं साधर्म्येण यथा—'सुसि वमने' त्यादि । विशेषेण सामान्यसमर्थनं वैधर्म्येण यथा—

गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते ।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गडिः[क] ॥

अत्र 'धुर्ये' इत्यादिसाधारण्यात्सामान्य 'गौर्गडि'रिति विशेषः वैधर्म्यं च स्फुटम् । वैधर्म्येण विशेषस्य सामान्येन समर्थनं यथा—

अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः सुहृदां[ख] पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥

सामान्यविशेषभाव उपपादनीयः ॥ १०९ ॥ (इत्यर्थान्तरन्यास २२)

**विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।**

वस्तुगत्या विरोधाभावेऽपि यद् द्वयोर्विरुद्धयोरिवाभिधानं, स विरोधः ॥ ऽ ॥

एन विभजते—

**जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद्गुणस्त्रिभिः, ॥ ११० ॥**
**क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश ।**

जात्याद्यैरिति, जातिगुणक्रियाद्रव्यैः त्रिभिरिति, गुणक्रियाद्रव्यैः द्वाभ्यामिति, क्रियाद्रव्याभ्याम् यद्यपि, गुणानामपि जात्या विरोध सम्भव त्येव, तथापि, जातेर्गुणविरोध एव प्रविष्टत्वा'द्गुणस्त्रिभि'रित्युक्तम् एव 'क्रिया द्वाभ्या'मित्यत्रापि द्रष्टव्यम् तदयमर्थः-जातिनिरूपितो भेदश्चतुर्द्धा,

(क) गलिरिति पा० एवं व्याख्यानेऽपि द्रष्टव्यः ।
(ख) सुहृद इति पा० ।

गुणानिरूपितस्तु पूर्वभेदभिन्नस्त्रिधा· एवमग्रेपि· तत्र जात्या जातेर्विरोधो यथा–[क]

अभिनवनलिनीकिसलय[ख]मृणालवलयादिदवदहनराशिः।
सुभग! कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोग-पवि-पाते॥

अत्र नलिनीत्वकिसलयत्वादिजातीनां दहनत्वजात्या विरोधः· वियोगातिशयेन गौणत्वात्तदाभासता· एवमग्रेप्यूह्यम्। जातेर्गुणेन यथा–

गिरयोऽप्यनुन्नतियुजो, मरुदप्यचलो, ऽब्धयो ऽप्यगम्भीराः,।
विश्वम्भराप्यतिलघु,र्नरनाथ! तवान्तिके नियतम्॥

अत्र गिरित्वादिजातीनामनुन्नतत्वादिगुणैर्विरोधः· वर्णनीयातिशयविवक्षया तु परिहारः· [ग] विश्वम्भरेति तु न जात्युदाहरणम्। जातेः क्रियया यथा–

येषां कण्ठपरिग्रहप्रणयितां संप्राप्य धाराधर·
स्तीक्ष्णः सोप्यनुरज्यते च कमपि स्नेहं पराप्नोति च,।
तेषां सङ्गरङ्गसक्तमनसां[घ] राज्ञां त्वया भूपते!
पांसूनां [ङ] पटलैः प्रसाधनविधिर्निर्वर्त्यते, [च] कौतुकम्।

अत्र धाराधरत्वजातेरनुरागस्नेहपराप्तिक्रियाभ्यां[छ] विरोधः· लौहित्यचैक्कण्यार्थकत्वादविरोधः· एवमग्रेप्यविरोध ऊह्यः· तीक्ष्णत्वस्यानुरागेण विरोध इत्यपव्याख्यानम्, अनुदाहरणत्वप्रसङ्गात्। जातेर्द्रव्येण यथा–

सृजति च जगदिद,मवति च, संहरति च हेलयैव यो नियतम्,।
अवसरवशतः शफरो जनार्द्दनः सोपि, चित्रमिदम्॥

अत्र शफरत्वजातेर्जनार्दनेन द्रव्येण विरोधः। गुणस्य गुणेन यथा–

(क) तत्र जात्या जातेर्यथेति पु·।
(ख) किशलयेति पु·।
(ग) परीहार इति पु·।
(घ) सङ्गरसङ्गसक्तेति प्रायिकः पाठः।
(ङ) पांशूनामिति पु·।
(च) निवर्त्तत इति पु·।
(छ) स्नेहपरिक्रियाभ्यामित्येकस्यस्त्वनर्हः पाठः।

सततं मुसलासक्ता[क] बहुतरगृहकर्मघटनया नृपते ।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥

कठिनत्वसुकुमारत्वयोर्विरोधः । गुणस्य क्रियया यथा—

पेलवमपि खलवचनं दहतितरां मानस सतत्त्व[ख]विदाम्, ।
परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥

अत्र पेलवपरुषत्वयोर्गुणयोर्दाहप्रमोदक्रियाभ्यां विरोधः । यथा वा मद्गातुः श्रीहर्षस्य—

सर्वतः पुरत एव दृश्यते, पात्रतां न पुनरेति चक्षुषोः, ।
हृद्गतो ऽपि भुजयोर्न भाजनं, को ऽयमालि वनमालिनः क्रमः ॥

अत्र दर्शनगमनक्रिययोर्गमनाभावभुजभाजनत्वाभावाभ्याम्· उक्तत्रयातिरिक्तस्यैव गुणशब्देन विवक्षणात् गिरय इत्यादि तथैवोदाहृतम् । गुणस्य द्रव्येण यथा—

क्रौञ्चाद्रिरुद्दामदृषद्दृढो ऽसौ यन्मार्गणानर्गलशातपाते ।
अभून्नवाम्भोजदलाभिजातः, स भार्गवः सत्यमपूर्वसर्ग. ॥

अत्राम्भोजदलाभिजातत्वस्य गुणस्य क्रौञ्चादिना द्रव्येण विरोध क्रियायाः क्रियया यथा—

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथ [ग] यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो [घ]
विकारः कोऽप्यन्तर्जडयति च तापं च तनुते [ङ] ॥

अत्र जडयति च तापञ्च तनुत इतिक्रिययोर्विरोधः । क्रियाया द्रव्येण यथा—

(क) मुशलासक्ता इति पु· ।
(ख) सुतत्त्वेति पु· ।
(ग) पदमिति केचित ।
(घ) महामोहमहिमेति क्वचित् ।
(ङ करुत इति पु· ।

अयं वारामेको निलय इति रत्नाकर इति
श्रितो ऽस्माभिस्तृष्णाकवलितमनोभिर्जलनिधिः, ।
इदं को जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥

अत्र पानक्रियायाः कर्मभूतेन जलनिधिना विरोधः· यद्यपि जल· निधीनां बहुत्वेन न विरोधोदाहरणत्वमुचितं, तथाप्येकलवणाम्बुधिपर· तया समर्थनीयम् । द्रव्यस्य द्रव्येण यथा–

समदमतङ्गजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक! त्वयि तटजुषि शङ्करचूडापगाऽपि कालिन्दी ॥

अत्र गङ्गायमुनयोर्विरोधः ॥ ११० ॥ ऽ ॥ (इति विरोधः २३)

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥ १११ ॥**

स्वत्वं च स्वमात्राश्रितत्वं, न तु स्वाश्रितत्वमात्रम्· अतो न साधारणधर्मवर्णने ऽतिव्याप्तिः· रूपशब्देन वर्णः संस्थानं चोच्यते· उदाहरणम्–

पश्चादङ्घ्री प्रसार्य, त्रिकनतिविततं द्राघयित्वाङ्गमुच्चै,·
रासज्याभुग्नकण्ठो मुखमुरसि, सटां धूलिधूम्रां विधूय, ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥

अत्राश्वमात्रगतयोः क्रियासंस्थानयोर्वर्णनम् ॥ (इति स्वभावोक्तिः २४)

**व्याजस्तुति,र्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ।**

मुखे निन्दावगतौ यत् स्तुतौ पर्यवसानं, स्तुतेर्वा मुखे ऽवगमो निन्दायां पर्यवसानं, तद्व्याजस्तुतिवाच्यमित्यर्थः· (क) कथमुभयोरनेनाभिधा·

(क) ० 'व्याजस्तुतिवाच्यमित्यर्थः" इत्येव सर्वत्र पठ्यते ।

नमिति चेत्, आद्यस्य व्याजेन स्तुतिरिति गृहाण, [क] अन्त्यस्य तु व्याजरूपा स्तुतिरिति· तत्राद्या यथा–

हित्वा त्वामुपरोधबन्ध्य[ख]मनसां मन्ये न मौलिः परो,
लज्जावर्जनमन्तरेण न रमामन्यत्र संदृश्यते, ।
यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः,
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥

स्पष्टम् । अन्त्या यथा–

हे हेलाजितबोधिसत्त्व! वचसां किं विस्तरैस्तोयधे!
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः, ।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धाऽयशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥

अत्रोपकारवैमुख्ये पर्यवसानम् ॥ ८ ॥ (इति व्याजस्तुतिः २५)

## सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥ ११२ ॥

शब्दशक्त्यैकार्थाभिधायकं पदं यत्सहार्थान्वयबलादनेकार्थाभिधायकं, सा सहोक्तिः· चैत्रमैत्रौ गच्छत इत्यादौ तु शब्दशक्त्यैवोभयाभिधानात्· यथा–

सह दिअहणिसाहिं दीहरा सासदंडा,
सह मणिवलएहिं बाहधारा गलंति, ।
तुअ सुहअ! विओए तीअ उव्वेअणीए
सह अ तणुलदाए दुब्बला जीविदासा ॥

अत्र दीर्घत्वादीनां श्वासादिभिरन्वयः साक्षादेव शाब्दः, दिवसादिभिस्तु सहान्वयात् ॥ ११२ ॥ (इति सहोक्तिः २६)

(शेषमग्रे)

(क) ०रितिप्रक्षणादिति पु० ।
(ख) शून्येति पा० ।

# सिद्धान्तमुक्तावली
## प्रकाशानन्दविरचिता।

(Continued from page 326. vol. XII.)

३१ नन्वात्मनो द्वैतदर्शनाभावे नित्यमुक्तस्यासंसारिणः शास्त्रसाध्यप्रयोजनशून्यतया शास्त्रानार्थक्यप्रसङ्ग इति चेत् न नित्यमुक्तस्यासंसारिणः अत्यन्तासत्संसारनिवर्तकत्वेन शास्त्रप्रामाण्योपपत्तेः। अत्यन्तासतो नित्यनिवृत्ततया तत्र शास्त्रव्यापारोऽनर्थक इति चेत् न सत्यस्यापि तुल्यत्वात् नहि सन्निवर्तयति शास्त्रमिति क्वचिद्दृष्टम्। अनिर्वचनीयं निवर्तयितृ शास्त्रमिति चेन्न तत्राप्यदर्शनस्य तुल्यत्वात् नह्यनिर्वचनीयं निवर्तते इत्युभयसंप्रतिपन्नं स्थलमस्ति तस्माद्विमुक्तश्च विमुच्यते निवृत्तं च निवर्तत इत्यादिशास्त्रादत्यन्तासत्संसारनिवर्तकत्वेनैव शास्त्रप्रामाण्यं।

31. If to Self vision of duality pertains not, Self, as being ever free and uninvolved in transmigratory existence, will lack the motive sc. desire of moksha, which Veda is to accomplish; hence Veda will become useless. Reply: Not so; for even to the ever free Self Veda becomes a source of right knowledge by destroying (the false knowledge of) an absolutely non-existent world. But the function of Veda, it is urged, would be vain in regard to such a world, for the absolutely non-existent has ceased to be eternally. No, for the argument would apply equally to a real world, since no instance is found in which the Veda puts an end to a real object. Then, it may be urged, Veda aims at destroying (what the Vedantins term) anirvachanīya or inexplicable object. No! we reply, for here too no confirmatory instance is found, since what ceases to be is not the anirvachanīya object (*e. g.* false snake, which never existed at all; but the false knowledge in regard to the snake comes to an end). Thus both cases are propounded. Hence Veda is authoritative in putting an end to the false knowledge of an absolutely non-existent world, according to the passage,—'the free is freed, that ceases to be which has ceased to be.'

Objection: (*a*) Veda is useless, if Self is an unrelated Unity. Reply: Not useless: for it puts an end to Nescience or the false knowledge of duality, which is sheer non-entity.

नित्यबोधपरिपीडितं जगद्विभ्रमं नुदति वाक्यजा मतिः ।
वासुदेवनिहतं धनञ्जयो हन्ति कौरवकुलं यथा पुनः ॥

इति स्मृतिरपि जगदात्मकस्य विभ्रमस्य । नित्यबोधस्वभावस्यात्मनः स्वरूपं पर्यालोच्यात्यन्तासत्त्वमेवाह । किन्तु ब्रह्मातिरिक्तं शास्त्रसत्त्वमस्तीति ये मन्यन्ते तान्प्रति भवतु शास्त्राप्रामाण्यप्रसङ्गो दोषः तस्य प्रमाणैकस्वभावत्वात् । ये तु मन्यन्ते सदा अद्वैतमेवास्ति द्वैतवार्ता ऽनभिज्ञास्तान्प्रति कथमयं दोषः स्यात्तैः शास्त्रस्य वा तत्प्रामाण्यस्य वा ब्रह्मातिरिक्तस्यानभ्युपगमात् अन्यथा ताभ्यामेवाद्वैतक्षतिः स्यात् । न च वेदप्रामाण्यानभ्युपगमे पाखण्डत्वप्रसङ्गः तदप्रामाण्यस्याप्यनभ्युपगमात् ।

Smriti also, observing the reality (svarūpa) of Self whose nature is eternal Knowledge, declares the absolute non-existence of that error (termed) the world—thus. 'Knowledge effected through Vedic sentences destroys that error termed the world, which had already been destroyed by eternal Knowledge (Self, Brahman): just as Arjuna slays again the Kuru race already slain by Vāsudeva.'

Saṃkshepaśārīraka II. 31 38.

Moreover, against those who hold that Veda is a reality apart from Brahman the charge of making Veda untrustworthy may be brought, since the sole character of Veda (tasya) is that of a pramāṇa or trustworthy source of evidence. But the charge cannot be brought against those who, unconscious of the least trace of duality, hold that Brahman *alone ever is*, since they do not admit Veda or its trustworthiness as existing apart from Brahman; otherwise Vedantic Monism would be violated by the separate existence of these two sc. Veda and its trustworthiness. Nor can we be charged with heresy in not holding the trustworthiness of Veda; for we do not (as the heretic does) hold the untrustworthiness also of Veda.

नच वेदप्रामाण्यानभ्युपगमे ऽद्वैतस्याप्रामाणिकत्वप्रसङ्गो दोषः द्वैतदर्शनं प्रति प्रमाणाधीनसिद्धिके आत्मनि च तस्य दोषत्वात् । ननु द्वैतदर्शित्वं किमात्मनो धर्मः स्वभावो वा नाद्यः द्वैतापत्तेः । नेतरः द्वैतजातस्य सर्वस्य स्वतःसिद्धिप्रसङ्गादिति चेत् न श्रुतिसिद्धात्मस्वरूपानुरोधेन द्वैतजातस्य सर्वस्य तुच्छत्वात् । नहि तुच्छस्य स्वतःसिद्धिः सम्भवति तस्य निरस्तसमस्तसामर्थ्यस्य स्वतः परतो वा सेद्धुमशक्यत्वात् । नन्वात्मभिन्नस्य जगतस्तद्दर्शनस्य च तुच्छत्वं लौकिकानामभिमतं परीक्षकाणां वा ।

Nor while not holding Veda as reliable, can we be charged with leaving Monism without any evidence, for this charge would lie against the seer of duality (with whom) the existence of Self has to be proved by some pramāṇa. Here an opponent may ask whether the character of being a seer of duality is an attribute of Self or is the own nature of Self Not the former, for then duality is established, (for this attribute, he argues, must be assumed to be a reality: a non-existent attribute would be nonsense—). Not the latter for then it follows that the whole complex of duality is self-proved (*i. e.* is svaprākāśa, as Self is, into whose nature duality enters, on the above assumption, as a viśeshaṇa or necessary predicate, thus—dvaitasya drashṭā cf. p. 70 n.) No!, we reply. For in accordance with the nature of Self as proved in Veda, all duality is sheer non-entity Nor can non-entity prove itself, for being absolutely destitute of power it can neither prove itself nor be proved by something else.

Here it may be asked by way of objection whether the view that the world as distinct from Self, and the vision of the world, are sheer non-entity, is one held by the vulgar or by trained thinkers.

Objection: (*b*) But the above doctrine of Māyā is held only by the Vedantin whose evidence is obviously inadmissible.
Reply: The final appeal for all doctrine is to Veda which certainly teaches Māyā

नाद्यः तेषामबाधिततत्त्वबुद्धेस्तत्राव्याहतत्वात् तुच्छत्वस्य दूरनिरस्तत्वात् । नेतरः परीक्षकाणां सर्वेषामैकमत्याभावात् सर्वशून्यवादिना निःशेषप्रमाणप्रमेयापलापिना ऽप्रमाणिकेन अशेषस्य तुच्छत्वस्वीकारात् । तद्विरुद्धस्य नित्यानित्यविभागेन सार्वदिककादाचित्कत्वस्याक्षचरणकणभुगादिभिः स्वीकारात् तद्विरुद्धस्य च सर्वदा सर्वसत्यत्वस्य सांख्यादिभिरभ्युपगमात् तस्मात्परीक्षकाणां सर्वेषां परस्परविप्रतिपत्तेरात्मातिरिक्तस्य तुच्छत्वमसम्प्रतिपन्नमेव । तथा च लौकिकपरीक्षकविरुद्धं जगतस्तुच्छत्वं कथमङ्गीकारपथमारोहति नच परीक्षकाणां मतमपि प्रत्येकं परस्परविरुद्धतया हेयमेवेति वाच्यं तावता ऽप्येकैकाङ्गीकारस्य तत्र तत्राव्याहतत्वात्तुच्छत्वे तदभावात् ।

Not by the vulgar (continues the opponent), for since their notion of reality (abādhitattva) is not destroyed in regard to the world and the vision of it (tatra), the view that these are non-entity is completely rejected by them. Nor by philosophers, for these are not unanimous. Thus, the unreliable Nihilist (Śūnyavādin), denying all sources, and objects, of true knowledge, holds that all is sheer non entity. In opposition to this view, the Naiyāyikas, Vaiśeshikas and others hold that existence is both eternal and temporary, by dividing substances into eternal and non eternal. Opposed to this again is the view of the Sāṃkhyas and others that the existence of all things is eternal. And since all these trained thinkers are disagreed, the view that the world as distinct from Self is sheer non-entity is clearly unproved. This view, then, rejected as it is by the common man and the philosopher alike, cannot be accepted by us. Nor may it be urged that each and all of the above views should be rejected as mutually apposed. For in spite of such opposition (tāvatāpi), in each of the above cases (tatra tatra) the acceptance of some one view or other is an incontrovertible fact; whereas the acceptance of the world as sheer non-entity is found in no case whatever (tadabhāvāt).

नचात्रापि ममाङ्गीकारोऽस्त्येवेति वाच्यं तवाप्रामाणिकत्वात् तुच्छत्वग्राहकप्रमाणाभावात् । नच परीक्षकाणामपि परस्परविरुद्धानां मध्ये कस्य मतं समीचीनं कस्याऽसमीचीनमिति विनिगमकाभावात् एकमपि न ग्राह्यमिति वाच्यं नित्यनिर्दुष्टवेदमूलकत्वभावाभावाभ्यां विशेषात् यस्य हि मतं वेदमूलं तद्ग्राह्यं यस्य तु तन्नास्ति तत्त्याज्यं यथा पाखण्डानां मतम् । हन्त तर्हि अन्ततोऽपि गत्वा श्रुत्यैव विश्वासश्चेत् श्रुतिसिद्धमेव मतमदुष्टं ग्राह्यमिति तदितरदग्राह्यमेवाप्रामाणिकत्वात् श्रुतिविरुद्धत्वाच्च । श्रुतिस्तु सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं स एषनेतिनेतीति अथ तस्यायमादेशः अमात्रश्चतुर्थो ऽव्यवहार्यः प्रपञ्चोपशमः शिवो ऽद्वैत इत्येवंप्रकारिका सजातीयविजातीयस्वगतभेदशून्यमात्मानं बोधयन्ती आत्मातिरिक्तस्य सर्वस्य तुच्छत्वमभिमन्यते ।

Nor may the Vedantin urge that of this latter view also (atrāpi) *his* acceptance is forthcoming. For the Vedantin is untrustworthy, because there is no evidence for the non-entitative character of the world. Nor may it be argued that no single view of the above opposed schools should be accepted, because no compelling reason for the adoption of any one as *the true* view exists. For there is a difference between these views according as they are, or are not, based on the eternal faultless Veda. Thus a tenet based on Veda must be accepted, of whatever school it may be; but a tenet not thus based must be rejected, e.g. the tenet of heretics must be rejected. Well then, we Vedantins reply, if your final position is that trust (in a particular tenet) follows through Veda alone, you must accept as faultless only that tenet which is vouched for by Veda, and reject all others as being without proof and contradictory of Veda But Veda by making known Self as free from all differentiation, * as in the passages,—Existent only was this in the beginning, one without a second. There is no diversity here. That Self is to be described by No, No! And the fourth is without parts, is not an object of experience, is the cessation of experience, is the blessed One without a second—approves the view that all that is other than Self, is sheer non-entity.

* Svagatabheda, inherent variety, e. g. the leaves, flowers and

तदतिरिक्तस्य कथं चिदपि सत्त्वे ऽद्वैतव्याघातप्रसङ्गात् तस्माज्जगतस्तुच्छत्वं श्रुत्यनुमतमेव । तदुक्तं गौडैः ।

तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ ।
त्रिधा ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥

वसिष्ठोपीममर्थं साश्चर्यंवदाह

अहो नु चित्रं यत्सत्यं ब्रह्म तद्विस्मृतं नृणाम् ।
यदसत्यमविद्याख्यं तत्पुरः परिवल्गति ॥

तथा

अहो नु चित्रं पद्मोत्थैर्बद्धास्तन्तुभिरद्रयः ।
अविद्यमाना या ऽविद्या तया विश्वं खिलीकृतम् ॥

तस्माद्द्वैततद्दर्शनयोस्तुच्छत्वात् स्वतःसिद्धशुद्धबुद्धमुक्तपरिपूर्णानन्दात्मनो ऽद्वितीयत्वमुपपन्नतरम् ।

For if apart from Self, anything existed in any form whatever, advaita would necessarily be overthrown. Hence the non-entitative character of the world is certainly approved by Veda. This view has been declared by Gauḍapāda:—' Māyā is to be regarded under three aspects as sheer non-entity, or as inexplicable, or as something material, in accordance with the three (sources of) knowledge, sc. Veda, ratiocination and the common (or unphilosophic) consciousness.' This Vasishṭha also declares as something wonderful—'Strange it is that Brahman, that which *is*, should be forgotten by men, while that which is not, sc. Nescience, dances before them.' Again, 'Strange it would be for mountains to be bound by lotus-fibres, and (stranger still it is) that the world is destroyed by Nescience which is really nothing.' Hence, since duality and the vision of it are sheer non-entity, it is all the more clearly established that no second is known to that Self which is absolute Bliss, self-existent Intelligence and unrelated.

fruit of a tree: sajātīya, specific difference, distinguishing it from any other tree: vijātīya, class-difference, excluding it from unlike classes, e. g. stones &c. For ref. cf. note p 92. supra.

तथा च श्रुतिः

न निरोधो नचोत्पत्तिर्न बद्धो नच साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥
तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥
निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ।
अप्रमेयमनादिं च यज्ज्ञात्वामुच्यते बुधः ॥

इत्येवमादिका आत्मनो द्वैतदर्शनशून्यत्वमाह । तस्मात् ।

सत्यं ज्ञानमनन्तं च पूर्णमानन्दविग्रहम् ।
मान्त्रवर्णिकमात्मानं विनिश्चित्य विमुच्यते ॥ ५७ ॥

नचैतादृशमात्मज्ञानं न जायत इति साम्प्रतं साधनचतुष्टयसम्पन्नस्य विविदिषोर्मननिदिध्यासनाभ्यामुपकृत श्रवणानुष्ठानसमनन्तरमेव तदुत्पत्तिदर्शनात् अन्यथा तादृशात्मप्रतिपादकागमाप्रामाण्यप्रसङ्गः ।

And so also Sruti declares that to Self vision of duality pertains not, in such passages as—'this is the absolute truth that there is no such thing as destruction and production (of the world), nor fettered soul, nor (Vaidic) sacrifices, nor soul seeking emancipation or emancipated. He who knows himself as that Brahman, without parts or attributes or passions becomes unchanging Brahman. That wise one is emancipated who knows that which is without attributes, endless, uncaused, unique, not to be known through a pramāṇa) without a beginning.' (Brahmavindūpanishad 8, 9.)

Hence, he is emancipated who recognises himself as identical with that Self described in the mantra * as Existence, Intelligence, infinity, absolute bliss by nature...LVII.

Nor is it right to say that such knowledge of Self is not brought about. For the production of such knowledge is observed in the case of him who is desirous of knowing the truth and is provided with the four means (cf. Ved Sū. I. 1. 1.), but only after he has performed *hearing* aided by *pondering* and *profound contemplation*. If this were not so, it would follow that Vedic passages declaring such a Self are untrustworthy.

* cf. Ved. Sū. I. 1. 15.

नच जातमपि ज्ञानं साधनान्तरापेक्षया फलदानाय विलम्बत इति वाच्यं तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे ब्रह्मवेद ब्रह्मैव भवति तरति शोकमात्मविदित्यादिश्रुतिभ्य आत्मज्ञानतत्फलयोः समानकालनिर्देशात् मध्ये साधनान्तरकालविलम्बयोरभावप्रतिपत्तेः तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेत्यादिसाधनान्तरप्रतिषेधश्रवणाच्च । तस्मात्संन्यासात्मज्ञानमेवामृतत्वसाधनं यत्नतः सम्पादनीयं तदभावे यतो महती विनष्टिः श्रूयते इहचेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिरित्यत्र । उत्पन्ने च ब्रह्मात्मज्ञाने विदुषः फलेन सह विद्योद्गारः स्मर्यते ।

Nor may it be urged that even when knowledge (of Self) has been effected, the result (sc. moksha) is delayed owing to the need of some means besides knowledge. For knowledge (of Self) and its result are declared to be simultaneous in such passages as—seeing it (Brahman) the Ṛishi Vāmadeva understood: I was Manu, I was the Sun. He who knows Brahman becomes Brahman. He who knows the Self overcomes grief—because the absence of any other means and of any time-pause intervening between knowledge of Self and moksha is made known (by such passages): and because the negation of any other means than knowledge is enounced in the passage—a man who knows him (Self) truly passes over death; there is no other path to go. Therefore knowledge of Self together with renunciation of the world must be carefully acquired as the means to immortality; since, in the absence of knowledge, great is the destruction, as declared in the Śruti passage—'If a man know this here, that is the reality (true end of life); if he does not know this here, then there is great destruction (new births).' And the out-pourings of the wise man's knowledge, with its result, when knowledge of Self as identical with Brahman is attained, are set forth in the Smṛiti :—'

विद्याविग्रहमग्रहेण पिहितं प्रत्यञ्चमुच्चैस्तरा-
मुत्कृष्योत्तमपूरुषं मुनिधिया मुञ्जादिषीकामिव ।
कोशात्कारणकार्यरूपविकृतात्पश्यामि निःसंशयं
नासीदस्ति भविष्यति क्व नु गतः संसारदुःखोदधिः ॥
पश्यामि चित्रमिव सर्वमिदं द्वितीयं तिष्ठामि निष्कलचिदेकवपुष्यनन्ते ।
आत्मानमद्वयमचिन्त्यसुखैकरूपं पश्यामि दग्धरशनामिव च प्रपञ्चम् ॥
अद्वैतमप्यनुभवामि करस्थबिल्वतुल्यं शरीरमहिनिर्ल्वयनीव वीक्षे ।
एवं च जीवनमिव प्रतिभासनं च निःश्रेयसाधिगमनं च मम प्रसिद्धम् ॥
आश्चर्यमद्य मम भाति कथं द्वितीयं नित्ये निरस्तनिखिले शिवचित्प्रकाशे ।
आसीत्पुरेति किमिमाः श्रुतयो न पूर्वं येन द्वितीयमभवत्तिमिरप्रसूतम् ॥

Samkshepasarir: IV. śl. 53-57

The Self within, the Highest Self, consisting of Intelligence, closely concealed by Nescience, I now behold without a doubt, having with the sage's mind discriminated it from the sheaths of Self which are a complex of causes and effects; just as one draws out a reed from its (enveloping) sheath. Lo! where was, and is and is to be, this ocean of world-pain!

This world I now regard as a picture (sc a mere semblance of reality). I take my stand on the Infinite which is Intelligence alone, and without parts I behold Self, one without a second, infinite bliss by nature; and the world I regard as I would a burnt rope.

I am directly conscious of the one Self as if it were a Vilva fruit lying in my hand: my body I look on as the cast off skin of a snake. And thus, as the appearance of my being alive, so the gaining of moksha, are both quite clear to me.

Strange it is how even now duality appears before me in that eternal, unrelated, blessed, luminous Self. Duality existed once—can I say this? what! was not the eternal Veda existing then, that duality was wrought by Nescience!

एवं शास्त्राचार्यप्रसादापरोक्षीकृततीव्रब्रह्मात्मतत्त्वस्य गुरुभक्त्यभिनयोऽपि स्मर्यते अतो पौर्यं विद्या जायत एव । तथाहि

त्वत्पादपङ्कजसमाश्रयणं विना मे सन्नप्यसन्निव परः पुरुषः पुरासीत् ।
त्वत्पादपद्मयुगलाश्रयणादिदानीं नासीन्न चास्ति न भविष्यति भेदबुद्धिः॥
यस्मात् कृपापरवशो मम दुश्चिकित्सं संसाररोगमपनेतुमसि प्रवृत्तः ।
त्वत्पादपङ्कजरजः शिरसा दधानस्त्वामाशरीरपतनादहमप्युपासे ॥

ननु विद्यया ऽविद्योपमर्दे ऽपि कथं संसारस्येह लोकपरलोकसञ्चारलक्षणस्य नानाविधयोनिप्राप्तिपरिहाराभ्यामनेकविधदुःखसङ्कुलस्य निवृत्तिः स्यात् तद्धेतोः कामकर्मादेस्तदवस्थत्वात् ।

And so the Smriti goes on to describe the adoration of the Guru by the pupil, who through the grace of Veda and teacher has gained a clear intuition of the truth that Brahman and the Self are one. Thus it is a fact that this knowledge (leading to moksha) is something brought about as a product.

" sl. 58, 59.

The Highest Self, though indeed it exists, was for me non-existent, until I had recourse to thy lotus-feet. Finding shelter there, I can no more be conscious of duality.

Placing the dust of thy lotus-feet upon my head, I will serve thee till death; for in pity of me thou hast undertaken to remove this world-disease, hard to cure.

Objection: Human effort is vain; for knowledge through Veda can destroy Nescience (cause) but not the world (effect). Reply: Veda and all human experience teach that knowledge *does* put an end to the world.

32. An opponent may here urge that even if destruction of Nescience takes place through knowledge, cessation of transmigratory existence, which consists in the passage into this and the next world and is a complex of pains effected by the assumption and laying aside of many forms of life, is impossible because the causes of transmigratory existence, sc. desire and action, continue to exist.

न चाविद्यानिवृत्त्या तदुपादेयस्यापि सर्वस्य निवृत्तिरावश्यकीति वाच्यम् । वैशेषिकाणामुपादाने ऽपि क्षणं कार्यावस्थानवदनिवृत्तिशङ्कायाः दुरपन्हवत्वात् नच क्षणान्तरे नंक्षत्येवेति न दोषः तत्क्षणवदुत्तरक्षणेप्यनुपपत्त्यभावस्यानुमातुं शक्यत्वात् तस्मादज्ञाने निवृत्ते ऽपि संसारो न निवर्त्तिष्यते प्रमाणाभावादिति व्यर्थः प्रयासः मैवं

कर्ममूलमनर्थानां तच्च ज्ञानेन बाध्यते ।
क्षीयन्ते चास्य कर्माणि तथाच श्रुतिशासनम् ॥ ५८ ॥

ज्ञाने जाते ऽपि कर्ममूलकः संसारो ऽनुवर्त्तिष्यत इति यदुक्तं तन्न अविद्यावत्कर्मणोपि ज्ञानेन बाधितत्वात् अविद्यावत्तत्कार्येणापि विद्याया विरोधित्वाविशेषात् ।

Nor (continues the opponent) may the reply to this be that the cessation of every product (upādeya) of Nescience follows necessarily on the cessation of Nescience itself. For, as with the Vaiśeshika school, an effect is held to exist for a moment of time after the destruction of its material cause, so the objection here urged that the effects of Nescience do not cease to exist is one that cannot be lightly set aside. Nor to obviate the difficulty can it be said that the effect will perish at some later time. For the possiblity of the effect's existence, as well in the subsequent as in the preceding moment, may fairly be inferred. Hence (concludes the opponent) even when Nescience has ceased to be the world will not cease to be—there being no evidence for such non-existence of the world—and therefore human effort is vain.

Not so, we reply. Action is the root of all evil; and action is destroyed by knowledge. And thus Śruti teaches—'And his works perish.'...LVIII.

The opponent's statement, that the world which has its root in action will continue to exist even after knowledge has been gained, will not hold. For action as well as Nescience is destroyed by knowledge, because knowledge is as much the contradictory of the effect of Nescience, sc. action, as of Nescience itself.

नहि सम्भवति रज्जुसाक्षात्कारे तदविद्यानिवृत्तौ तत्कार्यं सर्प्पाद्यनुवर्त्तेत इति नच यतो ज्ञानमज्ञानस्यैव निवर्त्तकमित्यवधारणं शास्त्रकाराणामेवं सत्यसमञ्जसमिति वाच्यम्। अज्ञानकार्यस्याप्यज्ञानानतिरेकात् तदभावे तत्सत्त्वानुपलम्भात् न चात्र प्रमाणाभावः भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे इतिश्रुतेः। नचैतद्वाक्यमशुभकर्मनिवृत्तिपरमेवेति वाच्यं कर्मशब्दस्य शुभाशुभसाधारणत्वात् विद्यासामर्थ्यस्य चोभयत्र तुल्यत्वात्।

ब्रह्मात्मैकत्वविज्ञानं शाब्दं दैशिकपूर्वकम्।
बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत्॥

इत्यत्र बुद्धिपूर्वकृतपापस्यापि ब्रह्मज्ञानेन दाहस्मरणात्।

Since it is impossible that the effect, *e. g.* the snake or the like should continue to exist after the Nescience concealing the rope has come to an end on the rope being perceived. Nor can the opponent urge that if this is so, the conclusion of the founders of the (Vedānta) Śāstra, sc. knowledge puts an end to Nescience alone, is improper. For the products of Nescience do not differ from Nescience itself, since when Nescience exists not, the existence of its products is not perceived. And proof for our position is not wanting, for Sruti thus declares:—'The fetter of the heart is broken, all doubts are solved, his works perish when He has been beheld who is the higher and the lower.' Nor may it be argued that this passage implies the destruction of evil actions only. For the word action is common to both good and evil actions, and the power of knowledge is equally operative in regard to both kinds of action. Thus in the Smriti passage—'The knowledge of Self and Brahman as identical, gained through Veda and attendance on a Guru consumes like fire every evil deed (though) done intentionally'—the consuming of even an intentional evil deed by the (fire of) knowledge of Brahman is declared.

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा॥

इत्यत्र सर्वशब्देनाशेषपुण्यपापे गृहीत्वा तस्य सर्वस्यैव ज्ञानाग्निना दाहस्य भगवतोक्तत्वाच्च किञ्च यस्य दर्शनमात्रादन्येषामपि पापक्षयो जायते का कथा तस्य ब्रह्मीभूतस्य पापक्षये तदाह भगवान् वसिष्ठः

यस्यानुभवपर्यन्तं तत्वे बुद्धिः प्रवर्तते।
तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वपातकैः॥

तथा च कुलपावित्र्यहेतुत्वमपि ब्रह्मविदः स्मर्यते।

कुलं पवित्रं जननी कृतार्था विश्वम्भरा पुण्यवतीचतेन।
अपारसंवित्सुखसागरेऽस्मिन् लीनं परे ब्रह्मणि यस्य चेतः॥

तस्माद्यथोक्तब्रह्मात्मैकत्वविज्ञानेन कृतकृत्यो भवतीति नात्र विवदितव्यम् इति।

And in the passage—'As kindled fire reduces fuel to ashes O Arjuna! so the fire of knowledge reduces all actions to ashes'—the Divine Krishna, understanding by the word *all* both good and evil deeds has declared that all action is consumed by the fire of knowledge. Further, need it be said that the sins of the man who has become Brahman are destroyed, when by the mere sight of such an one the sins even of other men are destroyed! This his reverence Vasistha declares—'All men are freed from their sins who come within the sight of him whose mind is engaged with Brahman till intuition (of Brahman) arises.' And Smriti too declares that he who knows Brahman purifies his own family—'He whose mind has melted into that infinite ocean of Intelligence and Bliss, the absolute Brahman, has purified his family, fulfilled his mother's desires and sanctified the earth.'

To conclude, then,—our statement, that a man realises all desires through the aforesaid knowledge of the identity of his Self with Brahman, is incontrovertible.

प्रकाशानन्दयतिना कृतिना स्वात्मशुद्धये ।
सिद्धान्तमुक्तावल्येषा रचिता रन्ध्रवर्जिता ॥
अद्वैतानन्दसन्दोहा सत्यज्ञानादिलक्षणा ।
नारायणसमासक्ता श्रिया सापत्न्यदूषिता ॥
शृणु प्रकाशरचितां सद्वैततिमिरापहाम् ।
वादीभकुम्भनिर्भेदसिंहदंष्ट्राधरीकृताम् ॥
वेदान्तसारसर्वस्वमज्ञेयमधुनातनैः ।
अशेषेण मयोक्तं तत्पुरुषोत्तमयत्नतः ॥

स्नातं तेन समस्ततीर्थसलिले सर्वापि दत्ताऽवनिर्यज्ञानां च कृतं सहस्रमखिला देवाश्च सम्पूजिताः । संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योप्यसौ यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीज्ञानानन्दपूज्यपादशिष्यश्रीप्रकाशानन्दविरचिता सिद्धान्तमुक्तावली समाप्ता ॥

To purify his Self the good ascetic Prakāśānanda composed this Siddhāntamuktāvalī, flawless, a mass of pure Bliss, sharing the nature of (Brahman sc.) existence and Intelligence, and (as a garland) dedicated to Nārāyaṇa (and thus) tainted by rivalry with his consort Lakshmi. Listen to the work written by Prakāśa (the Luminous) which destroys the darkness (sc. Nescience) and duality and surpasses the tooth of a tiger in tearing open the forehead of an elephant, *i. e.* a non-Vedantin opponent. With Nārāyaṇa's aid I have fully declared the very essence of Vedānta unknown to men of the present day. That man whose mind remains fixed in the contemplation of Brahman even for a moment, has bathed in the waters of all the tīrthas, and offered all the earth (as his dāna) and performed a thousand sacrifices, has honoured all the gods and extricated his fathers from transmigratory bondage, and is himself worthy of honour in the three worlds.

Here ends the Siddhāntamuktāvalī composed by Prakāśānanda, the pupil of his reverence Jnānānanda, paramahaṃsa parivrājakāchārya. *A. V.*

श्रीमते मीमांसाद्वयगुरवे रामानुजाचार्याय नमः ।

# अथ श्रीभाष्ये ।

## प्रथमाऽध्याये द्वितीयः पाद आरभ्यते ।

*(Continued from page 392. Vol. XII.)*

मू० श्री', प्रथमे पादे अधीतवेदः पुरुषः कर्ममीमांसाश्रवणाधिगतकर्मयाथात्म्यविज्ञानः केवलकर्मणामल्पास्थिरफलत्वमवगम्य वेदान्तवाक्येषु च आपातप्रतीतानन्तस्थिरफलब्रह्मस्वरूपतदुपासनसमुप[1]जनितपरमपुरुषार्थलक्षणमोक्षापेक्षोऽवधारितपरिनिष्पन्नवस्तुबोधनशब्दशक्तिर्वेदान्तवाक्यानां परस्मिन् ब्रह्मणि निश्चितप्रमाणभावस्तदितिकर्तव्यतारूपशारीरकमीमांसाश्रवणमारभेतेत्युक्तम्,

टी० प्रथमे पाद इत्यादि किमर्थमत्र प्रथमपादाधिकरणार्थानुक्रमणमुच्यते ? पादानुयायिनोऽर्थस्य प्रत्यधिकरणमनुयायित्वस्फुटीकरणाय, किमर्थमनुयायित्वकथनं ? त्रिपादीसङ्गत्यर्थं, सङ्गतिः कुतः ? सूत्रकाराभिप्रेतत्वात् पादभेदोऽ[2]प्यर्थभेदात्, तत्क्रमश्च सङ्गतिविशेषात्, तत्र किं प्रमाणं ? सम्प्रदायक्रमः । किञ्चात्राधिकरणार्थानुक्रमेण त्रिपाद्या अनारम्भणीयत्वशङ्काचार्थात्परिहृता भवति, त्रिपाद्यामुदाहरिष्यमाणानां श्रुतीनां प्रथमपादाधिकरणोक्तन्यायाविषयत्वज्ञापनार्थत्वादनुक्रमणस्य, अत एव प्रथमपादे वेदान्तवाक्यानां परमात्मपरत्वे दर्शितेऽपि त्रिपाद्या आरम्भणीयत्वं सिद्धं, प्रथमे पादेऽपीक्षत्यानन्दमयाधिकरणयोः कारणस्य चिदचिद्विलक्षणत्वे सिद्धेऽपि पूर्वाधिकरणन्यायाविषयश्रुतिवाक्यार्थनिर्णयार्थी ह्युत्तरोत्तराधिकरणारम्भस्तद्वदत्रापीति शास्त्रारम्भप्रयोजनायाश्चतुस्सूत्र्याः. कथं प्रथमपादसङ्गतिः ? उच्यते

1 समुज्ञातेति पा० ।
2 पादभेदो ह्यर्थभेदादिति पा० ।

तस्याः शास्त्रारम्भार्थत्वेन शास्त्रोपोद्घातरूपत्वादर्थतः प्रथमपादान्तर्गतत्वेन तु प्रथमपादस्य प्रथमाध्यायस्य चा साधारणत्वात्सङ्गतिः, प्रथमे पादइति अधीतवेदः कृतसाङ्गसशिरस्काध्ययनः तावत्यपर्यवसानमाह "कर्मे"ति, तत्राप्यपर्यवसाने हेतुमाह "केवले"ति, तथाऽपि ब्रह्मविचारप्रवर्त्तनक्रमाऽऽपातप्रतीतिरेव न जायते सिद्धे वस्तुनि व्युत्पत्त्यभावादिति शङ्कायां प्रथमसूत्रस्य तात्पर्यार्थमाह "अवधारिते"ति, तर्हि वेदान्तवाक्यैरेवा[1]स्तु किमर्थो ब्रह्मविचार. इत्यत्राह "तद्विनिकर्त्तव्यते"ति, ननु चतुस्सूत्री हि शास्त्रारम्भणार्था तत्कथं प्रथमसूत्राधिकरणार्थानुक्रमे शास्त्रारम्भसिद्धय इत्युक्तं? जन्मादिसूत्रत्रयस्यापि प्रथमाधिकरणाधीनारम्भत्वात्तथोक्तिः न तु तेषां सूत्राणां शास्त्रारम्भार्थत्वाभावात् । यद्वा जन्मादित्रिसूत्र्याः शास्त्रारम्भार्थत्वे सत्यपि प्रथमपादे सङ्गतिरप्यस्ति, चिदचिद्विलक्षणकारणास्तित्वविषयत्वात्तस्याः, प्रथमपादो हि समस्तचिदचिद्विलक्षणकारणास्तित्वनिरूपणपरः, जन्मादिसूत्रे जन्मादिकारणत्वं लक्षणमुक्तं कारणस्य प्रमाणान्तरासिद्धिः प्रयोजनरूपता चानन्तरसूत्रद्वयेनोक्ते, अतः प्रथमाधिकरणार्थानुक्रमे

भू० शास्त्रारम्भसिद्धये, अनन्तविचित्रस्थिरचरस्वरूपभोक्तृभोग्यभोगोपकरणभोगस्थानलक्षणनिखिलजगदुदयविभवलयलीलं सत्यानन्दैककारणं परं ब्रह्म "यतो वा इमानी-त्या"दिवाक्यं बोधयतीति च प्रत्यपादि, जगदेककारणं परं ब्रह्म सकलेतरप्रमाणाविषयतया शास्त्रैकप्रमाणकमित्यभ्यधा[2]यि, शास्त्रप्रमाणकत्वञ्च ब्रह्मणः प्रवृत्तिनिवृत्त्यन्वयविरहेऽपि स्वरूपेणैव परमपुरुषार्थभूते परस्मिन् ब्रह्मणि वेदान्तवाक्यानां समन्वयान्निरुह्यत इत्यब्रूम, निखिलजगदेककारणतया वेदान्तवेद्यं ब्रह्म चेतनाद्यन्वयादानुमा-

१ वेदान्तवाक्यैरेवालमिति पा० ।
२ अभ्यधामेति पा० ।

न्तिकप्रधानादर्थान्तरभूतश्चेतनविशेष एवेत्युपापीपदाम, स च स्वाभाविकाऽनवधिकातिशयानन्दविपश्चित्त्वनिखिलचेतनभयाभयहेतुत्वसत्यसङ्कल्पत्वसमस्तचेतनाचेतनान्तरात्मत्वादिभिर्बद्धमुक्ताभयावस्थाज्जीवशब्दाभिलपनीयाच्चार्थान्तरभूत इति च समादर्धीमहि, स चाप्राकृताकर्मनिमित्तस्वसाधारणदिव्यरूप इत्युदैरिरप्म, आकाशप्राणाद्यचेतनविशेषाभिधायिभिर्जगत्कारणतया प्रसिद्धवन्निर्दिश्यमानस्सकलेतरचेतनाचेतनविलक्षणः स एवेति समगरिष्महि[1], परतत्त्वासाधारणनिरतिशयदीप्तियुक्तज्योतिश्शब्दाभिधेयोद्युसम्बन्धितया प्रत्यभिज्ञानात्स एवेत्यातिष्ठामहि,

टी० शास्त्रारम्भसिद्धय इत्युक्तमिति । यद्वा शास्त्रारम्भसिद्धये इति पदमुत्तराधिकरणत्रयेऽनुषज्यत इति चतुस्सूत्र्याश्शास्त्रारम्भसिद्ध्यर्थत्वमुक्तं भवति, जन्मादिसूत्रार्थमनुक्रामति "अनन्ते"ति, सौत्रस्यास्येति पदस्य विवक्षितमर्थमाह "अनन्तविचित्रादिविशेषणैः" अनन्तविचित्र-शब्दौ भोक्तृभोग्यसाधारणौ महानन्दैककारणत्वन्तद्विजिज्ञासस्येति वाक्येऽभिप्रेतं तापत्रयातुरजिज्ञास्यस्य हि लक्षणं निरूपितम्, अतो महानन्दैककारणमित्युक्तम् । तद्वा यत्प्रयन्तीत्यस्य आत्यन्तिकलयपर्यन्तत्वाभिप्रायेणोक्तम्महानन्देति, "येयं प्रेते न प्रेत्येति चात्यन्तिकलयो हि प्रायणं श्रुतम्, अविरुद्धविशेषणभेदो न विशेष्यभेदावह इत्यभिप्रायेण एक-शब्दप्रयोगः, निमित्तोपादानैकत्वाभिप्रायेण वा "शास्त्रे"ति, समन्वयात्-परमपुरुषार्थभूतस्यैव ब्रह्मणः प्रतिपादकतया शास्त्रस्य तेनान्वयात्, स चेत्यादि स्वाभाविकानवधिकातिशय-शब्दौ प्रतिविशेषणमन्वितौ, आकाशप्राणाधिकरणार्थयोः पृथगनुक्तिर्न्यायस्यानतिभिन्नत्वात्, परमेति परमकारणस्यासाधारणलक्षणस्य प्रदेयत्वेन असाधारणम् अमृतत्वं तत्प्राप्तिहेतुभूत

१ समगरिष्महि इति पाठान्तरं तु युक्तमिति प्रतीमः ।

इत्यर्थः । यद्वा परमकारणस्यासाधारणं चिह्नभूतमित्यर्थः, उपासकस्य अमृतत्वप्राप्तिर्हि उपास्यस्य परमकारणत्वमावेदयति । यद्वा परमकार-

सू० परमकारणासाधारणामृतत्वप्राप्तिहेतुभूतः परमपुरुष एव शास्त्रदृष्ट्या इन्द्रादिशब्दैरभिधीयत इत्यब्रूमहि, तदेवमतिपतितसकलेतरप्रमाणसम्भावनाभूमिस्सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरतया स्वेतरसमस्तवस्तुविलक्षणः परं ब्रह्म पुरुषोत्तमो नारायण एव वेदान्तवेद्य इत्युक्तम्, अतः परं द्वितीयतृतीयचतुर्थेषु पादेषु यद्यपि वेदान्तवेद्यं ब्रह्मैव तथाऽपि कानिचिद् वेदान्तवाक्यानि प्रधानक्षेत्रज्ञान्तर्भूतवस्तुविशेषस्वरूपप्रतिपादनपराण्येवेत्याशङ्क्य तन्निरसनमुखेन तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यते ।

णासाधारणं तद्धर्मभूतममृतत्वन्तत्प्राप्तिः परमकारणसाम्यापत्तिरित्यर्थः । पादार्थमाह "तदेवमि"ति, पुरुषत्वादस्मदादिवदित्यादिकुतर्कपरिहारार्थमाह "अतिपतिते"ति, तेषां धर्मिग्राहकमानबाध इति भावः । ज्योतिरधिकरणार्थाभिप्रायः पुरुषोत्तम-शब्दः, प्रतर्दनविद्याऽभिप्रायो नारायण-शब्दः, मामुपास्स्वेत्यस्यापि नारायणानुवाकैक्येन सर्वविद्योपास्यतयोक्तनारायणोपासनपरत्वात् चिदचिद्विलक्षणकारणत्वं पादानुगतार्थ इत्यर्थः । नारायण एवेत्यवधारणाक्षेपेण द्वितीयादिपादोत्थानमित्यभिप्रायेणाह "अतः परमि"ति, द्वितीयतृतीयचतुर्थेष्विति प्रथमपादस्य न केवलमनन्तरपादेन सङ्गतिरपि तु त्रिपाद्यैवेति भावः । यथा चोदनालक्षणोऽर्थो धर्म इत्यत्र चोदनैव प्रमाणं-प्रमाणमेव चोदनेत्यवधारणद्वयं तत्र प्रमाणमेव चोदनेत्यवधारणम् औत्पत्तिकसूत्रेण साधितं चोदनैव प्रमाणमित्यवधारणं प्रत्यक्षसूत्रे स्थापितं, तथा जन्मादिसूत्रेऽपि ब्रह्म कारणमेव ब्रह्मैव कारणमित्यवधारणद्वयमपि विवक्षितं, जन्मादिकारणत्वस्य

ब्रह्मलक्षणत्वात्, लक्षणस्याव्याप्त्यतिव्याप्त्यसम्भवपरिहारा वश्यम्भावात्, तत्र व्यत्यैव्याचाव्याप्तिः असंभवपरिहाररूपायोगव्यवच्छेदः प्रथमपाद उक्तः, अतिव्याप्तिपरिहाररूपान्ययोगव्यवच्छेदः त्रिपाद्या क्रियत इति विभागाभिप्रायेण कानिचेद्वेदान्तवाक्यानीत्युक्तं, तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यते इति चिदचिद्विलक्षणस्वरूपं साधितम् । अथ तस्य गुणविशेषप्रतिपादनं त्रिपाद्यां क्रियत इति च प्रथमपादत्रिपाद्योर्विभाग इति भावः । पादत्रयस्यावान्तरभिदामाह–

श्रु० तत्राऽस्पष्टजीवलिङ्गकानि वाक्यानि द्वितीये पादे विचार्यन्ते, स्पष्टलिङ्गकानि तृतीये, तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थे ।

सर्वत्र प्रसिद्ध्यधिकरणम् । सू० श्रीः । सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

श्रु० इदमाम्नायते छान्दोग्ये "अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूप इत्यादि,

टी० "तत्रे"ति, अस्पष्टेत्यादिवैषम्यं ब्रह्मलिङ्गगतमिति परिहृतम् । अत्र तु जीवादिलिङ्गगतमिति भिदा, द्वितीयतृतीयपादाद्याधिकरणयोर्जीवस्य पूर्वपक्षितत्वाज्जीवादीत्युक्तं, तत्तत्प्रतिपादनच्छायानुसारिणि चतुर्थ इति, तत्तत्प्रतिपादनं–जीवादिलिङ्गप्रतिपादनं न तु तल्लिङ्गप्रतिपादनम् । अस्पष्ट–स्पष्ट–स्पष्टतर–पूर्वपक्षोत्थानहेतुभेदेन भिन्नास्त्रयः पादा इत्यर्थः । प्रथमपादचरमाधिकरणे अवयवभूतोपक्रमगतजीवलिङ्गमवयविभूतवाक्यार्थस्वारस्येन बाधितमित्युक्तं, सर्वतादात्म्यमनःप्राणसम्बन्धाभेक्तृत्वाणीयस्त्वस्य एकदेशरूपलिङ्गानामवयवगतत्वेनाबाध्यत्वमिति प्रत्यवस्थानं परिह्रियते द्वितीयपादप्रथमाधिकरणे इत्यवान्तरसङ्गतिः, श्रीः सू० सर्वत्र प्रसिद्धोपदेशात् सर्वं खल्वित्यादेर्द्वितीययोजनायामुदाहरिष्यमा-

ग्रात्वात् प्रथमयोजनापेक्षितमथ खल्वित्यादिकमुपात्तं द्वितीयसूत्रे आत्रूप इत्यस्य उपरितनवाक्यस्योपादास्यमानत्वात् अत्र आत्रूप इत्यन्तमुपात्तम् । आदि–शब्देनान्यद् गृहीतम् अत्र रात्रिसत्रन्यायेन मनोमय उपास्यतया सम्बध्यते अर्थवादादिकस्यापि विध्यपेक्षितस्य स्वीकार्यत्वात् । ननु स क्रतुं कुर्वीतेत्यादिकमुपादीयतां किमर्थं यथाक्रतुरस्मिन्नित्यादिवाक्योपादानम् ?-उच्यते "फलवत्सन्निधावफलं तदङ्ग"मिति न्यायेन "स क्रतुं कुर्वीतेति विधेः फलाश्रवणनिमित्तं पूर्वविहितोपासनाङ्गत्वं माभूदिति फलसम्बन्धप्रदर्शनार्थन्तदुपादानं, शान्त उपासीतेति विहितोपासनाधिकृतस्यैव उपासनान्तरविधानमनुपपन्नमिति शङ्काव्यावृत्त्यर्थम् । अथ खलु क्रतुमयः पुरुष इति वाक्यं घटकत्वेनोपात्तं जीवस्य बहुविधोपासनप्रचुरत्वादनेकोपासनविधानं युक्तमिति भावः । अत्र व्याख्यान्तरैस्सर्वं खल्वित्यादिवाक्यस्य ब्रह्मपरत्वं स्पष्टमिति बुद्ध्वा स क्रतुमित्यादिवाक्ययोर्जीवविषयत्वेन पूर्वपक्षं कृत्वा ब्रह्मविषयत्वेन सिद्धान्त उक्तः, इह तु विषयैक्ये स्थित एव पूर्वपक्षसिद्धान्तौ पश्चादभिधास्येते, प्रथमं व्याख्यान्तरोक्तदिशा पूर्वपक्षसिद्धान्तौ उपवर्ण्येते । नन्वत्रोपासनान्तरं न विधित्सितं पूर्वविहितोपासनाङ्गभूतक्रतुविधिपरत्वादस्य वाक्यस्य, ततश्च मनोमयादिपदान्युपास्यान्तराभावात् प्रकृतब्रह्मपराणीति निश्चयाच्च विचारविषय इति शङ्कां व्युदस्यति–

भा० अत्र स क्रतुं कुर्वीतेति प्रतिपादितस्योपासनस्य उपास्यो मनोमयः प्राणशरीर इति निर्दिश्यत इति प्रतीयते, तत्र संशयः किं मनोमयत्वादिगुणकः क्षेत्रज्ञः ? उत परमात्मे ?-ति किं युक्तं क्षेत्रज्ञ इति, कुतः मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात्, परमात्मन "ह्यप्राणो ह्यमना" इति तत्प्रतिषेधाच्च

टी० 'अत्रे'ति, मनोमयादिपदानां प्रकृतेनोपास्यविषयत्वे प्रमाणाभावात् ब्रह्मपरत्वादिनिश्चयात् स क्रतुमिति निर्दिष्टोपासकविशेषणत्वाश्र-

यणे तस्यानाविर्भूतगुणाष्टकस्य सत्यसङ्कल्पत्वाद्यघटमानत्वाच्च पाश्चात्य-विद्यान्तरोपास्यपरत्वनिश्चये सति तद्विशेषनिश्चयाभावात् विचारस्यार-म्भणीयत्वमित्यर्थः, उपासनस्येति पदेन "तं यथा यथोपासते तथैव भवति" "यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती" त्यनयोर्वा-क्ययोरैकार्थ्यात् "क्रतुं कुर्वीत" त्यत्र क्रतु-शब्दश्चोपासनपर इति तदुपास्ये मनोमयत्वादिगुणके संशय इति भावः । तत्रेति "स क्रतुं कुर्वीत" त्यत्र उपा-स्यतया निर्दिष्टो मनोमयत्वादिगुणकः किं जीवः? उत परमात्मे? ति विचारः तदर्थं कर्मकर्तृव्यपदेशशब्दविशेषोपसंहारगतब्रह्म-शब्दादयः किं मुख्याः? उतामुख्याः? तदर्थम्मनोमयत्वादि किं जीवस्यैव सम्भवति? उत परमात्मनोऽपि घटते? इति, तदर्थमप्राणो ह्यमना इति, किं मनआदि-सम्बन्धमात्रनिषेधः? उत सम्बन्धविशेषनिषेधः? इति, यदा तु सम्बन्धमात्र-निषेधः तदा मनोमयत्वादेर्जीवस्यैव साधारणतया कर्मकर्तृव्यपदेशादी-नाममुख्यत्वेन स क्रतुं कुर्वीतेति विहितोपासनस्योपास्यो जीव इति पूर्वप-क्षस्थितिः, यदा सम्बन्धविशेषनिषेधः तदा मनोमयत्वादेः परस्मिन्सम्भवेन कर्मकर्तृव्यपदेशादीनां मुख्यत्वात् तत्रोपास्यतया विहितः परमात्मेति सिद्धान्ते फलफलिभावः । पूर्वपक्षमुपपादयति "कुत" इत्यादिना, ननु कथमस्य पादस्य अस्पष्टजीवादिलिङ्गकवाक्यविषयत्वं? मनोमयत्वादिकं हि स्पष्टं जीवलिङ्गमिति चेत् न, स्पष्टस्य मनस्सम्बन्धमात्रस्य जीवलिङ्गत्वाभावात् जीवलिङ्गभूतस्योपकरणोपकरणित्वलक्षणसम्बन्धविशेषस्यास्पष्टत्वाच्चेत्य-भिप्रायेण मनःप्राणयोः क्षेत्रज्ञोपकरणत्वादियुक्तं । ननु सर्वं खल्विति वाक्ये प्रकृतं ब्रह्मैव स क्रतुं कुर्वीतेत्यत्र उपास्यतया सम्बन्ध्यमनोमयत्वादिगुणानां विशेष्यं स्यात् इति शङ्कायां किं ब्रह्म-शब्दस्य विधिपदाकाङ्क्षया उत्तर-त्रान्वयः? उत क्रतुं कुर्वीतेति विधिपदस्योपास्यसाकाङ्क्षत्वात्सन्निहितानां मनोमयादिपदानां विशेष्यसाकाङ्क्षत्वाच्च ब्रह्म-शब्दस्य उत्तरत्रान्वय? इति विकल्पमभिप्रेत्य प्रथमं शिरो दूषयति—

( शेषमग्रे )

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

# ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

(*Continued from page* 367. VOL. XII.)

## अथ दशमाध्यायस्य प्रथमः पाद आरभ्यते ॥

विकृतौ लुप्तार्थानां प्राकृतानां बाधाधिकरणम् ।

सू० विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥

ऊहे सिद्धेऽतिदिष्टानां बाधाभ्युच्चयचिन्तया । इयत्ता दशमेऽङ्गानां विकृतिष्वभिधीयते । अतिदिष्टपदार्थविषयत्वाद्बाधस्याप्यूहवदतिदेशोत्तरकालमारम्भः । ननूहबाधयोर्न मिथो हेतुहेतुमत्ता, ऊहो नाम प्राकृतस्य प्रयोगस्यान्यथाभावः, न च तदधीनो बाधः कृष्णलेषु ह्यवघातस्य बाधः, न च तत्रोहोऽस्ति, अननुष्ठानात्, न ह्यननुष्ठीयमानस्य प्रयोगविकारोऽस्ति यत्र चोहो नीवारादौ न तत्र बाध इति विषयभेदाच्च [1]तयोरन्योन्यहेतुहेतुमत्ता यत्र हि द्रव्यान्तरे देवतान्तरे वा प्राकृतप्रयोजनमस्ति तद्विषय ऊहः, यत्र तु नास्ति तत्र बाधः, सत्यमेवं, तथाऽप्यूहस्य पदार्थगतरूपान्तरात्मकत्वेन पदार्थप्रत्यासत्तेस्तत्प्राप्तिचिन्ता कृता, बाधस्तु तन्निवृत्त्यात्मकः, पश्चाच्चिन्त्यते, तत्र प्रथमन्तावदिदं चिन्त्यते किं सर्वं प्राकृतं विकृतौ कर्त्तव्य ? मुत तु यत्प्राकृतप्रयोजनं न कर्त्तव्य ? मिति, तदर्थमिदं विचार्यते किं प्राकृतमङ्गजातमङ्गशास्त्रं वा स्वरूपेणैवानादृतप्रयोजनं विकृतावतिदिश्यते सौर्येण भावयेत्कथम् आग्नेयस्य यान्यङ्गानि तानि कृत्वे ? ति उत पदार्थकार्याणि यानि दृष्टादृष्टरूपाणि तदुत्तसम्पादनाय आग्नेयादिगतो व्यापारः सोऽतिदिश्यते सौर्येण भावयेत् कथं यथाऽऽग्नेयेन

१ नानयोरन्योन्यहेतुहेतुमत्ता इति पा० ।

तथे? ति, तत्र पूर्वस्मिन्पत्ते ऽतिदेशावगमाङ्गभावानां प्राकृतप्रयोजनानादरेण विकृतावेव यथासम्भवं दृष्टादृष्टप्रयोजनकल्पनात्स्वयं दितेऽपि बर्हिषि लवनमदृष्टार्थतया कर्त्तव्यमिति नास्ति बाधः । उत्तरत्र तु प्राकृतस्य लवनकार्यस्य दृष्टस्य स्वयं दिते बर्हिष्यभावेनानतिदेशाल्लवनस्वरूपस्य चानतिदेशाच्च कर्त्तव्यं लवनमिति सिध्यति बाधः, तत्रोपदेशवदतिदेशोऽपि पदार्थपूर्वक एव युक्तः उपदेशानुरूपत्वात्तस्येति मन्वानः सर्वं कर्त्तव्यं न तु किं विद्बाधितव्यमित्याह, सिद्धान्तस्तु "अपेक्षाऽऽसत्तियोग्यत्वैरुपकारातिदेशनम् । तदभावात्पदार्थानामतिदेशो न कल्प्यते" ॥ यागेन भावयेदिति हि यथा यागः फलसाधनं भवति तथा व्याप्रियेतेत्यर्थः, कथमिति केन व्यापारेण यागः फलसाधनतामापद्यत इत्येवं यागस्य फल[1]साधने व्यापारविशेषोऽपेक्षितो न तु व्यापारमात्रं येनावघातादिव्यापारः स्वरूपेणातिदिश्येत, अवघातप्रयाजादिजन्यदृष्टादृष्टोपकारसंपादनं तु भवति यागस्य फलसाधनसामर्थ्यजननें व्यापारः, तस्मादपेक्षावशादुपकारसम्पादनस्यैवातिदेशो न पदार्थानां, तथा सन्निधिरपि तस्यैव वैकृतं वाक्यं चोदनासामान्येन प्राकृतं प्रधानवाक्यमुपस्थापयति । तच्च वाक्यं स्वार्थमुपस्थापयति, तस्य च स्वार्थोऽंशत्रययुक्ता भावना तत्र साधनांशावनपेक्षितत्वादनादृत्य तृतीयोंशो गृह्यते, स चाङ्गजन्योपकारसंपादनात्मा नाङ्गस्वरूपाणि तथा कथमाकाङ्क्षापूरणयोग्यताऽपि यागगतव्यापारस्यैव नाङ्गानां, तस्मादपेक्षासन्निधियोग्यत्वैः कार्याणामेवात्र पदार्थविशिष्टानामतिदेशः, न पदार्थस्वरूपाणामपेक्षाद्यभावात्, एवं शास्त्रस्वरूपाणाम्, एवं च विशिष्टकार्यातिदेशादार्थिको विशेषणानां पदार्थानामतिदेशः, ततश्च यस्यां विकृतौ यत्प्राकृतं कार्यं न सम्भवति तस्यां तस्यासम्भ[2]वानतिदेशाच्च तद्वशेन पदार्थप्राप्तिः स्वरूपस्य नाप्त्येवातिदेशः, तदिदमुक्तं लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयतीति, यस्तु पदार्थाननुरक्तं तदुपलक्षितमुपकारस्य स्वरूपमतिदिश्य तस्य जनकापेक्षायां पदार्थानामपि पुनर्विकृत्य-

१ फलसामर्थ्यजनेन इति पा० ।
२ सम्भवादेशाच्च तद्वशेन इति पा० ।

पूर्वेण तादर्थ्यादन्वयमिच्छति तन्मते लुप्तप्राकृतद्वाराणामपि तादर्थ्यावगमात्तदुपपत्तये द्वारान्तरं परिकल्प्यानुष्ठानं स्यात्, पदार्थापोहेन च स्वरूपमतिदिशता किं तत्स्वरूपमतिदेष्टव्यं, न तावत्प्राकृत्युपकारव्यक्तिर्विकृतौ शक्या कर्त्तुं तादृशस्तूपकारोऽतिदिश्येत तादृक्त्वं च न दर्शपूर्णमाससम्बन्धितया, न हि विकृतौ तत्सम्बन्धिता सम्भवति तेन प्रयाजादिमत्तयैव तादृक्त्वमिति तादृग्रूपातिदेशो ऽर्थसिद्ध एव पदार्थानामतिदेशोऽपि विशिष्टविधिनैव विशेषणानां विधिरिति व्यर्थः पृथक्पदार्थातिदेशः, स्यान्मतं कारणभेदे कार्यभेदस्यावश्यं भावात्प्रयाजाद्यधीनमुपकारान्तराद् व्यावृत्तं सर्वदर्शपूर्णमासोपकारेष्वनुवृत्तमुपकाररूपं तदतिदिश्यत इति तथाऽपि तत एव प्रयाजादिप्राप्तिः सिद्ध्येत्, न हि तस्य तस्मादन्यत उत्पत्तिसम्भवः कारणभेदे कार्यभेदादिति त्वयैवोक्तत्वात्, तस्मादनर्थकोऽयं पदार्थातिदेशः केवलमूहबाधविघाताय स्यादित्यास्तां तावत्। ननु सप्तमे विध्यन्तातिदेश इत्युक्तं, विध्यन्तश्च ब्राह्मणम् अतः कथमिह शास्त्रातिदेशो निराक्रियते उच्यते–कार्यातिदेशादार्थिकोऽयः शास्त्रातिदेशस्तदभिप्रायन्तत्। अपि च विध्यन्त-शब्देन प्राकृतस्य प्रधानविधेर्योऽतिमोंऽश स उच्यते न च समिधो यजति व्रीहीनवहन्तीति प्रत्यक्षश्रुतमात्रं प्रधानवाक्यशेषः किं तर्हि कल्पितकार्यवाचिशब्दसहितमीदृशमङ्गशास्त्रं अवघातेन वितुषीकुर्यादुविरिति, ततश्चेदृशस्यैवातिदेशः, ईदृशस्य च कृष्णलचरावतिदेशासम्भवात्सिद्धो बाधः, तस्माल्लुप्तार्थानां प्रकृतिवत्कुर्यादित्येतावन्मात्रालोचनया झटिति प्राप्तिमवगतामपि भ्रान्तीकृत्य तद्व्यतिरिक्ताङ्गविषयमतिदेशशास्त्रमुपसंह्रियते, तेन स्वयं दितं बर्हिर्भवतीत्यादौ लवनादयस्तन्मन्त्रास्तत्साधनभूताश्च परश्वादयो न प्रवर्तन्ते । एवं वा प्राजापत्ये घृते चरुं निर्वपेत्कृष्णलमायुष्काम इति श्रूयते तत्रावघातः कर्त्तव्यो नेति संशये चरु–शब्दो ऽचरौ चरुधर्मविधानार्थः तेन लुप्तार्थोऽप्यवघातो वचनात्कृष्णलेषु कर्तव्य इति विशेषशङ्कां विनाऽप्यवघातेनालुप्तार्थैरेव धर्मैर्वैशद्येन वा उपपन्नश्चरु शब्दो नावघातं प्रापयितुमलं, अपणा तु घृते श्रपयतीत्याहत्य विधानात्क्रियत इति वैषम्यम् ॥ एवं वा वैश्वदेवं चरुं निर्व-

पेद् भ्रातृव्यवान् तं बर्हिषदं कृत्वा शम्यया स्फ्येन च व्यूहेदिदमहममुष्यामुं च व्यूहामीतीयं विष्णा तं ध्यायेत् यदन्योऽवमृज्ञे तपश्च स्य य चाश्लिष्येे तद्विष्णाव उरुक्रमायाऽवद्यानी"ति श्रूयते तत्र संशयः किं वैश्वदेववदेवताऽऽवाहनकाले विष्णोरावाहनं कर्त्तव्यं ने?ति तत्र चोदकप्राप्ते कर्त्तव्यं कथं पुनश्चोदकप्राप्तिः नहीयं देवता प्राकृत्याः कस्याश्चिद्देवतायाः कार्ये वर्त्तते किं त्वप्राकृतकार्येयम् अतोऽस्या यूपावटस्तरणोपर्बर्हिषीव बर्हिर्धर्मेनावाहनं प्राप्नोति सत्यं, वैश्वदेविकचोदकेन न प्राप्नोति स्वयमेव स्वयं वैष्णवयाग औषधद्रव्यकत्वाच्चाग्नेयविकारः, तत्र वैश्वदेविकतन्त्रमध्यपातात्सर्वाण्यङ्गानि प्रसङ्गेनोपकुर्वन्ती त न पृथक् क्रियन्ते, आवाहनं त्वकृतार्थत्वात्कर्त्तव्यमिति प्राप्ते ब्रूमः । नैमित्तिकविधेर्निमित्तापेक्षित्वान्निमित्तस्य वाश्लेषादेरवश्यंभावाभावेन देवताऽऽवाहनकाले निश्चयासम्भवादनिश्चितसद्भावम् उरुक्रमयागविधानं नावाहनं प्रयोक्तुं क्षमम्, अविहितं चावाहनं कृतमपि निष्फलमेव तस्मान्न कर्त्तव्यम् ॥

दीक्षणीयादिषु आरम्भणीयाबाधाधिकरणम् ।

सू० इष्टिरारम्भसंयोगादङ्गभूतान्निवर्त्तेतारम्भस्य प्रधानसंयोगात ॥२॥

दर्शपूर्णमासयोरारम्भणीया श्रुता सा विकृतिष्वपि कर्त्तव्येति द्वादशे वक्ष्यते, सा किं सोमाङ्गभूतासु दीक्षणीयादिषु कर्त्तव्या ने? ति विचारः "कर्त्तव्या चोदकप्राप्तेरिति प्राप्ते ऽभिधीयते ॥ अङ्गभूतास्विष्टं लुप्तद्वारत्वान्न प्रवर्त्तते । आरप्स्यमानपुरुषसंस्कारार्थेयमिष्यते । नारम्भो दीक्षणीयादेः प्रधानारम्भसिद्धितः" । आरम्भद्वारेणारम्भणीया प्रकृतावङ्गमासीत्, अतो विकृतिष्वपि तद्द्वारैव प्राप्तिः, न चाङ्गभूतासु दीक्षणीयादिष्विष्टिष्वात्मीय आरम्भोऽस्ति, ज्योतिष्टोमे तावच्च कर्त्तव्या तस्यापूर्वत्वात्, दीक्षणीयादेश्च तस्यामवस्थायामप्राप्तावसरत्वात्, ज्योतिष्टोमे च प्रवृत्तोऽर्थादङ्गेष्वपि प्रवृत्तो भवति, प्रथमं च प्रवर्त्तनमारम्भः तेन, प्रधानार्थेनैवारम्भेणाङ्गानामारब्धत्वात् तेषां पृथगारम्भोऽस्ति तदभावाच्च तद्द्वारारम्भणीया लुप्तार्थत्वान्न कर्त्तव्या ॥

अनुयज्ञादिषु आरम्भणीयाबाधाधिकरणम् ।

सू० प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्त्तेतानङ्गत्वात् ॥ ३ ॥

अथ यच्चेष्टिकान्यन्यानि च कर्माणि समप्रधानान्येकफलसाधनत्वेन चोदितानि यथा राजसूये तत्र किमैष्टिकेष्वारम्भणीया स्यान्न वे? ति पूर्वाधिकरणे प्रधानविषय आरम्भो नाङ्गानामित्युक्तम्, स इह सर्वेषां प्रधानत्वादिष्टीनामप्यस्त्यारम्भः नानुप्रार्थत्वादारम्भणीया कर्त्तव्येति प्राप्ते ब्रूमः प्रकृतौ हि यदङ्गमारम्भणीया तद्विषय आरम्भो द्वारं दर्शपूर्णमासावारप्स्यमान इति वचनात्, इह त्विष्टिपशुसोमानामेकप्रयोगभाजामेकः सर्वेषु व्यासक्त आरम्भो नेष्टिभिर्व्यपदेष्टुं शक्यते, अग्निषोमीयहविरिवाग्निना, तेनात्रापीष्टीनामारम्भाभावाद्नुप्रार्थैवारम्भणीया ॥

आरम्भणीयायां आरम्भणीयाबाधाधिकरणम् ।

सू० तस्यां तु स्यात्प्रयाजवत् ॥ ४ ॥

किमारम्भणीयायामारम्भणीया कर्त्तव्या ने - ति संशयः नन्वङ्गभूतेयं दर्शपूर्णमासयोः, अतो दीक्षणीयादिवदस्यां न कर्त्तव्या तस्मान्नतार्थमेतत् उच्यते सत्यम्, अङ्गभूता तथाऽपि पृथगारम्भा भवति न प्रधानारम्भेण सिद्ध्यति, न ह्यस्यां वेलायामारब्धौ दर्शपूर्णमासौ तयोरारप्स्यमानयोरेवा विहिता, यदि चारब्धौ भवेतां तत आरम्भणीयैव न कर्त्तव्या, सा हि कर्त्तारमारम्भयोग्यं कर्त्तुं क्रियते तौ चेदारब्धौ किमर्था सा, तस्मादारप्स्यमानयोर्दर्शपूर्णमासयोः क्रियमाणेयं पृथगारम्भा[1] भवतीत्यनुप्तार्थत्वादस्यामारम्भणीया कर्त्तव्या, मैवम् अशक्या ऽसावतिदेष्टुं सा हीदानीं विधीयते, न तस्या दर्शपूर्णमासाङ्गत्वं ज्ञातं, यच्च प्रकृतावज्ञातं न तद्विकृतावतिदेष्टुं शक्यन्तदेतदेकमेव वाक्यमविहितवद्दर्शपूर्णमासयोरेतां विदधाति विहितत्ववच्चादिशतीति न कथंचिदवकल्पते, तस्मात्तद्व्यतिरिक्तेतिकर्त्तव्यतादितिष्यते ॥

१ पृथगारम्भवतीति पा० ।

खले वाल्यां यूपाहुतिबाधाधिकरणम् ।

सू० कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्त्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ५ ॥

साद्यस्क्रे श्रूयते "खले वालीयूपो भवती"ति प्रकृतौ चास्ति यूपाहुतिः यूपमच्छेत्स्यता होतव्यमिति, सा किं खले वाल्यां कर्त्तव्या ने?ति संशये, अतिदेशप्राप्तेः कर्त्तव्येति प्राप्ते लुप्तार्थत्वादकर्त्तव्येत्याह कथं यूपमच्छेत्स्यता होतव्यमिति च्छेदनार्थो होमः, न च खले वाल्यां छेदनमस्ति स्वदेशावस्थितायामेव तस्यां पशुर्बध्यते अतस्तत्र न यूपाहुतिः कर्त्तव्या ॥

साद्यस्क्रे स्थाणवाहुतिबाधाधिकरणम् ।

सू० स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ ६ ॥

तत्रैव स्थाणवाहुतिं जुहोतीति सा किं यस्मिन् कस्मिँश्चित्स्थाणावारादुपकारकत्वेन कर्तव्या सती खले, वाल्यामपि स्यात्, किं वा यूपाव्रश्चनस्थाणौ कर्त्तव्या तद्द्वारेण यूपस्यैव संस्कारार्था सती खले वाल्यामाव्रश्चनस्थाणवभावेन लुप्तार्थत्वादकर्त्तव्येति विचारे यूपवियोजिते स्थाणौ क्रियमाणा तद्द्वारेण न शक्नोति यूपस्योपकर्त्तुं, तस्मादारादुपकारिका खले वाल्यां कर्त्तव्येति प्राप्ते ब्रूमः आव्रश्चनस्थाणोः सन्निधानात्तद्द्वारेण च संस्कारत्वे संभवात्यारादुपकारत्वानुपपत्तेर्यूपसंस्कारार्थेयं नियोजितेऽपि स्थाणौ यूपीयोऽसावित्येवं क्रियमाणा शक्नोत्येव यूपस्योपकर्त्तुं देवदत्तधारिताया इव स्रजः शुचिदेशनिधानं देवदत्तस्य, यद्यपि चादृष्ट एव संस्कारस्तथाऽपि संस्कारत्वमिव सम्बद्धोपकारित्वलाभादसम्बद्धोपकारिण आरादुपकाराज्ज्यायः, तस्मात् खले वाल्यां न कर्त्तव्या ॥

उत्तमप्रयाजस्य संस्कारकर्मताधिकरणम् ।

सू० प्रयाजे च तन्न्यायत्वात् ॥ ७ ॥

अस्ति दर्शपूर्णमासयोरुत्तमः प्रयाजः "स्वाहाकारं यजती"ति स किमारादुपकारक? उताज्यभागादिषु यक्ष्यमाणानामग्न्यादिदेवतानां संस्कारक? इति, तदर्थमिदं विचार्यते किं स्वाहाकारं यजतीति देवता-

विधि? उत नामधेयं स्वाहाग्निं स्वाहा सोममित्यादिमन्त्रवर्णाद्देवताविधि-रि? ति तत्र "वचनाद्देवतालाभे न मन्त्रात्कल्पनं क्षमम्। तस्याश्चानुपयोगित्वाद्वेदाराादुपक्रिया" न हि वचनविहितदेवतासम्भवे स्वाहाऽग्निं स्वाहा सोममित्यादिना तत्कल्पना युक्ता, न चाऽयं मन्त्रकरणत्वेन श्रुत्या विधीयते यतस्तद्गतानामग्न्यादीनां देवतात्वं कल्प्येत क्रमप्रकरणविनियोज्यो ह्यसौ, न चाविज्ञातसामर्थ्यस्ताभ्यां विनियोक्तुं शक्यते, न चाग्न्यादिप्रतिपादकस्य मन्त्रस्याविज्ञातदेवत्ये यागे सामर्थ्यमवगम्यते, तेन वाचनिकं देवताविधानमाश्रित्य तत्रैवाग्न्यादिशब्दानां मातृशब्दवद्गत्या कथं चिद्वृत्तिरङ्गीकर्तव्या अतो न मान्त्रवर्णिकी देवतेत्याराादुपकारकः। किं च न चायं स्वाहाकारो मन्त्रवर्णाच्छक्यते कल्पयितुं तेन स्वाहाकारदेवताकयागविधानमिदं, न च स्वाहाकाराख्या देवताऽन्यत्रोपयोगिनी या संक्रियेत, तस्माद्दाराादुपकारकमिदं कर्मेति प्राप्त उच्यते—"न देवताविधौ शक्तिर्द्वितीयान्तस्य विद्यते। न च यागविधौ क्षीणे विधत्ते देवता विधिः"॥ न ह्येकार्थविधिसम्भवेऽनेकार्थविधिर्युक्तः, सम्भवति चात्र यागमात्रविधानं स्वाहाकार–शब्दस्य स्वाहाऽग्निमित्यादिमन्त्रसम्बन्धेन नामधेयत्वसम्भवात्, करणत्वं च क्रमसहितात्प्रकरणाल्लभ्यते मन्त्रस्य, न चासामर्थ्यं निश्चितं येन विनियोगो न स्यात् सम्भवति च यागे देवताप्रतिपादकस्य मन्त्रस्य प्रकाशनसामर्थ्यं यदि यागोऽयं न स्याद्यागोऽपि वा देवतान्तरयुक्तः स्यात्ततोऽग्न्यादिवचनस्य मन्त्रस्यासामर्थ्यं निश्चीयेत, न त्वेतदस्ति, तस्माद्योग्यताऽस्तीत्यविहितो विनियोगः। न च द्वितीयान्तस्य देवताविधौ सामर्थ्यं लभ्यते मन्त्रवर्णाद्देवताविधिरिति च नागत्या देवताविध्याश्रयणं, मन्त्रे चाज्यभागादिषु वक्ष्यमाणा देवता यथाक्रमेण संकीर्त्यमानाः प्रत्यभिज्ञायन्त इति तासां स्मरणं दृष्टमेव प्रयोजनमिति नादृष्टार्थत्वकल्पना तस्माद्विकृतिषु सौर्यादिष्वग्न्यादिपदानि लुप्तार्थत्वान्निवर्तन्ते॥

अग्नियागस्याराादुपकारकताऽधिकरणम्।

सू० तथा ज्यभागाग्निरपीति चेत्॥ ८॥

दर्शपूर्णमासयोराज्यभागौ प्रकृत्य श्रूयते "आज्यभागावग्नीषोमाभ्यां यजती"ति योऽयमाग्नेय आज्यभागः स किं प्रधानदेवताया अग्नेः संस्कार? उताराादुपकारक? इति पूर्वेण न्यायेन संस्कारत्वे प्राप्ते उच्यते निगदेष्वा-वाहनादिषु अग्निमावह सोममावह अग्निमावहेत्येवमग्नि-शब्दस्य त्रिः पाठाद्देवतान्तरं गम्यते, सोमाच्च पूर्वं पठ्यमानोऽग्निस्ततः परभाविनः प्रधानाग्नेरन्य इति गम्यते, विधिवाक्ये चाग्नीषोमाभ्यां यजतीत्येकेन पदे-नाग्निः सोमश्च विधीयते, तत्र स्पष्टमेव यागं प्रति गुणत्वं सोमस्य, अन्यत्र देवतात्वाभावात्, तद्वदग्निः प्रधानं स्यात्ततो वैरूप्यं स्यात् सोमापेक्षया-ऽऽज्यभागावित्युद्दिश्याग्नीषोमाभ्यामित्युपादेयम् अग्न्यपेक्षया तद्विपरीत-मिति वचनव्यक्तिभेदात्, तस्मादग्निरपि यागाङ्गत्वेन विधीयते। यागस्तु प्रधानकर्मणाराादुपकारकः तेन सौर्यादिषु नाग्निर्निवर्तते अग्नीषोमीयादि-विकारेष्वप्याग्नेयाज्यभागोऽतिदिश्यते ॥

पशुपुरोडाशयागस्य देव-तासंस्कारकताधिकरणम् ।

सू० पशावपीति चेत् ॥ ९ ॥

अग्नीषोमीये पशौ पशुपुरोडाशः अग्नीषोमीयस्य वपया प्रचर्याग्नी-षोमीयं पशुपुरोडाशमनुनिर्वपतीति, स किं पशोराराादुपकारकः? उत पशु-देवतासंस्कार? इति सन्देहे पशौ पशुपुरोडाशे चोभयत्रापि तद्धितनिर्दे-शाद्विशेषणभूता देवता गुणत्वेन गम्यते, न च गृह्यते विशेषः पशोर्देवताऽङ्गं पुरोडाशे विपरीतमिति उभयत्राप्यपूर्वैव देवतोपादीयत इति न संस्कारत्वम् आसोमं वहन्त्यग्निना प्रतितिष्ठन्ती"ति वाक्यशेषाल्लता सोमः प्रणीयमा-नोऽग्निश्च पशौ देवतापुरोडाशे तु न नियोगतस्तावेवेति प्रमाणमस्ति, तस्मा-दाराादुपकारकः पशुपुरोडाशः, नैवं "दृष्टे स्मरणसंस्कारे सति नादृष्टक-ल्पना । पशुधर्मैश्च सन्दंशात्तदङ्गत्वं सुनिश्चितम्" ॥ ज्योतिष्टोमाङ्गं हि पशुर्न पुरोडाशसंस्कारार्थत्वेन शक्यः शङ्कितुं, पुरोडाशस्तु पशुधर्ममध्ये विधीयमानस्तदङ्गं संस्कृतदेवतासंस्कारेण दृष्टेनोपकुर्वन्नादृष्टार्थतामाल-म्बते, अतो नागृह्यमाणविशेषत्वं, तेन यैव पशोर्देवता लता वाऽन्या वा सैव पुरोडाशेन संस्कर्त्तव्येति विकृतिषु देवतान्तरवतीष्वग्नीषोमौ निवर्तेते ॥

सौर्ये चरुं निर्वपेदित्यत्र चरुश-ब्दस्यौदनवाचिताधिकरणम् ।

सू० चरुर्हविर्विकारः स्यादि-ज्यासंयोगात् ॥ १० ॥

"सौर्ये चरुं निर्वपे"दित्यत्र संशयः किं स्थालीवचनश्चरु-शब्द उतौदनवचन? इति यदाऽपि स्थालीवचनस्तदापि किं स्थालीकपालविकारो हविः श्रपणार्थो? उत पुरोडाशस्य हविषो विकारः प्रदेये? ति तत्र स्थाल्यां लोकप्रसिद्धेस्तद्वचनत्वं, यस्तु याज्ञिकानामोदने प्रयोगः स स्थालीसम्बन्धाल्लाक्षणिकः, न च विपरीतं सम्भवति, ओदनमात्रे प्रयोगाभावात् । येऽपि तस्यौदनवचनत्वं मन्यन्ते तेऽपि न तन्मात्रं वाच्यमाहुः कपाले कटाहे वा श्रपितस्यौदनस्य तद्वाच्यत्वानभ्युपगमात्, तथा चोपरितने ऽधिकरणे वक्ष्यामः तेन स्थालीसम्बन्धनिमित्त एवौदनेऽपि चरु-शब्द इति विशेषणत्वात्स्थाल्येवाऽभिधेया, सा चानदनीया हविष्ट्वायोग्या, श्रपणयोग्यता तु प्रसिद्धैव, तस्मात्स्थाली चरुः कपालविकारश्च सौर्यमिति स्थाल्यां श्रपितस्य हविषः सूर्यसम्बन्धात्स्थाल्येवाऽभिधीयते । तस्येदमिति तद्धितो भविष्यतीत्येकः पक्षः, गृह्णीम एतत्स्थाली चरुरिति स तु हविर्विकारः सौर्यमिति देवतासंयोगात् देवतातद्धितो ह्ययम् अन्यथा याग एवायं न स्यात् वचनाच्चानदनीयेनापि कृष्णलादिनेव यागः क्रियेत, तस्माद्धविर्विकार इति द्वितीयः, सत्यं, चरुर्हविर्विकारः न तु स्थाल्यां चरु-शब्दः किंचोदने चरु-शब्दस्य वेदे याज्ञिकप्रयोगे चौदनवचनत्वावधारणात्, वेदे तावदादित्यः प्रायणीयश्चरुरित्युक्त्वा अदितिमोदनेनेति पश्चादनुवादादोदनवचनत्व तत्र तावद्वाक्ये ऽवगम्यत इत्युक्तं शास्त्रस्था वा तन्निमित्तत्वादित्यत्र, ततश्चानेकार्थत्वमन्याय्यमिति सर्वत्रैवौदनवचनत्वं याज्ञिकाश्चानवस्राावियान्तकृष्णपक्वौदने चरु-शब्दमुपचरन्ति, तेषां च शब्दैकगम्यधर्माधर्मव्यवहारिणां शब्दार्थोविप्लवे तात्पर्यातिशयात्पृथग्जनेभ्यः प्रत्ययिततरत्वात्स एव शब्दार्थः, पाकविशेषनिमित्तश्चौदने चरु-शब्दः, न च स्थालीमन्तरेण स पाको निर्वर्तत इति कृत्वा स्थाल्यादरः, न तु तावता स्थालीवचनत्वं तस्मादोदनेन हविर्विक्रियते ॥

सौर्य्यचरोः स्थाल्यामेवपाकाधिकरणम् ।

सू० "स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतत्वात्" ॥ ११ ॥

स एष चरुः किं कपाले पक्तव्य? उत यत्र क्वचिदुत स्थाल्या? मिति संशयः, चोदकप्राप्तेः कपाले स्यात्, नन्वष्टत्वपरिच्छिन्नं कपालं चोदकेन प्राप्नोति, न च चरुरष्टसु कपालेषु शक्यः पक्तुं सत्यमष्टत्वं प्राप्यते तत्त्वसम्भवान्निवर्त्तते न तु तन्निवृत्त्या कपालमपि निवर्तितुमर्हति तस्मात्कपाले स्यात्, नैवम् अप्राकृतकार्यत्वात् प्रकृतौ हि कपालोष्मणा हविः पाको निवर्तते चरुस्तूदकगतोष्मणा पक्तव्यः तत्र कपालमुदकधारणार्थमुपादीयमानमप्राकृतकार्यं स्यादिति न चोदकानुग्रह, तस्माद्यत्र क्वचित्पक्तव्य इति प्राप्ते ब्रूमः "स्थाल्यामेव स्यात् तस्य हि चरुत्वनिमित्तः पाको निवर्तते नान्यत्र तस्मात्स्थाल्यां स्यात् यद्योदनवचनेऽपि चरुशब्दे स्थाल्यामेव पाकस्ततः पूर्वाधिकरणे स्थाली कपालविकार इति पक्षस्यौदनेन हविर्विक्रियत इति पक्षस्य च कोऽनुष्ठाने विशेषः, उभयथाऽपि स्थाल्यां पक्वस्य हविष्ट्वादित्याशङ्क्य ॥

सौर्य्यचरौ पेषणाभावाधिकरणम् ।

सू० "तस्मिन्पेषणमनर्थलोपात्स्यादित्यादिभि." ॥

सूत्रैः प्रयोजनमुच्यते स्थाल्यां हि कपाले निवर्त्तितेऽपि चोदकप्राप्तः पुरोडाश एव स्थाल्यां अर्पितो हविः स्यात्, ततश्च पेषणसंयवनोपधानादीनि कर्त्तव्यानि स्युः, सिद्धान्ते त्वोदने तेषामनर्थलोपादकरणम् एवं प्रयोजनसूत्राणि व्याख्याय पुनरधिकरणान्तरत्वेन व्याख्यातवान्, यो नाम चरावपि सम्भवादविघातवत् पेषणादीनि कर्त्तव्यानीति मन्यते तस्य बुद्धिर्मन्दविषन्यायेन व्यावर्त्यते प्रयोजनप्रयुक्तत्वात्तेषां चरौ च तदभावादकरणं पेषणसंयवनोपधानादीनाम्, उपधानं तु याज्ञिकाः कपालोपधानकाले तेनैव मन्त्रेण स्थाल्याः कुर्वते, न त्वयुक्तं, न च स्थालीकपालकार्यं वर्तते उदकधारणार्थत्वात्, अत उपधानस्य द्वयोरावृत्त्या आसादनमप्यर्थकृतत्वान्न चोदकेन प्राप्यते ॥

इति श्रीशास्त्रदीपिकायां दशमाध्यायस्य प्रथमः पादः ॥ १ ॥

# खण्डनखण्डखाद्यम् ॥

## चतुर्थः परिच्छेदः ।

(*Continued from page* 378. VOL. XII)

मू० [a]विशिष्टप्रविष्टमपि हि नित्यत्वं नित्यत्वमेव नापि द्वितीयः [b]सामान्यस्य समवायस्य च नित्यत्वाभावप्रसङ्गात [c]आत्मत्वादौ व्यक्त्यभावायत्तस्यापि विशिष्टाभावस्यासंभवात् [d]तस्य च कदाचिदसत्त्वानङ्गीकारे तदनित्यत्वस्य वक्तुमशक्यत्वात् [e]तद्ग्राहिणश्च प्रत्ययस्यैककालिकस्य मिथ्यात्वेऽविशेषात्सार्वकालिकस्य मिथ्यात्वप्रसङ्गेन सर्वथा तदसत्त्वापत्तेः ।

टी० ॥ ननु नित्यत्वे नित्यत्वं न वर्त्तते येनात्माश्रयः स्यादपि तु नित्यत्वविशिष्टे इत्यत आह– [a]"विशिष्टे"ति ॥ [b]"सामान्यस्ये"ति । अनेकसमवेतत्वस्य लक्षणस्यानित्यत्वं सामान्यानित्यत्वात् भवेत्समवायानित्यत्वाद्वा उभयं च न त्वयेष्यते इति तद्घटितं लक्षणमपि कथमनित्यं स्यादित्यर्थः । नन्वनेकवृत्तित्वमित्यत्रानेकव्यक्तिरपि विशिष्टघटिकेति तदनित्यत्वात्तल्लक्षणमनित्यं स्यादित्यत आह–। [c]"आत्मत्वादावि"ति । आत्मनां व्यक्तीनामपि नित्यत्वादित्यर्थः ननु सामान्यतद्व्यक्तितत्समवायानां प्रत्येक नित्यत्वेपि विशिष्टं यल्लक्षणस्वरूपं नित्यत्वे सत्यनेकवृत्तित्वं तद्वानित्यमस्तु को दोष इत्यत आह–। [d]"तस्ये"ति । तस्य विशिष्टस्यानित्यत्वं तदा स्याद्यदि कदाचित्तदसत्त्वं स्यात्र त्वेवमित्यर्थः ॥ ननु तस्य कदाचिदसत्त्वमेवास्तु को दोष इत्यत आह–। [e]"तद्ग्राहिणि" इति । यदा लक्षणं नास्ति तदा लक्षणविशिष्टलक्ष्यग्रहश्चेद्भ्रमस्तदा सर्वत्रैव भ्रम एव स्यादिति लक्षणस्य नित्यमसत्त्वमेव पर्यवसन्नमित्यर्थः ॥

मू० [a] एकस्य च सत्यत्वेऽविशेषात्सर्वसत्यतायां कदाचिदपि तदसत्त्वं नास्तीति * [b] एकदा तत्संबन्धेन तदुपलक्षितस्यान्यदापि विद्यमानत्वात्तथात्वम् ? * —इति चेन्न, [c] ताहंशोपलक्ष्यासम्भवा [d] द्यक्तीनां भेदादित्यनित्यत्वानुपपत्तिरेवे [e] ति । [f] एतेन नित्यत्वमन्यचापि प्रतिवचनीयं [g] केचानेन लक्षणेन व्यवच्छिद्यन्ते * विशेषादय ? * —इति चेन्न, विशेषा एव केऽभिधीयन्ते तच नित्येष्वेव द्रव्येष्वेव वर्त्तन्त एव ये ते विशेषा इत्यलक्षणम् ॥

टी० ॥ ननु लक्षणविशिष्टलक्ष्यप्रत्ययस्तत्सत्त्वकाले सत्य एवेति कथं सर्वकालिकं लक्षणसत्त्वमत आह—। [a] "एकस्ये"ति तर्हि विषयाबाधात् सर्वतत्प्रत्ययथाथार्थ्ये लक्षणं सर्वकालस्थितीतिकथमनित्यं स्यादित्यर्थः ॥ ननु लक्षणं स्वाकालेपि लक्ष्यमुपलक्षयतीति तदापि तद्विशिष्टप्रत्ययः सत्य एवेति शङ्कते—। [b] 'एकदे"ति । सामान्यानां बहूनामेकरूपाभावात्तल्लक्षणेन किमवच्छिन्नं लक्ष्यमुपलक्षितं स्यादित्याह—। [c] "ने"ति । [d] "व्यक्तीनामि"-ति । लक्षणा सामान्यानामित्यर्थः तथाच लक्षणस्यानित्यत्वानुपपत्तिरि-त्याह—। [e] "इती"ति ॥ [f] "एतेने"ति । आकाशादीनां नित्यत्वं यदि नित्यं तदात्माश्रयः । अनित्यं चेत्तदाकाशस्याप्यनित्यत्वमेव स्यादिति सर्वनित्यत्वं खण्डनीयमित्यर्थः "नित्यत्वघटितं लक्षणान्तरमप्येवं खण्ड्यमित्यर्थः" इत्यन्ये आगामिखण्डनं सामान्यखण्डनेन सङ्गमयति—। [g] "केचानेने"ति । नित्येष्वेवेत्यन्ययोगव्यवच्छेदेन द्रव्यगुणकर्मणां व्यवच्छेदः तेषामनित्येष्वपि वृत्तेः द्रव्येष्वेवेत्यन्ययोगव्यवच्छेदेन सामान्यानां व्यवच्छेदः तेषामद्रव्येष्वपि वृत्तेः वर्तते एवेत्ययोगव्यवच्छेदेन ज्ञानसुखादीनां व्यवच्छेदः तेषां स्वासत्त्वकाले वृत्तेरयोगोपीत्यर्थः ॥ ननु गुणादीनां सामान्यादीनां नित्येष्वेवेत्यनेन व्यवच्छेदात् किं पदान्तरेण नहि गुणा नित्येष्वेव वर्त्तन्ते न वा

सामान्यानि तथाच गुणत्वेन सामान्यत्वेन च तादूप्ये(१)सर्वगुणसामान्य-व्यवच्छेदः सिद्ध एवेति चेन्न नित्यत्वस्य धर्मस्य व्यवच्छेदार्थे "द्रव्येष्वेवे"ति करणात्

मू० [a]आत्मत्वादिना व्यभिचारात् * [b]नित्यान्तरेऽसत्त्वान्न तत्सर्वंच नित्ये वर्त्तते विशेषास्तु नैवं नित्ये वर्त्तन्त एवेति नियमात्? *—इति चेन्न, [c]प्रतिविशेषमव्याप्त्याऽलक्षणत्वात् * [d]यज्जातीया एवमिति लक्षणार्थे? *—इति चेन्न, जातेरनङ्गीकारात * जातीयेत्यस्मात्पदात् उपाधिरेव तथा विवक्षित? *—इति चेन्न, [e]तस्येतरव्यावृत्तस्याधिगतौ व्यर्थं तदुपजीविलक्षणमिदं तत एव विजातीयव्यावृत्तिप्रतीतेः इतरव्यावृत्तस्य चानधिगतौ लक्षणस्य दुरवधारणत्वापत्तेः इतरव्यावृत्ततया [f]तज्जातीयत्वस्याप्रतीतेः ॥

टी० ॥ तादूप्येण वृत्त्यविवक्षायां दोष(२)माह—। [a]"आत्मत्वादी"-ति ॥ ननु नित्येष्वेव द्रव्येषु वृत्तेरयोगो वर्त्तते एवेत्येवकारेण व्यवच्छिद्यते तथाचाकाशादाववर्तमानेनात्मत्वादिना कथं व्यभिचार इत्याह—। [b]"नित्यान्तरे"ति। प्रतिस्वं विश्रान्तविशेषाव्याप्तिरेवं सतीत्याह—। [c]"प्रती"ति ॥ ननु विशेषत्वावच्छिन्नानां न नित्ये द्रव्ये वृत्तेरयोग इति शङ्कते—। [d]"यज्जातीया"इति। यावद्विशेषवृत्तिरुपाधिर्न कश्चित्सिद्ध इत्याह—। [e]"तस्ये"-ति ॥ [f]"तज्जातीयत्वस्ये"ति । यावद्विशेषनिष्ठोपाधेरित्यर्थः ॥

( इत्यमये )

(१) तादूप्ये=नित्याऽनित्योभयवृत्तित्व इत्यर्थः ।

(२) दोषमाह=वर्तन्त एवेति विशेषणमदत्त्वा दोषमाहेत्यर्थः ।

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

(*Continued from page* 404. VOL. XII.)

"नेयङुवङ्स्थानावस्त्री" ॥ इयङुवङोः स्थानमनयोरिति वैयधिकरण्येपि गमकत्वाद्बहुव्रीहिः । अन्ये त्वधिकरणे ल्युटं विधाय कर्त्तरि षष्ठ्याः समासं कुर्व्वन्ति । अथ कथं विमानना सुभ्रु कुतः पितुर्गृहे इति । प्रमाद एवायम् । अन्ये त्वाहुः । अनित्योयं प्रतिषेधः सञ्ज्ञाविधौ सञ्ज्ञात्वात् । तथा च परिभाषा सञ्ज्ञाविधिमनित्यं द्विर्बहुञ्च सुबद्भुमिति । अत्र च ज्ञापकं नदो दावचनमित्याहुः ॥

"वामि" ॥ संहितासाम्येपि षष्ठीबहुवचनस्य ग्रहणं न तु द्वितीयैकवचनस्य नदीकार्य्याभावात्, नापि सप्तम्येकवचनस्य तस्य नदीसञ्ज्ञोत्तरकालं 'ङेराम्नद्याम्नीभ्य' इति विधानात् । न चामीति विषयसप्तमी युज्यते । तस्मिन्निति निर्द्दिष्टे इति वचनात्, तदाह । 'आमि परतो वा नदीसंज्ञौ न भवत इति' । 'श्रीणामिति' । नदीसञ्ज्ञापक्षे 'ह्रस्वनद्यापो नुट्' ॥

"ङिति ह्रस्वश्च" ॥ यद्यत्र ह्रस्वविशेषणार्थं यू इति नानुवर्त्येत तदेहापि स्याद् मात्रे दुहित्रे इति, तस्मात्तदिहानुवर्त्तते । नन्वेवमपि विशेषणं न प्रकल्पते यू ह्रस्वाविति, यदि यू न ह्रस्वौ अथ ह्रस्वौ न यू, यू ह्रस्वौ चेति विप्रतिषिद्धम्, आहायं यू ह्रस्वाविति, तत एवं विज्ञास्यामो य्वोः ह्रस्वाविति, कौ च य्वोः ह्रस्वौ सवर्णौ तदाह । 'ह्रस्वश्च य्वोः सम्बन्धी यः स्त्र्याख्याइति' । अत्रापि समुदायधर्मस्यावयवआरोपात् ह्रस्वयोः स्त्र्याख्यत्वं, तदन्तविशेषणं वा, 'इयङुवङ्स्थानौ च यू इति' । नन्वेकं यूग्रहणमनुवर्त्तते तच्च ह्रस्वविशेषणएवोपक्षीणं तत्कथं पुनर्यू इति लभ्यते, उच्यते, चकारोत्र क्रियते स संज्ञिनः समुच्चयार्थः, इयङुवङ्स्थानाविति

प्रकृतं य्वोरेव च तत्स्थानत्वमित्यर्थाद् यू इति लभ्यते । स्वरितत्वादनुवृत्तं तु यू इत्येत् ह्रस्वविशेषणमिति न कश्चिद्दोषः ॥

"शेषो घ्यसखि" ॥ आ धषाद्इत्यस्मिन्नधिकारे शिष असर्वोपयोगे, विपर्वोऽतिशयइति पठ्यते, तत्र णिच्पक्षे कर्म्मण्येरच्, अन्यथा घञ् । 'ह्रस्व इति वर्त्तत इति' । अन्यथा ग्रामण्यादेरपि स्याद् अस्त्र्याख्यत्वेन शेषत्वाद्, यस्य नदीसंज्ञा न विहिता तस्य शेषत्वे मात्रे [1]इत्यत्रापि स्यादिति मत्वा पृच्छति । 'कश्चेति' । इतरस्तु ह्रस्वविशेषणार्थे यू इत्यस्यानुवृत्तिमाश्रित्याह । 'ह्रस्वमिति' । ह्रस्वान्तमित्यर्थः । यदाह । 'इवर्णावर्णान्तमिति' । क्व चित्तु ह्रस्वेवर्णावर्णान्तमिति पाठः, ह्रस्वात्मको य इवर्ण उवर्णश्च तदन्तमित्यर्थः । ह्रस्वेन शेषस्य विशेषणत्वात् तदन्तविधिः, एवं त्रासखीति सखिशब्दस्य प्रतिषेधो न तत्सम्बन्धिन इकारस्य, किं सिद्धं भवति इह शोभनस्सखा अस्य सुसखिः सुसखेरागच्छतीति घिसञ्ज्ञा सिद्धा भवति, नह्ययं समुदायः सखिशब्दः, तदन्तविधिश्च ग्रहणवता प्रातिपदिकेन प्रतिषिद्धः, ह्रस्वमात्रस्य तु संज्ञाविधौ सखिशब्दसम्बन्धिनः प्रतिषेधादिहापि न स्यात्, यदि तदन्ते निषेधो न भवति 'यस्येति चे' त्यत्र इवर्णस्य ईति यदुदाहरणं सखिशब्दात् 'सख्यशिश्वीति भाषायामि' ति ङीषि सखि ई इति स्थिते इकारस्य लोपः, असति तु लोपे सवर्णदीर्घस्य पूर्वं प्रत्यन्तवद्भावात् सखीमतिक्रान्तोऽतिसखिः अतिसखेरागच्छतीत्यत्रासखीति घिसंज्ञाप्रतिषेधः स्यादिति तन्नोपपद्यते, सत्यप्यन्तवद्भावेन सखिग्रहणेन ग्रहणे समुदायस्य सखिशब्दादन्यत्वात्, यदा खलु पुल्लिङ्गोऽप्यतिसखिरिति भवति तदा कः प्रसङ्गो यदन्तवद्भावेन स्यात्, एवं तर्हि तत्र सूत्रे इकारलोपस्य तद्धितएवोदाहरणं न स्त्रीति परतः, यत्तु तत्रोदाहरिष्यते सोऽनास्थावादो द्रष्टव्यः । शेषग्रहणं चिन्त्यप्रयोजनम् । एकसंज्ञाधिकारादेव हि स्त्र्याख्यस्य ङिति नदीसंज्ञापक्षे घि संज्ञा न भविष्यति ॥

"पतिः समासएव" ॥ 'सिद्धायामिति' । प्राप्तायामित्यर्थो न पुन-

(१) तुह्निइत्यधिकं च पुस्तके ।

निष्पन्नायां, नहि निष्पन्नायां नियमेन निवृत्तिः शक्या वक्तुं, 'पतिशब्दः समास एव घिसंज्ञो भवतीति'। किं पुनरिदं समासावयवस्य पतिशब्दस्य संज्ञा विधीयते आहोस्वित्तदन्तसमासस्य, यदि समासस्य पतिश्च गृहं च पतिगृहे अत्र 'द्वन्द्वे घी' ति पूर्वनिपातो न प्राप्नोति, अथ पतिशब्दस्य, प्रजापतिनेत्यादिकस्य घिसंज्ञाकार्यं न प्राप्नोति । अथ वा पतिः समास एवेति नियमेन किं व्यावर्त्यते, असमस्तः पतिशब्दः पतिशब्दस्य व्यावर्त्यमानो केन तदन्तस्य व्यावर्त्यते पतिशब्दसम्बन्धी य इकारस्तदाश्रया सा घिसंज्ञा भवति यदि समास एवेत्यर्थो विवक्षितः, तेन समासे पतिशब्दस्यानन्त्यस्यापि भवति पतिश्च गृहश्च पतिगृहे 'द्वन्द्वे घी' ति पूर्वनिपातः, पतिशब्दान्तस्य समासस्यापि भवति प्रजापतिनेति, अत एव वृत्तिकृता पतिशब्दानुरूपसूत्रार्थो दर्शितः, उदाहरणन्तु तदन्तानुरूपन्दर्शितम् । अथ कथ

नष्टे मृते प्रव्रजिते क्लीबेऽथ पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥

इति । छन्दोवदृषयः कुर्वन्ति । अथ पूर्वत्रैवासखिपती इति कस्मान्नोक्तम् उत्तरत्र पत्युरेव विकल्पो यथा स्यात् । किञ्च असखिपती इत्युच्यमाने पतिशब्दस्य समासेपि न स्यात् पतिगृहे इति, तथा च सखिशब्दस्य समासावयवस्यापि घिसंज्ञाया अभावात् सखिगृहे गृहसखायाविति वानियमः पूर्वनिपातस्य ॥

"षष्ठीयुक्तश्छन्दसि वा" ॥ षष्ठ्यन्तेन शब्देनेति[1] । षष्ठ्या विभक्त्या युक्त इति तु न भवति तथा हि षष्ठ्यामित्येव ब्रूयात् युक्तग्रहणमनर्थकं स्यात् । 'षष्ठीग्रहणं किमिति' । अत्र केचिद् योगस्यावर्जनीयत्वाद्युक्त इत्येव विशिष्टो योगः प्रत्येष्यतइति मन्यते, वचनमन्तरेण विशेषो दुर्ज्ञान इत्युत्तरम् । अयमत्र योगविभागः कर्त्तव्यः, षष्ठीयुक्तः छन्दसि, षष्ठीयुक्तः पतिशब्दः छन्दसि घिसंज्ञो भवति, ततो वा, छन्दसीत्येव

(१) शब्देनेति काशिकामुद्रितपुस्तके नास्ति ।

यच्च यावच्च शास्त्रे कार्यं तत्सर्वं छन्दसि विकल्पेन भवति, सर्वे विधयश्छन्दसि विकल्प्यन्तइत्यर्थः । उभयत्र विभाषा चेयं, बहुलं छन्दसीत्यादिकस्त्वस्या एव प्रपञ्चः ॥

"ह्रस्वं लघु" ॥ इह सर्पिष्टुमित्यत्र 'ह्रस्वात्तादौ तद्धित' इति षत्वार्थं ह्रस्वसंज्ञया गुरुसंज्ञायाः समावेश इष्यते, अततक्षदित्यत्र तु सन्वद्भावनिवृत्त्यर्थं लघुसंज्ञाया गुरुसंज्ञया बाध इष्यते ऽतो ह्रस्वप्रदेशेषु संयोगपरस्यापि मात्रिकस्य ग्रहणं यथा स्यात् लघुप्रदेशेषु माभूदिति यथाप्रदेशं संज्ञाद्वयं कर्त्तव्यम् ॥

"यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्" ॥ 'कर्तेति'। लुट्। 'करिष्यतीति'। लृट्। 'अकरिष्यदिति'। 'लृङ्, स्यतासी लृलुटोः' इतीट्। 'यस्मादिति संज्ञिनिर्देशार्थमिति' । ननु तदादीत्यनेन संज्ञी निर्दिश्यते न यस्मादित्यनेन तत्राह। 'तदादीति' 'संबन्धादिति'। सति हि यस्मादित्यस्मिन् तदादीत्यनेन संज्ञा निर्देष्टुं शक्यते नान्यथा सति हि परामर्शनीये तदित्यनेन परामर्शो भवति, अन्यथा तदादीत्यसंबद्धमेव स्यात्। 'नेर्विश' इत्युपसर्गाद्विधिरस्तीति'। यद्यपि निरत्र धातुविशेषणं नेः परो यो विशिरिति धातोस्तङ्विधानात् नियमविधिरपि धातोरिव नोपसर्गात्तथाप्युपसर्गस्यापि तत्रान्वयोस्तीति मत्वा एवमुक्तम्। 'विधिग्रहणं किमिति'। यस्मात्प्रत्ययइत्युक्ते साकाङ्क्षत्वाद् यस्माद्विधीयतइत्यध्याहरिष्यतइति प्रश्नः, परशब्दस्याप्यध्याहारः स्यादित्युत्तरम् । 'स्त्री इयतीति' । इदं परिमाणमस्याः 'किमिदम्भ्यां वो घः' इयादेशः 'इदंकिमोरीश्की' 'यस्येति चे' ति लोपः, 'उगितश्चे' ति ङीप्, स्त्रीशब्दात् सोर्हल्ङ्यादिलोपः, अत्र इयच्छब्दे परतो ऽङ्गसंज्ञा स्याद् भसंज्ञा चेति तन्निमित्तो यस्येति लोपः प्रसज्येत, इशादेशस्य यस्येति लोपस्तस्याभीयस्याप्यसिद्धत्वं न भवति, प्राग्भादसिद्धत्वमिति केषांचिदभ्युपगमात् स्थानिवद्भावोऽपि नास्ति पदान्तरनिरपेक्षे हीयतीशब्दे व्युत्पाद्यमाने स्त्रीशब्दो ऽनादिष्टादचः पूर्वः। ननु क्रियमाणे विधिग्रहणे स्यादेव संज्ञा, अस्त्येव ह्यत्र स्त्रीशब्दाद् विभक्तेः प्रत्ययस्य विधिरियत्प्रत्ययश्च परः । नैष दोषः।

सति विधिग्रहणे प्रत्यासत्तेर्यस्मात्प्रत्ययो विहितस्तस्मिन्नेव प्रत्यये परतस्तदाद्यङ्गमित्यर्थो भवति, इह च स्त्रीशब्दाद्विहितो लुप्तः अयमाणश्च न ततो विहितस्तदादिग्रहणमनर्थकं यत्तदोर्नित्यसम्बन्धादेव यस्मात्प्रत्ययो विधीयते तदङ्गमित्यर्थलाभाद् अत आह । 'तदादिवचनमिति' । स्यादयो विकरणाः, आदिशब्देन शबादेर्ग्रहणम्, असति तदादिग्रहणे यच्छब्दवत्तच्छब्दस्याध्याहाराद् यस्मात्प्रत्ययविधिस्तस्यैव संज्ञा स्याद् न तु तत आरभ्य आ तस्मात्प्रत्ययाद्यः संघातः तस्य, ततश्च करिष्यावः पचावः दीव्यावः तुदाव इत्यादा 'वतो दीर्घो यञी' ति दीर्घो न स्यात् स्याद्यन्तस्य समुदायस्यानङ्गत्वात्, ततश्च पापाव इत्यादावेव स्यात्, पय गतौ यङ्लुगन्तस्य 'लोपो व्योर्वली' ति लोपे रूपम् । 'कुण्डानीति' । यदा नुम् परादिस्तदा 'सुपि चे' ति दीर्घः सिध्यति, दधीनीत्यादावनकारान्तत्वान्न सिध्यति पूर्वान्तपक्षे सामानीत्यादिवत्सिध्यति, यदा त्वभक्तपक्षः तदैतत्प्रयोजनं तदादिग्रहणस्य, पूर्वान्तपक्षस्तु तत्र स्थित इत्यप्रयोजनमेतत् । ननु च 'प्रातिपदिकान्तनुम्विभक्तिषु चे' ति नुम्ग्रहणं कुर्वतः सूत्रकारस्याभक्तो नुमित्यभिप्रायो लक्ष्यते ऽन्यथा माषवापाणीत्यत्र प्रातिपदिकान्तत्वाद्विभक्तिनकारत्वाद्वा णत्वसिद्धेरनर्थकं तत्स्यात् । नैतत्सूच्यते, तत्र हि समासप्रातिपदिकान्तो न गृह्यते किं तर्हि पूर्वपदाधिकत्यनुवृत्तेस्तदाक्षिप्तस्योत्तरपदप्रातिपदिकस्यान्तो गृह्यते समुदायभक्तश्च नुम् उत्तरपदप्रातिपदिकान्तो न भवति ततश्च यथा गर्गाणां भगिनी गर्गभगिनीत्यत्र णत्वं न भवति तथा नुमोपि न स्यात् । न तर्हीदानीमिदं भवति गर्गभगिणीति, भवति यदैतद्वाक्यं भवति गर्गाणां भगो गर्गभगः सोस्या अस्तीति तदा ह्यनुत्तरपदस्थत्वात् पूर्व्वपदात्सञ्ज्ञायामेवेति नियमाभावः, तद्यथा मातृभोगाय हितो मातृभोगीण इति, एवमपि माषान् वप्तुं शीलमस्याः माषवापिणी अत्र न प्राप्नोति ङीबन्त्रोत्तरपदस्यान्तो न तु नकारः, नकार एवात्रान्तः कथं गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः, अतः स्याद्यर्थं क्रियमाणं तदादिग्रहणं नुम्यपीष्टं साधयतीति मत्वा नुम्ग्रहणं कृतं, यदि तदादीत्युच्यते कर्त्तेत्यादौ न प्राप्नोति

नह्यत्र तदादि किञ्चिदस्ति किं तर्हि तदेव, व्यपदेशिवद्भावाद्भविष्यति, वाक्यभेदाद्वा, यस्मात्प्रत्ययविधिस्तदङ्गं, तदादि च, इह प्रकृत्यादि प्रत्यये-ङ्गमिति इयता सिद्धे गुरुनिर्देश एव लिङ्गं वाक्यभेदस्य, अथ कथं भिनत्ति संचस्करतुरित्यत्र सनुम्कस्य ससुट्कस्य च समुदायस्याङ्गसञ्ज्ञा, कथं च न स्याद् इह तस्य वा ग्रहणं भवति तदादेर्वा न चेदं तत्रापि तदादि । इदमपि तदादि कथं नैवं विज्ञायते स आदिरस्य तत्तदादीति कथं तर्हि तस्यादिस्तदादिस्तदादिरादिरस्येति तदापि उष्ट्रमुखवदेकस्यादिशब्दस्य लोपः, एवं हि विज्ञायमाने भिनत्तीत्यत्र यस्मात्प्रत्ययविधिर्भिदेस्तस्य आदि-र्भकारः स आदिः सनन्तस्य समुदायस्येति सिध्यति, एवं संचस्करतुरित्य-त्रापि तन्मध्यपतितस्तद्ग्रहणेन गृह्यतइति चात्रोभयत्र सञ्ज्ञासिद्धिः । अथा-त्र श्नमः पूर्वस्य भिशब्दस्याङ्गसञ्ज्ञा कस्मान्न भवति, भवतु को दोषः, गुण-स्तावत् 'सार्वधातुकमपिद्' ति ङित्त्वादेव न भविष्यति, इह अनक्ति भनक्ति 'अतो दीर्घो यञी' ति दीर्घः प्राप्नोति, तिङीति तत्र वर्त्तते । अथ वा यस्मा-त्प्रत्ययविधिरिति वचनाद्यस्मिन् प्रत्यये विधीयमाने यत्पञ्चम्या निर्दिष्टं तत्र तदेवाङ्गं, श्नमि च विधीयमाने ये पञ्चम्या निर्दिष्टा रुधिरादयो न ते तत्र परतो येऽत्र श्नमि परतोभिप्रभृतयो न ते पञ्चम्या निर्दिष्टा इति सञ्ज्ञाभावः । 'स्त्र्यर्थमिति' । चतुर्थी तदर्थे इति समासः, अस्ति ह्यत्र चतुर्थ्येकवचनस्य, विधिरित्यसति पुनः प्रत्ययग्रहणे ऽङ्गशब्दस्य सम्बन्धि-शब्दत्वाभावात् वस्तुतोङ्गमात्राश्रय इयङ् स्यात् सति तु सप्तमी-निर्दिष्टप्रत्ययग्रहणेङ्गशब्दः सम्बन्धिशब्दो भवति ततश्चाङ्गस्येयङ् भवति अचीत्युक्ते यदपेक्षं यदङ्गं तत्र तस्माज्जीदाविति विज्ञानादर्थशब्दे परत इयङुवङौ न भविष्यतः । किं पुनरङ्गसंज्ञायाः प्रयोजनमङ्गस्येत्यधिकारः, नैतदस्ति, यदेतदङ्गस्येत्येतत् प्रत्ययइति वक्ष्यामीति, एवमपि प्राकरोत् प्रेहिष्ट सोपसर्गस्याडाटौ प्राप्नुतः, नैष दोषः, प्रत्ययग्रहणे यस्मात्स विहि-तस्तदादेर्ग्रहणं भवतीति, क्क पुनरेषा परिभाषा, नन्वेषाप्यत्रैव योगविभा-गेन सिद्धा यस्मात्प्रत्ययविधिस्तदादि प्रत्ययइत्येतावानेको योगः प्रत्यये गृह्यमाणे यस्मात् तस्य विधिस्तदादि गृह्यतइत्यर्थस्तेन ङिनत्यादि.

रित्यादौ यत्र प्रत्ययः सप्तम्या निर्दिश्यते तत्र तदादेर्ग्रहणं तेन देवदत्तो गार्ग्य इति संघातस्य ञित्स्वरो न भवति 'सुप आत्मनः क्यजि'त्यत्र तु सुपा कर्म्मणो विशेषणात्तदन्तविधौ सिद्धे महान्तं पुत्रमित्यादावतिप्रसङ्गे तदादिनियमेन व्युदासः, यदि तदादिनियमः क्रियते स्त्रीप्रत्ययेपि स्यात् ततः व्यङन्तस्य पूर्वपदस्योच्यमानं संप्रसारणं परमकारीषगन्धीपुत्र इत्यत्र न स्याद् यत्पूर्वपद न तद्व्यङन्तं यत् व्यङन्तञ्च तत्पूर्वपदं, नैष दोषः । 'नेयङुवङ्स्थानावस्त्री' त्यतो ऽस्त्रीत्यनुवर्त्तते तच्च स्वरूपपदार्थैकत्वेन प्रकृतमपीहार्थपदार्थैकं संपद्यते, तदयमर्थो भवति प्रत्ययग्रहणे तदादि गृह्यते स्त्री चेन्नाभिधीयते । स्त्रीप्रत्यये तदादिनियमो नास्तीत्यर्थः । यद्येवमतिकारीषगन्ध्यापुत्रः, अत्रापि प्राप्नोति, प्रधानं या स्त्री तस्यामेव तदादिनियमप्रतिषेधो ऽप्रधानस्त्रियां तु तदादिनियमो भवत्येव तेन यावानंशः स्त्रियं प्राधान्येन प्रतिपादयति तावतः स्त्रीप्रत्ययान्तस्य ग्रहणं भवति तद्ग्रहणे तु गतिकारकपूर्वस्यापि ग्रहणं भवतीति 'गतिरनन्तर' इत्यनन्तरग्रहणं ज्ञापयिष्यते ॥

"सुप्तिङन्तम्पदम्" ॥ 'सुप्तिङिति प्रत्याहारग्रहणमिति' । सुबिति सप्तमीबहुवचनस्य ग्रहणं न भवति यदि स्यात् ङिसंबुध्योः पदत्वाभावादेव नलोपस्याप्रसङ्गात् 'न ङिसंबुध्यो' रिति प्रतिषेधोऽनर्थकः स्यादिति भावः । सप्तमीबहुवचनस्य च पकारेण प्रत्याहारो न कपः पकारेण [1]तस्यानन्यार्थत्वात् । न च स्वरार्थः पकारः, यदा ह्यत्र कपः पकारेण प्रत्याहारस्तदा स्वरविधावपि तथैवेति सुप्त्वादेव स्वरसिद्धेः पित्त्वमनर्थकमेव स्यात्, यदि च सुब्ग्रहणेषु कपः पकारेण प्रत्याहारोभिमतः स्यात् सुप्यसर्वनामस्थानइत्येव ब्रूयात् स्वादिष्विति गुरुनिर्देशो ऽनर्थकः स्यात् । 'ब्राह्मणा इति' । पदत्वाद्रुत्वविसर्जनीयौ । ननु यस्मात्प्रत्ययविधिस्तदादीत्यनुवृत्तस्य सुप्तिङ्भ्यां विशेषणादेवं तदन्तस्य ग्रहणं सिद्धं नार्थोन्तग्रहणेन तत्राह । 'पदसंज्ञायामिति' । इहान्तग्रहणे सुप्ति-

(१) सुपः पकारस्येति । पा॰ २ ।

ङामेव संज्ञा स्यात् ततश्चाग्निष्वित्यादौ 'सात्पदाद्योः' रिति षत्वनिषेधः स्यादित्याशङ्क्य क्रियमाणमन्तग्रहणमुक्तस्यार्थस्य ज्ञापकं संपद्यते। 'गौरीब्राह्मणितरेति'। तरबन्तस्य घसंज्ञायां सत्यां तत्रोत्तरपदे परतो गौरीशब्दस्य पुंवद्भावं बाधित्वा परत्वाद् ध्रस्वत्वं स्यात् तरपि तु परतो ब्राह्मणीशब्दस्य न स्यात् ततश्च गौरिब्राह्मणीतरेति स्यात् गौरब्राह्मणितरेति चेष्यते, वृत्तौ तु समासप्रदर्शनपरं वाक्यमुपात्तम्, न त्वेतत्कार्योदाहरणे गौरब्राह्मणितरेति समासे रूपम् ॥

"नः क्ये" ॥ 'क्यइति क्यच्क्यष्क्यङामिति'। सञ्ज्ञायां समजेत्यस्य तु क्यपो ग्रहणं न भवति प्रयोजनाभावात्, न तावन्मन्येत्यत्र नलोपः प्रयोजनं सत्यपि पदत्वे ऽप्रातिपदिकत्वात् सुबन्तमित्यनुवृत्तेर्वा क्यपि विध्यर्थमेतच्च भवति। ननु क्यजादयः सर्वे सुबन्ताद्विधीयन्तइति प्रत्ययलक्षणेन सिद्धं पदत्वं नार्थ एतेन तत्राह। 'सिद्धे सतीति' 'नान्तमेवेति'। क्यएव नान्तमित्येवं तु विपरीतनियमो न भवति 'न ङिसम्बुध्योः'-रिति निषेधात्। 'वाच्यतीति'। अत्र पदत्वाभावात्कुत्वजश्त्वे न भवतः। ये तु गोसमानाक्षरनान्तादेव क्यज् भवति नान्येभ्य इत्याहुस्तेषां क्यङ्क्यषोरेव नियमस्य व्यावर्त्यं प्रदर्शनीयं तपस्यतीत्यादौ ॥

"सिति च" ॥ 'भवदीय इति'। पदत्वाज्जश्त्वं, 'ऊर्णायुरिति' पदसञ्ज्ञाया निरस्तत्वाद् यस्येति लोपाभावः, एवमृत्विय इत्योर्गुणो न भवति, चकारो ऽनुक्तसमुच्चयार्थस्तेन भुवद्धाद्यतोर्मतोश्छन्दसि तसौ मत्वर्थइति भसञ्ज्ञां बाधित्वा पदसञ्ज्ञा भवति तेन भुवद्वन्नः धारयद्वन्नः ॥

"स्वादिष्वसर्वनामस्थाने" ॥ 'स्वादिष्विति' 'सुशब्दादेकवचनादिति'। सप्तमीबहुवचनादारभ्य ग्रहणं न भवति असर्वनामस्थानइति निषेधात्, यदि हि राजश्रित इत्यादौ सर्वनामस्थाने सुबन्तम् इति प्राप्तायाः सञ्ज्ञायाः निषेधोभीष्टः स्यात् तत्रैवासर्वनामस्थानइति ब्रूयात्। अथ राजवानित्यादौ अन्तर्वर्तिनिषेध इति चेत् न, लुमता लुप्ते प्रत्ययलक्षणाभावात्, 'तसौ मत्वर्थे' इति पदसञ्ज्ञाबाधनाय भसञ्ज्ञाविधानाच्च।

'आ कप इति'। यदि पुनः सप्तमीबहुवचनपर्यन्ता एकविंशतिः प्रत्यया गृह्येरन् तदा सुब्ग्रहणमेव कुर्याद् अनुवर्त्तयेद्वा असर्वनामस्थानइत्यनेन सम्बन्धात्सप्तम्या विपरिणामात् सिद्धं, किमर्थं पुनरा कपः प्रत्यया गृह्यन्ते यावता सुबन्तात्तद्धितोत्पत्तिः समर्थाधिकारात् स्वार्थिका अपि सुबन्तादेवं घकालतनेष्विति लिङ्गात् ततश्च राजत्वं राजतेत्यादावन्तर्वर्तिन्या विभक्त्या सुबन्तं पदमित्येव सिद्धम्। सत्यम्। भसञ्ज्ञार्थन्त्वा कपः प्रत्यया गृहीताः। 'राजत्वमित्यादि'। सुबन्तत्वेपि परत्वादनेन पदत्वं युक्तमित्येषामुपन्यासः। 'राजानौ राजान इति'। अत्रापदत्वान्नलोपाभावः, राजेत्यत्र तु प्रत्ययलक्षणेन निषेधो न भवति 'न ङिसम्बुद्ध्यो' रिति लिङ्गा,त्वेनल्लिङ्गमुपपद्यते हे वर्म्मन्निति नपुंसके लुमता लुप्ते सर्वनामस्थाने निषेधाभावादस्त्येव पदत्वमिति तत्रार्थवान् प्रतिषेधः। एवं तर्हि नायं प्रसज्यप्रतिषेधः सर्वनामस्थाने नेति किं तर्हि पर्युदासोयं यदन्यत्सर्वनामस्थानादिति सर्वनामस्थाने न विधिर्न प्रतिषेधः, यदि केन चित्प्राप्नोति भवत्येव, पूर्वेण प्राप्नोति, अथ वाऽनन्तरा या प्राप्तिः सा प्रतिषिध्यते कुतः पुनरेतद् अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा। अथ वा सर्वनामस्थानइत्यत्र यचीत्यपकृष्य सम्बध्यते तेन यजादौ पदसञ्ज्ञा निषिध्यते न हलादाविति राजेत्यादौ स्वादौ स्वादिष्विति वा सुबन्तमिति वा भवत्येव। अथ कस्माच्छसादिष्विति नोच्यते एवं ह्यसर्वनामस्थानइति न वक्तव्यं भवति उत्तरार्थं सुट्यपि. नपुंसके भसञ्ज्ञा यथा स्यात् साम्नी इत्यत्र मा भूत् भसञ्ज्ञा 'विभाषा ङिश्यो' रिति वचनसामर्थ्यादेवाभस्याप्यल्लोपो भविष्यति, तत्रायमप्यर्थो यस्येत्यादौ श्यां प्रतिषेध इति न वक्तव्यं भवति अभत्वादेव सिद्धमिह तर्हि सुपद्री ब्राह्मणकुले॰ इति पद्भावो न स्यादभत्वात् इह च॰सामानि पश्येति भत्वादल्लोपः स्यादिति यथा न्यासमेवास्तु ॥

"यचि भम्"॥ 'यकारादावित्यादि'। यस्मिन्विधिस्तदादावल्ग्रहणइति तदादिविधिः, गार्ग्य इत्यादौ भत्वाद्यस्येति लोपः। 'नभोङ्गिरोमनुषां वत्युपसंख्यानमिति'। द्वे अप्येते उपसंख्याने छन्दोविषये इत्याहुः। 'नभ इवेति'। तृतीयासमर्थाद्वतेर्विधानात् तुल्यार्थोपदर्शनमेतत्, नभसा

तुल्यं वर्त्तत इति विग्रहः, पदनिबन्धनकार्यनिवृत्त्यर्थमेव चैषां भसञ्ज्ञा विधीयते न तु भत्वनिमित्तं कार्यं यथा स्यादिति असम्भवात् । 'नभस्वद-ङ्गिरस्वदिति' । अत्रापदत्वाद्रुत्वाभावो मनुष्वदित्यत्र पदत्वे रुत्वं स्यात् न तु षत्वम्, अपदान्तस्येति वचनात् । 'वृषण्वसुः वृषणश्व इति' । पदत्वे सति पदान्तस्येति प्रतिषेधाण्णत्वं न स्यात् नलोपश्च स्याद्, भत्वेप्यल्लोपो न भवति अनङ्गत्वात् ॥

"तसौ मत्वर्थे" ॥ मत्वर्थीयेनाक्षिप्तायाः प्रकृतेस्तकारसकाराभ्यां विशेषणात्तदन्तविधिरित्याह । 'तकारसकारान्तमिति' । 'मत्वर्थे प्रत्ययइ-ति' । व्यधिकरणे सप्तम्यौ मतोरर्थो मत्वर्थस्तत्र यः प्रत्ययो वर्त्तते तस्मिन्नि-त्यर्थः । अथ वा समानाधिकरणे मतुशब्देन साहचर्यात्तदर्थो लक्ष्यते मतु-रर्थो यस्य तस्मिन्नित्यर्थः । 'उदश्वित्वानिति' । भत्वात् पदत्वाभावे जश्त्वं न भवति 'झय' इति वत्वम् । उदकेन श्वयति वर्द्धते उदश्वित् क्विपि 'उद-श्वितोऽन्यतरस्या' मिति निपातनात् संप्रसारणाभावः, सञ्ज्ञायामुद्भावः । 'पयस्वीति' । 'अस्मायामेधास्रजो विनिः' भत्वाद्रुत्वाभावः । अथार्थग्रहणं किमर्थं न मतौ इत्युच्यते स्वादिष्विति वर्त्तते व्यधिकरणे सप्तम्यौ मतौ ये स्वादयः कथं पुनः शब्दे नाम शब्दो वर्त्तते ऽसम्भवादर्थे वृत्तिर्विज्ञास्यते, यद्येवं लभ्येत कृतं स्यात् तत्तु न लभ्यं नहि सामानाधिकरण्ये सम्भवति वैयधिकरण्यं शक्यं विज्ञातुं ततश्च मतावेव स्यात् पयस्वान् यश-स्वानिति, इह तु न स्यात् पयस्वी यशस्वीति अतोऽर्थग्रहणं कर्त्तव्यं, यद्य-र्थग्रहणं क्रियते मतुपि न प्राप्नोति तस्यार्थविशेषणत्वात् । सत्यम् । अर्थवि-शेषणं मतुब्, विशिष्याकारोऽपि तत्रास्ति अस्यास्त्यस्मिन्निति च मतुपोऽर्थः स च विन्यादीनामिव मतुपोऽप्यविशिष्टः यथा देवदत्तशालायामासीना ब्राह्मणा आनीयन्तामित्युक्ते विशेषणभूतोऽपि देवदत्तः सति ब्राह्मण्ये आनीयते यत्र उपलक्ष्याकारस्यासम्भवः तत्रैवोपलक्षणस्य कार्यायोगः, तद्यथा चित्रगुरानीयतामिति नहि चित्रगवीनां चित्रा गावः सन्ति ॥

(शेषमग्रे)

॥ श्री. ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

श्रीगणेशाय नमः ।

(Continued from page 414 Vol XII)

**विनोक्तिः सा, विना येन यत्रान्यः सन्न नेतरः ।**

सच शोभनो न, नेतरो वा अशोभन इत्यर्थः· तेन, यत्(क) केनचि-द्विना कस्यचिदशोभनत्वं शोभनत्वं वा प्रतिपाद्यते, सा विनोक्तिः· तत्रा-शोभनत्व यथा–

अरुचिर्निशया विना शशी, शशिना सापि विना महत्तमः, ।
उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥

शोभनत्व यथा–

मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।
अमृतद्युतिसुन्दराशयो ऽयं सुहृदानेन(ख) विना नरेन्द्रसूनुः ॥

अत्र मृगलोचनया दुष्टसुहृद्विशेषं च विना नरेन्द्रसूनोर्विचित्रव्यव-हारप्रगल्भत्वचन्द्रसुन्दराशयत्वरूपं शोभनत्वमुक्तम् ॥ ५ ॥

(इति विनोक्तिः ·२७)

**परिवृत्ति, र्विनिमयो यो ऽर्थानां स्यात्समासमैः ११३ ॥**

परिवृत्तिरिति लक्ष्यालङ्कारनिर्देशः, पूर्वाचार्याणां तथैवोद्देशदर्श-नात्· अतो न लक्ष्यलक्षणसन्देहः· समासमैरिति विभागः· विनिमयो

(क) यदित्यन्वंय न ।
(ख) सुहृदा तेनेति पा· ।

हि केनचिद्वस्तुना दत्तेन केनचिदादानम्· तच्च क्वचित्समेन समस्य, क्वचिदसमेनासमस्य· अन्त्यमपि द्विधा,क्वचिन्न्यूनेनोत्तमस्य,क्वचिदुत्तमेन न्यूनस्येति त्रिविधोऽयमित्यर्थः· समासमत्वं चोपादेयत्वानुपादेयत्वाभ्याम्· तत्राऽऽद्यद्वयं यथा—

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम् ।
लता(क)स्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥

अत्र प्रथमार्द्धे लास्येनोपादेयतया समस्यामोदस्य, द्वितीयार्द्धे उपादेयतयोत्तमया दृशा ऽऽधिव्याधीना(ख)मतादृशतया न्यूनानां विनिमयः । अन्त्या यथा—

नानाविधप्रहरणैर्नृप! संप्रहारे स्वीकृत्य दारुणनिनादवतः प्रहारान् ।
दृप्तारिवीरविसरेण वसुन्धरेयं निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥

अत्रोत्तमया वसुन्धरया न्यूनानां प्रहाराणां विनिमयः ॥ ११३ ॥
(इति परिवृत्तिः २८)

प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः ।
तद्भाविकम्—

भूतभाविन इति द्वन्द्वो, न कर्मधारय इत्यविरोधः· भूता भाविनश्च भावा यत्प्रत्यक्षा इव क्रियन्ते प्रत्यक्षतया ऽभिधीयन्ते, तद्भाविकम्, भावः कवेरभिप्रायो निश्चयादिप्रतीतिविषयको ऽत्रास्तीतिव्युत्पत्तेरित्यर्थः· उदाहरणम्—

आसीदञ्जनमत्रेति पश्यामि तव लोचने,
भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥

(क) इमा इति पा· ।
(ख) दृशा व्याधीनामिति पु·, नतु क्वाप्या'ऽधिव्याध्यादीना'मित्यास्ते ।

अत्र पूर्वार्द्धे भूतस्याञ्जनस्यो,त्तरार्द्धे भाविनो भूषणसम्भारस्य प्रत्यक्षतयाभिधानम् ॥ ८ ॥—॥ (इति भाविकम् २९)

## —काव्यलिङ्गं, हेतोर्वाक्यपदार्थता ॥ ११४ ॥

अत्र विवक्षितविवेकेन हेतुवचनं काव्यलिङ्गमिति लक्षणम्, वाक्यपदार्थतेति विभागः· वाक्यार्थता पदार्थता चेत्यर्थः· तत्र वाक्यार्थता यथा—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे! न प्रायः क्वचिदपि भवन्तं प्रणतवान्, ।
नमन्मुक्तः संप्रत्यह,मतनुरग्रेऽप्यनतिभाक्,(क)
महेश! क्षन्तव्यं तदिदमपराधद्वयमपि(ख) ॥

अत्र 'पुरा क्वचिदपि नाहं प्रणतवान्, अग्रेप्यहमनतिभा'गित्यवान्तरवाक्ययोरर्थो ऽनमनमपराधे हेतुः । अनेकपदार्थता यथा—

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्, ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्य ऽकाण्डयमदण्ड इवैष भुजः ॥

अत्र शस्त्रोपक्षेपो भुजपाते हेतुः· नचायं वाक्यार्थः, 'शस्त्रमुपक्षिपत' एतावन्मात्रस्यावाक्यत्वात्· (ग) 'तत्र वपुषि वधाय शस्त्रमुपक्षिपत' इत्यस्यापि न वाक्यत्वं, विशेषणत्वादिति तदर्थस्यापि हेतुत्वे न वाक्यार्थस्य हेतुत्वमिति । एकपदार्थता यथा—

भस्मोद्धूलन! भद्रमस्तु भवते, रुद्राक्षमाले! शुभं,
हा सोपानपरम्परे! गिरिसुताकान्तालयालङ्कृते(घ) ।

(क) ०प्यनतिमानिति पा· ।
(ख) ०द्वयमिहेति पा· ।
(ग) एतावन्मात्रस्यावाक्यार्थत्वादिति पुस्तकद्वये ।
(घ) हा सोपानपरम्परां गिरिसुताकान्तलयालङ्कृतिमिति पा· ।

अद्याराधन[क]तोषितेन विभुना युष्मत्सपर्यासुखा-
ऽऽलोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे [ख] ॥

अत्र महामोहत्वे सुखालोकोच्छेदिता हेतुः तच्च समासादेकपदार्थ एव अर्थान्तरन्यासे तटस्थतयोपनिबद्धस्य हेतुत्वे पर्यवसानम् इह तु साक्षादेव हेतुविभक्त्यादिना हेतुतयोपनिबन्ध[ग] इति ततो भेदः ॥ ११४ ॥ (इति काव्यलिङ्गम् ३०)

## पर्यायोक्तं, विना वाच्यवाचकत्वेन यद्वचः ।

वाच्यवाचकभावभिन्नेनावगमनव्यापारेणार्थाद्गम्यस्यैव यदभिधानं, तत्पर्यायोक्तम्, पर्यायेण भङ्ग्यन्तरेणाभिधानात् ध्वनेस्तु न वाच्य एवार्थो विषय इति ततो भेदः उदाहरणम्—

यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे, मानेन हृदये हरेः ॥

अत्रैक एवार्थ 'ऐरावणशक्रौ मदमानविमुक्तौ जातावि'ति व्यञ्जनया, 'मदमानाभ्यां तयोरधिकरणयोर्निवासप्रतिरुज्झिते'त्यभिधया च प्रतिपाद्यते, तेन च यदेवोच्यते तदेव व्यङ्ग्यम् नच प्रतिपन्नस्यैव प्रतिपत्तिरफलेति किं व्यापारद्वयेनेति वाच्यम्, यतो, यथा व्यङ्ग्यं, तथा नोच्यते, प्रकारयोर्भेदात् एकरूप एव वस्तुनि प्रकारभेद एव कथं स्यादिति चेत्, यथा, शुक्ले गवि चलति निर्विकल्पकसविकल्पकयोः एक एव ह्यर्थस्ताभ्यां विषयीक्रियते, न पुनर्यथा निर्विकल्पकविषय,स्तथैव सविकल्पकेनापि विषयीक्रियते, भिन्नत्वससृष्टत्वाविषयकं निर्विकल्पकं, भिन्नत्वससृष्टत्वप्रकारकं तु सविकल्पकमिति ॥ ५ ॥ (इति पर्यायोक्तम् ३१)

## उदात्तं वस्तुनः संपत्—

संपत् समृद्धियोगो, न तु तस्यैवातिशयः उदाहरणम्—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।

(क) आद्याराधनेति पा० ।
(ख) निलीयामह इति क्वाचित्कस्तु नार्षः पाठः ।
(ग) उपनिबद्ध इति पा० ।

दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु, भोजनृपतेस्तत्त्याग(क)लीलायितम् ॥

अत्र विद्वद्भवनस्य मुक्तादिधनसमृद्धियोगः ॥-॥

—महतां चोपलक्षणम् ॥ ११५ ॥

महतां यदुपलक्षणमङ्गभावो ऽर्थाद्वर्णनीये, तदप्युदात्तमित्यर्थः. उदाहरणम्—

तदिदमरण्यं, यस्मिन् दशरथवचनानुपालनव्यसनी ।
निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः ॥

अत्रैतादृशो महान् रामो दण्डकाया वर्णनीयाया अङ्गम्. नन्वत्र(ख) रामगत उत्साहातिशय एव चमत्कारनिदानम्, तस्य प्रधानत्वाद्विच्छित्त्यन्तराभावाच्च किंविषयोमलङ्कारव्यपदेश इति वाच्यं, नह्यत्र वीरो रसः प्रधानं, तस्येहाङ्गत्वात् ॥ ११५ ॥ (इत्युदात्तम् ३२)

तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत्, ।

समुच्चयो ऽसौ—

तत्सिद्धिहेतौ तस्य प्रस्तुतस्य कार्यस्य साधके समाधाव ऽतुल्यकक्षयोः कारणयोरुपादानं, अत्र तुल्यकक्षयोरिति विशेषः. उदाहरणम्—

दुर्वाराः स्मरमार्गणाः, प्रियतमो दूरे, मनोऽप्युत्सुकं,
गाढं प्रेम, नवं वयो, ऽतिकठिनाः प्राणाः, कुलं निर्मलम्, ।
स्त्रीत्वं धैर्यविरोधि, मन्मथसुहृत्कालः, कृतान्तोऽक्षमी,(ग)
नो सख्यश्चतुराः, कथं नु विरहः सोढव्य इत्थं शठः ॥

अत्र स्मरमार्गणा एव विरहासहत्वं कुर्वन्ति, ततोधिकं प्रियजनदूरस्थित्याद्युपात्तम्. एष एवोक्तलक्षणः समुच्चयः सद्योगे, ऽसद्योगे, सदसद्योगे च पर्यवस्यतीति यत् केनचित्, पृथग्लक्षिता, स्तदयुक्तम्. तथाहि,

(क) ०त्तल्लीलेति पा० ।
(ख) नन्वत्रेति पु० ।
(ग) ०"ऽक्षमो"-इति पु० ।

कुलममलिनं, भद्रा मूर्त्तिर्मतिः श्रुत[क]शालिनी,
भुजबलमऽलं, स्फीता लक्ष्मीः, प्रभुत्वमखण्डितम्, ।
प्रकृतिसुभगा ह्येते भावा, अमीभिरयं जनो
व्रजति सुतरां दर्पं, राजँस्त एव तवाङ्कुशाः ॥

अत्र कुलादीनां समीचीनानामेव योगः· "दुर्वारा" इत्याद्युक्तोदाहरणे स्मरमार्गणादीनामसमीचीनानाम्·

शशी दिवसधूसरो, गलितयौवना कामिनी,
सरो विगतवारिजं, मुखमनक्षरं स्वाकृतेः, ।
प्रभुर्धनपरायणः, सततदुर्गतः सज्जनो,
नृपाङ्गणगतः खलो, मनसि सप्त शल्यानि मे ॥

अत्र सदसतोर्योगः,दुर्जनस्याऽसत्त्वा,च्छश्यादीनां सत्त्वात्· एतच्चिन्त्यम्, पूर्वं दूरस्थित्यादिविशेषणेन, धूसरत्वादिनात्राप्यसम्यक्त्वमिति ॥ ८–॥

समुच्चयान्तरमाह–

–स त्व ऽन्यो युगपद्या गुणक्रियाः । ११६ ॥

अत्र गुणाः क्रियाश्चेतिविग्रहे संख्याविशेषस्याविवक्षणाद्, विशेषविवक्षाविरहेण च सजातीयवद्विजातीयस्यापि यौगपद्यस्य लाभाद् गुणौ च क्रिये च गुणक्रिये च[ख]युगपद्भवतः, स त्रिरूपः समुच्चयः· तत्र गुणयोर्यौगपद्यं तथा–

विदलितसकलारिकुलं[ग] तव बलमिदमभवदाशु विमलं च, ।
प्रखलमुखानि नराधिप! मलिनानि च तानि जातानि ॥

अत्र विमलत्वमलिनत्वयोः । क्रिययोर्यथा–

अयमेकपदे तया वियोगः प्रियया चोपनतः[घ]सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥

(क) श्रुतेति पा· ।
(ख) गुणक्रिये चेत्येकत्र नास्ति, तदयुक्तम् उदाहरणाविरोधात् ।
(ग) विदलितसकलारिकुलमित्यत्र यदेकत्र पुस्तके शोधयित्रा त्रुटिपूरणमुद्रया 'विदलितहृदयं सकलारिकुल'मित्यऽकल्पि,तत्किमतीति न तस्य प्रयोजनं जानीमः ।
(घ) चोपगत इति पु· ।

अत्रो'पनते'ति(क) 'भवितव्यं चे'ति क्रिययोः। गुणक्रिययोर्यथा—

कलुषं च तवाहितेष्वऽकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः, ।
पतितं च महीपतीन्द्र! तेषां वपुषि प्रस्फुटमापदां कटाक्षैः॥

अत्र कलुषत्वपतनयोर्गुणक्रिययोः। अत्र कश्चित्, वैयधिकरण्ये एव समुच्चय इत्याह, तच युक्तं, "धुनोति चासिं तनुते च कीर्त्ति"मित्यादौ सामानाधिकरण्येपि दर्शनात्। (ख) केचित्तु—सामानाधिकरण्य एवायमित्याहुः। तदपि न सम्यक्, "कृपाणपाणिश्च भवान्रणक्षितौ, ससाधुवादाश्च सुराः सुरालय"इत्यादौ वैयधिकरण्येपि तद्दर्शनात्। ॥ ११६ ॥

(इति समुच्चयः ३३)

एकं क्रमेणा ऽनेकस्मिन्पर्यायः—

एकत्वेन विवक्षितं वस्तु यत्र क्रमेणानेकस्मिन् भवति क्रियते वा, स एकपर्यायः। अत्र क्रमेणेति समुच्चयव्यावर्त्तनाय। प्रयोजकानिर्द्दशतन्निर्द्देशौ भवतिकरोत्यर्थौ नतु स्वाभाविकत्वास्वाभाविकत्वे,वृषलक्ष्मणः. कण्ठकालकूटवासस्यास्वाभाविकत्वेन भवतीत्यत्रानुदाहरणत्वापत्तेः। तत्राद्यो यथा—

नन्वाश्रयस्थितिरियं तव कालकूट!
केनोत्तरोत्तरविशिष्टपदोपदिष्टा, ।
प्रागर्णवस्य हृदये, वृषलक्ष्मणो ऽथ कण्ठे,
ऽधुना वससि वाचि पुनः खलानाम्॥

अत्र कालकूटस्य वस्तुन एकस्याऽनेकत्र वास(ग)प्रयोजकं किञ्चिदपि नोक्तम्। न केवलमयं वास्तविक एकत्वे, किन्त्वारोपितेऽपि यथा—

बिम्बोष्ठ एव रागस्ते तन्वि! पूर्वमदृश्यत,(घ)।
अधुना हृदयेप्येष मृगशावाक्षि! लक्ष्यते(ङ)॥

(क) पूर्ववदुपगत इत्येकत्रात्रापि।
(ख) ०ण्ये च तद्दर्शनादिति, ०ण्ये तद्दर्शनादिति च पा०।
(ग) वासे—इति व्यासः क्वचित्।
(घ) ०मलक्ष्यतेति पा०।
(ङ) दृश्यत इति पा०।

अत्र प्रयोजकानिर्द्देशः स्फुट एव॰ रागपदार्थस्य त्वोष्ठे लौहित्यात्मकतया, हृदये तु स्नेहाद्यात्मकत्वेन भेदेप्येकत्वस्याध्यवसानादेकत्वविवक्षाविरोधः ।

श्रोणीबन्धस्त्यजति तनुतां, सेवते मध्यभागः,
पद्भ्यां मुक्तास्तरलगतयः, संश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवता,मद्वितीयत्वमास्यं
त(क)द्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥

द्वितीयो यथा–

तत्ताणं सिरिसहोअररअणाहरणम्मि हिअअमेक्करसं ।
बिंबाहरे पिआए णिवेसिअं कुसुमबाणेण ॥

अत्र 'कुसुमबाणेणे'ति प्रयोजकनिर्देशः ॥–॥

–अन्यस्ततोऽन्यथा ।

अनेकमेकस्मिन् क्रमेण यद्भवति क्रियते वा, सोऽन्यपर्याय इत्यर्थः ॥ पूर्ववद्व्याख्येयम्॰ तत्र भवत्यर्थे यथा–

मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति, ।
अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥

अत्रैकस्मिन् खलवचसि क्रमेणामृतव्यञ्जने विषकथने च न प्रयोजकनिर्देशः । करोत्यर्थे यथा–

तद्गेहं नतभित्ति, मन्दिरमिदं लब्धावकाशं दिवः,
सा धेनुर्जरती, नदन्ति करिणामेता घनाभा घटाः, ।
स क्षुद्रो मुसल(ख)ध्वनिः, कलमिदं सङ्गीतकं योषिता,
माश्चर्य्यं दिवसैर्द्विजोऽयमियतीं भूमि(ग)समारोपितः ॥

अत्रैकस्मिन्द्विजे तद्गेहतन्मन्दिराद्यैरनेकैः॰ 'दिवसै'रिति प्रयोजकनिर्देशः॰ नचेयं परिवृत्तिः, हानोपादानयोरविवक्षितत्वात्॰ ॥ ११६ ऽ ॥ (इति पर्यायः ३४) (शेषमग्रे)

(क) त्वदिति क्वचित् ।
(ख) मुशलेति पा॰ ।
(ग) भूतिमिति तु क्वाचित्को नातिहृद्यः ।

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

(*Continued from page* 445. VOL. XII)

## अथ दशमाध्यायस्य द्वितीयः पाद आरभ्यते ॥

कृष्णले चरौ पाकानुष्ठानाधिकरणम् ।

सू० कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥

"प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम" इत्यत्र संशयः किं कृष्णलेषु पाकः कर्त्तव्यो नेति लुप्तार्थत्वादकर्त्तव्यः, ननु "घृते श्रपयते"ति वचनात्कर्त्तव्यः, न, अशक्यत्वात् रूपरसादीनां पूर्वेषान्तिरोभावेऽपूर्वाणां च प्रादुर्भावः पाकः असौ न कृष्णलेषु सम्भवति, तस्मादकर्त्तव्य इति प्राप्ते ब्रूमः—यद्यपि मुख्य· पाको न सम्भवति तथाऽपि लक्षणया तापमात्रं वचनेन विधीयते, अतस्तावन्मात्रं कर्त्तव्यम्, अन्यथा वचनानर्थक्यं स्यात्, यदि त्वयमेव मुख्यः पाको यदनुष्णस्पर्शवद्द्रव्यस्योष्णीकरणं ततः सुतरां वचनबलादसत्यपि प्राकृते कार्ये कर्त्तव्यः ॥

कृष्णले उपस्तरणाभिघारणयोरभावाधिकरणम् ।

सू० उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ २ ॥

कृष्णलचरावेव सन्देहः किमुपस्तरणाभिघारणे कर्त्तव्ये नेति, चोदकप्राप्तेः कर्त्तव्ये "यदुपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोती"ति वचनात्स्वादिमार्थेत, न च कृष्णलेषु स्वादिमा सम्भवति, अतो लुप्तार्थत्वादकर्त्तव्ये इति चेत् न, अर्थवादत्वादमृताहुतिवचनस्य, एवं तर्हि चतुरवत्तसम्पत्त्यर्थमुपस्तरणाभिघारणं तत्तु चत्वारि चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै, इति कृष्णलचतुष्टयेनैव चतुरवत्तावाप्तिवचनादकर्त्तव्यं, नैवं, न

हि कृष्णलचतुष्ट्वेनावदानचतुष्ट्वमाप्तं शक्यं विषयभेदात्, आप्तिवचनं त्वर्थवादमात्रं, यदि कृष्णचतुष्ट्वेनैव चतुरवत्तमाप्येत ततः सकृदवत्तैरेव तदवाप्तेर्न द्व्यवदानमपि स्यात्, तत्र चत्वारि चत्वारीति वीप्सा नावकल्प्येत । अथ वीप्सार्थो विधीयते ततः प्राप्तावदानानुवादेन चतुःसङ्ख्याया वीप्सायाश्च विधानाद्वाक्यं भिद्येत, ननु द्विर्हविषोऽवद्यतीत्यस्य प्रकृतितः प्राप्तेर्द्व्यवदानं स्यात्, न, चतुरवत्तसम्पत्त्यर्थं हि प्रकृतौ द्व्यवदानमुपस्तरणाभिघारणवत्, तच्चेदन्यतः सम्पन्नं ततोद्व्यवदानमप्युपस्तरणाभिघारणवदेव निर्वर्त्ति¹तुमर्हति, तस्मादर्थवादमात्रमाप्तिवचनमिति कर्त्तव्यमुपस्तरणाभिघारणमिति प्राप्ते उच्यते—सूक्ष्माणां पुरोडाशावयवानां स्रुच्यसंसक्तानामाहवनीयपातः कथं स्यादित्येवमुपस्तरणाभिघारणं दृष्टार्थं, न च कृष्णलानां संसक्तिः सम्भवति यत्परिहारायोपस्तरणादि भवेत् । ननु चतुरवत्तसम्पत्तिरपि दृष्टमेव प्रयोजनं न, अनङ्गत्वात्, चतुरवत्तं जुहोतीत्यत्रावत्तं जुहोतीत्येतावद्विधीयते चतुःशब्दस्तूपस्तरणाभिघारणद्व्यवदानवचनप्राप्तचतुःसङ्ख्यानुवादमात्रं विधानार्थम् अवत्तहोमविधिपरत्वाद्वाक्यस्य, तस्मादकर्त्तव्यमुपस्तरणाभिघारणम् ॥

कृष्णलचरौ भक्षसद्भावाधिकरणम् ।

सू० भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् ॥ ३ ॥

कृत्वा चिन्तेयं यदा प्रकृतौ भक्षाः पुरुषप्रीत्यर्थास्तदा कृष्णलानामस्ति भक्षो ने? ति तत्र कृष्णलैर्भक्ष्यमाणैर्न प्रीतिर्भवति तेन प्राकृतास्तावद्वचा लुप्तार्थत्वादकर्त्तव्याः । यत्तु वचनं ²चुच्चूषाकारं भक्षयतीति तदाज्यस्य भक्षणं विधत्ते तस्यादनीयत्वात्, चुच्चूषाकारस्यानुवादसम्भवाच्च कृष्णलानां, तस्माच्च तेषां भक्षणमिति प्राप्ते ब्रूमः—पूर्ववाक्ये कृष्णलानां प्राधान्यादाज्यस्य च तदङ्गत्वात्तेषामेव भक्षणवाक्येऽन्वयः, तेषां चानदनीयानामपि प्रदानवद्भक्षणमपि वचनाद्भविष्यतीति, तेषामेव चुच्चूषाकरणविशिष्टं भक्षणं विधीयते ॥

१ निर्वर्तितुमर्हतीति पा० ।
२ चुच्चूषकारं भक्षयतीति पा० ।

कृष्णलचरौ एकधा ब्रह्मणे चरतीत्यनेन सह परिहारविधानाधिकरणम् ।

सू० एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहृतत्वात् ॥ ४ ॥

तत्रैव श्रूयते "एकधा ब्रह्मण उपहरती"ति किमत्र सकृत्त्वं सहत्वं वा—विधीयते? उत सहत्व? मिति कश्चात्र विशेषः? यदि सकृत्त्वं विधीयते ततश्चोदकप्राप्तानामिडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षाणां कालभेदेन चतुर्हरणे प्राप्ते "सकृद्धरति नाधिक"मिति विधानादेक एवास्य भक्ष उपहर्त्तव्यः, भक्षान्तराणि निवर्त्तेरन्, सहत्वविधौ पुनरनिवर्त्तिता भक्षाः कालभेदेनोपहर्त्तव्याः प्राप्ताः सन्त एकस्मिन्काल उपह्रियन्ते, तत्र सकृत्त्वे सहत्वे चैकधा—शब्दस्य लोके प्रयोगादनियमः यत एवायं साधारणः अत एव चोदकप्राप्तभक्षान्तराबाधाय सहत्वमेव विधीयते, प्राशित्रमिडामिति द्वितीयया क्रियां प्रति भक्षस्य प्राधान्यावगमाद् दृष्टार्थत्वाच्च तत्प्रतिपत्त्यर्थाः प्राकृता भक्षाः कृष्णलेष्वपि चोदकेन प्राप्नुवन्तीति तेषां सहत्वविधानमुपयुज्यते ॥

कृष्णलचरौ ब्रह्मणे सर्वभक्षभागार्पणाधिकरणम् ।

सू० सर्वत्वं च तेषामधिकारात्स्यात् ॥ ५ ॥

तत्रैव "सर्वं ब्रह्मणे परिहरती"ति श्रुतं, तत्र संशयः किं ब्रह्मभागस्य सर्वस्य परिहारो विधीयते यद्ब्रह्मणे सर्वं तत्परिहरती? ति यद्ब्रह्मणे परिहरति तत्सर्वमिति वा? उत परिहरणीयस्य सर्वस्य ब्रह्मसम्बन्धो विधीयते यत्परिहरति तत्सर्वं ब्रह्मणे नाध्वर्य्वादिभ्य? इति पुरुषान्तरेभ्यो भक्षोऽपनीयत इति, तत्र चोदकप्राप्तपुरुषान्तरसम्बन्धो मा बाधीति ब्रह्मभागस्य परिहर्त्तव्यस्य सर्वता सर्वस्य ब्रह्मसम्बन्धिनो वा परिहारो विधीयत इति मन्यते, वचनं त्विवमनर्थकं स्यात्, प्रकृतित एव हि कृत्स्नस्य ब्रह्मभागस्य भक्षणाय परिहरणं प्राप्तमेव, कृत्स्नो हि भागस्तेन भक्षणीयः । अन्यथा ह्यभक्षितस्यांशस्य संस्कारहानिः स्यात्, तस्मात्प्राप्तत्वाद्ब्रह्मभागस्य कृत्स्नता न विधातव्या, तेन यत्प्रकृतौ नानापुरुषेभ्यो भक्षार्थं हरति तत्सर्वं ब्रह्मणे परिहरति, नान्येभ्य इति प्राकृताभक्षाः पुरुषान्तरेभ्योऽपनीयन्ते

भक्षभागानां स्वस्वकाले भ-क्षणं भक्षणाधिकरणम् ।

सू० पुरुषापनयात्स्वकालत्वम् ॥ ६ ॥

सर्वे भक्षा ब्रह्मणे उपहर्त्तव्याः ते चैकधा ब्रह्मणे उपहरतीति सह-त्वविधानादेकस्मिन्नेव काल उपहर्त्तव्या इति स्थिते संशयः, किं युगप-दुपहृतानां युगपद्भक्षणम्? उत प्रकृतिवचनानाकालं भक्षणं? तत्र "भक्षार्थो ह्युपहारो ऽतोभक्षोऽपि युगपद्भवेत् । सहाप्युपहृतौ शक्यं यथाकालं तु भक्ष-णम्" ॥ तस्माच्चोदकाबाधाय सहोपहृतानामपि प्रकृतिवचनानाकालं भक्षणम्

"ब्रह्मभक्षे चतुर्धाकरणा-दीनामभावाधिकरणम् ।

सू० एकार्थत्वादविभागः स्यात् ॥ ७ ॥

प्रकृतौ चतुर्धाकरणं विधाय "इदं ब्रह्मण इदं होतुरित्यादिव्या-देशो विहितः स किं कृष्णलेषु कर्त्तव्यो ने?ति चोदकप्राप्तेः कर्त्तव्यः, नैवं चतुर्धाकरणं तावच्चतुर्णां भक्षणार्थं प्रकृतौ, इह तु ब्रह्मणैव सर्वं भक्षयितव्यमिति लुप्तार्थत्वादकर्त्तव्यं, व्यादेशोऽपि चतुर्णां व्यवस्थार्थम् इह तु सर्वस्य ब्रह्मसम्बन्धित्वेन निश्चितत्वादिदं ब्रह्मण इत्यपि निर्देशो न कर्त्तव्यः, न तरामिदं होतुरित्यादिहोत्रादिभ्योऽपनीतत्वात् ॥

ज्योतिष्टोमे ऋत्विग्दाना-स्यानत्यर्थताधिकरणम् ।

सू० ऋत्विग्दानं धर्ममात्रार्थं स्याद्द-दातिसामर्थ्यात् ॥ ८ ॥

"ऋत्विग्भ्यो दक्षिणां ददा"दित्यादि यदृत्विग्दानं तददृष्टार्थमान-त्यर्थं वेति सन्देहे अदृष्टार्थमिति ब्रूमः—दानकर्त्तव्यताश्रुत्या दानेनान-तिकर्त्तव्यतावाक्यात् तच्च दुर्बलं, तस्माद्दानमात्रं कर्त्तव्यम् । किं च द्वादश-तादिपरिमाणनियमो मन्त्रानीतिकर्त्तव्यता कर्मानुरूपद्रव्यता च दानस्या-दृष्टार्थत्वे ऽवकल्पते नान्यथा, कर्मकरेभ्यस्तदीयमानमपेक्षितानतिद्वारेण दृष्टप्रयोजनत्वाच्च शक्यते अदृष्टार्थं कल्पयितुं, परिमाणादिनियमस्तु कामं भवत्वदृष्टार्थः न तावता दानस्याप्यदृष्टार्थता, तस्मात्सत्रेषु न कर्त्तव्यं दानम् ॥

ज्योतिष्टोमे भक्षस्य प्रति-पत्त्यर्थताधिकरणम् ।

सू० शेषभक्षाश्च तद्वत् ॥ ९ ॥

शेषभक्षा इडादिविषया दर्शपूर्णमासयोः सोमविषयाश्च सोमे समा-

म्नाताः किं परिक्रयार्था? उत प्रतिपत्त्यर्था? इति विचारः, तत्र भक्षणात्प्रीतिः प्रीत्या चानतिः, प्रत्यक्षा तस्मात्तदर्थाः, नैवं यागे कृतेऽवशिष्टं द्रव्यं प्रतिपत्तिमपेक्षमाणं भक्षणेन प्रतिपाद्यते, तत्तु दृष्टमेव प्रयोजनम्, अनीशानश्च यजमानो देवतायै सङ्कल्पितस्यातो न शक्नोत्यसौ तेन परिक्रेतुं, तस्मात्प्रतिपत्त्यर्थाभक्षाः। स्थिते चास्मिन् भक्षाणां प्रतिपत्त्यर्थत्वे चतुर्था करणे भक्षणाश्रवणात्परिक्रयमाशङ्क्य भक्षार्थत्व[1]व्यादेशस्य तृतीये साधिता, तस्मात्सत्रेष्वप्यबाध्या भक्षाः॥

सत्रे ऋत्विग्वरणाभावाधिकरणम्।

सू० वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात्॥१०॥

ज्योतिष्टोमे वरणमृत्विजामाम्नातम् अग्निर्होता स मे होतेत्यादि, तत्सत्रेषु कर्त्तव्यं नेति संशये चोदकानुग्रहाय कर्त्तव्यम् ऋत्विक्कृत्वार्थे चेदं [2]प्रकृतौ तच्च सत्रेऽपि यजमानेष्वाधातव्यं ये यजमानास्त ऋत्विज इति वचनात्, अतो लुप्तार्थत्वात्कर्त्तव्यं वरणं, मैवम् आनत्यर्थं तत्प्रकृतौ, न कृतं चात्र यजमानैर्वरणेनानमितव्यम्, अतोऽर्थलोपादकर्त्तव्यम्, ऋत्विक्त्वमपि यागकर्तृत्वं, तच्च प्रकृतौ वरणविधानात्तद्द्वारेणानतानामेव, तत्रेषु तु वरणस्यार्थलोपान्निवृत्तवरणानामेव न विगुणमृत्विक्त्वम् आध्वर्य्वादित्वं भविष्यति यदि तु कर्म करत्वचवनोऽयमृत्विक्शब्दस्ततो वरणेनापि यजमानेषु शक्यमाधातुं ते हि स्वार्थे कुर्वाणा न कर्मकरा भवन्ति तेन ऋत्विग्भिरेव सत्रं कर्त्तव्यमिति वरणनिवृत्तिः॥

सत्रे परिक्रयाभावाधिकरणम्।

सू० परिक्रयश्च तादर्थ्यात्॥११॥

दक्षिणादानं परिक्रयार्थे नादृष्टार्थमित्युक्तम्, इदानीं परिक्रय एव सत्रे किं कर्त्तव्यो ने? ति संशये पूर्वाधिकरणवत्पूर्वोत्तरपक्षौ नात्र गौर्दीयत इत्यादिप्रतिषेधो नासत्यां दानप्राप्तौ घटते, तस्माद्दर्निवृत्तं दानमिति विशेषाशङ्का विध्यन्तरशेषस्त्वयमनुवादो न प्राप्तिं सूचयति, तस्माद्दानमनार्थत्वाद्वरणवत्परिक्रयोऽपि निवर्त्तते॥

---

[1] प्रकृते इति पा०।
[2] भक्षणार्थताव्यादेशस्येति पा०।

उदवसानीयस्य सत्राङ्गतया तत्र दानस्य परिक्रयार्थत्वाधिकरणम् ।

**सू० उदवसानीयः सत्रधर्मा स्यात् तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ १२ ॥**

सत्रादुदवसाय "ज्योतिष्टोमेन पृष्ठशमनीयेन सहस्रदक्षिणेन यजेरन्" इति श्रूयते तत्र संशयः किं पृष्ठशमनीयं सत्राङ्गं तत्र सत्रवद् यजमानैरेवार्त्विज्यं कर्तव्यमिति दक्षिणादानमदृष्टार्थम्? उत नाङ्गमृत्विग्भिः कर्तव्यं परिक्रयार्थं च दानम्? इति, तत्र फलवत्सत्रसमभिव्याहारात्तदुक्तकालेऽपि श्रूयमाणः पृष्ठशमनीयो वाजपेयस्येव बृहस्पतिसवः सत्रस्याङ्गम्, इतरथा हि सत्रसंयोगः काललक्षणार्थः स्यात् फलं च कल्प्येत, तस्मादङ्गं नैवम् । उदवसानं हि त्यागः, स च निःशेषसमाप्ताववकल्पते, न च निःशेषसमाप्तस्याङ्गं सम्भवति, वाजपेयेनेष्ट्वेति तु प्रयोगसमाप्तिर्गम्यते, समाप्तेऽपि च यथोक्ते प्रयोगे सम्भवत्यङ्गान्तरं त्यक्तस्य तु पुनरङ्गं न सम्भवति, सम्भवे वा त्याग एव न स्यात्, तस्मादुदवसायेति त्यागस्य शाब्दत्वादनङ्गत्वं, न च लक्षणा श्रौतमेव सत्रावसानं निमित्तीकृत्य पृष्ठशमनीयविधानात् ॥

उदवसानीयस्य ऋत्विजामेकैकेनानुष्ठानाधिकरणम् ।

**सू० तेषां तु वचनाद् द्वियज्ञवत्सह प्रयोगः स्यात् ॥ १३ ॥**

पृष्ठशमनीय एव संशयः किमुदवसायिभिः सह[1] प्रयोक्तव्य? इतैकैकश्येन यजेरन्निति, तत्राख्यातोपात्तस्य बहुत्वस्योपादेयकर्तृगामित्वेनविवक्षितत्वात्संहत्य कुर्युरिति स्थितं तावदपर्यवसितम्, अन्तरा चिन्तान्तरं क्रियते ॥

उदवसानीये सत्रिभ्योऽन्येषामार्त्विज्यत्वाधिकरणम् ।

**सू० तत्रान्यानृत्विजो वृणीरन् ॥ १४ ॥**

यदा संहत्य कर्तव्यं तदा किं यजमानैरेव सर्वं कर्तव्यमुतर्त्विग्भिरिति विचारः तत्रोदवसाने यजमानानामेव कर्तृत्वात् क्तप्रत्ययेन च पृष्ठशमनीयस्य तत्समानकर्तृकत्वात्तत्रापि यजमाना एव कर्तारो नान्य इति प्राप्ते ब्रूमः—यजेरन्नित्यनेन यो व्यापारो विधीयते तस्यैवोदवसानस-

[1] संहत्यप्रयोक्तव्य इति पा० ।

मानकर्तृकता क्त्वा प्रत्ययादवगम्यते नार्त्विज्यस्य, तत्तु पुरुषान्तरैः प्रकृतिवत्क्रियमाणं न केनचिद्विरुध्यते । किं च दक्षिणा-शब्दः परिक्रयार्थे वर्त्तते न चात्र परिक्रयः संभवति, अतो दक्षिणाश्रुतिबलादन्ये भवेयुः, यद्येवमङ्गत्वेऽपि दक्षिणाश्रुतेरेवान्ये सिध्येयुः, ये यजमानास्ते ऋत्विज इति साधाणं वचनं पृष्ठशमनीयवर्जं भविष्यति तत्राहत्य परिक्रयवचनात्, भवतु-नामैवं को दोषः, किमर्थं तस्याङ्गत्वनिराकरणम् उच्यते अङ्गत्वाभ्युपगमेनापि शक्यत एव परिक्रयार्थता वक्तुं तथाऽपि तत्त्वत उक्तं विवक्षित्वाऽङ्गत्वमेव नास्तीत्युक्तम्, अपि चाङ्गत्वे सति संहत्य प्रयोगः स्यात् प्रधानवत्, एकैकशस्तु प्रयोगं वक्तुकामोऽङ्गत्वं निराकृतवान् तस्मादन्ये वरीतव्याः स्थितादुत्तरं नैतदस्ति संहत्यप्रयोग इति यदि बहुत्वं विधीयेत तत एवं स्यात् उदवसायेति तु क्त्वा प्रत्ययादुदवसानसमानकर्तृकत्वावगमादुदवसाने च बहूनां कर्तृत्वात्प्राप्तमेव बहुत्वं न विधीयते, न चाविहितमङ्गं भवति, उदवसाने च गम्यमानमपि बहुत्वं निमित्तवदुद्देश्यगतत्वादविवक्षितं, यागे चानुवादत्वादनङ्गम् ॥ किं च उदवसाने निरपेक्षाः कर्त्तारस्तद्यदि यागोऽपि निरपेक्षास्ततः समानकर्तृकत्वं सम्भवेन्नान्यथा, तस्मादेकैकश्येन प्रयुञ्जीरन् ॥

कामेष्टौ दानस्यादृष्टार्थताधिकरणम् ।

सू० कामेष्टौ च दान-शब्दात् ॥ १५ ॥

सारस्वते सत्रे श्रूयते "प्राचं प्रस्तरणं प्राग्यागनये कामायाष्टाकपालं निर्वपन्ति तस्यामश्वां च पुरुषीं च धेनुके दद्युरि"ति किमिदं दानमदृष्टार्थं ? मुत परिक्रयार्थं ? मिति तदर्थं चिन्त्यते किमेतस्यामृत्विजः सन्ति ? उत यजमाना एवेयमिष्टिः कर्त्तव्ये ? ति तत्र द्वादशाहे ये यजमानास्त ऋत्विज इति यजमानानामार्त्विज्यमिहातिदेशेन प्राप्यमाणं प्राकृतेष्वेवाङ्गेषु प्राप्यते नापूर्वाङ्गेषु यूपावटस्तरणवर्हिषा बर्हिर्धर्माः तेनापूर्वाङ्गे कामेष्टौ असति यजमानार्त्विज्ये चोदकप्राप्तैर्ऋत्विग्भिर्भवितव्यं सत्सु च तेषु दानमसत्यपि दक्षिणाशब्दे दृष्टार्थत्वात्परिक्रयार्थमेवेति प्राप्ते ब्रूमः-प्रकृतौ बर्हिर्धर्माः प्रदिष्टानां पदार्थानामङ्गत्वाद्युक्तं यदपूर्वेषु न भवन्ति, यजमानास्तु

कर्तारः प्रयोगाङ्गत्वाद्दिक्षतावपि प्रयोगद्वारेण प्राप्नुवन्ति तस्मिँश्च प्रयोगे यद्पूर्वमप्यङ्गं निपतति तत्रैव प्रसङ्गसिद्धत्वान्न कर्त्रन्तरमाकाङ्क्षति, तस्माद्दृष्टार्थमेवैतद्दानम् ॥

दर्शपूर्णमासयोर्द्वेष्याय दानस्यादृष्टार्थताधिकरणम् ।

सू० द्वेष्ये वा चोदनाद्दक्षिणापनयः स्यात् ॥ १६ ॥

दर्शपूर्णमासयोः श्रूयते "यदि पत्नीः संयाजयन्कपालमभिजहुयाद्वैश्वानरं द्वादशकपालं निर्वपेत्तस्यैकहायनी गौर्दक्षिणा तां स द्वेष्याय दद्या"दिति किमिदं दानं परिक्रयार्थं? मुतादृष्टार्थं? मिति दक्षिणाशब्दात्परिक्रयार्थमिति, यद्यपि च दर्शपूर्णमासयोरेव नैमित्तिकमङ्गं वैश्वानरेष्टिस्तन्त्रम[1]ध्य एव क्रियते तथाऽपि वचनाद्दक्षिणान्तरं नानुपपन्नम् उच्यते द्वेष्याय तद्दानं न चर्त्विग्द्वेष्यः सम्भवति "ऋत्विगाचार्यौ नातिचरितव्या"विति स्मरणात् तस्मादनृत्विजे दानमिदमदृष्टार्थं दक्षिणाशब्दश्च दानमात्रे ऽगत्या वर्तते ॥

जीवतामस्थियज्ञाधिकरणम् ।

सू० अस्थियज्ञो ऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ १७ ॥

इदं श्रूयते "यदि सत्राय सन्दीक्षितानां प्रमीयेत तं दग्ध्वा कृष्णाजिने ऽस्थीन्युपनह्य योऽस्य नेदिष्ठः स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् ततः सम्वत्सरे ऽस्थीनि याजयेयु"रिति योऽयं सम्वत्सरे ऽस्थियागः स विचार्यते किमस्थि-शब्देन शरीरशरीरिणोरभेदोपचारेण मृतं लक्षयित्वा तस्यायं याग उच्यते तदधिकारे च यागे सत्रिणामितरेषामृत्विक्स्थानीयानां कर्तृत्वमात्रम्? उतास्थि-शब्देन जीवत एव सत्रिणोऽस्थिसहायाल्लक्षयित्वा तेषामेव यागविधि? रिति तत्रास्थि-शब्दस्य तच्छरीरे पुंसि प्रवृत्तेरितरेषां च यजन्तपरस्मैपदनिर्देशात्परार्थे कर्मणि याजयितृत्वावगमान्मृताधिकारमिदं कर्म सत्रमध्यमरणनिमित्तं तस्यैव फलदमिति प्राप्ते ब्रूमः—न कथं चिदपि मृतस्य साक्षाद्वा संविधानाद्वा कर्तृत्वं सम्भवति

१ तन्मध्य इति पा०

न चाकर्तुरधिकारः तस्माज्जीवतामेवायं यागः, याजयतिश्च ये तेषां याजयितारस्तदभिप्रायेण भविष्यति ॥

अस्थियज्ञे अस्थ्याज्जपाद्य- नुष्ठानाधिकरणम् ।

सू० यदि तु वचनात् तेषां जप संस्कारमर्थलुप्तं सेष्टितदर्थत्वात् ॥१८॥

जीवदधिकारपक्षे चोदकप्राप्तं न किञ्चिद्बाधितव्यं, मृताधिकारे तु भवति केषांचिद्बाधः तदिह कृत्वा चिन्तया किं बाध्यं किं नेति चिन्त्यते, ये यजमानजपावपनादयश्च संस्कारा दीक्षणीयेष्टिश्च ते किमस्थ्यधिकारपक्षे कर्त्तव्या नेति चोदकानुग्रहाय कर्त्तव्याः मैवं, दीक्षार्थाहीष्टिर्यमनियमसङ्कल्पश्च दीक्षा, न च सा मृतस्य सम्भवति, तस्माल्लुप्तार्था, वपनं तु दूरापास्तं केशश्मश्रुणोरभावात् जपश्चाशक्यत्वात् क्रत्वर्थे तु क्रियते गुणभूतत्वात् । अथ यत्र यजमानो गुणभूतः यथा शुक्रं यजमानोऽन्वारभत इत्यादौ तत्कर्त्तव्य नेति अचेतनानामस्थ्नां स्वातन्त्र्यलक्षणकर्तृत्वासम्भवादकर्त्तव्यं, न चैतन्यापेक्षं कर्तृत्वं काष्ठादीनामपि ज्वलनादौ कर्तृत्वसम्भवात् यस्यैवान्यानपेक्षयाऽऽख्यातोपात्तव्यापारसमवायसम्भवः स एव कर्त्ता, तस्माच्छुक्रान्वारम्भणादिकर्मास्थिभिः कर्त्तव्यम् ॥

अस्थियज्ञे अस्थ्याङ्काम्यकर्माद्यननुष्ठानाधिकरणम् ।

सू० काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि ॥ १९॥

गुणकामानां विकृतौ प्रवृत्तिं कृत्वा चिन्त्यते यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदोभिनुयादित्यादयो गुणकामामृताधिकारपक्षे प्रवर्तन्ते नेति चोदकप्राप्तेः प्रवर्तन्ते नैवं, कुतः कामाज्ञानात्, न हीदं ज्ञायते किं मृतस्येष्टं न वेति तस्मादप्रवृत्तिर्गुणकामानाम् ॥

अस्थियज्ञे अस्थ्यां सूक्तवाकगताशासनानुष्ठानाधिकरणम् ।

सू० ईहार्थास्त्वभावात्सूक्तवाकवत् ॥ २० ॥

"सूक्तवाकगतान्यायुराशास्त" इत्यादीनि फलपदानि प्रवर्तन्ते नेति संशये सूक्तवाकस्य प्रहरणाङ्गतया नित्यवत्प्रवृत्तेस्तन्निविष्टानामायुरादिपदानामपि प्रवृत्तिः, नैव फलनिर्देशा ह्येते मान्त्रवर्णिकफलकल्पनात्, न च मृतस्य फलाशंसनङ्गम्यत इत्युक्तम्, अतो लुप्तार्थत्वादेषां निवृत्तिः ॥ (शेषमग्रे)

श्रीमते मीमांसाद्वयगुरवे रामानुजाचार्याय नमः ।

# अथ श्रीभाष्ये ।

## प्रथमाऽध्याये द्वितीयः पाद आरभ्यते ।

(*Continued from page* 435. VOL. XII.)

मू० न च सर्वं खल्विदं ब्रह्मेति पूर्ववाक्यनिर्दिष्टं ब्रह्मात्रोपास्यतया सम्बन्द्धुं शक्यते, शान्त उपासीतेत्युपासनोपकरणशान्तिनिर्वृत्त्युपायभूतब्रह्मात्मकत्वोपदेशायोपात्तत्वात्, न च स क्रतुं कुर्वीतेत्युपासनस्योपास्यसाकाङ्क्षत्वाद्वाक्यान्तरस्थमपि ब्रह्म सम्बध्यत इति शक्यं वक्तुं, स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन निराकाङ्क्षत्वात् ।

टी० "न च सर्वमि"ति, अन्यार्थतया निराकाङ्क्षत्वादित्यर्थः, द्वितीयं दूषयति "न च स क्रतुमि"ति, स्ववाक्योपात्तेनेति, विच्छेदकाभावात् महावाक्यैकत्वं विवक्षितं, ततश्च एष आत्मेति स्ववाक्यस्थेनानन्यार्थेन समानलिङ्गेनात्म-शब्देन विशेष्याकाङ्क्षाशमनाद्वाक्यान्तरस्थान्यार्थभिन्नलिङ्गब्रह्म-शब्दाकर्षो न युक्त इति भावः । प्रथमान्तानाम्मनोमयादिपदानामुपासनवाचिपदेनान्वयायोगात् ब्रह्मपदमन्वेतव्यमित्यत्राह "मनोमय"इति, क्रतु-शब्देन द्वितीयान्तपदस्याप्यनन्वयात् षष्ठ्यन्ततया विभक्तिविपरिणामे कार्ये सन्निहितस्य साकाङ्क्षस्यैव पदस्य विभक्तिपरिणामो न्याय्यः, न तु वाक्यान्तरस्थस्य निराकाङ्क्षस्येत्यर्थः उभयाकाङ्क्षामनोमयादिपदस्य क्रतुं कुर्वीतेत्यस्य चाकाङ्क्षा न वक्तुं युक्तमिति पञ्चम्यन्वयः, मनोमयत्वादि च सत्यसङ्कल्पत्वात्पूर्वमेव प्रतिपन्नम्, अणीयस्त्वञ्च भूयस्त्वात्पूर्वमेव श्रुतं व्यतिरेकनिर्देशश्च मनोमयत्वादेः पाश्चात्यः, अतो मनोमयत्वादिस्वारस्यानुगुणम् इतरत्वेयमित्यभिप्रायेण चोक्तं मनोमयत्वादिगुणकेनेति, जीवपरत्वे ब्रह्म-शब्दः कथमित्यत्राह "एवमि"ति, एवं प्राप्त इति प्रतिज्ञावाक्यमध्याहरति "मनोमयत्वादी"ति, सत्यसङ्कल्पत्वादिविशेषितप्राकरणिकात्म-श-

ब्दानुरोधेन परमात्मेत्युक्त, सर्वत्रेति व्याख्येयमवदन्तद्व्याचष्टे "वेदान्तेष्वि"-ति,सामान्य-शब्दवत्सु विशेष-शब्दवत्सु चेति भावः। हेतुपदं व्याचष्टे "प्र-सिद्धस्ये"ति। ननु सर्ववेदान्तेषु परतत्त्वपरतया प्रसिद्धब्रह्म-शब्दश्रवणा-दिति परैर्व्याख्यातं तन्मतेन व्याख्याने सत्यपि तद्विहाय कथं युक्त्यन्तरोक्ति-रुच्यते पूर्ववाक्यस्थब्रह्म-शब्दानन्वयस्योपसंहारस्थब्रह्मशब्ददौर्बल्यस्य च पूर्वपक्षिणोक्तत्वात् न तयोरुत्तरं वक्तुं युक्तमिति भावः। मनस्सामान्येन सम्बन्धसामान्यपरं वाक्यमाह-

सू० मनोमयः प्राणशरीर इत्यनन्यार्थतया निर्दिष्टस्य विभक्तिविपरिणाममात्रेणोभयाकाङ्क्षानिवृत्तिसिद्धेः, एवं निश्चिते जीवत्वे एतद्ब्रह्मेत्युपसंहारस्थं ब्रह्मपदमपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयत इत्येवं प्राप्ते ब्रूमः

सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

मनोमयत्वादिगुणकः परमात्मैव कुतः सर्वत्र वेदान्तवाक्येषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरिहोपदेशात्, प्रसिद्धं हि मनोमयत्वादि ब्रह्मणः, यथा मनोमयः प्राणशरीरनेता स एषोऽन्तर्हृदयाकाशस्तस्मिन्नयं पुरुषो मनोमयः अमृतो हिरण्मयः हृदा मनीषा मनसाऽभिक्लृप्तो य एवं विदुरमृतास्ते भवन्ति न चक्षुषा गृह्यते नापि वाचा मनसा तु विशुद्धेन" "तथा प्राणस्य प्राणः अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहत इत्यादिषु मनोमयत्वं विशुद्धेन मनसा ग्राह्यत्वम्।

टी० "मनोमयः प्राणशरीरनेते"ति, अमृतो हिरण्मय इति परमात्मपरत्ववैशद्यायोक्तं, मनस्सामान्येन सम्बन्धविशेषपरं वाक्यमाह "हृदा-

मनीषे' ति, हृदिति भक्तिरुच्यते मनीषेति धृतिः, "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैन''मिति पूर्वार्थकमेकरूपं पठित्वा "भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यति हेति महाभारते उक्तत्वात्, अभिक्लृप्तः-ग्राह्यः मनोविशेषेण सम्बन्धविशेषवाचिवाक्यमाह "न चक्षुषे 'ति, प्राणशरीरत्वे श्रुतिमाह ' तथे''ति, प्राणस्य प्राणः-आधारः सर्वाणीत्यादिवाक्येन प्राण-शब्दस्य यौगिकवृत्त्या परमात्मपरत्वं प्रागुक्तम्, इदानीमपर्यवसानवृत्त्याऽपि परमात्मपरत्वेन तद्वाक्यमुपात्तं वैश्वानराधिकरणन्यायेन उभयथाऽपि परमात्मपरत्वं युक्तमिति भावः । अत्र वाक्यजाते प्रतिपन्न मनोमयादिशब्दार्थमाह "मनोमयत्वमि"ति, ग्राह्यग्राहकलक्षणसम्बन्धविशेषाभिप्रायेण मनोमय इत्युक्तम् इत्यर्थः, प्राणशरीरशब्दार्थमाह-

सू० प्राणशरीरत्वम्, प्राणस्याप्याधारत्वन्नियन्तृत्वञ्च एवं च सति एष म आत्माऽन्तर्हृदय एतद्ब्रह्मे'ति ब्रह्म-शब्दोऽपि मुख्य एव भवति अप्राणो ह्यमना इति मनआयत्तं ज्ञानं प्राणायत्तां स्थितिञ्च ब्रह्मणो निषेधति । अथ वा सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेत्यत्रैवोपासनं विधीयते सर्वात्मकं ब्रह्म शान्तः सन्नुपासीतेति "स क्रतुं कुर्वीते''ति तस्यैव गुणोपादानार्थोऽनुवादः ।

टी० "प्राणे' ति, मनोविकारो-मनोमयः सर्वविकाराणां ब्रह्माधिष्ठानत्वात्,ब्रह्मसामानाधिकरण्यमिति केश्चिदुक्तं तदा हि मनोविकाराः सुखदुःखेच्छाद्वेषादयो ब्रह्मेत्युक्तं स्यात्, तदयुक्तं, सत्यसङ्कल्पत्वादिकल्याणगुणप्रकरणविरोधात्, हेयगुणविशेषाणामुपास्यत्वानुपपत्तेश्च । उक्तं हि "यथा क्रतुरस्मिँल्लोके भवति तथेतः प्रेत्य भवती''ति अतो हेयगुणापत्तिरेव फलं स्यात्, प्राणप्रियं शरीरमस्येत्यर्थश्चेत् प्राण-शब्देन प्राणसम्बन्ध्यभिधानं क्लिष्टं स्यात्, प्राणः शरीरं चास्येति समासो न घटते प्राणः शरीरे

यस्येति व्यधिकरणबहुव्रीहिश्च क्लिष्टः, अतो यथोक्त एवार्थ इत्यभिप्रायः उपसंहारस्वारस्यमाह "एवञ्चे"ति, मनःप्रभृतिनिषेधवाक्यार्थमुक्तार्थोविरुद्धमाह "अप्राण"इति, ग्राह्यग्राहकभावनियन्तृनियाम्यत्वादिरूपसम्बन्धविशेषो विधेयः, उपकरणोपकरणित्वलक्षणसम्बन्धविशेषो निषिध्यत इत्यर्थः । अथ स्वाभिमतयोजनाङ्कर्तुमारभते "अथवे"ति, पूर्वस्यां योजनायां सूत्रे प्रतिज्ञावाक्यस्याध्याहार्यत्वादुपक्रमोपसंहारगतब्रह्म-शब्दैकविषयत्वप्रतीतिस्वारस्येन भिन्नविषयत्वप्रतीतिपूर्वपक्षानुदयेन अधिकरणानारम्भात् श्रवणमननाभ्यामेव निष्पाद्यायाश्शान्तेरुपासननिष्पाद्यत्वञ्च एवंविच्छान्त इति श्रुतिसिद्धत्वादन्यत्रापि शान्त्युपायत्वेनोपासनविधानादर्शनाच्छान्त-शब्दस्य शान्तिकामपरत्वास्वारस्यात् वृत्त्यनुरोधाच्च इयमेव योजना समुचितेति भावः । अत्रैवोपासना विधीयत इति अत्र शान्त्युपायोपासनमुत्तरत्र मोक्षोपायोपासनमिति नायमर्थः अपि तु अत्रैव मोक्षार्थोपासनं विधीयत इत्यर्थः । शान्तशब्दार्थं स्वरसतो वदन् वाक्यार्थमाह 'सर्वात्मकमि"ति, न त्वाशंसायां क्त इह विहितोऽयमिति भावः तर्हि स क्रतुं कुर्वीतेति किमुच्यत? इत्यत्राह "स क्रतुमि"ति, के पुनर्विधेया गुणा? इत्यत्राह-

भू० उपादेयाश्च गुणा मनोमयत्वादयः अतः सर्वात्मकं ब्रह्ममनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः, तत्र सन्देहः किमिह ब्रह्मशब्देन प्रत्यगात्मा निर्दिश्यते? उत परमात्मे? ति किंयुक्तं? प्रत्यगात्मेति, कुतः तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः, सर्व-शब्दविनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्य्यन्तं कृत्स्नं जगत्, ब्रह्मादिभावश्च प्रत्यगात्मनोऽनाद्यविद्यामूलकर्मविशेषोपाधिको विद्यत एव, परस्य तु ब्रह्मणः सर्वज्ञस्य सर्वशक्तेरपहतपाप्मनो निरस्तस-

मस्ताविद्यादिदोषगन्धस्य समस्तहेयाकरसर्वभावो नोपपद्यते ।

टी० "उपादेयाश्चे"ति, उपादेयाः—विधेयाः यथा अग्निहोत्रं जुहोतीति होमे विहिते दध्ना जुहोतीत्यत्र दध्नो होमसाधनत्वमात्रं विधेयं जुहोतीत्यनुवादस्तद्वदिति । ननूपासनविधेरुत्पत्तिशिष्टसर्वात्मकत्वगुणाविरोधात् मनोमयत्वादीनां नोपास्याकारत्वम् इति चेन्न सर्वात्मकत्वस्य उपासनविधिवाक्यस्थत्वाभावात् । तज्जत्व—तल्लत्व—तदनत्वैः सर्वमिदं ब्रह्म खल्विति प्रसिद्धवन्निर्देश उपासनविध्येकवाक्यत्वं निवारयति न ह्युपासीत खल्विति प्रसिद्धवन्निर्देशवचनव्यक्तिर्घटते । वाक्यार्थमाह "अत" इति, एवमेकविषयत्वमङ्गीकृत्यैव पूर्वपक्षसिद्धान्तौ दर्शयितुं संशयमाह "तत्रे"ति, तत्र—एकविषयत्वे स्थिते, किमत्रोपास्यतया निर्दिष्टो जीव? उत परमात्मे?ति विषयः, तदर्थं किं ब्रह्म—शब्दो जीवपर? उतपरमात्मपरः? तदर्थं किं ब्रह्म—शब्दकर्मकर्तृव्यपदेशादयो मुख्या? उत ने?ति, तदर्थमणीयस्त्वव्यपदेशः किं मुख्यत्वविरोधि? उत न? तदर्थम् अणीयस्त्वज्यायस्त्वयोः किं स्वाभाविक? किमौपाधिक?मिति यदाऽणीयस्त्वं स्वाभाविकं ज्यायस्त्वमन्यथा सिद्धं तदाऽणीयस्त्वस्य ब्रह्म—शब्दादिमुख्यताविरोधित्वेन ब्रह्म-शब्दस्य जीवपरत्वादुपास्यतया निर्दिष्टो जीव इति पूर्वपक्षस्थितिः, यदाऽणीयस्त्वम् औपाधिकं ज्यायस्त्वं स्वाभाविकं तदाऽणीयस्त्वव्यपदेशस्य ब्रह्म—शब्दादिमुख्यताविरोधित्वाभावेन ब्रह्म—शब्दस्य परमात्मपरत्वेनात्रोपास्यतया निर्दिष्टः परमात्मेति सिद्धान्ते फलफलिभावः । हेतुं विवृणोति "सर्वशब्दे"ति, ततः किमित्यपेक्षायां? जीवस्य सामानाधिकरण्योपपत्तिमाह "ब्रह्मादी"ति, ब्रह्मादीभावः चतुर्मुखादिभावः, अनादीनि अचितकर्मोत्पादनहेतुरविद्या तद्धेतुः कर्मेति बीजाङ्कुरन्यायदनादिः, तस्यैवेत्यवधारणसूचितां परस्य ब्रह्मादिभावानुपपत्तिं विवृणोति "परस्ये"ति, सर्वज्ञत्वाद्धेयं जानाति, सर्वशक्तित्वान्निवारयितुं शक्नोति, न च ज्ञानशक्त्योः सङ्कोचः, अविद्यामूलकर्मविरहादतो न सर्वभावः संभवतीति भावः । ब्रह्म—शब्दः कथ?मित्यत्राह—

भा० प्रत्यगात्मन्यपि क्वचित्क्वचिद्ब्रह्म-शब्दः प्रयुज्यते, अत एव परमात्मा परं ब्रह्मेति परमेश्वरस्य क्वचित्सविशेषणो निर्देशः, प्रत्यगात्मनश्च निर्मुक्तोपाधेर्ब्रह्मत्वं विद्यते, "स चानन्त्याय कल्पत" इति श्रुतेः, अविदुषस्तस्यैव कर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानान्तज्जलानिति हेतुनिर्देशोऽप्युपपद्यते, तदयमर्थः—अयं जीवात्मा स्वतोऽपरिच्छिन्नरूपत्वेन ब्रह्मस्वरूपः सन्ननाद्यविद्यया देवतिर्य्यङ्मनुष्यस्थावरात्मनाऽवतिष्ठत इति, अत्र प्रतिविधीयते सर्वत्र प्रसिद्धोपदेशात्, सर्वत्र सर्वं खल्विदं ब्रह्मेति निर्दिष्ट सर्वस्मिन् जगति ब्रह्म-शब्देन तदात्मतयाऽभिधीयमानं परं ब्रह्मैव न प्रत्यगात्मा कुतः प्रसिद्धोपदेशात् तज्जलानिति हेतुतः सर्वं खल्विदं ब्रह्मेति प्रसिद्धवन्निर्देशात[1] ।

टी० "प्रत्यगि"ति, तदुपपादयति "अत एवे"ति, परमात्मेति दृष्टान्ततयोक्तं, यथा आत्म-शब्दो जीवेश्वरसाधारणः, तद्वद्ब्रह्म-शब्द इति भावः । त्रिपाद्याः परब्रह्माभ्युपगमेन वाक्यविशेषविचारपरत्वादत्र पूर्वपक्षिणः परमेश्वराभ्युपगमवाद उपपन्नः । आत्म-शब्दस्य साधारण्य युक्तं प्रवृत्तिनिमित्तसाधारण्यात् आप्नोतीति हि तद्व्युत्पत्तिः जगद्व्रह्म व्याप्नोतीति, एवम् उभयसाधारणं ब्रह्म-शब्दप्रवृत्तिनिमित्तं वाच्यमित्यत्राह "प्रत्यगात्मनश्चे"ति, कथं जन्मादिकारणत्वं हेतुतयोच्यते? हेतुनिर्द्देशो हि पूर्वप्रसिद्ध्यपेक्षः प्रसिद्धिश्च परमात्मविषयेत्युक्तमित्यत्राह "अविदुष"इति, जन्मादिहेतुत्वं तु बद्धस्य ब्रह्मत्वं तु शुद्धस्य, तस्य सर्वशब्दसामानाधिकरण्य कथं घटत? इत्यत्राह । "तदयमर्थ"इति, सिद्धान्तमाह "अत्रे"ति, यथा अन्तस्तद्धर्मोपदेशादित्यन्तः-शब्दः प्रतिज्ञापरः, एवं सर्वत्रेति सूत्रपदं

[1] प्रसिद्धवदुपदेशात् इति पा० ।

प्रतिज्ञापरम् इत्याह "सर्वत्रे"ति । तदेव पदं व्याचष्टे "सर्वमि"ति, सर्वत्रेति पदं न वाचकवेदान्तपरम् अपितु वाच्यजगत्परमित्यर्थः । नाशब्दमिति वा नेतर इति वा अन्य इति वा पूर्वपादादनुवर्त्तते अतः पर्यवसानलब्धं प्रतिज्ञापदं परं ब्रह्मैवेति न शारीर इत्यत्र वक्ष्यमाणमनुसन्धायाह "न प्रत्यगात्मे"ति, प्रसिद्धोपदेशादिति पदं व्याचष्टे "तज्जे"ति जगज्जन्मस्थितिलयानान्तत्कृततादात्म्यस्य च प्रसिद्धत्वेनोपदेशादित्यर्थः, इति–शब्देन हेतुतयोक्तत्वात् जन्मादीनां प्रसिद्धत्वं, प्रमाणसिद्धस्यैव हि हेतुता तत्कृततादात्म्यस्य प्रसिद्धित्वं खलु नासिद्धन्तत्स्पष्टयति–

भा० ब्रह्मणो जातत्वाद् ब्रह्मणि लीनत्वाद्ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जगदित्युक्ते यस्माज्जगज्जन्मस्थितिलयाः वेदान्तेषु प्रसिद्धाः तदेवात्र ब्रह्मेति प्रतीयते, तच्च परमेव ब्रह्म, तथा हि "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे"ति प्रक्रम्य "आनन्दो ब्रह्मेति व्यजानात् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिना पूर्वानुवाकप्रतिपादितानवधिकातिशयानन्दयोगिनो विपश्चितः परस्माद्ब्रह्मण एव जगदुत्पत्तिस्थितिलया निर्दिश्यन्ते, तथा "स कारणङ्करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति करणाधिपस्य जीवस्याधिपः परं ब्रह्मैव कारणं व्यपदिश्यते, एवं हि सर्वत्र परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम्, अतः परब्रह्मणो जातत्वात्तस्मिन् लीनत्वात् तेन प्राणनात तदात्मकतया तादात्म्यमुपपन्नम्, अतस्सर्वप्रकारं सर्वशरीरकं सर्वात्मभूतं परं ब्रह्म

शान्तो भूत्वा उपासीतेति श्रुतिरेव परब्रह्मणस्सर्वात्मकत्वमुपपाद्य तस्योपासनमुपदिशति, .

टी० "ब्रह्मणा"इति, कारणत्वनिबन्धनतादात्म्यस्य चात्र प्रसिद्धत्वेनोपदेशः फलितः प्रसिद्धत्वमस्तु ततः किं? मित्यत्राह "तच्चे"ति, प्रसिद्धं दर्शयति "तथा ही"ति, यतो वा इमानीति वाक्यस्य जीवविषयत्वव्यावृत्त्यर्थमाह "आनन्दो ब्रह्मे"ति, आनन्द—शब्दस्यानन्दमयपरत्वव्यक्तीकरणायाह 'पूर्वानुवाके"ति, वाक्यान्तरमाह "तथे"ति, वाक्यान्तराणामप्युक्तार्थपरत्वात् तेष्वपि तत्प्रसिद्धिमाह "एवमि"ति, श्रुत्यन्तरेष्वपि जन्मादिहेतुत्वकृततादात्म्यमप्यर्थसिद्धमित्याह "अज"इति, तदात्मकतया तादात्म्यमिति तदात्मकतयति श्रुत्यन्तरविषयं तज्जत्वतदनत्वतल्लत्वैः श्रुत्यन्तरेषु तदात्मकत्वोपपादनादिह प्रतिपन्नमपि तादात्म्यमुपपन्नमित्यर्थः चिदचिद्विलक्षणस्य कथं तादात्म्योपपत्ति? रित्यत्राह "अतः सर्वे"ति, सर्वात्मशब्दवैशद्याय सर्वशरीरमित्युक्तम् आकृत्यधिकरणन्यायेन प्रकारिपर्यन्ताभिधानसिद्ध्यर्थमाह "सर्वप्रकारमि"ति, श्रुतिरेवं सर्वं खल्वित्यादिश्रुतिरेव उपपाद्य तज्जलानीत्यंशेन कार्यकारणभावेन शरीरात्मभावेन च उपपाद्येत्यर्थः तत्र ह्यन्तर्यामिरूपेण कृतस्य प्राणनस्य शरीरात्मभावापेक्षत्वातेन च तथोपपादितम्भवति, स्थितिदशायां हि शरीरात्मभावेन प्रलयावस्थायामेकमेवाद्वितीयमिति सर्वभेदशून्यत्वान्न शरीरात्मभावसिद्धिरित्यत्राह—

भू० परब्रह्म हि कारणावस्थं कार्यावस्थं सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतम् एवंभूततादात्म्यस्य प्रतिपादने परस्य ब्रह्मणः सकलहेयप्रत्यनीककल्याणगुणाकरत्वन्न विरुध्यते प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मन्यप्रसङ्गात्प्रत्युत निरतिशयैश्वर्यापादनेन गुणायैव भवतीति पूर्वमेवोक्तम् । यदुक्तं जीवस्य सर्वतादा-

त्म्यमुपपद्यत इति, तदसत् जीवानां प्रतिशरीरं भिन्नाना-मन्योन्यतादात्म्यासम्भवात्, मुक्तस्यानवच्छिन्नस्वरूपस्यापि जगत्तादात्म्यं जगज्जन्मस्थितिप्रलयकारणत्वनिमित्तं न सम्भवतीति जगद्व्यापारवर्जमित्यत्र वक्ष्यते, जीवकर्मनि-मित्तत्वाज्जगज्जन्मस्थितिलयानां स एव कारणमित्यपि न साधीयः तत्कर्मनिमित्तत्वेऽपीश्वरस्यैव जगत्कारणत्वादतः परमात्मैवात्र ब्रह्म–शब्दाभिधेयः इममेव सूत्रार्थमभि-युक्ता बहु मन्वते यदाह वृत्तिकारः "सर्वं खल्विति सर्वात्मा ब्रह्मेश" इति,

टी० "परं ब्रह्महो"ति, स्थितौ शरीरात्मभावोपपादनादुभयलिङ्ग-कस्य ब्रह्मणः कारणावस्थायामपि विशिष्टत्वमर्थसिद्धं श्रुत्यन्तरैः कण्ठोक्तं चेत्यभिप्रायः सर्वदा विशिष्टं चेत् कार्यं कारणावस्थयोः को भेद? इति शङ्का-परिहाराय सूक्ष्मस्थूलचिद्वस्तुशरीरतयेत्युक्तं, ततः किमुभयलिङ्गकत्वस्येत्य-त्राह "एवं भूते"ति, जीवस्यैव सर्वतादात्म्य पूर्वपक्षिणोक्तमनूद्य दूषयति "यदुक्तमित्या"दिना, मुक्तस्य तत्सम्भवतीत्यत्राह "मुक्तस्ये"ति, जग-ज्जन्मस्थितिप्रलयकारणत्वनिमित्तमिति बहुव्रीहिः कारणत्वयुक्तमित्यर्थः जीवस्य कर्मद्वारा जगत्कारणत्वमनूद्य दूषयति "जीवकर्मे"ति, तत्कर्मनि-मित्तत्वेऽपीति न हि कर्म जगतः कर्तृरूपनिमित्तमुपादानञ्च उभयमीश्वर कर्म तु केवलं वैषम्यहेतुः यथा घटादिनिर्माणस्य भोक्तृकर्मनिमित्तत्वेऽपि भोक्तृकर्मणां न कर्तृत्वमुपादानत्वं वा कुलालमृत्पिण्डयोरेव हि तदुभयं, न च तज्जलानित्यत्र तच्छब्दस्य कर्मवाचित्वम् अतो न जीवस्य जगत्कार-णत्वकृतन्तादात्म्यमस्तीत्यभिप्रायः। सूत्रार्थमुपसंहरति "अत" इति, द्वितीय-योजनोक्तार्थस्यैव साम्प्रदायिकत्वमाह "इममेवे"ति, सर्वं खल्विति वाक्येन सर्वात्मतयोक्तं ब्रह्म ईशः परमात्मेत्यर्थः ॥

(शेषमये)

नात्· अतो न लक्ष्यलक्षणासन्देहः· समासमैरिति विभागः· विनिमयो हि केन चिद्वस्तुना दत्तेन कस्यचिदादानम्· तच्च क्वचित्समेन समस्य, क्वचिदसमेनासमस्य· अन्त्यमपि द्विधा,क्वचिच्चूनेनोत्तमस्य, क्वचिदुत्तमेन न्यूनस्येति त्रिविधोऽयमित्यर्थः· समासमत्वं चोपादेयत्वानुपादेयत्वाभ्याम्· तत्राऽऽद्यद्वयं यथा—

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वा श्रयति भृशमामोदमऽसमम्, ।
लता[क]स्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥

अत्र प्रथमार्द्धे लास्येनोपादेयतया समस्यामोदस्य, द्वितीयार्द्धे उपादेयतयोत्तमया दृशा ऽऽधिव्याधीना[ख]मतादृशतया न्यूनानां विनिमयः ।

अन्त्या यथा—

नानाविधप्रहरणैर्नृप ! संप्रहारे स्वीकृत्य दारुणनिनादवतः प्रहारान् ।
दृप्तारिवीरविसरेण वसुन्धरेयं निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥
अत्रोत्तमया वसुन्धरया न्यूनानां प्रहाराणां विनिमयः ॥ ११३ ॥
(इति परिवृत्तिः २८)

**प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः, ।**
**तद्भाविकम्—**

भूतभाविन इति द्वन्द्वो, न कर्मधारय इत्यविरोधः· भूता भाविनो भावा यत्प्रत्यक्षा इव क्रियन्ते प्रत्यक्षतया ऽभिधीयन्ते, तद्भाविकम्, भावः कवेरभिप्रायो निश्चयादिप्रतीतिविषयको ऽत्रास्तीतिव्युत्पत्तेरित्यर्थः· उदाहरणम्—

आसीदञ्जनमत्रेति पश्यामि तव लोचने,
भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥

(क) क्षमा इति पा· ।
(ख) दृशा व्याधीनामिति पु·, नतु क्वाप्या'ऽऽधिव्याध्यादीना'मित्यास्ते ।

अत्र पूर्वार्द्धे भूतस्याऽञ्जनस्यो,त्तरार्द्धे भाविनो भूषणसम्भारस्य प्रत्यक्षतयाभिधानम् ॥ ऽ ॥–॥ (इति भाविकम् २९)

—काव्यलिङ्गं, हेतोर्वाक्यपदार्थता ॥ ११४ ॥

अत्र विवक्षितविवेकेन हेतुवचनं काव्यलिङ्गमिति लक्षणं, वाक्य-पदार्थतेति विभागः· वाक्यार्थता पदार्थता चेत्यर्थः· तत्र वाक्यार्थता यथा—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे! न प्रायः क्वचिदपि भवन्तं प्रणतवान्, ।
नमन्मुक्तः संप्रत्यह,मतनुरग्रेऽप्यनतिभाङ्,[क]
महेश! क्षन्तव्यं तदिदमपराधद्वयमपि[ख] ॥

अत्र 'पुरा क्वचिदपि नाहं प्रणतवान्, अग्रेप्यहमनतिभा'गित्यवा-न्तरवाक्ययोरर्थो ऽनमनमपराधे हेतुः । अनेकपदार्थता यथा—

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्, ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्य ऽकाण्डयमदण्ड इवैष भुजः ॥

अत्र शस्त्रोपक्षेपो भुजपाते हेतुः· नचायं वाक्यार्थः, 'शस्त्रमुपक्षि-पत' एतावन्मात्रस्यावाक्यत्वात्·[ग] 'तत्र वपुषि वधाय शस्त्रमुपक्षिपत' इत्यस्यापि न वाक्यत्वं,· विशेषणत्वादिति तदर्थस्यापि हेतुत्वे न वाक्या-र्थस्य हेतुत्वमिति । एकपदार्थता यथा—

भस्मोद्धूलन! भद्रमस्तु भवते, रुद्राक्षमाले! शुभं,
हा सोपानपरम्परे! गिरिसुताकान्तालयालंकृते[घ] ।

(क) ०प्यनतिमानिति पा॰ ।

(ख) ०द्वमर्मिष्वेति पा॰ ।

(ग) एतावन्मात्रस्याऽवाक्यार्थत्वादिति पुस्तकद्वये ।

(घ) हा सोपानपरम्परां गिरसुताकान्तालयालङ्कृतिमिति पा॰ ।

अद्याराधन[क]तोषितेन विभुना युष्मत्सपर्यासुखा-
ऽऽलोकोच्छेदिनि मोक्षनाम्नि महामोहे निधीयामहे[ख] ॥

अत्र महामोहत्वे सुखालोकोच्छेदिता हेतुः तच्च समासादेक-पदार्थे एव अर्थान्तरन्यासे तटस्थतयोपनिबद्धस्य हेतुत्वे पर्यवसानम् इह तु साक्षादेव हेतुविभक्त्यादिना हेतुतयोपनिबद्ध इति ततो भेदः ॥ ११४ ॥ (इति काव्यलिङ्गम् ३०)

पर्यायोक्तं, विना वाच्यवाचकत्वेन यद्वचः ।

वाच्यवाचकभावभिन्नेनावगमनव्यापारेणार्थाद्वाच्यस्यैव यदभिधानं, तत्पर्यायोक्तम्, पर्यायेण भङ्ग्यन्तरेणाभिधानात् ध्वनेस्तु न वाच्य एवार्थो विषय इति ततो भेदः उदाहरणम्—

यं प्रेक्ष्य चिररूढाऽपि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे, मानेन हृदये हरेः ॥

अत्रैक एवार्थ 'ऐरावतशक्रौ मदमानविमुक्तौ जातौ'विति व्यञ्जनया, 'मदमानाभ्यां तयोरधिकरणयोर्निवासप्रतीतिरुज्झिते'त्यभिधया च प्रतिपाद्यते, तेन च यदेवोच्यते तदेव व्यङ्ग्यम् नच प्रतिपन्नस्यैव प्रतिपत्तिरफलेति, किं व्यापारद्वयेनेति वाच्यम्, यतो, यथा व्यङ्ग्यं, तथा नोच्यते, प्रकारयोर्भेदात् एकरूप एव वस्तुनि प्रकारभेद एव कथं स्यादिति चेत्, यथा, शुक्ले गवि चलति निर्विकल्पकसविकल्पकयोः एक एव ह्यर्थस्ताभ्यां विषयीक्रियते, न पुनर्यथा निर्विकल्पकविषय,स्तथैव सविकल्पकेनापि विषयीक्रियते, भिन्नत्वसंसृष्टत्वाविषयकं निर्विकल्पकं, भिन्नत्वसंसृष्टत्वप्रकारकं तु सविकल्पकमिति ॥ ऽ ॥ (इति पर्यायोक्तम् ३१)

उदात्तं वस्तुनः संपत्—

संपत् समृद्धियोगो, न तु तस्यैवातिशयः उदाहरणम्—

(क) आद्याराधनेति पा० ।
(ख) निलीयामह इति क्वाचित्कस्तु नार्हः पाठः ।

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु, भोजनृपतेस्तत्त्याग(क)लीलायितम् ॥

अत्र विद्वद्भवनस्य मुक्तादिधनसमृद्धियोगः ॥–॥

—महतां चोपलक्षणम् ॥ ११५ ॥

महतां यदुपलक्षणमङ्गभावो ऽर्थाद्वर्णनीये, तदप्युदात्तमित्यर्थः· उदाहरणम्–

तदिदमरण्यं, यस्मिन् दशरथवचनानुपालनव्यसनी ।
निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः ॥

अत्रैतादृशो महान् रामो दण्डकाया वर्णनीयाया अङ्गम्· नन्वत्र(ख) रामगत उत्साहातिशय एव चमत्कारनिदानम्, तस्य प्रधानत्वाद्विच्छित्त्यन्तराभावाच्च किंविषयोयमलङ्कारव्यपदेश इति वाच्यं, नह्यत्र वीरो रसः प्रधानं, तस्येहाङ्गत्वात् ॥ ११५ ॥ (इत्युदात्तम् ३२)

तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत्, ।
समुच्चयो ऽसौ–

तत्सिद्धिहेतौ तस्य प्रस्तुतस्य कार्यस्य साधके· समाधात्र ऽतुल्यकक्षयोः कारणयोरुपादान,मत्र तुल्यकक्षयोरिति विशेषः· उदाहरणम्–.

दुर्वाराः स्मरमार्गणाः, प्रियतमो दूरे, मनोऽत्युत्सुकं,
गाढं प्रेम, नवं वयो, ऽतिकठिनाः प्राणाः, कुलं निर्मलम्, ।
स्त्रीत्वं धैर्यविरोधि, मन्मथसुहृत्कालः, कृतान्तोऽक्षमी,(ग)
नो सख्यश्चतुराः, कथं नु विरहः सोढव्य इत्थं शठः ॥

अत्र स्मरमार्गणा एव विरहासहत्वं कुर्वन्ति, ततोऽधिकं प्रियजन·

(क) ०स्तत्क्षानेति पा· ।
(ख) मत्वत्रेति पु· ।
(ग) ०“ऽक्षमो”–इति पु· ।

दूरस्थित्याद्युपात्तम्· एष एवोक्तलक्षणः समुच्चयः सद्योगे, ऽसद्योगे, सदसद्योगे च पर्यवस्यतीति यत् केनचित्ते पृथग्लक्षिता,स्तदयुक्तम्· तथाहि,

कुलममलिनं, भद्रा मूर्त्ति,र्मतिः श्रुत[क]शालिनी,
भुजबलमऽलं, स्फीता लक्ष्मीः, प्रभुत्वमखण्डितम्, ।
प्रकृतिसुभगा ह्येते भावा, अमीभिरयं जनो
व्रजति सुतरां दर्पं, राजँस्त एव तवाङ्कुशाः ॥

अत्र कुलादीनां समीचीनानामेव योगः· "दुर्वारा" इत्याद्युक्तोदाहरणे स्मरमार्गणादीनामसमीचीनानाम्·

शशी दिवसधूसरो, गलितयौवना कामिनी,
सरो विगतवारिजं, मुखमनक्षरं स्वाकृतेः, ।
प्रभुर्धनपरायणः, सततदुर्गतः सज्जनो,
नृपाङ्गणगतः खलो, मनसि सप्त शल्यानि मे ॥

अत्र सदसतोर्योगः, दुर्जनस्याऽसत्त्वा,च्छश्यादीनां सत्त्वात्· एतच्चिन्त्यम्· पूर्वं दूरस्थित्यादिविशेषणेन, धूसरत्वादिनात्राप्यसम्यत्त्वमिति ॥ ऽ–॥

समुच्चयान्तरमाह–

–स त्व ऽन्यो युगपद्या गुणक्रियाः ॥ ११६ ॥

अत्र गुणाः क्रियाश्चेतिविग्रहे संख्याविशेषस्याविवक्षणाद्, विशेषविवक्षाविरहेण च सजातीयवद्विजातीयस्यापि यौगपद्यस्य लाभाद् गुणौ च क्रिये च गुणक्रिये च[ख]युगपद्भवतः, स त्रिरूपः समुच्चयः· तत्र गुणयोर्यौगपद्यं यथा–

विदलितसकलारिकुलं[ग] तव बलमिदमभवदाशु विमलं च, ।
प्रखलमुखानि नराधिप! मलिनानि च तानि जातानि ॥

अत्र विमलत्वमलिनत्वयोः । क्रिययोर्यथा–

---

(क) श्रुतीति पा· ।
(ख) गुणक्रिये चेत्येकत्र नास्ति, तदयुक्तम्, उदाहरणविरोधात् ।
(ग) विदलितसकलारिकुलमित्यत्र यदेकत्र पुस्तके शोधयित्वा त्रुटिपूरणमुद्रया विदलितहृदयं सकलारिकुल'मित्यङ्कित्य,तत्किमितीति न तस्य प्रयोजनं जानीमः ।

अयमेकपदे तया वियोगः प्रियया चोपनतः[क] सुदुःसहो मे, ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥

अत्रो'पनतो'[ख] 'भवितव्यं चे'ति क्रिययोः । गुणक्रिययोर्यथा—

कलुषं च तवाहितेष्वऽकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः, ।
पतितं च महीपतीन्द्र! तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥

अत्र कलुषत्वपतनयोर्गुणक्रिययोः· अत्र कश्चित्, वैयधिकरण्ये एव समुच्चय इत्याह, तच युक्तं, "धुनोति चासिं तनुते च कीर्त्ति"मित्यादौ सामानाधिकरण्येपि दर्शनात्· [ग] केचित्तु—सामानाधिकरण्य एवायमित्याहुः· तदपि न सम्यक् "कृपाणपाणिश्च भवान्रणक्षितौ, ससाधुवादाश्च सुराः सुरालय"इत्यादौ वैयधिकरण्येपि तद्दर्शनात्· ॥ ११६ ॥

(इति समुच्चयः ३३)

एकं क्रमेणा ऽनेकस्मिन्पर्यायः—

एकत्वेन विवक्षितं वस्तु यत्र क्रमेणानेकस्मिन् भवति क्रियते वा स एकपर्यायः·अत्र क्रमेणेति समुच्चयव्यावर्त्तनाय· प्रयोजकानिर्द्दिष्टनिर्देशो भवतिकरोत्यर्थौ नतु स्वाभाविकत्वास्वाभाविकत्वे,वृषलक्ष्मणः कण्ठकालकूटवासस्यास्वाभाविकत्वेन भवतीत्यत्रानुदाहरणत्वापत्तेः· तत्राद्यो यथा—

नन्वाश्रयस्थितिरियं तव कालकूट!
केनोत्तरोत्तरविशिष्टपदोपदिष्टा, ।
प्रागर्णवस्य हृदये, वृषलक्ष्मणो ऽथ कण्ठे
ऽधुना वससि वाचि पुनः खलानाम् ॥

अत्र कालकूटस्य वस्तुन· एकस्याऽनेकत्रवास[घ]प्रयोजकं किञ्चिदपि नोक्तम्· न केवलमयं वास्तविक एकत्वे, किन्त्वारोपितेऽपि, यथा—

बिम्बोष्ठ एव रागस्ते तन्वि! पूर्वमदृश्यत, [क] ।
अधुना हृदयेप्येष मृगशावाक्षि! लक्ष्यते[ख] ॥

(क) चोपगत इति पु· ।
(ख) पूर्ववदुपगत इत्येकत्रात्रापि ।
(ग) ०ण्ये च तद्दर्शनादिति, ०ण्ये तद्दर्शनादिति ख·पा· ।
(घ) वासे—इति व्यासः क्वचित् ।

अत्र प्रयोजकानिर्द्देशः स्फुट एव रागपदार्थस्य त्विष्ठे लौहित्यात्मकतया, हृदये तु स्नेहाद्यात्मकत्वेन भेदेप्यैकत्वस्याध्यवसानाच्चैकत्वविवक्षाविरोधः ।

श्रोणीबन्धस्त्यजति तनुतां, सवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः, संश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवता, मद्वितीयत्वमास्यं
त(ग)द्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥

द्वितीयो यथा—

तस्साणं सिरिसहोअररअणाहरणम्मि हिअअमेक्करसं ।
बिंबाहरे पिआए णिवेसिअं कुसुमबाणेण ॥

अत्र 'कुसुमबाणेणे'ति प्रयोजकनिर्द्देशः ॥–॥

—अन्यस्ततोऽन्यथा ।

अनेकमेकस्मिन् क्रमेण यद्भवति क्रियते वा, सो ऽन्यपर्याय इत्यर्थः ॥ पूर्ववद्व्याख्येयम् । तत्र भवत्यर्थे यथा—

मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति, ।
अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥

अत्रैकस्मिन् खलवचसि क्रमेणामृतव्यञ्जने विषकथने च न प्रयोजकनिर्द्देशः । करोत्यर्थे यथा—

तद्गेहं नतभित्ति, मन्दिरमिदं लब्धावकाशं दिवः,
सा धेनुर्जरती, नदन्ति करिणामेता घनाभा घटाः, ।
स क्षुद्रो मुसल(घ)ध्वनिः, कलमिदं सङ्गीतकं योषिता,-
माश्चर्य्यं दिवसैर्द्विजो ऽयमियतीं भूमिं(ङ) समारोपितः ॥

अत्रैकस्मिन्द्विजे तद्गेहतन्मन्दिराद्यैरनेकैः 'दिवसै'रिति प्रयोजकनिर्द्देशः नचेयं परिवृत्तिः, हानोपादानयोरविवक्षितत्वात् ॥ ११६ ऽ ॥ (इति पर्यायः ३४) (शेषमग्रे)

(क) ०उल्लसतीति पा० ।
(ख) दृश्यत इति पा० ।
(ग) त्वदिति क्वचित् ।
(घ) मुसलेति पा० ।
(ङ) भूतिमिति तु क्वाचित्को नातिहृद्यः ।

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या ।

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

---

(*Continued from page* 475. Vol. XII.)

अस्थियज्ञे होतृकामाभावाधिकरणम् ।

सू० स्युर्वा होतृकामाः ॥ २१ ॥

प्रकृतौ सन्ति होतृकामाः यं कामयेत पापीयान् स्यादिति नीचैस्तरान्तस्य याज्यया वषट् कुर्यात् यं कामयेत वसीयान् स्यादिति उच्चैस्तरान्तस्य याज्यया वषट् कुर्यादि"त्यादयः, ते मृताधिकारेऽपि कर्मणि होतुः कामनासम्भवान्न निवर्तेरन्, निवृत्तिर्वा यजमानफलमेव हि अत्रापि निर्द्दिश्यते, न चानिर्दिष्टं फलं भवति; न च मृतस्येच्छा विज्ञायते तस्मादेवमादीनामपि निवृत्तिः ॥

यजमानस्य दिष्टगतावपि सर्वस्वारस्यसमापनाधिकरणम् ।

सू० सर्वस्वारस्यदिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥ २२ ॥

सर्वस्वारो नामैकाहः स्वर्गकामस्य विहितः, तत्राभेवस्तोत्रकाले "ब्राह्मणाः समापयत मे यज्ञ"मिति प्रैषमृत्विग्भ्यः प्रदाय यजमानो म्रियते तस्मिन्मृते शेषं कर्म समापनीयं नेति संशये, न समाप्यं मृतस्य कर्तृत्वासम्भवात्, यजमानस्य तावन्न समाप्तिः कर्त्तव्या, यच्च यजमानस्य कार्यं तदृत्विजः कुर्वन्ति नान्यत्तस्मादृत्विजोऽपि न समापयेयुः, उच्यते ।–यद्यसम्भवि कर्त्तव्यं तत एवं भवेदिदं जीव[1]न्नेव तु स प्रैषाच्छिष्टे कर्तृत्वमृच्छति" वरणभरणादिसमाचरणमेव जीवदवस्थायामपि यजमानस्य कर्तृत्वं, तच्च मरणोत्तरकालभाविन्यपि कर्मशेषे जीवदवस्थायामिव संवि-

---

१ जीवन्निव तु इति पा०

धानेन सम्भवति, प्रत्यक्षमेव च समापयतीति प्रैषेण समाप्तिश्चोद्यमाना न शक्यते ऽपह्नोतुं, न हि ब्राह्मणभागगताद्विधेः प्रैषस्य कश्चिद्विशेषः, न हि प्रैषे प्रैषकपुरुषस्य स्वातन्त्र्यं येन पौरुषेयत्वाद्दोषः स्यात्, प्रयोक्तृत्वमात्रं तु ब्राह्मणगतेष्विव विधिषु प्रैषेष्वपि पुरुषाणाम्, अतः प्रत्यक्षमेव विहितं समापनं स्वर्ग एव वा अत्र मरणेनार्थिनः फलं न मरणं, मरणकाम इत्यङ्गीकृतमरण इत्यर्थः, तेन यो ह्येवं ज्ञात्वा स्वर्गं प्राप्नुयानीति कामयते तस्यायं क्रतुः, तथा च हरिभिरुक्तं "प्रधानस्य मरणेनार्थिन इज्यां प्रवर्तयन्ती" ति तेन संजातेऽपि मरणे स्वर्गार्थमेव समापनीयम् ॥

यजमानस्य दिष्टगतौ सर्वस्वारस्यशुक्लस्यर्थादियोगाङ्गानुष्ठानाधिकरणम् ।

सू गते कर्मास्थियज्ञवत् ॥ २३ ॥

अथ मृते यजमाने कर्मशेषे क्रियमाणे किं बाध्यं? किं वा ने? ति प्रश्नेनैवोपक्रमः, अत्रोत्तरम् अस्थियज्ञे ऽस्थ्नामधिकारपक्षे यथोक्तं तथेहापि द्रष्टव्यम् ॥

सर्वस्वारे यजमानस्य दिष्टगतावपि आयुराशंसनाधिकरणम् ।

सू० जीवत्यवचनमायुराशिषस्तदर्थत्वात ॥ २४ ॥

सर्वस्वार एव मरणात्प्राग्जीवदवस्थायामायुराशास्त इत्यायुराशीर्वक्तव्या ने? ति संशयः तत्र मरणाभ्युपगमेन प्रकृतस्य नाशासितव्यमायुः प्रागपि स्वाभवकालान्मरणं संभवति, तथा सति क्रतोर्वैगुण्याद्यावदाभवकालमाशासितव्यमायुः, तस्मादायुराशीर्वक्तव्या ॥

द्वादशाहे ऋतुयाज्याद्यनुष्ठानाधिकरणम् ।

सू० क्रिया स्याद्धर्ममात्राणाम ॥ २५ ॥

यत्प्रकृतौवानत्यर्थमृत्विग्वरणं दक्षिणादानं च न तत्सत्रे स्यादित्युक्तं, यस्त्वदृष्टार्थमृतुयाज्यावरणम् आत्रेयाय हिरण्यदानं च तत्सत्रेऽपि कर्तव्यमिति प्रत्युदाहरणमात्रमेतत् ॥

पवमानेष्टौ निर्वापानुष्ठानाधिकरणम् ।

सू० गुणलोपे च मुख्यस्य ॥ २६ ॥

दर्शपूर्णमासयोरग्निहोत्रहवण्याहवींषि निर्वपतीति श्रुतो निर्वापः पवमानेष्टिषु चोदकेन प्राप्तः कर्तव्यो ने? ति संशये न कर्तव्यः कस्मात्

अग्निहोत्रहवण्यभावात्, यया ऽग्निहोत्रं हुतं सा ह्यग्निहोत्रहवणी, न च पवमानेष्टिवेलायामग्निहोत्रं हुतं सम्भवति, विना वाऽग्निहोत्रहवण्या निर्वापो विगुणत्वादकर्त्तव्य इति प्राप्ते ब्रूमः—अतिदेशेन हि कार्यमुखेन पदार्थेषु प्राप्यमाणेषु हविःसंस्कारार्थतया निर्वापः प्राप्यते तदङ्गभूताग्निहोत्रहवण्यसम्भवाच्च प्राप्यते, न चाप्राप्ताया गुणत्वम्, अतस्तदभावेऽप्यगुणत्वात्कर्त्तव्य एव निर्वापः॥

वाजपेये मुष्टिलोपाधिकरणम्।

सू० मुष्टिलोपात्सङ्ख्यालोपस्तद्गुणत्वात्स्यात् ॥ २७ ॥

वाजपेये श्रूयते "बार्हस्पत्यो नैवारः सप्तदशशरावः क्षीरे चरुर्भवती"ति अस्ति तु प्रकृतौ "चतुरो मुष्टीर्निर्वपती"ति चतुःसङ्ख्या मुष्टिद्रव्यञ्च तदुभयमिह चोदकेन प्राप्तं, न च चतुर्भिर्मुष्टिभिः सप्तदशशरावपरिमाणश्चरुः सम्पादयितुं शक्यते, अतोऽवश्यं बाधितव्ये सति किमुभयं बाधितव्यं शरावद्रव्येण मुष्टिद्रव्यं सप्तदशसंख्या या च चतुःसङ्ख्या किं वान्यतरत् तत्रापि किमनियमः? अथ वा मुष्ट्यनुग्रहः? सङ्ख्यालोपः? विपरीतं वे?ति, तत्राविशेषादुभयोर्बाधः, तत्रापि समानकार्यत्वात् द्रव्यं द्रव्येण सङ्ख्याः सङ्ख्ययेत्येकः पक्षः, सप्तदशसङ्ख्याशरावपरिमाणं च यागद्रव्याङ्गं चतुःसङ्ख्या मुष्टिश्च निर्वापाङ्गम्, अतो न तावत्साक्षादेकविषयत्वं येनोभयमुभयेन बाध्येत चतुर्भिर्मुष्टिभिः सप्तदशशरावश्चरुर्न सम्पादयितुं शक्यत इत्यर्थाद्बाधः, तत्रैकबाधेनोपपत्तौ नोभयबाधनं युक्तं, तस्मादन्यतरबाधः तत्राविशेषादनियम इति द्वितीयः, सङ्ख्याया द्रव्याङ्गत्वात्प्रधानस्य मुष्टिद्रव्यस्यानुग्रहः सङ्ख्यायास्तु बाध इति तृतीयः, न सङ्ख्याया मुष्ट्यङ्गत्वं वाक्यलक्षणसमानाधिकरण्याद्द्रव्यसम्बन्धबाधेन द्वितीयाश्रुत्या निर्वापाङ्गत्वावगमादुभयोरपि क्रियाङ्गत्वावगमात्तुल्यत्वं तत्र मुख्यत्वात्सङ्ख्यानुग्रहो जघन्यत्वाच्च मुष्टिलोप इति सिद्धान्तः॥

धेनुमालभेतेत्यादिश्रुतौ धेन्वादिशब्दानां गवान्विताधिकरणम्।

सू० औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात् ॥ २८ ॥

'द्यावापृथिव्यां धेनुमालभेत वायव्यं वत्समैन्द्रमृषभ'मिति गोद्रव्यासाधारणगुणवचनेषु धेन्वादिशब्देषु श्रुतेषु किं चोदकप्राप्तमजद्रव्यं प्रवर्त्तते ने? ति संशयः, तत्र यद्यपि गोरसाधारणं गुणमेते वदन्ति तथाऽपि न गोर्वाचकाः तेनात्र गोर्नोपदेशेन नातिदेशेन प्राप्तिः, अजस्त्वतिदेशेन प्राप्यते तत्रैव धेन्वादिशब्दा लक्षणया वर्तन्ते, यथाऽजमृषभमित्यादिष्विति प्राप्ते ब्रूमः—नानुमानिकचोदकानुरोधेन श्रुतानां शब्दानां लक्षणावृत्तिर्न्याय्या, तेन यद्यपि गोद्रव्यं न शाब्दं तथाऽपि श्रुतगुणविशेषसम्पादनाय गौरेवालब्धव्यः, चोदकप्राप्तं त्वजद्रव्यं प्रत्यक्षश्रुतगुणविशेषविरोधात्र प्राप्यते ॥

वायव्यं श्वेतमालभेतेत्यनेन अजस्यैवालम्भनाधिकरणम् ।

सू० नैमित्तिके तु कार्यत्वात्प्रकृतेः स्यात्तदापत्तेः ॥ २९ ॥

यस्तु साधारणगुणवचनः श्वेतादिशब्दः "वायव्यं श्वेतमालभेते"ति स चोदकप्राप्ते ऽप्यजे सम्भवतीति न तत्राजस्य बाधनमिति प्रत्युदाहरणमेतत् ॥

साद्यस्के चित्रायाश्च खले वाल्यास्तण्डुलस्य च यथाक्रमखादिरत्व ब्रैहत्वानियमाधिकरणम् ।

सू० विप्रतिषेधे तद्वचनात्प्रकृतेर्गुणलोपः स्यात्तेन च कर्मसंयोगात् ॥ ३० ॥[1]

साद्यस्के श्रूयते "खले वाली यूपो भवती"ति तत्र संशयः किं चोदकप्राप्तं खादिरादिकं यूपं छेदनादिभिः कृत्वा सखले वाली कर्त्तव्यः यूपः खले वाली भवतीति वचनव्यक्तिः? उत यैवोत्तरवेदिभूते खले पूर्वावस्थिता खादिर्यखादिरी वा खले वाली तस्यामेव पशुनियोजनं कर्त्तव्यं या खले वाली स यूपो भवति यूपकार्यकरी भवतीति वचनव्यक्तिरिति, तथा चित्रायामिष्टौ श्रूयते दधिमधुघृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमिति, तत्रापि चोदकप्राप्ता व्रीहयोऽवघातादिभिस्तण्डुलीकर्त्तव्या? उत व्रैहा अव्रैहा वा लोकसिद्धास्तण्डुला ग्रहीतव्या? इति, तत्र चोदकानुग्रहाय यूपस्य खले वालीत्वं व्रीहीणां च तण्डुलत्वं यथासिद्धोपादाने

1 प्राकृतगुणलोपः इति पा० ।

हि चोदकप्राप्ताः खदिरादयो व्रीहयस्तत्संस्काराश्च छेदनावघातादयो बाध्येरन्। किं च खले वाली यूपकार्यं भवतीति विधौ यूप-शब्दस्या यूपे तत्कार्यकरे यजमानशब्दस्येव प्रस्तरे गौणी वृत्तिः स्यात्, यूपस्य तु खले वालीत्वविधौ न गौणत्वं, तस्मात्खदिरादयः खले वाली कर्त्तव्याः, व्रीहयश्च तण्डुलीकर्त्तव्या इति प्राप्ते ब्रूमः—यूपस्य खले वालीत्वमदृष्टार्थं विधीयते। खले वाल्यास्तु यूपत्वं दृष्टार्थं पशवन[1]पक्रमणात्, तस्माद्यथासिद्धैव खादिर्यखादिरी वा खले वाली यूपकार्यं कुर्यात्, तण्डुलाश्च यथासिद्धा एवोपादेयाः, प्रकृतौ हि अपणस्य विधानात्प्रकृतिद्रव्यमुपादाय स्वयमेव हविः कर्त्तव्यं विकृतावपि यत्र अपणं चर्वादौ तत्रापि प्रकृतिद्रव्यं गृहीत्वा स्वयमेव हविः कर्त्तव्यं तण्डुलेषु अपणस्यार्थाभावान्निवृत्तौ न अपणकर्त्तव्यताबलेन प्रकृतिद्रव्यप्राप्तिः, प्राप्ते च प्रकृतिद्रव्योपादाने व्रीहियवनियमः, तस्माल्लोकप्रसिद्धा एव तण्डुला व्रैहा अव्रैहा वा ग्रहीतव्याः॥

खले वाल्यां तक्षणाद्यननुष्ठानाधिकरणम्।

सू० परेषां प्रतिषेधः स्यात्॥ ३१॥

यथासिद्धे खले वाल्युपादानात्खादिरादिकाष्ठं बाध्यमिति स्थितम् अथ छेदनतक्षणादयः संस्काराः कर्त्तव्या नेति सन्देहे चोदकानुग्रहाच्छक्यत्वाच्च कर्त्तव्याः प्रयोजनाभावात्तु न कर्त्तव्याः, छिन्ना हि खले वालीशलतृणीभूता निखातोच्छ्रिता तस्याः छेदनं तक्षणं निखननमुच्छ्रयणं च लुप्तार्थमकर्त्तव्यम्॥

खले वाल्यां पर्यूहणादिसंस्काराणामनुष्ठानाधिकरणम्।

सू० अर्थाभावे संस्कारार्थत्वं स्यात॥ ३२॥

अथ यत्पर्यूहणपरिवृंहणपरिषेचनादि खले वाल्यां सम्भवत्प्रयोजनं यच्चादृष्टार्थम् अञ्जनप्रोक्षणादि तत्खले वाल्यां भवति नेति संशये न भवतीति ब्रूमः—कुतः यूपार्थत्वात्तेषाम्.इह चायूपे खले वाल्यां यूपकार्यकरणाल्लुप्तार्थं पर्यूहणादि न कर्त्तव्यम् उच्यते—न यूपो नामैकः कश्चिदर्थोऽस्ति यदर्थाः संस्काराः किन्तु छेदनप्रोक्षणादिजन्यदृष्टादृष्टरूपाः संस्काराः

१ पशवनपक्रमादिति पा०।

काष्ठे वर्तमाना यूपशब्दाभिधेया नियोजनस्याङ्गभूताः तत्र केषांचिल्लुप्तार्थानां लोपेऽप्यन्येषामलुप्तार्थानां निवृत्तौ नास्ति प्रमाणं, तस्मात्पर्यूहणाञ्जनादयः कर्त्तव्याः ॥

महापितृयज्ञे धानासु अवघातानुष्ठानाधिकरणम् ।

सू० अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात ॥ ३३ ॥

महापितृयज्ञे श्रूयते 'सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति पितृभ्यो बर्हिषद्भ्यो धानां पितृभ्योऽग्निष्वात्तेभ्योऽभिवा[1]सायै दुग्धे मन्थमिति तत्र धानासु हन्तिः कर्त्तव्यो नेति संशये विघाताद्कर्त्तव्य, क्रियमाणे हि हन्तौ धानात्वं विहन्येत सक्तवो भवेयुः तस्माद्कर्त्तव्योऽवघातः, सत्यं, भ्रपणोत्तरकालं क्रियमाणे विघातः स्यात्, पूर्वं तु हन्तिं कृत्वा पश्चात्पाकः क्रियते क्रममात्रं बाधित्वा तथा न विहन्यते, न हि क्रमबाधे पदार्थोऽपि बाधितव्यः, तदुक्तं 'गुणलोपे च मुख्यस्य क्रिया स्यादि' ति तस्मात्कर्तव्योऽवघात इत्येवं भाष्यकारेणाधिकरणं व्याख्यातं, तदिदमनुपपन्नं प्रकृतावपि पूर्वमवघातः ततः पाकः तेन नास्ति क्रमविपर्यासः, पुनरुक्तं च गुणलोपे च मुख्यस्येत्यनेन न्यायेन । ये त्वाहुः न क्रमो नाम कश्चिद्गुणः पदार्थव्यतिरिक्तोऽस्ति यस्य पृथग्बाधं व्यवस्थापयामः, पदार्था एव हि विततः प्र[2]तीयन्ते तेन केवलस्य क्रमस्य बाधासम्भवात्तद्बाधे पदार्थोऽपि बाधित इत्यवघातो न कर्त्तव्य इत्येतन्निराकरणार्थमिदमधिकरणम् । यत्तु विपर्यासो नास्तीति तत्राप्याहुः धानासु भ्रपणं कृत्वाऽवघातः प्रकृतौ च विपरीतमित्यस्ति विपर्यास इति यदि विपर्यासः कथं तर्ह्यवघातानुष्ठानं, न हि क्रमस्य पृथग्बाधः सम्भवति सत्यं, न त्वत्र परमार्थतः क्रमबाधः प्रकृतौ हि भ्रतेष्वेव व्रीहिष्ववघातः कृतः, तत्रापि भ्रतास्वेव धानास्ववघात इति नास्ति क्रमविपर्यासः प्रकृतावघातपरं भ्रपणम् इह तु विपरीतमित्येतावता विपर्यासवाचो युक्तिः । ननु धानावस्थायां हन्तिः क्रियमाणो विघातं कुर्यात् यथा न विघातो भवति तथा कुर्महे सकृदेवानभ्यस्तमवहननं क्रियते, न

१ अभिवान्यायै दुग्धे मन्थमिति पाठस्तु समीचीनः ।
२ क्रियन्ते इति पा० ।

च भविष्यति विघात इति तदयुक्तं, संभवति हि पृथक्क्रमस्य बाधः, न एव हि पदार्था अन्येनान्येन च क्रमेणानुष्ठातुं शक्यन्ते तेन क्रमस्य प्राकृतस्याभावेऽपि पदार्था न निवर्तन्ते । यत्तु अपणं कृत्वा ऽवघात इति त"त्पूर्वं हन्तिं कृत्वा पश्चात्पाकः" कार्य इति भाष्यविरुद्धं यद्यपि अपणोत्तरकालेऽप्यवघाते विपर्यासो नास्ति श्रुते द्रव्ये ऽवघातकरणादिति तदप्यसारं, प्रकृतौ हि द्वे द्रव्यश्रवणे पुरोडाशश्रवणं व्रीहिश्रवणं च, तत्र धाना देवतासम्बन्धात्पुरोडाशकार्ये वर्तन्ते न व्रीहिकार्ये, प्रकृतौ च व्रीहिविषयोऽवघातो न पुरोडाशविषयः, तेन धानास्वपि चोदकप्राप्तेषु व्रीहिष्वेवावघातो न धानावस्थायां तत्र तु क्रियमाणे हन्तौ क्रमविपर्यासः स्यादेव धानासु वा ऽवघातकरणे धानात्वं विहन्येत । यत्तु सकृदेवावहनिष्याम इति तथा सत्यप्राकृतकार्यमदृष्टार्थमवहननं स्यात्, प्रकृतिवत्तु तुषविमोकार्थोऽवघातः क्रियमाणो धानात्वं विहन्यात्, तस्मान्नैवमधिकरणं युक्तमिति यथावार्त्तिकं व्याख्यास्यामः, न धाना उदाहरणं तत्रैव मन्थ उदाहरणं, तत्र पेषणं अपणोत्तरकालमर्थाद् भवति तत्प्राकृत ? मुताप्राकृत ? मिति संशयः, प्रकृतौ पाकात्पूर्वं पेषणं पाकार्थं भवति न ह्यसति पेषणे पुरोडाशनिर्वर्तकः पाकः कर्तुं शक्यते, तेन पा[1]कार्थं पेषणं मन्थे तु विनैव पेषणं न भर्जनरूपः पाकस्तण्डुलावस्थायामेव कृत इति लुप्तार्थं प्राकृतं पेषणं निवृत्तं भर्जितेषु तण्डुलेषु सक्तुभावापादनाय लौकिकं पेषणमधर्मकं कर्त्तव्यमिति प्राप्ते ब्रूमः—न प्रकृतौ पाकार्थं पेषणं द्वितीयाश्रुत्या पेषणं अपणं चोभयमपि हविरर्थम्, अर्थात्तु तयोः पूर्वं पेषणम् इत्त्वर्थादेव पश्चात्क्रियत इति क्रममात्रमन्यत्, न च तदन्यत्वे पदार्थान्यत्वं तस्मात्प्राकृतमेव पेषणमिति कर्त्तव्याः पेषणधर्माः ॥

इति शास्त्रदीपिकायां दशमस्य द्वितीयः पादः ॥ २ ॥

---

१ पाककार्ये पेषणमिति पा० ।

## अथ तृतीयः पादः ।

पश्वादौ सामिधेन्यादिप्राकृतेतिकर्तव्यतानुष्ठानाधिकरणम् ।

सू० विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिः सन्निधानात् ॥ १ ॥

अग्नीषोमीयपशौ श्रूयते "एकादश प्रयाजान् यजती"ति तथा चातुर्मास्येषु नव प्रयाजान् यजति नवानुयाजानिति तथा वायव्ये पशौ हिरण्यगर्भः समवर्त्तताग्र इत्याघारमाघारमाघारयतीति एवमन्यत्रापि यत्र प्राकृतमङ्गमप्राकृतगुणयुक्तं श्रूयते तदुदाहृत्य विचार्यते किं तत्र चोदकेन प्राकृतीतिकर्त्तव्यता प्राप्यते न वे?ति तदर्थमिदं विचार्यते किमेतैर्गुणविशिष्टप्रयाजादिविधिः? उत प्रयाजाद्यनुवादेन गुणमात्रविधि? रिति तत्रातिदेशेन पदार्थानां न स्वरूपतः पर्युपस्थापनमस्ति प्रकारमात्रातिदेशात् अतो नातिदेशप्राप्त्यङ्गीकरणेन गुणविधिः सम्भवति तस्मात्सङ्ख्यादिविशिष्टाः प्रयाजादय एवात्र विधीयन्ते, एवं च धात्वर्थविधानाच्छ्रुत्यनुग्रहो भवति, ते च प्रयाजादयः प्रकृतौ कृतोपकारा विकृतौ श्रूयमाणा गृहमेधीयाज्यभागवदतिदेशं निघ्नन्ति तस्माच्च प्राकृतीतिकर्त्तव्यताऽतिदिश्यत इति प्राप्ते ब्रूमः—प्रकारद्वारतः प्राप्ते रतिदेशेन कर्मणां तान्यनूद्य गुणः शक्यो विधातुमिति तद्विधिः ॥ न च सत्यां गतौ न्याय्यं विशिष्टविधिगौरवम् । वाक्यार्थविधिदोषश्च समानः पक्षयोर्द्वयोः ॥ यो ऽपि हि श्रुत्यर्थविधिलिप्सया धात्वर्थं विधित्सति तेनापि गुणवादस्याप्रमादपाठादवश्यं वाक्यार्थविधिरङ्गीकर्तव्यः, तथा सति तत्र संक्रान्ते विधौ धात्वर्थानुवादेनानेकविधिपरिजिहीर्षया प्रकार[1]द्वारा प्राप्तिमालोच्य तदनुवादेन विधिर्गुणमात्रं विधत्ते, तस्मादेवंजातीयकेषु गृहमेधीयन्यायाभावादस्त्यतिदेशः ॥

वायव्यपशौ हिरण्यगर्भः इत्यादिमन्त्रस्योत्तरस्मिन्नाघारे गुणत्वाधिकरणम् ।

सू० हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् ॥ २ ॥

१ प्रकारद्वारप्राप्तिमालोच्येति पा० ।

वायव्ये पशौ श्रूयते "हिरण्यगर्भस्समवर्ततात्र" इत्याघारमाघारयतीति तत्प्राकृताघारानुवादेन मन्त्रविधिरिति स्थितं, प्रकृतौ च द्वावाघारौ पूर्वः प्राजापत्यो ऽमन्त्रकश्च, उत्तरस्त्वैन्द्रः समन्त्रकः, तदिह किं पूर्वस्याघारस्य मन्त्रविधिः? उतोत्तरस्ये? ति संशये मन्त्रस्य प्रजापतिलिङ्गत्वात् "प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाये" ति च वाक्यशेषात्पूर्वस्येति प्राप्ते ब्रूमः पूर्वस्मिन्मन्त्राभावाच्च मन्त्रकार्यमस्ति तत्र मन्त्रविधौ मन्त्रकार्यमप्राकृतं कल्प्यं स्यात्, उत्तरत्र तु प्रकृतावमन्त्रविधानादस्ति मन्त्रनियमजन्यमदृष्टं तत्र मन्त्रविधानं सुकरं मन्त्रलिङ्गं त्वैन्द्रेऽप्यविशिष्टमिति दर्शितं भाष्ये वाक्यशेषोऽपि प्रजानां पतिः प्रजापतिरित्येवमिन्द्र एवोपपन्नः, यो[1] हि खलु वाव प्रजापतिः स एवेन्द्र इति चैकत्वादुपपत्तिः वाक्यशेषस्य पूर्वाघारस्य चाहत्यैवामन्त्रत्वं दृश्यते, न स्वाहाकारो न मन्त्रं चाहेति तस्मादुत्तरस्य मन्त्रः ॥

चातुर्मास्येषु सोमेष्वासादननियोजनयोः प्राकृतगुणविधित्वाधिकरणम् ।

सू० संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् ॥ ३ ॥

उत्करे वाजि[2]नमासादयति परिधौ पशुं नियुञ्जीते' त्यत्र संशयः किमप्राकृतमासादनान्तरं नियोजनान्तरं वा दृष्टार्थकमुत्करपरिधिविधिविशिष्टं विधीयते? उत प्राकृतयोरेवासत्तिभावानयनक्रमणरूपदृष्टप्रयोजनयोरुत्करपरिधिविधि? रिति तत्र तीरणायत्वात्तुङ्गत्वाच्चोत्करस्य परिधेश्चाणीयस्त्वाच्च दृष्टकार्यमासादनं, नियोजनं च शक्यं कर्तुम् अतो ऽप्राकृतकार्यमन्यद्विधीयते, एवं च धात्वर्थविधानाच्छ्रुत्यनुग्रहः, अन्यथा वाक्यार्थविधिः स्यादित्येवं प्राप्ते ब्रूमः—न सम्भवति गुणमात्रविधौ विशिष्टविधिर्युक्तः साधारणश्च वाक्यार्थविधिः गुणस्यावर्जनीयत्वात्, अतः प्राकृतयोर्गुणविधिः, न चाशक्यता पृथ्वय[3]तामुत्करणस्य स्थविमानं च परिधेराश्रित्य प्राकृतकार्यसम्पादनात् ॥

१ योऽपि खलु वाव इति पा० ।
२ उत्करे वाजिनमासादयन्ति इति पा० ।
३ पृथ्वग्रतामुत्करस्येति पा० ।

अग्निचयने प्राकृतवैकृतोभयदीक्षाहुतीनामनुष्ठानाधिकरणम् ।

सू० षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ ४ ॥

अग्नौ प्रकृतितो दीक्षाऽऽहुतयः षट्प्राप्तास्तासां च षण्मन्त्राः प्रकृति एव प्राप्ताः आकूत्यै प्रयुजे ऽग्नये स्वाहेत्यादयः अनावपरे षण्मन्त्राः आकूतिमग्निं प्रयुजं स्वाहेत्यादयः, ते च दीक्षार्थतया विनियुक्ताः षड्भिर्दीक्षयतीति दीक्षाहुतीनां चाभ्यासः श्रूयते द्वादश जुहोतीति, तत्र संशयः किं वैकृतैर्मन्त्रैः प्राकृता बाध्यन्ते समुच्चीयन्ते वे? ति, तत्र प्रत्यक्षपाठेन प्रत्यक्षवचनेन च "वैकृताः प्राकृतान्मन्त्रान् बाधेरन्नेककार्यतः । यद्यपि द्वादश जुहोतीति वचनाद्धोमानामभ्यासः तथाऽपि वैकृतानामेव प्रत्यक्षवचनविहितानां चोदकप्राप्तप्राकृतमन्त्रबाधेन होमाङ्गत्वात्तैरेवाभ्यस्तैर्द्वादशापि होतव्या इति प्राप्ते ब्रूमः—न प्रत्यक्षेण वाक्येन होमार्थं वैकृता श्रुताः । दीक्षार्थतावलात्तेषां होमाङ्गत्वं प्रकल्प्यते ॥ सकृत्प्रयोगमात्राच्च तादर्थ्यमुपपद्यते । वैकृतैः प्राकृतास्तस्मात्समुच्चेया न बाधनम् ॥ षड्भिर्दीक्षयतीति दीक्षार्थता श्रुता सा च स्वाहाकारलिङ्गानां होमद्वारेणेति दीक्षार्थत्वसिद्धये होमाङ्गता कल्प्यते सकृत्प्रयुक्तैरेव च षट्सु होमेषु दीक्षार्थतासिद्धेर्नाभ्यासे प्राकृतबाधे वा प्रमाणमस्ति, तेनाभ्यासवशेन होमानां द्वादशत्वान्मन्त्राणामपि प्राकृतवैकृतानां समुच्चयः ॥

पुनराधानेऽग्न्याधानदक्षिणानां निवृत्त्यधिकरणम् ।

सू० अग्न्या[1]धेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ५ ॥

अस्ति पुनराधेयं तच्चाग्न्याधेयधर्मकं तत्र श्रूयते "पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वास" इत्यादि सेयं दक्षिणा किमग्न्याधेयस्य दक्षिणा नामेका देयेत्येवमादीनां निवर्तिका न वे? ति चिन्तायां [2]सत्यप्येककार्यत्वेऽवचनादुभयोर्ददातीति समुच्चयप्राप्तावुच्यते विध्यश्रवणाद्विध्यन्तरशेषत्वा-

१ आग्न्याधेयस्येति पा० ।
२ चिन्तायां सत्यां सत्यप्येककार्यत्वे पा० ।

च्चास्य समुच्चयविधावसामर्थ्याद्दक्षिणयोश्चानन्यर्थत्वमनेककार्यत्वेनैकका र्यत्वाद्वैकृतीभिः प्राकृतीनां बाधः कथं पुनरुभयोर्द्दातीति निर्देशः—उच्यते कृत्वा ह्यन्याधेयं पश्चात्पुनराधेयं क्रियते तेन पूर्वदत्तसम्प्रति दीयमानापे क्षयोभयदाननिर्देशः ॥

आग्रयणे वासोवत्सा भ्यामन्वाहार्य्यस्य निवृ त्त्यधिकरणम् ।

सू० वासो वत्सं च सामान्यात् ॥ ६ ॥

"आग्रयणे वासो दक्षिणा वत्सः प्रथमजो दक्षिणे"ति श्रुतं वासो वत्सं समानकार्यत्वात्प्राकृतस्यान्वाहार्यस्य निवर्त्तकमिति सिद्धमेवोत्तर विवक्षायै प्राप्यते ॥

आग्रयणे वासोवत्सयोरन्वा हार्य्यधर्मानुष्ठानाधिकरणम् ।

सू० अर्थापत्तेस्तद्धर्मा स्यान्निमि त्ताख्याभिसंयोगात् ॥ ७ ॥

अन्वाहार्यकार्यापत्तेर्वासोवत्सन्तद्धर्मांल्लभेत[1] इत्येतदपि प्राप्ति सूत्रमेव ॥

आग्रयणे वत्से पाकाभावा धिकरणम् ।

सू० दाने पाकोऽर्थलक्षणः ॥ ८ ॥

अन्वाहार्यपाको वत्से कर्तव्यो नेति संशये चोदकानुग्रहाय पक्त्वा वत्सन्तदीयं मांसं दक्षिणात्वेन देयमिति मन्यते, श्रुतन्तु वत्सद्रव्यं पाकेन नश्येत्, अश्रुतं च मांसं दीयेत, वत्स–शब्दो वा मांसलक्षणार्थः स्यात्, न चैतन्न्याय्यं तस्माच्च वत्सपाकः ॥

आग्रयणे वाससि पाकाभा वाधिकरणम् ।

सू० पाकस्य चान्नकारित्वात् ॥ ९ ॥

अथ वाससि पाकः स्याचेति संशये विरोधाभावात् पच्येत प्रयोज नाभावा[2]त्त्वपाकः, प्रकृतौ हि दक्षिणाभूतान्नसंपत्त्यर्थः पाको नादृष्टार्थः तस्माच्च वाससः पाकः ॥

आग्रयणे वासोवत्सयोरभि घारणाभावाधिकरणम् ।

सू० तथाऽभिघारणस्य ॥ १० ॥

---

१ लभते इति पा० ।
२ प्रयोजनाभावान्न पाक इति पा० ।

अभिघारणमन्वाहार्यधर्मः किं वासो वत्से कर्त्तव्यं, नेति प्रकृतावदृष्टार्थत्वादिहाविरोधात्कर्त्तव्यं, नैवं स्वादिमार्थं हि तदृष्टेनैव प्रकृतावधानामुपकरोति, न च वासोवत्सयोः स्वादिम्ना प्रयोजनमस्ति अतोऽभिघारणनिवृत्तिः ॥

ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम् ।

सू० द्रव्यविधिसन्निधौ संख्या तेषां गुणत्वात्स्यात ॥ ११ ॥

ज्योतिष्टोमे श्रूयते "गौश्चाश्वश्चाश्वतरश्च गर्दभाश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादश शतं दक्षिणे"ति तत्र संशयः किमेकैकस्य गवादेर्द्रव्यस्य द्वादशशतसङ्ख्या ? उतैकस्य यस्य कस्य चित्? अथ वा माषाणाम्? आहोस्वित्सर्वैः सहितैः सम्पाद्या? किं वैकजातीयस्यैवानियमेन? । यद्वा पशूनां? तत्रापि किमनियमोऽथवा गवा?मिति तत्र तस्येति षष्ठ्यन्तेन गवादीनि प्रधानत्वेनो[1]पदिश्य तद्गुणभूता सङ्ख्या विधीयमाना प्रतिप्रधानं सम्बध्यते, अतः प्रत्येकं द्वादशशतमिति प्रथमः पक्षः नात्र गवाद्युद्देशेन सङ्ख्या विधीयते, न ह्येकेन वाक्येन गवादीनां दक्षिणात्वेन विधानं तदङ्गत्वेन च सङ्ख्या विधानं सम्भवति, तस्माद्गवादीनि द्रव्याणि सङ्ख्या च दक्षिणया संबध्यन्ते सोभयविशिष्टा विधीयते तत्रैकस्मिन्द्रव्ये निविष्टायां सङ्ख्यायां तद्विशिष्टा दक्षिणाऽनुष्ठिता भवति, तस्मादेकस्य सङ्ख्या तत्राप्यनियमः विशेषाभावात् । अथवा माषाणां स्यादानन्तर्यात् नैतदपि युक्तं च-शब्दश्रुत्या ह्यन्यसहिता माषा निर्दिष्टाः तेनान्यसहितानां माषाणां सङ्ख्या तेषां च बहुत्वात्तस्येति प्रतिनिर्देशासम्भवात् तस्येति तु क्रतुनिर्देशोऽङ्गीकर्त्तव्यः । यद्वा गवादिसमाहाराभिप्रायं तस्येत्येकवचनं यदा च क्रतुनिर्देशः तदा यद्यपि च-शब्दो न स्यात्तथाऽपि गवादिद्रव्यविशिष्टा द्वादशशतसङ्ख्या विशिष्टा च दक्षिणा श्रुता सहितानि च गवादीनि दक्षिणा नैकैकमतो दक्षिणा परिच्छेदिका सङ्ख्या सर्वेषु संहितेषु निविष्टमर्हति, तस्मात्सर्वसंपाद्या सङ्ख्या, नैवं तस्येति शब्दो वाक्यगतेन द्रव्येण सम्बन्धं लभमानः प्रकृतिविशेषस्य

१ प्रधानत्वेनोद्दिश्य पा० ।

कुर्वन्नप्रकृतेन क्रतुना सम्बन्धमानर्थक्यं चावलम्बते, तस्मात्तस्येति गवादीनां निर्द्देशः तच्चैकवचनान्तत्वाच्च सहितानां सर्वेषां निर्द्देशः नापि समाहारस्य तस्याशाब्दत्वात् ॥

किं त्वेकजातीयकस्य, तत्राप्यनियमो विशेषाभावात्। अथवा पशूनामेव न माषादीनां तेषामाढकादिपरिमाणान्तरापेक्षया सङ्ख्याव्यवहारो लोके न स्वरूपतः भृतित्वाभावादिति दर्शितं भाष्ये, अत एव माषैरप्यनन्तरैर्न सम्बध्यते, अतः पशूनामेव, तत्राप्यनियमोऽविशेषात् एकवचनान्तत्वाच्च तस्येति न बहुवचननिर्द्दिष्टानां माषादीनां निर्द्देशः। अत एवाजावीनामपि न निर्द्देशः गवादीनां चत्वारि परिशिष्टानि तत्र महोपकारत्वादप्रतिषिद्धत्वान्मुख्यत्वाच्च गवां निर्द्देशः, तेनायमर्थः गवादिद्रव्याणि तत्र च तस्य गोद्वादशशतं दक्षिणेति तस्माद्गवामेषा सङ्ख्या ॥

विभज्यगोदक्षिणाया दानाधिकरणम्।

सू० तच्च दानं विभागेन प्रदानानां पृथक्त्वात् ॥ १२ ॥

किमेषा दक्षिणा ऋत्विग्भ्यो विभज्याविभज्य वा देया? किमविभज्यैव? उत विभज्यैवे? ति संशये विशेषाश्रवणादनियमः। अथ वा "ऋत्विग्भ्यो दक्षिणां ददाती"ति दानाङ्गत्वेन ऋत्विग्बहुत्वस्य विवक्षितत्वादविभज्यैव सहितेभ्यो देया न विभज्यैकैकस्मै बहुवचनविरोधादिति प्राप्तेऽभिधीयते—"ऋत्विक्परिक्रयार्थेन दानमेतदिति स्थितम्। तेन तेषां प्रधानत्वाद्बहुत्वं न विवक्षितम्", अतः प्रतिप्रधानावृत्तेरेकैकस्यैव तद्दानं न चानियमः आनमनार्थं हि तद्दानं, यदि च दीयमानं द्रव्यमात्मोपयोगक्षमं भवति तेन तेषामानतिर्नान्यथा तेनात्मीयं द्रव्यमृत्विजामुपयोगक्षमं कुर्यादिति दानविधेरर्थः, विभज्य च ददता सम्पूर्णं तदनुष्ठितं भवति, परिषदे तु ददता न तत्सम्पूर्णमनुष्ठितं स्यात्, पुनर्विभागापेक्षत्वात्तेषामुपयोगस्य "तु थोवो विश्ववेदा विभजत्वि"ति च मन्त्रवर्णस्यापापातिकत्वात् छागन्यायेनापि सिध्यति विभागः, यत्र त्वेकमेव द्रव्यं दक्षिणा यथा "धेनुर्दक्षिणाऽन्वाहार्यो दक्षिणे"ति तत्र विभागासम्भवादविभज्यैव दानम् ॥

( शेषमये )

श्रीमते मीमांसाद्वयगुरवे रामानुजाचार्याय नमः ।

# अथ श्रीभाष्ये ।

## प्रथमाऽध्याये द्वितीयः पाद आरभ्यते ।

*(Continued from page* 484. Vol. XII.*)*

सू० विवक्षितगुणोपपत्तेश्च ॥ २ ॥

भा० वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर" इति मनोमयः=परिशुद्धेन मनसैकेन ग्राह्यः, विवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्म्मलीकृतेन हि मनसा गृह्यते अनेन हेयप्रत्यनीककल्याणैकतानतया सकलेतरविलक्षणस्वरूपतोच्यते, मलिनमनोभिर्मलिनानामेव ग्राह्यत्वात्, प्राणशरीरः=जगति सर्वेषां प्राणानां धारकः, प्राणो यस्य शरीरमाधेयं विधेयं शेषभूतञ्च स प्राणशरीरः, आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीत्युपपादयिष्यते, भारूपः=भास्वररूपः, अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थः, सत्यसङ्कल्पः=अप्रतिहतसङ्कल्पः, आकाशात्मा=आकाशवत्

टी० सू० विवक्षितगुणोपपत्तेश्च विवक्षितत्वं–वक्तुमिच्छाविषयत्वम्, अपौरुषेयवाक्यप्रतिपाद्यगुणानां पुरुषेच्छापूर्वकत्वाभावात् कथं विवक्षितत्वमिति शङ्कायां विवक्षितपदं व्याचष्टे "वक्ष्यमाणा" इति, विवक्षितानामेव वक्ष्यमाणत्वाद्विवक्षित–शब्देन वक्ष्यमाणत्वं लक्ष्यत इत्यर्थः

सर्वं खल्विति प्रथमवाक्यापेक्षया वक्ष्यमाणं ह्यनन्तरवाक्यगतगुणजातं निषेधवाक्यविरोधपरिहाराय सामान्यं मनोमय-शब्दं विशेषवाक्यानुगुणं व्याचष्टे "मनोमय"इति, परिशुद्धेन मनसैकेनेति अब्भक्षो वायुभक्ष इति-वदवधारणगर्भं इत्येक-शब्दस्य भावः । तच्च "न चक्षुषा गृह्यते नापि वाचा मनसा तु विशुद्धेने"ति श्रुत्यानुगुण्यात् । तद्विवृणोति "विवेके"ति, फलितार्थमाह "अनेने"ति, कुत? इत्यत्राह "मलिने"ति, मलिनमनोग्रा-ह्यत्वं हेयार्हत्वव्यापकम्, अतो व्यापकनिवृत्त्या व्याप्यनिवृत्तिरित्युभयलिङ्ग-त्वसिद्धिरिति भावः । मुक्तस्यापि विशुद्धमनोग्राह्यत्वञ्च सम्भवति, मुक्तं स्वातन्त्र्येण गृह्णाति चेत् मनो ऽशुद्धं ब्रह्मपर्यन्तत्वेन चेत् विशिष्टस्य ब्रह्मण एव विशुद्धमनोग्राह्यत्वमिति प्राणशरीर-शब्दं व्याचष्टे "जग-ती"ति, प्राणशरीर-शब्देन प्राणधारकत्वं कथमवगम्यत ? इत्यत्राह "प्राणोयस्ये"ति, शरीरत्वे सति कथमाधेयत्वादिक ? मित्यत्राह "आधेय-त्वे"ति भारूप इति ज्ञानस्वरूपमित्यर्थस्त्वतिक्लिष्टः रूप-शब्दो हि धर्मवाची, भा-शब्दो दीप्तिपरः दीप्तिधर्मकत्वं विग्रहद्वारकम् आदि-त्यवर्णन्तमसः परस्तात् रुक्मवर्णमित्यादिश्रुत्यैकार्थ्यादित्यभिप्रायेणाह "भास्वररूपे"ति, । तद्विवृणोति अप्राकृते"ति, ।

मू० सूक्ष्मस्वच्छस्वरूपः सकलेतरकारणभूतस्याप्याकाशस्याप्या-त्मभूत इति वा आकाशात्मा स्वयं च प्रकाशत अन्यांश्च प्रकाशयतीति वा आकाशात्मा, सर्वकर्म्मा=क्रियत इति-कर्म, सर्वं जगद्यस्य कर्म असौ सर्वकर्म्मा, सर्वा वा क्रिया यस्यासौ सर्वकर्म्मा, सर्वकामः=काम्यन्त इति कामाः भोग्यभोगोपकरणादयः ते परिशुद्धाः सर्वविधास्तस्य सन्ती-त्यर्थः सर्वगन्धस्सर्वरसः=अशब्दमस्पर्शमित्यादिना प्राकृ-तगन्धरसादिनिषेधादप्राकृताः स्वासाधारणा निरवद्या-निरतिशयाः कल्याणाः-स्वभोग्यभूताः सर्वविधाः गन्धर-

१ अन्यानपि इति पा० ।

सास्तस्य सन्तीत्यर्थः, सर्वमिदमभ्यात्त उक्तमिदं रसपर्य्यन्तं सर्वं कल्याणगुणजातं स्वीकृतवान्, अभ्यात्त इति

टी० 'सूक्ष्मस्वच्छस्वरूप'' इति सूक्ष्मत्वं-व्याप्यहंत्वं, स्वच्छत्वं-निर्मलत्वं सकलेतरकारणभूतस्याकाशस्येत्यनेन "आकाश एव तदोतञ्च प्रोत"ञ्चेति वाक्यं स्मारितम्, अक्षरमम्बरान्तधृतेरित्यधिकरणन्यायादाकाश-शब्दः प्रकृतिवाचीति भावः । अन्यानपि प्रकाशयति स्वस्मै प्रकाशयतीत्यर्थः सर्वा वा क्रियेति लौकिकवैदिकसकलक्रियाणां सद्वारककर्त्ताऽसौ । यद्वा सर्ववैदिकक्रिया आराधनं यस्य स सर्वक्रिय इत्यर्थे इच्छाबाहुल्यव्यावृत्त्यर्थं सर्वकामपदं व्याचष्टे "काम्यन्त" इति, भोग्यभोगोपकरणानादीनां प्राकृतत्वव्यावृत्त्यर्थमाह "ते परिशुद्धा" इति, अप्राकृता इत्यर्थः सत्यकामपदैकार्थ्यादित्यभिप्रायः । सर्वे गन्ध इत्यादि रूपस्पर्शनिषेधपरवाक्यान्तराणामपि तुल्यन्यायत्वद्योतनार्थम् आदि-शब्दः, गन्धरसादीनामव्यवधानेन स्वरूपान्वयित्वाभावात्, सद्वारकत्वे सति प्राकृतानां पृथिव्यादिगतगन्धरसादीनां हेयत्वेन कल्याणगुणप्रकरणविरोधात् भारूप इति दिव्यविग्रहस्य प्रकृतत्वाच्च अप्राकृतदेहद्वारकगन्धरसादिविधिरित्यर्थः । तं ब्रह्मगन्धः प्रविशति ब्रह्मरसः प्रविशतीति मुक्तात्मनि साम्यापत्ते ब्रह्मगन्धरसप्रवेशव्यपदेशश्चार्थस्योत्तम्भकः, सर्वमिति जगतोऽपि सर्वकर्मादिगुणान्तर्भावाद्गुणपरं व्याख्यातम् अभ्यात्त इति अत्र स्वीकरणरूपगुणविधिः । ननु नायमादत्कर्मणि क्तः गुणादानस्य नित्यत्वात्, न चाभ्याददातिर्गत्यर्थः स्वीकरणार्थत्वात् नाप्यकर्मकः सर्वमिदमिति श्रवणात्, न च श्लिषादिष्वन्यतमः अपठितत्वात्, तत्कथं कर्त्तरि क्तः "तयोरेव कृत्यक्तखलर्था" इति, भावकर्मणोरेव हि तत्स्मरणमित्यत्राह-

सू० भुक्ता ब्राह्मणा इतिवत्कर्त्तरि क्तः प्रतिपत्तव्यः, अवाकी=वाक्[1]उक्तिः सोऽस्य नास्तीति अवाकी । कृत इत्यात्र "अनादर" इति, अवाप्तसमस्तकामत्वेनादर्त्तव्याभावात आदररहितः, अत एवावाकी—अजल्पाकः परिपूर्णैश्वर्यत्वाद्र-

१ वाक इत्यवक्तपाठः पुस्तकान्तरे ।

ब्रह्मादिस्तम्बपर्य्यन्तमखिलं जगत्तृणीकृत्य जोषमासीन इत्यर्थः, न एते गुणाः विवक्षिताः परमात्मन्येवोपपद्यन्ते

सू० अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

टी० "भुक्ता" इति, प्रयुक्तानुशासनत्वात् व्याकरणशास्त्रस्य यथा-प्रयोगमनुशासनं कार्यं न तु यथानुशासनं प्रयोगान्यथाकरणमिति भावः ये तु भुक्ता ब्राह्मणा इत्यत्र मत्वर्थीयाकारप्रश्लेषणमिच्छन्ति तेषां भुक्त-शब्दस्य अर्शादिगणान्तर्भावकल्पनम् अकारप्रश्लेषणमिति तत्र गौरवमप्यतोक्तं "कर्त्तरी" ति, कर्त्रर्थतया प्रयोग एव हि भुक्तादीनामाकृतिगणान्तर्भावकल्पननिमित्तं तेनैव कर्त्रर्थत्वं क्तप्रत्ययस्य कल्प्यतां किमश्रूयमाणाकारप्रश्लेषेणेति भावः । यद्वा कर्त्तरि प्रतीतिः—प्रतिपत्तिः सा यथा भुक्ता ब्राह्मणा इत्यत्र, प्रतिपाद्यते—निरूप्यते, एवमत्रापि निर्वोढव्येत्यर्थः सोऽस्य नास्तीत्यवाकीति फलितार्थकथनमेतत्, वाक—उक्ति. अवाकस्तद्भाव. अवाकोऽस्यास्तीत्यवाकशब्दस्तद्धितप्रत्ययः । यद्वा वाकी न भवतीत्यवाकी । कुत इत्याह—कुत इत्यत्राहेत्यर्थं, अवाकत्वं वाक्सामर्थ्याभावादिति शङ्कांव्यावृत्त्यर्थम् अनादर इति पदमिति भावः । तदुपपादयति "अवाप्ते" ति, अवाकित्वस्य तत्फलतामाह "अत एव" ति, निषेध्योवाको हेयरूप इति दर्शयति "अजल्पाक" इति, सापेक्षत्वनिबन्धनबहुप्रलापो निषेध्यः न तु वाक्सामर्थ्यविरह-इत्यर्थः । पदद्वयप्रतिपाद्योऽयमेकोगुण इत्याह "परिपूर्णे" ति, सूत्रार्थमुपसंहरति "न एत" इति, एवमन्वय उक्तः, कथं परमात्मन्येवेत्यवधारणसिद्धिः मुक्तेऽपि ह्येते गुणाः शङ्कनीया इत्यपेक्षायां पूर्वसूत्रोक्तान्वयस्येव व्यतिरेकमाह "अनुपपत्तेस्तु न शारीरः" शरीर—शब्देन मुक्तस्याऽपि क्रोडीकारोपपादको योग—शब्दः अनुपपत्तेस्तु नेतर इति वक्तव्ये मुक्तावस्थजीवस्य प्रतिपाद्यत्वानुपपत्तिस्फोरणार्थः शरीर—शब्दनिर्देश इति भावः । बद्धोपादानं दृष्टान्ततया यथा नियाम्यस्य नियामकस्वरूपैक्यानुपपत्तिः तथाऽनुयाह्यस्याप्यनुयाहकस्वरूपैक्यानुपपत्तिरित्यभिप्रायः प्रस्तुतगुणानुपपत्तिः प्रतिगुणमनुसन्धेया पर्यालोचयतां शङ्का न जायत इत्यन्वयः । न मुक्त परिग्रहशङ्काहेत्वन्यथासिद्धिः किन्तु हेत्वसिद्धिरेवेति तु—शब्दाभिप्राय इत्याशयवतोक्तं "शारीरपरिग्रहशङ्का न जायत" इति, अनुपपत्तेस्तु न शारीर इत्यत्र यदुक्तं परैः जीवपरयोरैक्याज्जीवधर्म्मैः

श्रु० तमिमं गुणसागरं पर्य्यालोचयतां खद्योतकल्पस्य शरीरसम्बन्धनिबन्धनापरिमितदुःखसम्बन्धयोग्यस्य बद्धमुक्तावस्थजीवस्य प्रस्तुतगुणलेशसम्बन्धगन्धोऽपि नोपपद्यत इति नास्मिन्प्रकरणे शारीरपरिग्रहशङ्का जायत इत्यर्थः ।

सू० कर्म्मकर्तृव्यपदेशाच्च ॥ ४ ॥

“एतमितः प्रेत्याभिसम्भवितास्मी”ति प्राप्यतया परं ब्रह्म व्यपदिश्यते, प्राप्तृतया च जीवः अतः प्राप्ता जीव उपासकः, प्राप्यं परं ब्रह्मोपास्यमिति प्राप्तुरन्यदेवेदमिति विज्ञायते ।

परस्य विशिष्टत्वानुसन्धानोपपत्तिश्चेत्तदनन्यत्वादेव परमात्मधर्म्माः सत्यसङ्कल्पत्वादयोऽपि जीव उपपद्यन्त इति शङ्कानिरासार्थमिदं सूत्रम् । आरोप्यगतधर्मैरधिष्ठानं विशेष्यते, यथा सर्पगतभीषणत्वादिना तदधिष्ठानं, न चाधिष्ठानधर्मैरारोप्यं विशेष्यते, यथा रज्जुत्वेन सर्पः, अतो जीवधर्मैर्मनोमयत्वादिभिः परमात्मनो विशेष्यत्वं युक्तं न तु परमात्मधर्म्मैः सत्यसङ्कल्पत्वादिभिर्जीवस्य विशेष्यत्वमिति सूत्रार्थ इति, तदयुक्तं सर्पादिव्यावर्तकरज्जुत्वादिधर्म्माप्रतीतौ सर्पादिधर्मभूतभीषणत्वादिभिरधिष्ठानस्य विशेषणायोगात्, इह च जीवव्यावर्तकास्सत्यसङ्कल्पत्वादयः प्रतीयन्ते अतोऽध्यस्तजीवधर्मैः परमात्मनो विशेष्यत्वमयुक्तम्मनोमयत्वादिभिः सत्यसङ्कल्पत्वादिभिश्च पदैर्वस्तुमात्रं लक्ष्यत इति चेत्, तर्हि विवक्षितगुणोपपत्तेश्चेति पूर्वसूत्रं विरुध्यते, उभयविधगुणानामविवक्षितत्वं सूत्रकाराभिमतञ्चेदनुपपत्तेस्तु न शारीर इतिवदनुपपत्तेस्तु नेश्वर इति च सूत्रं वक्तव्यं वस्तुमात्रविवक्षायां जीवधर्माणामिवेश्वरधर्माणामप्यनुपपत्त्या विशेषात्, अत ईश्वरधर्मेषु तात्पर्यमवगम्यते, अतस्तेषु प्रतीयमानेषु रज्जोर्भीषणत्वादिनेव मनोमयत्वादिना परमात्मनो विशेष्यत्वमनुपपन्नं मनोमयत्वादिकं न जीवासाधारणमिति चेत् किं मनोमयत्वादिपदैर्मनः प्राणाद्यधीनज्ञानप्रवृत्तित्वं विवक्षितम् ? उत विशुद्धमनोग्राह्यत्वप्राणशरीरकत्वादिकं ? प्रथमे जीवासाधारणत्वान्मनोमयत्वादिभिः परमात्मनो विशेष्यत्वानुपपत्तिः, द्वितीये तु मनो-

मयत्वादीनामारोपितधर्मत्वाभावाद्वाऽऽरोप्यमाणधर्मैरधिष्ठानस्य विशेष्यत्वस-म्भवद्रूपन्यायाविषयत्वं वाक्यस्य स्यात् । किञ्च नित्यस्य जीवस्य परस्मि-न्नारोपितत्वाभावाद्वैवोक्तन्यायः सुतरामिह न संगच्छते तस्मात्परोक्तः सूत्रार्थोऽनुपपन्नः । अथ परमसाध्यहेतुमाह सू० कर्मकर्तृव्यपदेशाच्च, अभि-सम्भविता—प्राप्ता प्राप्यप्राप्तृभेदः सूत्रविवक्षितः । ततः किं सर्वं खल्विदं ब्रह्मेत्युक्तस्योपास्यस्य ब्रह्मणो जीववैलक्षण्यस्य? त्यत्राह "अत" इति, प्राप्यप्राप्त्रारेव ह्युपास्योपासकौ अतः उपास्यं ब्रह्म उपासकाज्जीवाद्विल-क्षणमित्यर्थः स्वरूपस्यैव प्राप्यत्वमिति चेत् श्रुतिस्वारस्यभङ्गः प्राप्तुरन्यदे-वेदमिति, अत्रेदमिति निर्देशो ब्रह्म—शब्दाभिहितवस्त्वभिप्रायः, अवस्था-भेदेन प्राप्यत्वप्राप्तृत्वोपपत्तिरिति शङ्कापरिहारार्थमेकस्यामेवावस्थायां भेद-व्यपदेशं दर्शयति अनन्तरसूत्रद्वयेन—

सू० शब्दविशेषात् ॥ ५ ॥

भू० "एष म आत्माऽन्तर्हृदय" इति शारीरः षष्ठ्या निर्दिष्ट उपास्यस्तु प्रथमया, एवं समानप्रकरणे वाजिनाञ्च श्रुतौ शब्दविशेषः श्रूयते जीवपरयोः, यथा "व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मयो यथा ज्योतिरधूममि"ति, अत्रान्तरात्मन्निति सप्तम्यन्तेन शारीरो निर्दिश्यते, पुरुषो हिरण्मय इति प्रथमयोपास्यः अतः पर एव आत्मोपास्यः ।

इतश्च शारीरादन्यः ।

सू० स्मृतेश्च ॥ ६ ॥

"सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञान-मपोहनं च योमामेवमसंमूढो जानाति पुरुषोत्तमम्, ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति भ्रामयन्—

टी० सू० शब्दविशेषात् । ५ । अस्मिन् सूत्रे असमानविभक्तिकः शब्दो विवक्षितः, एवं समानप्रकरण इति तत्रापि—शाण्डिल्यविद्यायामित्यर्थः,

सोत्रपदशक्तेस्सङ्कोचकाभावात् समानप्रकरणेन प्रकृतोपपादनस्य अन्यत्र दृष्टत्वाच्च, न छान्दोग्यवाक्यमात्रविषयमिदं सूत्रमिति भावः । जीवपरयोरिति उपास्योपासकयोरित्यर्थः जीवपरयोरित्युक्तिः फलितार्थाभिप्रायेण अतो नान्योन्याश्रयः, अत्र हिरण्मय=शब्देन दिव्यविग्रहवत्त्वं च सिद्धम् उदाहृतवाक्ये शब्दविशेषं दर्शयति "अत्रे"ति, सप्तम्यन्तेनेति अन्तरात्मन्नित्यत्र नकारलोपाभावात् नञ्सम्बुद्ध्योरेव न कारलोपनिषेधात् इह सम्बुद्ध्यन्तत्वेऽनन्वयाच्च "आत्मन्पश्यन्सर्वभूतानी"ति,वत् लुप्तसप्तमीकोऽयं निर्देश इति भावः । एवं स्वप्रकरणे षष्ठीप्रथमात्मकः समानप्रकरणे सप्तमीप्रथमात्मकश्च शब्दविशेषो विवक्षितः, हृदयस्थस्य ईश्वरत्वमुपबृंहणेन विशदयितुमाह सू० स्मृतेश्च । ६ । एष म आत्मान्तर्हृदय इति, शब्दप्रत्यभिज्ञापनार्थमाह "सर्वस्ये"ति, उपास्यत्वज्ञापनार्थन्तदनन्तरवाक्यमाह "योमा"मिति, हृत्स्थस्य ईश्वरत्वकण्ठोक्तिं दर्शयति । "ईश्वर"इति, तमेव शरणङ्गच्छेत्युपादानं च हृदयस्थस्य भजनप्रदर्शनार्थं सर्वस्येति सर्व–शब्दो जीवविषयः पराधीनस्मृत्याद्याश्रयभूतवस्तुविषयत्वात् पुरुषोत्तम=शब्दवाच्यस्य जीववैलक्षण्यन्तत्रैवोक्तं सर्वभूत–शब्दोऽपि जीवविषयः भ्रान्त्याश्रयत्वाद्देहाख्ययन्त्रारूढत्वाच्च, अत्र च–शब्दोऽवान्तरशङ्कापरिहारहेतुद्वयसमुच्चयार्थः अन्वाचयो वा । अत्र केचित् कर्मकर्तृव्यपदेशादयोघटकारकोदिक्षतगगनभेदाश्रयेण बालिशकृताल्पत्वमहत्त्वादिव्यवहारा इव काल्पनिकभेदमाश्रित्य तत्त्वमसीत्यात्मैकत्वोपदेशग्रहात्प्राक् प्रवर्तन्ते ऐक्योपदेशग्रहणानन्तरं सर्वव्यवहारपरिसमाप्तिरित्याहुः । अत्र ब्रूमः, यस्य भ्रमस्स एव भ्रा-

सू० सर्वभूतानि यन्त्रारूढानि मायया तमेव शरणङ्गच्छेति च शारीरकमुपासकं परमात्मानं चोपास्यं स्मृतिर्दर्शयति ॥

न्तिसिद्धमर्थं व्यपदिशति तस्यैव उपदेशग्रहणात्तन्निवृत्तिः, एवं सति जीवेश्वरभेदभ्रान्त्या तयोः कर्मकर्तृभावादिकं को व्यपदिशति किं जीवः? उतेश्वरः? उत वेद एव? सत्राश्रुतशास्त्रस्य जीवस्य देहातिरिक्तं जीवमप्यजानतः सत्यसङ्कल्पत्वादिलक्षणेश्वरप्रतीत्यसम्भवाच्च तद्भ्रान्तिमूलत्वं कर्मकर्तृव्यप-

देशस्य सम्भवति, नापि भ्रान्तस्य जीवस्य, तस्य जीवेश्वरभेदभ्रान्तौ श्रुतिरेव मूलमिति परमतिः श्रेयसार्थिभिर्वेदान्तानामनुपादेयत्वप्रसङ्गः, स्वनिमित्तामपि भ्रान्तिं श्रुतिः स्वयमेवैक्योपदेशेन निवर्त्तयतीति चेत्, तथाऽपि "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर"मिति न्यायादनुपादेयत्वमेव स्यात् कर्मकर्तृभावादिव्यपदेशस्य ईश्वरभ्रान्तिमूलत्वमपि न घटते व्यपदेशवैयर्थ्यात्, तथा सति ह्येतमितः प्रेत्याभिसम्भवितास्मीति व्यपदेशो न स्यात् अपि तु इतः प्रेतेरभिसम्भाव्योऽहमित्येव स्यात् । किञ्च भ्रमनिवृत्त्यर्थम् ईश्वरं प्रत्युपदेष्टव्यं न ह्यन्यस्य भ्रमे सत्यन्यं प्रत्युपदेष्टव्यं, तथा च तत्त्वमसीत्युपदेशो न घटते किंतु त्वं जीवोऽसीत्येवं वक्तव्यम्, अतः श्रुतिषु कर्मकर्तृव्यपदेशोनेश्वरभ्रममूलः, यदि वेद एव भ्रान्तो व्यपदिशति तर्हि वेदस्य तत्त्वोपदेष्टृत्वं न स्यात् भ्रान्तत्वात्, पश्चात्प्रतिबुद्ध उपदिशतीति चेत् तदयुक्तं स्वस्य भ्रमनिवृत्तेरन्येषां जीवेश्वरभ्रमाभावात्त्वोपदेशवैयर्थ्यात्, अन्येषां जीवेश्वरभेदभ्रान्त्यभावेऽपि जीवबहुत्वभ्रमनिवृत्त्यर्थम् उपदेशः कार्य इति चेन्न, उपदेशवैयर्थ्यादेव, न हि तदानीं तत्त्वमसीत्युपदेशो घटते किंतु सर्वे जीवास्त्वमित्युपदेष्टव्यं, न चैवमुपदेशो वेदान्तेषु क्वचिदपि दृश्यते। "न चाऽहं मनुरभवं सूर्यश्च अहं कक्षीवान् ऋषिरस्मि विप्र" इत्याद्यनुसन्धानदर्शनात् तन्मूलभूत उपदेशः सर्वजीवैकत्वविषयोऽस्तीत्यभ्युपगन्तव्यमेकस्य जीवस्य सिंहेन भूत्वा बहवो मया हता[1] व्याघ्रेण भूत्वा बहवो मयाऽत्ताः इतिवत्कल्पभेदेनातीतस्वीयमनुसूर्यादिजन्मस्मरणपरत्वसम्भवात्तस्य वाक्यस्य यतः शास्त्रेण विना शरीरिणां जीवेश्वरविभागप्रतीतिर्न सम्भवति, अत एव लोकसिद्धभेदो निषेधार्थं श्रुत्याऽनूद्यत इत्येतन्निरस्तम् । न चेश्वरस्यानुमेयत्वसंभवात् जीवेश्वरभेदप्रत्ययस्य लोकसिद्धत्वसम्भव इति वाच्यं तर्कत्रयपुरस्सरानुमानस्य दूषितत्वात्, अनुमानसम्भवेऽपि भाक्रुपत्वसत्यसङ्कल्पत्वमुक्तप्राप्यत्वादीनामनुमातुमशक्यत्वाच्च, कर्मकर्तृव्यपदेशो ऽपि ह्युपास्यत्वादिनिबन्धनः तत्तत्फलविशेषार्थिनां कर्मकर्तृसापेक्षोपासनसिध्यर्थं जीवेश्वरभेदं श्रुतिः कल्पयतीति चेत्तथा सति तत्त्वनिरूपणदशायाम् अत्ता चराचरग्रहणात् अनुपपत्तेस्तु न शारीर इति जीवविलक्षणं वस्तु प्रतिज्ञाय (शेषमग्रे)

१ मयाऽत्ताः ।

# वृत्तिवार्तिकम् ।

(*Continued from page* 499. VOL. XII.)

इत्यभिधा त्रिविधा निरूपिता । सा चानेकशक्तिकस्य संयोगाद्यैर्नियम्यते । तथा चाहुः ।

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥

इति । अर्थः प्रयोजनम् । प्रकरणं वक्तृश्रोतृबुद्धिस्थता । लिङ्गं प्रयुक्तनानार्थपदवाच्यान्तरव्यावृत्तो धर्मः । शब्दस्यान्यस्य सन्निधिर्नानार्थपदैकवाच्यसंसर्ग्यर्थान्तरवाचिपदसमभिव्याहारः । सामर्थ्यं कारणत्वम् । औचिती अर्हता । व्यक्तिः स्त्रीपुंनपुंसकम् । शेषं प्रसिद्धम् । तत्र शङ्खचक्रधरो हरिरित्यत्र शङ्खचक्रसंयोगेन हरिशब्दस्य भगवत्यभिधा नियम्यते । अशङ्खचक्रधरो हरिरित्यत्र तद्विप्रयोगेन । रामलक्ष्मणावित्यत्र रामपदस्य लक्ष्मणसाहचर्याद्रघुपुङ्गवे । छायातपावित्यत्र छायापदस्यातपेन सहानवस्थानविरोधादनातपे । रामरावणयोरित्यत्र रावणेन सह वध्यघातकभावविरोधाद्रामपदस्य रामचन्द्रे । यत्तु रामार्जुनयोर्वध्यघातकभावविरोधाद्भार्गवकार्तवीर्ययोरभिधा नियम्यत इत्युदाहरणम् । तन्न । रामपदस्य भार्गवेऽभिधानियमने सति तद्विरोधप्रतिसंधानेनार्जुनपदस्य कार्तवीर्येऽभिधानियमनं तस्मिंश्च सति तद्विरोधप्रतिसंधानेन रामपदस्येति परस्पराश्रयापत्तेः(१) । तस्मादन्यतरपदस्य व्यवस्थितार्थत्व एव स्मृत-

(१) उभाभ्यामपि पदाभ्यां शक्त्यैकदैवार्थद्वयोपस्थितावपि तद्वैरसंबन्धज्ञानाधीना पुनर्विरोधिन उपस्थितिरिति शक्यस्य द्विरुपस्थितिरवैरिणास्तु सकृदेवेति तात्पर्यं कल्प्यत इति रामार्जुनावित्यप्युदाहरणं युक्तमेवेत्यन्ये ।

तद्विरोधप्रतिसंधानान्नानार्थपदस्याभिधानियमनमिति प्रागुक्तमेवोदाहरणमनुसर्त्तव्यम् । इदं तु शब्दान्तरसन्निधेरुदाहरणं भविष्यति । "हरिं मोक्षाय भजत" इत्यत्र मोक्षरूपेणार्थेन हरिशब्दस्य भगवत्यभिधा नियम्यते । "विवेश रामो दुर्द्धर्षे तापसाश्रममण्डल" मित्यत्र रामशब्दस्य प्रकरणाद्रघुवीरे । "कुपितो भूभृ" दित्यत्र कोपलिङ्गेन पर्वतव्यावृत्तेन भूभृत्पदस्य राजनि । संयोगोदाहरणे प्रसिद्धिप्राचुर्ये शङ्खादेरिन्द्राद्यावर्थान्तरे ऽपि संयोगाविरोधाद्, लिङ्गोदाहरणे तु सर्वथा अर्थान्तरव्यावृत्तिरिति भेदः । "निषधं पश्य भूभृत" मित्यत्र जनपदविशेषसाधारणस्य निषधपदस्य पर्वतवाचिभूभृत्पदसन्निधानात् पर्वतविशेषे सा नियम्यते· भूभृत्पदस्य राजसाधारणस्य पर्वतवाचिनिःषधपदसन्निधानात् पर्वते । न चाऽन्योन्याश्रयः । न ह्यसमभिव्याहृतशब्देन तदर्थप्रतिपादनमभिधानियमनायापेक्ष्यते किं तु स्वार्थेन गृहीतसंसर्गे ऽर्थे वर्तमानो यः शब्दस्तत्समभिव्याहरणमात्रम् । संबन्धिदर्शनमात्रं हि सम्बन्ध्यन्तरस्मरणायापेक्ष्यते, न तु तद्दर्शनानन्तरं तत्सम्बन्धस्मरणमपीति यथा नान्योन्याश्रयस्तथेहापि निषधभूभृत्पदयोरभिधानियमनाय गृहीतस्वस्वार्थसंसर्गकार्थव्युत्पत्तिकभूभृन्निषधशब्दसमभिव्याहारमात्रमपेक्ष्यत इति तत्तदर्थप्रतिपादनस्यानपेक्षणान्नान्योन्याश्रयः। ननु शङ्खचक्रधरो हरिरित्यादावपि शङ्खचक्र इति शब्दान्तरसन्निधिनैवाभिधानियमनं भविष्यतीति व्यर्थं संयोगाद्युदाहरणमिति चेन्नैवम्· तत्र शङ्खचक्रादिशब्दानां नियतार्थतया श्रवणमात्रादर्थप्रतिपादकत्वेन तत्प्रतिपादितार्थसंयोगादभिधानियमनसंभवात्· । शब्दान्तरसन्निधिरपि तत्रास्तीति चेत् । अस्तु तथापि हरिशब्दाद्यभिधानियमनसमर्थेन तदर्थसंयोगादिरूपसन्निहितसंबन्धेनान्तरङ्गे शङ्खच-

क्रादावुपस्थिते तस्यापि वाचकतया व्यवहितसंबन्धत्वबहिरङ्गः शब्दा न्तरसन्निधिर्नोदाहरणत्वमर्हति· अतो "यत्र निषधं पश्य भूभृत"-मित्यादावुभयस्य नानार्थतया न कस्याप्यर्थस्य प्रथममुपस्थितिस्त-थैव बहिरङ्गस्यापि तस्य नियामकत्वेनोदाहरणत्वमिति न कश्चि-त्सङ्करः । यत्तु नियतार्थसामानाधिकरण्यं शब्दान्तरसन्निधिः, तेन "देवस्य त्रिपुरारातेे" रित्यत्र देवशब्दस्य शङ्करे नियमनं तत्र त्रिपुरा-रातिशब्दस्य नियतार्थत्वादिति । तदयुक्तम्· समभिव्याहृतशब्दस्य नियतार्थत्वे तत्प्रतिपादितलिङ्गादिनैव तन्नियमनम्, अन्यथा लिङ्गा-द्युदाहरणे ऽपि शब्दान्तरसन्निधेरेव नियामकत्वापत्तेः । न च सा-मानाधिकरण्ये शब्दान्तरसन्निधिर्वैयधिकरण्ये भूभृतः कोप इत्यादि-रूपलिङ्गादिकमिति भेदकथनं युक्तम् । उभयत्र शब्दप्रतिपादितलिङ्गा-देरेव नियामकत्वेनास्य भेदकथनस्य परिभाषामात्रत्वात् । "व्यालो दानेन राजत" इत्यत्र व्यालदानपदयोरुभयोरप्यनियतार्थत्वेपि वैय-धिकरण्ये ऽपि परस्परसमभिव्याहारेण दुष्टगजमदजलयोरभिधानिय मनस्य सर्वानुभवसिद्धत्वेनावश्यसंग्राह्यत्वात्तदसंग्रहेण लक्षणकथन-स्यात्यन्तायुक्तत्वाच्च । तस्मादस्मदुक्तैव शब्दान्तरसन्निधेः प्रक्रिया सर्वत्रोदाहरणीया । "मधुना मत्तः कोकिल" इत्यत्र कोकिलमदकरण-त्वरूपेण सामर्थ्येन वसन्ते मधुशब्दस्याभिधा नियम्यते । "भजत हरिं भवतापहर"मित्यत्र भवतापहरणौचित्येन हरिपदस्य लक्ष्मीरमणे । अर्थोदाहरणे चतुर्थ्या कार्यत्वनिर्देशः, सामर्थ्योदाहरणे तृतीयया करणत्वनिर्देशः, औचित्योदाहरणे तु तदुभयानिर्देशे ऽपि योग्यता-मात्रेण समभिव्याहारलभ्यकार्यकारणभावावगम इति भेदः । "क्षीरा-र्णवे हरिः शेते" इत्यत्र देशेन, "प्रलये तिष्ठति हरि"रित्यत्र कालेन गरुडध्वजे हरिपदस्याभिधा नियम्यते । मित्रो भातीत्यत्र पुंव्यक्त्या

तपने· सुहृद्वाचिनो नपुंसकत्वात् । "तिस्र एव साह्नस्योपसदो द्वादशाहीनस्ये"ति श्रुतावहीनपदस्य मध्योदात्तस्वरेणाहर्गणे द्वादशाहाख्यक्रतुविशेषे· हीनो न भवतीति नञ्समासे सत्यहीनपदस्याद्युदात्तत्वात्· आदिपदेनाभिनयापदेशौ गृह्येते· अभिनयो विवक्षितार्थाकृतिप्रदर्शको हस्तादिव्यापारः । अपदेशो विवक्षितार्थस्य शङ्ग्याहिकया निर्देशः ।

पुरारिसंदर्शितसन्निवेशौ महत्पराभूतसरोजकोशौ ।
इमावियन्तौ पुनरेषम(१)स्ते कुचौ क्रियन्तौ पुरतो भवेताम् ॥ १ ॥

इत्यत्र तत्कालस्तनपरिमाणविशेषप्रदर्शकहस्तव्यापारेण इयत्पदस्य परिमाणविशेषे ।

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥ १ ॥

इत्यत्र इत इति स्वात्मनिर्देशेन तस्य वक्तरि परमेष्ठिन्यभिधा नियम्यते । यत्र त्वनेकार्थस्य शब्दस्य अभिधानियामकमनेकत्राविशिष्टमर्थे तत्र नान्यतरस्मिन्नभिधा नियम्यते· यथा ।

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योधारयत् ।
यस्याहुः शशिमच्छिरो.हर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥ १ ॥

अत्र केशवशिवयोर्द्वयोरपि स्तुत्यतया प्रकरणमविशिष्टमतो ध्वस्तमनोभवेन नाशितमन्मथेन येन बलिजित्कायो ·विष्णोर्विग्रहः पुरा ऽस्त्रतां नीतो यश्चोद्वृत्तभुजङ्गशेषवासुकिप्रभृतिनागराजसंपादि-

(१) अस्मिन् वत्सरे ।

तद्धारवलयकृत्यो यश्च गङ्गामधारयत् यस्य शिरः शशिमदाहुर-मराः स्तुत्यं नाम च हर इत्याहुः अन्धकासुरक्षयकरः स उमा-धवः पायादिति । अभवेन निःसंसारिणा येन अनः शकटं ध्वस्तम्, येन बलिजितः स्वस्य कायः पुरा ऽमृतमन्थने स्त्रीत्वं नीतो यश्चो-द्वृत्तभुजङ्गं कालियं हतवान्, रवे शब्दब्रह्मणि लयस्तद्रूप्यापत्तिरस्येति रवलयः, उद्वृत्तान् भुजङ्गान् हृतवद् वलयं चक्रमस्येति एकं पदं वा, अगं गोवर्द्धनं गां वराहावतारे भूमिं च यो ऽधारयत्, यस्य स्तुत्यं नाम शशिमच्छिरोहर इत्याहुः, शशिनं मथ्नाति यो राहुस्तच्छिरो-हर इति, अन्धकानां राज्ञां क्षयकरो निवासकृत् । सर्वदो माधवस्त्वां पायादिति चार्थद्वयेपि अभिधैव व्यापारः । अत एवात्र श्लेषालं-कारः । ननु यत्रानेकार्थ प्रकरणाद्यविशिष्टं तत्र भवत्वनेकत्राप्यभिधा-व्यापारः । यत्र प्रकरणस्य क्व चिदर्थे व्यवस्थितत्वे ऽप्यप्राकरणिकं शब्दान्तरं प्रतीयते तत्र का गतिः ।

असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।
राजा हरति सर्वस्य हृदयं मृदुलैः करैः ॥ १ ॥

इति चन्द्रोदयवर्णनप्रस्तावे, अत्राप्राकरणिको ऽपि भूपतिर-भ्युदयादिविशिष्टः प्रतीयते ।

अत्र प्राहुः । तत्र शब्दशक्तिमूलो व्यञ्जनाव्यापार एव शरणं गत्यन्तराभावात् । न हि तत्राभिधा सम्भवति प्रकरणेन यन्त्रे निय-मितत्वात्, नापि लक्षणा मुख्यार्थबाधाद्यभावात् । न चाभिधाया इव व्यञ्जनाव्यापारस्यापि प्रकरणेन नियन्त्रणे तेनापि न तन्निर्वाह इति वाच्यम् । तस्य धर्मिग्राहकमानेन तदनियम्यतयैव सिद्धेः । अत एव काव्यान्तर्निविष्टस्य प्राकरणिककिञ्चिदर्थनियताभिधाव्य

पारस्यासभ्यपदार्थान्तरप्रत्ययहेतोः पदस्य हेयत्वम्. अन्यथा तथा-भिधाया इव व्यञ्जनाव्यापारस्यापि प्रकरणेन नियन्त्रणे ऽसभ्यार्थान्तरप्रत्ययासम्भवाद् "यस्याननं योनिरुद्गारवाचा"मित्यादावश्लीलत्वं दोषो न स्यात् । तस्मात्संयोगादिभिरभिधा शृङ्खलिता यत्र कुण्ठतामेति अर्थान्तरावगमने व्यञ्जनमेव क्षमं तत्रेति ।

वयं तु ब्रूमः । असावुदयमारूढ इत्यादौ प्राकरणिके ऽर्थे प्रकरणवदप्राकरणिकेपि राजकरमण्डलादिशब्दानां परस्परान्वययोग्यनृपतितद्ग्राह्यधनदेशादिवाचिनां समभिव्याहाररूपमभिधानियामकमस्तीत्यर्थद्वयस्यापि प्राकरणिकत्वे इव प्राकरणिकाप्राकरणिकरूपत्वे ऽप्युभयत्राभिधैव व्यापारः । यथोक्तसमभिव्याहारस्यापि शब्दान्तरसन्निधिरूपत्वेन प्रकरणवदभिधानियामकत्वात् । यैस्तु शब्दान्तरसन्निधिरन्यथा निरुच्यते तैरपि यथोक्तसमभिव्याहारेण नानार्थशब्देभ्यो ऽर्थप्रत्ययस्य सर्वसिद्धत्वेन तस्य तद्भेदेनापि नियामकत्वमास्थेयमेव । वस्तुतो ऽयमेव शब्दान्तरसन्निधिरित्यप्युक्तम् । न चाप्राकरणिके उक्तरूपशब्दान्तरसन्निधिमात्रं, प्राकरणिके तु तच्च प्रकरणञ्चेति नियामकाधिक्यात्तत्रैवाभिधा स्यादिति वाच्यम् । प्रकरणादीनामभिधानियामकत्वं हि नानार्थशब्दजन्यशक्यस्मृतौ तेषामन्यतमकारणत्वं, यथोक्तं, "शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव" इति. तथा, च तेषु कस्यचिदपि समवधाने स्मृतिसामग्री पुष्कलैवेति किं तद्बाहुल्येन । यत्रैकमेव पदं नानार्थमप्राकरणिके ऽपि तात्पर्यवद् यथा ।

करोति कंसादिमहीभृतां वधाज्जनो मृगाणामिव यस्तव स्तवम् ।
हरे हिरण्याक्षपुरस्सरासुरद्विपद्विषः प्रत्युत सा तिरस्क्रिया ॥ १ ॥

इत्यत्र हरिपदं, तत्रापि समभिव्याहृतद्विपपदप्रतीतगजविरोधादिकमप्राकरणिके सिंहे ऽप्यभिधानियामकमस्त्येव । यत्र "यस्या-

ननं योनि"रित्यादावश्लीले नैतादृशं नियामकं तथापि बुभुत्सिता-र्थेव्यासक्तस्य मनसस्तमुल्लङ्घ्यासभ्ये दुर्गन्धादौ प्रवृत्तिवत्प्रकरणनियन्त्रितस्यापि शब्दस्य तदुल्लङ्घ्य विषयस्वाभाव्यादश्लीले प्रवृत्तिरिति न क्वापि शक्तिविषये व्यक्तिरङ्गीकरणीया । यदि चैवंविधानि नियामकानि नाद्रियेरन् तदोदाहृतश्लोकस्थलेषु व्यञ्जनव्यापारोऽपि दुर्घटः । तथा हि । प्रकरणादिकमुल्लङ्घ्य व्यञ्जनव्यापारेणाप्यर्थान्तरप्रत्ययो न सर्वत्र वक्तुं शक्यते· प्रकरणादीनामभिधानियामकत्वकल्पनस्येव व्यर्थत्वापत्तेः । तद्धि नादृष्टार्थं सैन्धवमानयेत्यादावेकार्थमात्रपरनानार्थशब्दस्थले ऽर्थविशेषस्मृतिव्यवस्थार्थं तत्· यदि तथापि व्यञ्जनाव्यापारेणार्थान्तरप्रत्ययः स्यात्तदा कथमेषा सिध्येत् । न ह्यभिमतानभिमतसाधारणस्य जलाशयस्याभिमतक्षेत्रगामिनीमेकां कुल्यां विधायानभिमतक्षेत्रगामिनः कुल्यान्तरस्यापि कल्पने जलस्याभिमतक्षेत्रैकगामित्वव्यवस्था कृता भवति· तथा च यत्र क्वचित्तुश्चमत्कारिण्यप्राकरणिकेऽप्यर्थे तात्पर्यं यत्र वा ऽश्लीलदोषः तत्रैव व्यञ्जनव्यापारोन्मेषो न सर्वत्रेति तद्व्यवस्थासिद्धये तत्र तत्र नियामकान्यस्मदुक्तानि अन्यादृशानि वा अवश्यमादर्तव्यानि । तेषाञ्चाभिधानियामकत्वं वक्तुं शक्यमिति व्यर्थस्तत्र व्यक्तिकल्पनापरिश्रमो दुर्वारश्च तत्र व्यक्तिवादिमतेप्यभिधाव्यापारः । तथा हि यदि शक्तिरभिधा, निर्विवादमस्त्येवाप्राकरणिकेपि सा· यदि च काव्यप्रकाशाद्युक्तरीत्या शक्यार्थप्रतिपादकत्वरूपः शब्दव्यापारः सोऽप्यस्त्येव । न हि तत्राप्राकरणिकशक्यप्रतिपत्तेः शब्दादन्यज्जनकम् । शक्तिग्रहमपेक्ष्य तत्प्रतिपादकत्वमभिधेति चेत् किमप्राकरणिकोर्थस्तत्रागृहीतशक्तिकस्याभिधया प्रतीयते येन तत्र सा न स्यात् । ननु शक्त्या साक्षात्प्रतिपादकत्वमभिधा· साक्षादित्यविशेषणे मुख्यार्थप्र-

क्तिग्रहमपेक्ष्य तत्प्रतिपादनव्यवधानेन तत्संबन्ध्यर्थान्तरप्रतिपादनरूपाया लक्षणाया अभिधात्वप्रसङ्गात् । तथा च प्रागेवानुवर्तमानेन प्रकरणेन तत्प्रमेयोपस्थापनं शीघ्रं भवतीति तद्व्यवधानेनार्थान्तरप्रतिपादनं नाभिधेति चेन्न तद्विषयशक्तिग्रहमपेक्ष्य तत्प्रतिपादनमभिधेति लक्षणे विनैव साक्षात्त्वविशेषणमनतिप्रसङ्गात् । तत्पदरूपेण पदभङ्गकृतपदान्तररूपेणार्थान्तरप्रतिपादनव्यवधानराहित्यरूपसाक्षात्त्वविशेषणस्य गुरुत्वात् । तथा विशेषणे "येन ध्वस्तमनोभवेने"त्यादावस्फुटपदसन्धितया शशिमच्छिरोहरः, अन्धकक्षयकर, इत्यनयोरप्रयुक्तनिहितार्थत्वेनाप्रसिद्धतया च विलम्बेन प्रतिपत्तिरिति सर्वसिद्धत्वेन तत्राभिधाविषयेऽपि तदभावापत्तेः । प्रकृताप्रकृतोभयपरे यत्राप्रकृते प्रसिद्धतरं प्रकृतेऽप्रसिद्धतरं पदं तत्राप्रसिद्धिप्राचुर्येणाप्रकृतार्थप्रतीतेरेव प्राथमिकत्वेनाप्रकृतेऽभिधा प्रकृते व्यक्तिरिति वैपरीत्यापत्तेश्च । प्रकरणमुल्लङ्घ्यापि प्रसिद्धतरार्थस्यैव प्रथमस्मृतेः । अत एव 'द्व्यर्थमप्रसिद्धेऽर्थे प्रयुक्तं निहतार्थक' मित्युक्तलक्षणस्य निहतार्थस्य काव्यदोषत्वमुपगम्यते प्रसिद्धतराप्रकृतार्थप्रतीत्या प्रकृतार्थप्रतीतिव्यवधानात् । न च निहतार्थस्य दोषत्वात्तत्प्रयोगोऽर्थद्वयविवक्षास्थलेऽपि काव्ये न सम्भवतीति वाच्यम् श्लेषयमकादिषु वृद्धैस्तस्यादोषत्वस्योपपादितत्वात् । अन्धकक्षयकरः, राजा हरति लोकस्य," "रत्ना राजार्चिताङ्घ्रेरनुपचितकलो यस्य चूडामणित्व" मित्यादिदर्शनाच्च । तस्माच्छब्दस्यार्थप्रतिपादनोपयोगितत्प्रत्यासत्तिरूपधर्मभेद एव वृत्तिभेदप्रयोजको न तु तद्भेदाभावप्रतिपादनगतः साक्षात्त्वव्यवहितत्वभेदः । शक्तिशक्यसंबन्धरूपप्रतिपाद्यप्रत्यासत्ति(१)भेदेनैव अभिधालक्ष-

(१) प्रत्यासत्तिः संबन्धः ।

थयोर्भेददर्शनात् । तस्माद्भेदाभावे च प्रसिद्धाप्रसिद्धार्थगोचरशब्दश्लेषस्थले लक्षितलक्षणास्थले व्यङ्ग्यस्थले चार्थद्वयप्रतिपत्त्योः साक्षात्त्वव्यवहितत्वभेदे सत्यपि अभिधालक्षणाव्यञ्जनातिरिक्तवृत्त्यदर्शनाद्वृत्त्यप्रयोजकस्याव्यवस्थापादकसाक्षात्त्वविशेषणस्यायोगात् । तद्विषयशक्तिग्रहमपेक्ष्य तत्प्रतिपादकत्वमभिधेत्यप्रकृते ऽर्थेप्यभिधाव्यापारो दुर्वारः ।

नैयायिकास्तु प्रसिद्धिप्राचुर्य सति प्रकरणादिशून्यस्याप्यर्थस्य स्मृतेः प्रसिद्ध्यभावे प्रकरणादिमतोऽर्थस्यास्मृतेश्च प्रकरणादिकं नाभिधानियामकम्‌ शक्तिग्रहसंस्कारपाटवनियम्यत्वात्तस्याः । किं तु लिङ्गविधया तात्पर्यग्राहकम्‌ अत एव हरिरस्तीत्यनारभ्यवादश्रवणेपि(१) हरिशब्दस्य यमानिलेन्द्रचन्द्रार्कादयो ऽर्था इत्यवधार्यन्त एव, वक्तुः परं क्व तात्पर्यमिति नावधार्यत इत्याहुः । तद्रीत्या तु न कथं चिदपि प्रकरणस्याभिधानियामकत्वं शक्यम्‌ तस्मात्प्रस्तुताप्रस्तुतोभयपरेपि प्रस्तुताप्रस्तुतयोरभिधेययोरभिधेव वृत्तिः । तदुपस्थितेषु च पदार्थेष्वेवाकाङ्क्षादिसहकारिवशादुभयवाक्यार्थप्रत्यय इत्यप्रस्तुतविषये न पदार्थप्रतीतये नापि वाक्यार्थप्रतीतये व्यक्तिरुपगन्तव्या । यत्तु प्राचामप्रस्तुते शब्दशक्तिमूलव्यञ्जनवृत्त्यभिधानं तदप्रस्तुतार्थप्रतीतिमूलके यथोदयमारूढ इत्यादिविशेषणविशिष्टः पृथिवीपतिः स्वल्पैर्ग्राह्यधनैर्लोकस्य हृदयं रञ्जयति एवं तथाभूतश्चन्द्रमाः मृदुलैः किरणैरित्यादिरूपेण प्रतीयमाने उपमाद्यर्थालङ्कारे तदवश्यम्भावदृढीकरणाभिप्रायेण, न तु वस्तुतो व्यञ्जनाव्यापारो ऽस्त्वित्यभिप्रायेण ।

आच्छादितायतदिगम्बरमुच्चकैर्गा-
माक्रम्य संस्थितमुदग्रविशालशृङ्गम् ।

(१) प्रकरणाद्यज्ञाने ऽपीति भावः ।

मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि न विस्मयते नगेशम् ॥ १ ॥

इत्यादिना शब्दशक्तिमूलस्यालङ्कारध्वनेरेवोदाहरणत्वेन तै-रपि(१) लिखितत्वात् । "उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुख(२)"मित्यादिश्लेषापादितविशेषणसाधारण्यनिमित्तसमासोक्त्यलङ्कारोदाहरणे रागादिशब्दानां प्रस्तुते ऽप्यभिधावृत्तेरेव श्लेषव्यवहारेण स्फुटीकरणाच्च । न चात्र स्वतो ऽप्रस्तुतयोरपि कामिनोः प्रस्तुतंशशिनिशावच्छेदकत्वेनान्वयात्तत्र तयोः सर्वथैव प्रकरणासम्भव इति वाच्यम् । 'विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्ति'-रिति लक्षणानुरोधेनाप्रस्तुतप्रतिपत्तेर्विशेषणसाम्याधीनत्वेनाप्रस्तुत-स्य प्रकरणसंबन्धावगमात् प्रागेव तद्विशेषणेष्वभिधाया वाच्यत्वा-त्प्रस्तुतोपमानत्वादिना यथा कथंचिद्भाविसंबन्धस्येहापि सद्भावाच्च । सर्वथा प्रस्तुता ऽसंबद्धस्याप्रस्तुतस्य क्वापि कविविवक्षागोचरत्वाभावात् । न चैवं शब्दशक्तिमूलस्यालङ्कारध्वने"राच्छादितायतदिगम्बर"मित्याद्युदाहरणसत्त्वे तन्मूलो वस्तुध्वनिर्लुप्येत । निरलङ्कारे ऽप्रस्तुतार्थएव वस्तुध्वनेरुदाहरणीयत्वात् । तत्र च त्वया ऽभिधाङ्गीकारादिति चेन्न । यत्र प्रस्तुते ऽर्थे ऽभिधयैव प्रतिपाद्यमाने तन्मूलमनभिधेयवस्तु प्रतीयते तत्र तदङ्गीकारादिति । यथा "शनिरशनिश्च तमुच्चैर्निहन्ति .कुप्यसि नरेन्द्र यस्मै त्व"मित्यादौ । अत्र ह्यशनिशब्देन प्रस्तुताद्वज्रादन्यस्मिन्समभिव्याहृतशनिविरुद्धरूपे ऽप्यर्थे ऽभिधयैव प्रतिपाद्यमाने विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्ये

(१) प्राचीनैरपि ।

(२) रागो, रक्तिमा ऽनुरागश्च । तारका, नक्षत्राणि नेत्रकनीनिका च । मुखम्, आरम्भो वदनं च ।

कुरुत इत्युपश्लोक्यस्य([1]) प्रभावातिशयः प्रतीयते । इत्थमेव प्राचीनैरपि शब्दशक्तिमूलो वस्तुध्वनिरुदाहृतः । ननु

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छान्तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥ १ ॥

इत्यत्र विषपदेनाप्रस्तुतं गरलं व्यङ्ग्यं, वाच्यस्य जलद एव भुजग इति रूपकस्य सिद्धिकृदिति वाच्यसिद्ध्यङ्गगुणीभूतव्यङ्ग्यमुदाहरता मम्मटाचार्येणाप्रस्तुते शक्येपि शब्दशक्तिमूलो वस्तुध्वनिरुक्तः । सत्यम् । अत्र प्रस्तुतार्थप्रतीतिमूलतया प्रतीयमानयोर्वस्त्वलङ्कारयोर्व्यक्त्यवश्यंभावदार्ढ्यायाश्रितमप्रस्तुतार्थे ऽपि व्यक्तिरिति प्रौढिवादमात्रमवलम्ब्य तत्प्रवृत्तमिति नात्राभिनिवेशः कार्यः । नन्वेवमप्रस्तुतार्थपर्यालोचनालभ्ययोर्वस्त्वलङ्कारयोर्व्यक्त्युपगमे तत्रार्थशक्तिमूलैव व्यक्तिर्भवेदिति पृथगर्थशक्तिमूलध्वनेः शब्दशक्तिमूलो ([2]) न स्यादिति चेन्मैवम् । तथात्वे ऽपि प्रस्तुतोभयसाधारणशब्दस्य प्रस्तुतमात्रपर्यायशब्दान्तरपरिवृत्त्यसहिष्णुत्वेन ततस्तस्य पृथग्व्यवस्थितेः । एवमन्ये ऽप्यप्रस्तुतशक्ये व्यक्त्यनुपगमेन भाविताः क्षुद्रोपद्रवा निरसनीयाः ॥

इति श्रीवृत्तिवार्तिके मुख्यवृत्तिनिर्णयो नाम प्रथमः परिच्छेदः ॥ १ ॥

अथ लक्षणा निरूप्यते ॥ सा च मुख्यार्थसंबन्धेन शब्दस्य प्रतिपादकत्वम् । तत्सादृश्येन प्रतिपादकत्वरूपा गौण्यपि लक्षणाभेद एव । तत्सदृशे ऽपि तन्निरूपितसादृश्याधिकरणत्वपरम्परासं-

([1]) उपश्लोक्यस्य, वर्णयस्य ।
([2]) ध्वनिरिति शेषः ।

बन्धसत्त्वात् । न हि साक्षात्संबन्धे(१) विशिष्टबुद्धियोग्यसंबन्धे(२) वा सत्येव लक्षणेति नियमः । चक्षुरादेर्घटनेत्यादौ संयुक्तसमवायादिविशिष्टबुद्धियोग्यस्य परम्परासंबन्धस्यापि प्रत्यासत्तित्वोपपत्तेः । व्यतिरेकलक्षणास्थले(३) तन्निरूपितविरोधाधिकरणत्वादिपरम्परासंबन्धमात्रेण तादृशे लक्षणाङ्गीकारश्च । एतेन सादृश्यं न संबन्ध इति गौणी लक्षणातो भिन्ना. विशिष्टधीयोग्यस्यैव संबन्धत्वात् । संयोगे सति दण्डी देवदत्त इतिवत्सत्यपि सादृश्ये सिंहवान् देवदत्त इति विशिष्टबुद्धेरदर्शनादिति निरस्तम् । विशिष्टबुद्ध्यनियामकपरम्परासंबन्धमात्रस्य प्रत्यासत्तित्वोपपत्तेस्तावता लक्षणाङ्गीकारश्च दर्शितत्वात् । तस्मात्सादृश्यगर्भतदन्यसंबन्धनिमित्ततया गौणी शुद्धा चेति लक्षणाया एव द्वैविध्यम् । इयं द्विविधा ऽपि लक्षणा प्रत्येकं द्विविधा निरूढलक्षणा फललक्षणा चेति । रूढितुल्यतया(४) निरूढा निरूढलक्षणा ॥ विवक्षितार्थान्तरद्योतनफला फललक्षणा ॥ आद्या यथा ।

लावण्यसागरभुवि प्रणयं विशेषाद्
दुग्धाम्बुराशिदुहितुस्तव तर्कयामि ।
यत्तां बिभर्षि वपुषा निखिलैः प्रतीकै-(५)
रन्यां तु केवलमधोक्षज वक्षसैव ॥

अत्र लावण्यशब्दस्य लवणत्ववाचिनो हृदयङ्गमत्वसादृश्यात्सुषमाविशेषे निरूढलक्षणा । एवमालेख्यगजादौ गजादिशब्दस्यापि निरूढलक्षणा ऽनुसन्धेया । इदं गौण्या उदाहरणम् ।

( शेषमग्रे )

(१) संयोगादौ । (२) समवायादौ ।
(३) उपकृतं बहु तत्रेत्यादौ । (४) अनादितात्पर्यवत्त्वादेव रूढितुल्यत्वम् ।
(५) प्रतीकैः=अवयवैः ।

# खण्डनखण्डखाद्यम् ॥

## चतुर्थः परिच्छेदः ।

(*Continued from page* 504. Vol. XII.)

मू० [a] यदपि नियम्याद्भिन्नं नियामकं यदपि कथं तदेव नियमयति नान्यदिति तदाधारत्वादिति चेत्कः पुनराधारार्थः * यत्र स्थीयते तत्? *—इति चेन्न, यत्रेति सप्तम्यर्थस्यापि विवेचनीयत्वात् * इहेति प्रत्ययविषय? *—इति चेन्न, [b] तत्रेति प्रत्ययविषयस्यानाधारत्वप्रसङ्गात् [c] किञ्च प्रत्ययविशेषाधिगमो विषयविशेषाधिगमात् विषयस्य च विशेषाधिगमः प्रत्ययविशेषादिति व्यक्तमन्योन्याश्रयः * [d] समवायी? *—इति चेन्न, [e] शशे शृङ्गाभावः कुण्डे बदरमित्याद्यव्याप्तेः * गौण [f] स्तत्र प्रयोग? *—इति चेन्न, एतावन्मात्रं प्रत्ययस्य भ्रान्त इत्यपि वक्तव्यमवशिष्यते भवतः ओमिति चेदप्य [g] विपरीतमेव कुतो न स्यात [h] शशे विषाणं नास्तीति च यदि विषाणाभावाधिकरणत्वप्रतीतिर्भ्रान्ता शृङ्गस्य तर्हि शशोऽधिकरणं स्याद्भावाभावयोरन्यतरनिषेधस्यान्यतरविधिपर्यवसायित्वेनाभ्युपगमात् * पतनप्रतिबन्धकमधिकरणम्? *—इति चेन्न, [i] अवयविनं गुणादिकं च प्रति तदभावात् * अव्यवच्छेदाधः स्थितम्? *—इति चेन्न,

टी० ॥ आधारत्वखण्डनं प्रस्तौति—। [a] "यदपी"ति । आधारत्वमेव सप्तम्यर्थ इत्यर्थः ॥ [b] "तत्रे"ति । तच्छब्दापेतता इदं शब्दस्यान्यार्थे-

(१) अंशवः=तन्त्ववयवाः ।

त्वादित्यर्थः प्रत्यय एव कथं तथेत्यनुयोगे विषयवैलक्षण्य नियामकं स्यात्तत्र च प्रत्ययवैलक्षण्यमित्यन्योन्याश्रय इत्याह–। [c]"किञ्चे"ति । [d]"समवायी"ति । समवायित्वमाधारत्वमित्यर्थः । संबन्धान्तरेणाधारत्वेऽव्याप्तिरित्याह–। [e]"शश"इति ॥ [f]"तत्रे"ति । समवायलक्षणां वृत्तिमन्तरेण यत्राधारत्वप्रतीतिरित्यर्थः ॥ विपरीतमिति कुण्डे बदरमित्यादिप्रतीतिः प्रमास्तु पटे शौक्ल्यमित्यादिप्रतीतिरेव भ्रमः स्यादित्यर्थः । दूषणान्तरमाह–। [g]"शश"इति । अवयविपतनं नावयवाः प्रतिबध्नन्ति तथा सत्यवयवि कदाचिदपि न पतेद्वा गुणपतनं गुणी प्रतिबध्नाति गुणानां गुरुत्वानाधारतयाऽपतनधर्मकत्वादिति तदुभयं प्रत्याधारत्वं न भवेदित्याह–। [h]"अवयविनमि"ति । अंश्वादीनां पटाद्याधारत्ववारणायाव्यवहितेति ॥

मू० [a]गुणाद्यपेक्षया गुणवदादेरधः स्थितत्वे प्रमाणाभावात् । अविशेषेण वा [b]वयविगुणादीनामवयवाधारत्वप्रसङ्गात् [c]ऊर्द्धस्थितस्य च संयोगिनः संयोगं प्रति तदभावात् [d]सूत्राऽवलम्बितद्रव्यादौ च बहुशं व्यभिचारात् * [e]यद्येको ऽधिकरणार्थो नोपपद्यते तर्ह्यनेकशब्दार्थवद्भिन्न एवास्तु? *–इति चेन्न, [f]आश्रयासिद्ध्यादेर्भेदप्रसङ्गात् * [g]सोपि स्वीकार्य? *–इति चेन्न, [h]असिद्ध्यादिविषयपरिगणनस्य व्यवहारहेतोरन्यथाभावप्रसङ्गात् [i]क्वचिदाश्रयस्य समवायित्वात् क्वचित्त्वाभावं समवायं च हेतुं प्रति तदसम्भवात [j]एकस्य च तेषामुपसङ्ग्राहकस्य वक्तुमशक्यत्वात् बहव एवाश्रयशब्दार्थाः आश्रयासिद्ध्यादयोपि पृथक् पृथगेव बहवः असिद्धिभेदपरिगणनग्रन्थोप्य-

टी० ॥ गुणगुणिनोरीश्वराधर्यस्य नियन्तुमशक्यत्वमित्याह–। [a]"गुणादीति ॥ [b]"अवयविगुणादीनामि"ति । अवयविनां ये गुणादयस्तेषाम-

व्यवधानाविशेषादवयवा अप्याधाराः स्युरित्यतिव्याप्तिरित्यर्थः कुण्डे वदरसंयोगस्यापि वदरमाधारो न स्यादधः स्थितत्वाभावादित्याह-। [c] "ऊर्द्ध्वे"ति। अधः स्थितेपि सूत्रबद्धे द्रव्ये सूत्रस्याधारत्वप्रतीत्या तत्राव्याप्तिरित्याह-। [d] "सूत्रे"ति। उत्पत्तये स्थितये ज्ञप्तये वा यद्येनापेक्ष्यते तदेव तदाधार इति नानार्थ एवायमाधारशब्द इत्याह-। [e] "यद्वी"ति। आश्रयासिद्ध्यादेराश्रय नानात्वेन भेदः स्यादित्याह। [f] "आश्रये"ति। आदिपदाद्व्यभिचारादिपरिग्रहः व्यभिचारेपि साध्याभावसामानाधिकरण्यमित्यत्राप्यधिकरणशब्दस्य नानार्थत्वादिति भावः आश्रयासिद्धिभेदोपि कार्य इत्याह-। [g] "सोपी"ति। आश्रयासिद्धिभेदा एवंविद्धहवस्तदाऽसिद्धित्रयव्युत्पादकं शास्त्रं विरुद्ध्येतेत्याह-। [h] "असिद्धी"ति। आश्रयासिद्धिभेदमेव प्रपञ्चयति-। [i] "क्वचिदि"ति। आश्रयत्वस्यानुगतस्याभावादित्याह-। [j] "एकस्य चे"ति॥

मू० [a] न्यथाकारं बोधदर्शनात? *-इति चेन्न, [b] तथापीह कुण्डे वदरमित्यत्र क आधारार्थ इति वक्तव्यं न तावत्पतनप्रतिबन्धकत्वं [c] सहैव कुण्डेन पतति वदरे तदभावात् नापि संयोगित्वं [d] वैपरीत्यस्यापि प्रसङ्गात् * संयोगित्वे सत्यधः स्थितत्वं तत्राधिकरणार्थ? *-इति चेन्न, [e] तस्मिन्सत्यप्यन्यत्र चरणतलमिलितधूलिपटलादौ तदधिकरणप्रतीत्यनुत्पत्त्या प्रत्युत चरणतले धूलीत्येव प्रतीत्याऽऽधारत्वप्रतीतौ व्यभिचारित्वेन [f] प्रकृतेपि तथा स्वीकारानुपपत्तेः * [g] न सार्वत्रिकोयमाधारार्थः किन्तु क्वाचित्को नानारूपाधारत्ववादिपक्ष? *-इति चेन्न, [h] भवत्वन्यत्रान्यस्याधारार्थत्वं तस्य त्वाधारार्थत्वं नोपपद्यते अनाधारत्वप्रतीतिविषयेपि गतत्वादित्युक्तेः।

टी० ॥ [a] "अन्यथाकारमि"ति। व्याप्तत्वपक्षधर्मत्वाभ्यामप्रमितत्वस्यानुगतस्याश्रयभेदेपि सुवचत्वात्सर्वेषामेवाश्रयाणां पक्षत्वेनोपसङ्ग्रहा

वित्यर्थः ॥ बाधो दोषः । [b]"तथापी"ति । आश्रयार्थो विशिष्य निर्वक्तुमशक्य इत्यर्थः ॥ [c]"सहैवे"ति । यद्यपि कुण्डादधः पतनं तत्रापि कुण्डप्रतिबद्धमेव तथापि तदाकाशदेशात्पतनं न प्रतिबध्नातीत्यर्थः ॥ [d]"वैपरीत्ये"ति । दध्नोपि कुण्डाधारत्वप्रसङ्गादित्यर्थः ॥ [e]"तस्मिन्नि"ति । अधः स्थितत्वे सत्यपि धूलीपटलस्याधेयत्वमेव न त्वाधारत्वमित्यर्थः । अन्यचेत्यस्य विशेष्यं "धूलीपटलादावि"ति ॥ [f]"प्रकृतेपी"ति । विशिष्यापि यल्लक्षणमुपक्रान्तं तदप्यतिव्यापकमेवेत्यर्थः । संयोगवृत्त्याप्याधारत्वं नानैवेति शङ्कते—। [g]"ने"ति । तत्रापि यद्विशेषलक्षणं कृत तदेव धूलीपटलादावतिव्यापकमिति परिहरति—। [h]"भवत्वि"ति । अनाधारप्रतीतिविषये धूलीपटलादावित्यर्थः ॥

मू० * [a]आधेयापेक्षया मंहत्परिमाणत्वे सति? *—इति चेन्न, करतलस्थित तूलराश्यादौ तदसम्भवात् [b]अन्यस्य च तत्राधारर्थस्य वक्तुमशक्यत्वात् [c]अधः शब्दार्थस्य च वक्तुमशक्यत्वात् [d]* पतनाभिमुखदिगवस्थितत्वम्? *—इति चेन्न, [e]पतनार्थस्य गमनाधिकस्याधः शब्दार्थव्यतिरेकेण निर्वक्तुमशक्यत्वात् अत एवाधः शब्दार्थदुर्वचनत्वमधिगम्याद्वैतवादिना गुरुणा शिष्याय खण्डनमुपाचक्षाणेन भगवता पराशरेणाभिहितम् "अधः शब्दनिगद्यं किं किञ्चोर्द्धमभिधीयते" *[f]पृथिव्यभिमुखा दिगधः शब्दार्थ? *—इति चेन्न, [g]ऊर्ध्वशब्दार्थस्यापि पृथिव्यभिमुखा दिक् तदपेक्षया साध? *—इति चेन्न, [i]यदपेक्षयेति किं यमवधीकृत्येति विवक्षितमुत यदीयाभिमुख्यव्यवस्थितेति ॥

टी० ॥ [a]"आधेये"ति । धूलिस्तु चरणापेक्षयाल्पपरिमाणेति भावः ॥ [b]"करतले"ति । प्रचयाख्यसंयोगेन करापेक्षया तूलकपिण्डे महत्त्वारम्भादिति भावः ॥ ननु तत्रापि पृथगेवाधारत्वं स्यादित्यत आह—। [c]"अन्यस्ये"ति । अव्यवहिताधः स्थितमिति यदुक्तं तत्राह—। [d]"अध"इति ।

यदभिमुखं फलादि पतति तदधः शब्दार्थ इत्याह—। [e]"पतने"ति । अधः संयोगफलिका क्रिया पतनमित्यन्योन्याश्रय इत्याह—। [f]"पतने"ति । गुरुणा ऋभुणा शिष्यस्य यत्खण्डनं कृतं तदुपाचक्षाणेन तदुपाख्यानं कुर्वता परशरेणेत्यर्थः । [g]"पृथिवी"ति । उपरि स्थितं पदार्थमपेक्ष्य या पृथिव्यभिमुखा दिक् साऽधः शब्दार्थ इत्यर्थः ॥ [h]"ऊर्द्ध्वे"ति । आभिमुख्यमुभयत्राप्यविशिष्टमित्यर्थः । मार्तण्डमण्डलापेक्षया पृथिव्यभिमुखा दिक् तदपेक्षयैवाध इति शङ्कते—। [i]"यदि"ति । [j]यदपेक्षये"ति । अवधित्वमात्रे वाऽपेक्षा अभिमुख्ये वा अपेक्षेति विकल्पार्थः ।

मू० [a] आद्ये पृथिव्यूर्द्ध्वस्थितं यदर्थमवधीकृत्य योर्द्ध्वा दिगिति भवद्भिर्व्यवह्रियते सापि पृथिव्यभिमुखी भवतीति साप्यधः स्यात् [b] अत एव न द्वितीयोऽपि *[c] यस्यां दिशि क्रियया पृथिवी सन्निहिता भवति सा दिगध?*—इति चेन्न, [d] कूपादौ मध्यगतस्य तिर्यग्दोलायमानस्य क्रिया पतनं स्यात् [e] तद्गत्याक्रान्ता च तिर्यगधः स्यात् * पृथिवीमवधीकृत्ययं चान्यं पदार्थमवधीकृत्य यो मध्य इति देशो व्यवह्रियते स [f] पृथिवीव्यतिरिक्ततदवध्यपेक्षयाध?*—इति चेन्न,

टी० ॥ [a]"आद्य"इति । पृथिव्या उपरि गिरिस्तमवधीकृत्योर्ध्वस्य मार्तण्डमण्डलस्याप्यधः शब्दार्थत्वं स्यादित्यर्थ आभिमुख्यस्य साधारण्यादवधेश्चात्रापि सत्त्वादित्यर्थः ॥ [b]"अत एवे"ति । आभिमुख्यस्योर्द्ध्वाधः साधारणत्वादिति भावः ॥ [c]"यस्यां दिशी"ति । यया क्रियया पृथिवी सन्निहिता भवति सा क्रिया पतनमिति तात्पर्यार्थः(१) यस्यां दिशीत्यध इति च कथं विदुपलक्षणतयोक्तम् अत एव पतनलक्षणातिव्याप्तिरित्याह—। [d]"कूपादावि"ति । कूपे घूर्णमानस्य विहङ्गमादेः क्रिया पतनं स्यादित्यर्थः ॥ [e]"तद्गत्ये"ति । सा चासौ गतिश्चेति तद्गतिः तस्य दोलायमानविहङ्गमादेर्गतिर्वा तद्गतिरित्यर्थः पतनलक्षणया क्रियया यत्र संयोगो जन्यते तस्यैवाधः शब्दार्थत्वादिति भावः ॥ पृथिवीमार्तण्डमण्डलान्तरालदेशो मार्तण्डापेक्षयाध इत्याह—। [f]"पृथिवीमि"ति ॥ (शेषमग्रे)

(१) सा दिगधः पदार्थ इति शब्दार्थे प्रसिद्धत्वादुपेक्ष्य तात्पर्यार्थं एवोपदर्शितः ।

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी।

(*Continued from page* 514. Vol. XII.)

"अन्तर्द्धौ येनादर्शनमिच्छति" ॥ अन्तर्धाविति नेयं निमित्तात्कर्मयोग इति सप्तमी, यथा हि वेतनेन धान्यं लुनातीत्यत्र वेतनस्य धान्येन योगोऽस्ति तथेहाप्यदर्शनमिच्छतीतीच्छाकर्मणाऽदर्शनेनान्तर्द्धेर्योगो नास्ति। अथादर्शनस्य यत्कर्म आत्माख्यमात्मनोऽदर्शनमिच्छतीति तेनान्तर्द्धेर्योगोऽस्ति यस्यैवादर्शनं तस्यैवान्तर्द्धानमित्युच्येत, एवमपि निमित्तात्कर्मयोग इति किं निमित्तं गृह्यते, कारणं प्रयोजनं वा, कारणं चेज्जाड्येन बद्धः, अत्रापि प्राप्नोति य एव बध्यते तत्रैव जाड्य[1]मिति तस्मात् प्रयोजनस्य तत्र ग्रहणं, यथा चर्मणि द्वीपिनं हन्तीति चर्म द्वीपिहननस्य प्रयोजनम्, इह त्वन्तर्द्धानमदर्शनस्य कारणम्, अन्तर्हितः खल्वसौ न दृश्यते तस्माद्विषयसप्तम्येषा सत्सप्तमी वा। येनेति कर्त्तरि तृतीया। ननु च दर्शनेन योगात् 'कर्तृकर्मणोः कृती' ति षष्ठ्या भाव्यम्। उभयप्राप्तौ कर्मण्येवेति नियमात् तृतीया भविष्यति, कर्म त्वत्रादर्शनस्यात्मा, नन्वात्मन इति न श्रूयते, मा श्रावि येनादर्शनमिच्छतीत्युक्ते कस्येत्यपेक्षायामात्मन इति गम्यते। 'अन्तर्द्धिनिमित्तमिति'। अन्तर्धिना कारणेनेत्यर्थः, निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति प्रथमा। अथ वा बहुव्रीहिरदर्शनस्य समानाधिकरणं विशेषणं, सूत्रेऽनुपात्तोऽपि तच्छब्दो यत्तदोर्नित्यसम्बन्धाल्लभ्यत एवेत्याह। 'तत्कारकमिति'। 'अन्तर्द्धत्त इति'। तिरोभवतीत्यर्थः। '[2]निलीयत इति'। लीङ् श्लेषणे दैवादिकः। 'चौरान्न दिदृक्षत इति'। आत्मानं ते मा द्राक्षुरित्येवमर्थम्। ननु परत्वात्कर्मसंज्ञा भविष्यति, सत्यम्, अयमपि प्रपञ्चः, कथं, पश्यत्येवं यदुपाध्यायः पश्येद् ध्रुवं मे प्रेषणमुपालम्भो वा भवेदिति स बुद्ध्या संप्राप्य निवर्तते। येनेत्यस्मिन्नसत्यदर्शनमिच्छतः शिष्यस्यैव स्यात्, ध्रुवमित्यनुवर्तिष्यते, कथं तर्हि सूत्रस्याबाध-

१ भवतीत्यधिकं २ पुस्तके।

कत्वं मा भूत्, असति हि तस्मिन्नर्थे ध्रुवमपादानसंज्ञं भवति तच्चेद् ध्रुवमदर्शनमिच्छतीत्यर्थः स्यात्, न च ध्रुवमिच्छति यच्चेच्छति न तद् ध्रुवमित्यवाचकं स्यात् ॥

"आख्यातोपयोगे" ॥ 'नियमपूर्वकं विद्याग्रहणमिति'। तत्रैवोपयोगशब्दस्य रूढत्वात्। यथा तेषां मन्त्राणामुपयोगे द्वादशाहमधः शय्येति नियमो भिक्षाचरणादिः। 'नटस्य शृणोतीति' किं पुनर्नटः कारकमुताहो न, यदि कारकं कर्म्मसंज्ञा प्राप्नोति 'अकथितं चे' ति, अथाकारकमुपयोगग्रहणमनर्थकं स्यात्। अस्तु कारकं नह्युपाध्यायान्नटस्य व्यापारे कश्चिदन्यो विशेषो ऽन्यदतो नियमात्। दुह्यादिपरिगणनात्तु कर्मसञ्ज्ञा न भवति, क्वचित्तु नटस्य गाथां शृणोति ग्रन्थिकस्य कथां शृणोतीति पाठः, तत्रापि नटादिनिमित्तं गाथादेः श्रवणं करोतीत्यर्थो न तु गाथादिविशेषणं नटादिः, अकारकत्वप्रसङ्गात्। ग्रन्थिकः कथाया वाचयिता। अयमपि प्रपञ्चः, कथमुपाध्यायान्निस्सरन्तं शब्दं गृह्णातीति स्फुट एवात्रापायः, इदं तर्हि प्रयोजनमुपयोगइति वक्ष्यामि नटस्य मा भूदिति। ननु नटस्य सत्यप्यवधित्वे शेषरूपेण विवक्षणात् षष्ठी भविष्यति यथा न माषाणामश्नीयादिति, वस्तुतः कर्म्मत्वं माषाणां, सत्यं, स एव विवक्षानियमः सूत्रकारेण प्रदर्श्यते उपयोगे ऽवधित्वं विवक्षितम[1]न्यत्र शेषत्वमिति ॥

"जनिकर्तुः प्रकृतिः" ॥ जनेः कर्ता जनिकर्तेति कर्म्मणि षष्ठ्याः समासः, अयमेव च निर्देशो ज्ञापयति 'कर्तरि चे' ति प्रतिषेधोऽनित्य इति, कः पुनरसावित्यत आह। 'जन्यर्थस्येति'। एतदुक्तं भवति। जनिशब्दोऽयमिञ्जर्थस्य इति जनेर्भावइञमुत्पाद्य व्युत्पादितः, 'जनिवध्योश्चे' ति वृद्धि[2]प्रतिषेधः। जन्यार्थवाची, न 'इक्श्तिपौ धातुनिर्देश' इति इक्प्रत्ययान्तः। गमहनेत्युपधाया लोपप्रसङ्गात्। नाप्यागन्तुकेनेकारेण धातोर्निर्देशः, शब्दात्मकस्य धातोः कर्त्रा सम्बन्धायोगात्। अथाप्यर्थद्वारको योगः स्याद् एवमपि धातुनिर्देशे तस्यैव प्रयोगे स्याद् न पर्यायस्य,

१ नेतु इति पा०-२।
२ अभाव इति पा० २।

अङ्गादङ्गात्सम्भवोऽस्तीति । अयंग्रहणे त्वत्रापि भवतीति । प्रकृति-रित्यस्य विवरणं 'कारणमिति' । उपादानकारणमित्यर्थः । अन्ये तु ध्रुवग्रहणानुवृत्तेरेव प्रकृतिपरिग्रहे सिद्धे प्रकृतिग्रहणं कारणमात्रपरिग्रहार्थं वर्णयन्ति, अत एव वृत्तावुक्तं कारणमिति न पुनरुपादानकारणमिति, तेन च पुत्रात्प्रमोदो जायतइत्यादावपि भवतीति । किं पुनः सत् जायते उता-सत्, न तावत्सत् । जन्म वैयर्थ्यात् । यदि जन्मनः प्रागेव सत् किं जन्मना, अथैवमपि जन्म जायस्व जायस्वेत्येव घटो जायते । नाप्यसत्; असतः कर्तृत्वायोगात्, शशविषाणादेरपि जन्मप्रसङ्गाच्च,उक्तमत्र ॥

पूर्वावस्थामविजहत्संस्पृशन् धर्म्ममुत्तरम् ।
संमूर्छित इवार्थात्मा जायमानोभिधीयते ॥

इति, एतच्चान्यत्रइतइत्यत्रोपपादयिष्यामः । किञ्चास्माकमनेन दुस्त-र्केण, अस्ति तावच्छृङ्गाच्छरो जायतइति प्रयोगः स सउपपादनीय इत्येता-वत् । अयमपि प्रपञ्चः । लोके हि यद्यस्माज्जायते तत्ततो निर्गच्छतीत्युच्यते, लोकप्रसिद्ध्यनुसारेण शब्दप्रयोगः, अर्थतत्त्वं तु तथा भवत्वन्यथा वा ॥

"भुवः प्रभवः" ॥ भवनं भूः । सम्पदादित्वात्क्विप् । अत्रापि प्रशब्दो द्रष्टव्यः, नहि केवलस्य भवत्यर्थस्य प्रभवनेन योगः किं तर्हि सो[१]पसर्गस्य भुवः, 'कर्तेति' । भवत्यर्थस्य कर्तेत्यर्थः । भुवो वा धातोः कथं पुनर्धातोर्नाम कर्ता स्याद् धातुर्वै शब्दः शब्दे ऽसम्भवेऽर्थे कार्यं विज्ञा-स्यते, तसु उपक्षये भावे क्तः, वि गतौ तस्मा वितस्तेति, अशोष्येत्यर्थः । 'प्रथमत उपलभ्यतइति' । उपलभतेः कर्म्मव्यापारे प्रभवतिः प्रवर्तेतइत्यर्थः । प्रकाशतइतियावत् । एतेन जन्यर्थाभावात्पूर्वेणासिद्धं दर्शयति । अनेकार्थ-त्वाद्धातूनामस्मिन्नर्थे वृत्तिः, अयमपि प्रपञ्चः । कथं, भवनपूर्व्वके निःसरणे प्रभवतिर्वर्तते ॥

"कर्म्मणायमभिप्रैति स सम्प्रदानम्" ॥ 'कर्म्मणा करणभूतेनेति' । कथं पुनरेकमेव वस्तु युगपत्कर्म्म च करणं च भवति क्रियाभेदाद्दानक्रि-यायां कर्म्माभिप्रायेण क्रियायां करणं, दीयमानया हि गवा शिष्यं उपा-

१ प्रशब्दविशिष्टस्येति पा० २ ।

ध्यायमभिप्रैति संबध्नाति ईप्सति वा, अभिप्रपूर्वो हीण् ईप्सतिना समानार्थः। अभिप्रेतमित्युक्ते ईप्सितमिति गम्यते, उक्तं च

आनिराकरणात्कर्त्तुस्त्यागाङ्गं कर्म्मणेप्सितम्।
प्रेरणानुमितिभ्यां वा लभते सम्प्रदानताम्॥

इति। त्यागो दानं त्यागस्याङ्गं शेषभूतं कर्म्मणा गवादिनेप्सितमाप्तुमिष्टं संप्रदानतां लभते, अनिराकरणाद्वा, एवमस्त्विति अनुमनाद्वा, देवेभ्यः सुमनसो ददाति याचकाय भिक्षां ददाति उपाध्यायाय गां ददाति न तु निराकुर्वन् संप्रदानं भवतीति श्लोकार्थः। अत्र केचिदाहुः। 'कुगतिप्रादय' इत्यत्र वार्तिकम् 'उदात्तवता तिङा गतेः समासवचनमिति' यो जात एव प्रथमो मनस्वान्देवो देवान् क्रतुना पर्यभूषत्। योयः शम्बरमन्वविन्दत्। यस्मा ऋते किं विजयन्ते। यो वै प्रयवयतामप्येनं प्रतिपद्यते इत्याद्युदाहरणानि, अत्र सर्वत्र 'यद्वृत्तान्नित्य' मिति निपातप्रतिषेधात् तिङन्तमुदात्तवत्, ततश्चायमभिप्रैतीत्यत्रापि समासे सति प्रातिपदिकत्वात् विभक्त्युत्पत्तिः स्यादिति, नेति वयं तस्य छन्दोविषयत्वात्, यदि कर्म्मणा यमभिप्रैति स संप्रदानम् अजां नयति ग्राममिति अजैर्वयति क्रिया कर्म्मभिस्संबध्यमानस्य ग्रामस्य संप्रदानतां प्राप्नोति, न प्राप्नोति, किं कारणं कर्मणेति करणे तृतीयेत्युक्तं, न च यथा शिष्यस्योपाध्यायसम्बन्धे गोः करणमेवमजा ग्रामसम्बन्धे, ईप्सतिना समानार्थे तु सुतरामप्राप्तिः। तथाहि। यमभिप्रैतीत्युक्ते यमिति निर्दिष्टस्य शेषित्वं कर्मणेति निर्दिष्टस्य गवादेः करणस्य शेषत्वं च प्रतीयते। यथा कर्त्रभिप्राये क्रियाफले इति कर्तुः शेषित्वं क्रियाफलस्य शेषत्वं, न चात्र शेषशेषिभावः प्रतीयते। किं च नीवह्योर्हरतेश्चापीति द्विकर्म्मकेषु नयतिः परिगण्यते ऽतोपि ग्रामस्य न भविष्यति। अथ किमर्थं महती संज्ञा क्रियतइत्याह। 'अन्वर्थसंज्ञाविज्ञानादिति' सम्यक् प्रदीयते यस्मै तत्संप्रदानमित्यन्वर्थत्वात्सञ्ज्ञाया ददातिकर्म्मणा यमभिप्रैति स संप्रदान[1]मित्यर्थः। एवमपि रजकस्य वस्त्रं

१ संप्रदानमिति विज्ञायते इति २ पुस्तके पाठः।

ददाति घृतः पृष्ठं ददातीत्यत्र कस्मान्न भवति अदानत्वात्, किं पुनर्दानं, दानं किं विदुत्त्रिश्यापुनर्ग्रहणाय स्वद्रव्यत्यागः, यथा वृक्षाय जलं ददाति, देवेभ्यः सुमनसः, याचकाय भिक्षा, मुपाध्यायाय गां, खण्डिकोपाध्यायस्तस्मै चपेटिकां ददाति, न शूद्राय मतिं दद्यादिति, करतलप्रहारश्चपेटिका, रजके तु पुनर्ग्रहणाद्दानाभावः. उपमानात्तु ददातिप्रयोगः, तत्र कारकशेषत्वाद्घटस्य शृणोतीतिवत् षष्ठी । कर्म्मणेति किम् । यावता उपाध्यायाय गां ददातीत्यत्र गोरुपाध्यायस्य वाभिप्रेयमाणत्वं यतो गोर्दानक्रियया करणभूतयाभिप्रेयते गवा तूपाध्यायः, तत्र परत्वाद्गोः कर्म्मसंज्ञेति पारिशेष्याद् उपाध्यायस्यैव संप्रदानसंज्ञा भविष्यति । नैतदस्ति । सत्यप्युभयोरभिप्रेयमाणत्वे ऽन्तरङ्गत्वात्कर्म्मण एव गवादेः स्यात्, कर्मसंज्ञा तु ददाति कर्म्मणोन्यत्र सावकाशा, कारकप्रकरणे च प्रकर्षो नाश्रीयते न त्वन्तरङ्गबहिरङ्गभावोपि, यंसग्रहणे ऽक्रियमाणे ऽभिप्रेतुरेव संप्रदानसञ्ज्ञा स्याच्छ्रुतपदार्थसम्बन्धे सति तेनैव निराकाङ्क्षत्वादध्याहारानुपपत्तेः । सत्यपि वाध्याहारे यः स इत्येवाध्याहारात् तत उपाध्यायाय शिष्येण गौर्दीयतइत्यत्रार्थे शिष्यायोपाध्यायस्य गौर्दीयतइति स्यात्, कर्म्मसंज्ञायां हि कर्तृग्रहणं स्वतन्त्रोपलक्षणार्थमिति तेन शिष्यस्य कर्तृत्वाभावेपि गोः कर्मसञ्ज्ञा युज्यतएव, तथा च साधेर्दीयतइति कर्म्मणि लकारोत्पत्तिः । अभिप्रग्रहणं किम् । यावता कर्म्मणायमेति गच्छति प्राप्नोति संबध्नातीत्यर्थः । अभीप्सितेत्युक्ते स एव, अभिप्रग्रहणे ऽक्रियमाणे कालविवक्षा स्यात् ततश्च यमेव संप्रत्येति तत्रैव स्यात् यमगात् यं चेष्यति तत्र न स्यात्, अभिप्रग्रहणे पुनः क्रियमाणे न दोषो भवति, अभिराभिमुख्ये वर्तते प्रशब्दश्चादिकर्म्मणि ततश्चोपसर्गद्वयोपादानसामर्थ्यात्कालान्तरावच्छिन्ना क्रिया नाश्रीयते । ननु यथा 'तेन दीव्यती' त्यादौ सङ्ख्याकालयोरविवक्षा तथेहापि संख्यावत्कालस्याप्यविवक्षा सिद्धा, सत्यम् । अयमेव न्यायसिद्धोर्थे उपसर्गद्वयोपादानेन प्रदर्श्यते यदा त्वभिप्रेतीत्यस्य ईप्सतीत्यर्थस्तदाभिग्रहणं कर्तव्यमेव । क्रियाग्रहणमपि कर्तव्यमिति वार्तिकम् एतद्व्याचष्टे । 'क्रिययेत्यादि' ॥ ननु क्रिया-

मपि लोके कर्मेत्युपचरन्ति किं कर्म करिष्यसि कां क्रियामिति तत्र कर्मणायमभिप्रैतीत्येव सिद्धमेवमपि कर्त्तव्यं 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति' संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् क्रियापि कृत्रिमं कर्म, तथाहि। य एव मनुष्यः प्रेक्षापूर्वकारी भवति स बुध्या तावत्कंचिदर्थं संपश्यति इदमीदृशमिति तद् दृष्टं प्रार्थयते अपि ममेदं स्यादिति, ततस्तदुपायभूतां क्रियां पश्यति अस्या एतत्फलमिति, ततः प्रार्थ्यते कथमियं निष्पन्नामिति ततस्तत्साधनानि समवधार्य कर्तुमध्यवस्यति, प्रतीयमानक्रियापेक्षोपि कारकभावो भवत्येव यथा प्रविश पिण्डीमित्यत्र भक्षयेति गम्यते, सूत्रकारश्च सूचयति 'क्रियार्थोपपदस्य च कर्मणि स्थानिन' इति, एवमपि क्रियाग्रहणं कर्त्तव्यं, ददातिकर्मत्वात्। 'निगर्हतइति'। नास्तिक्याविन्दतीत्यर्थः। गर्ह गल्ह कुत्सायामनुदात्तेत्। 'युद्धायेति'। युद्धविषयं संनाहपूर्वकं निश्चयं करोतीत्यर्थः। नह्यतिः स्वरितेत्। 'पत्ये शेतइति'। पतिमुपसृत्य शेतइत्यर्थः। यदि तर्हि क्रिययाभिप्रेयमाणस्यापि भवति कटङ्करोतीत्यादावपि प्राप्नोति, वचनाद्धि कर्मसंप्रदानसञ्ज्ञयोः पर्यायः स्यात्, नैतत्सार्वत्रिकं किं तर्हि प्रयोगदर्शनवशेन नियतविषयम्। 'कर्मणः करणसञ्ज्ञेत्यादि'। एतच्छन्दोविषयं 'सर्वे विधयश्छन्दसि विकल्प्यन्त' इति यथाप्राप्तमपि प्रयोगो भवति। भाष्ये तु ददाति कर्मणेति नाश्रितं प्रयोगाश्च बहव', अर्यम्णे चरुं निर्वपेत्, देवेभ्यो ब्रह्मौदनमपत्, देवेभ्यो हव्यं वहन्तः छन्दांसि वै देवेभ्यो हव्यमूर्धा। यदङ्गमाशुषेत्वम्। शं नः करत्यर्वते इत्यादय,स्तन्मते क्रियाग्रहणं न कर्तव्यं, अथं यत्र संप्रदानत्वमिष्यते'तत्र संदर्शनादीनां क्रियायाश्च भेदो विवक्ष्यते ततश्च तैराप्यमाना क्रियापि कृत्रिमं कर्मेति सिद्धं तयाभिप्रेयमाणस्य संप्रदानत्वं यत्र तु नेष्यते तत्र भेदो'न विवक्ष्यते ततश्चोदनाद्येकफलावच्छेदेनैकीकृतया क्रियया ऽऽप्यमानस्य कर्मत्वमिव भविष्यति। कटङ्करोति, ओदनं पचतीति, गत्यर्थेषु तूभयं विवक्ष्यते भेदोऽभेदश्च तत्र भेदविवक्षायां ग्रामं गच्छतीति प्रयोग' इति गत्यर्थकर्मणीत्येतदपि न वक्तव्य भवति॥

१ तत्राभेदो विवक्षितंइति पा॰ २

"रुच्यर्थानां प्रीयमाणः" ॥ 'रुचिना समानार्था इति' । वस्तुकथनमेतत्, विग्रहस्तु रुचिरर्थो येषामिति ते च रुचिना धातुना समानार्था भवन्ति । 'प्रीयमाण इति' । प्रीञ् तर्पणइत्यस्मात् क्रैयादिकात् सकर्मकात्कर्मणि लः । दैवादिकस्तु ङिदकर्मकः, । तर्प्यमाणइत्यर्थः ।' 'अन्यकर्तृक इति' । योभिलाषस्याश्रयः प्रीयमाणस्ततोन्यकर्तृक इत्यर्थः । कथं पुनरन्याश्रयस्याभिलाषस्यान्यः कर्ता भवति यावता यद्व्यापारं धातुः प्राधान्येनाचष्टे स कर्ता, नेदं कर्तृलक्षणं किं तु स्वातन्त्र्यमेव, तच्च क्वचिद्वास्तवं क्वचिद्वैवक्षिकं तदत्र माधुर्यातिशयेन स्वविषयं देवदत्ताश्रयमभिलाषं जनयन्मोदकस्तत्र कर्तेति गीयते । न चैवं लषेरपि प्रसङ्गः, देवदत्तो मोदकमभिलष्यतीति, अभिधानशक्तिवैचित्र्यादाश्रयकर्तृकोभिलाषो लषेर्वाच्यो रुचेस्तु विषयकर्तृकः, दृष्टश्चायमभिधानप्रकारनियमोन्यत्रापि, तद्यथा घटः पश्यतीति दृशेराश्रयकर्तृकं ज्ञानं वाच्यं घटः प्रकाशतइत्यत्र प्रकाशेर्विषयकर्तृकं, विषय एव हि स्पष्टालोकमध्यवर्तित्वादिना सौकर्येण देवदत्ताश्रये ज्ञाने कर्तेति व्यपदिश्यते न तु ज्ञानेन कश्चिदतिशयो विषयो जन्यते, कोयं प्रकाशो नाम यं प्राकट्यमाचक्षते भाट्टास्तत्र कारकशेषत्वेन षष्ठीप्रसङ्गे वचनम् । अन्ये तु प्रीयमाणं देवदत्तं मोदकः प्रीणयतीति कर्मसंज्ञां प्राप्तां मन्यन्ते, अपरे त्वेवमाहुः । देवदत्तो रोचयति मोदकमिति हेतुत्वे प्राप्ते वचनमिति, देवदत्तं हि प्राप्य रोचते मोदको न सर्वान्, नानेच्छा हि प्राणिन इति, एवमुत्तरेष्वपि योगेषु द्रष्टव्यम् । उक्तं च

हेतुत्वे कर्मसञ्ज्ञायां शेषत्वे चापि कारकम् ।
रुच्यर्थादिषु शास्त्रेण संप्रदानाख्यमुच्यते ॥

इति । 'पर्वोति' । हेतुकर्मसञ्ज्ञावदधिकरणसञ्ज्ञा बाध्येतेति भावः । किं च प्रीयमाणग्रहणाद्दैवादिकेभ्यो रोचतइति दीप्तिवाचिनामग्रहणम् ॥

"श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" ॥ 'ज्ञीप्स्यमान इति' । मारणतोषणनिशामनेषु ज्ञा इति घटादिषु पठ्यते तस्मान्निशामनेऽर्थे हेतुमण्णिचि स 'ल्यापूज्ञप्धामीत्' 'अत्र लोपोभ्यासस्य' 'कर्मणि लटः

शानजादेशः, निशामनं चेह ज्ञानमात्रमुच्यते न चक्षुर्विज्ञानमेव, यदाह। 'बोधयितुमभिप्रेत इति'। कथं तर्हि प्रयुज्यते तज्ज्ञापयत्याचार्यः, विज्ञापना भर्तृषु सिद्धिमेतीति, तस्माद्विशानेष्विति पाठः। शो तनूकरणे लुडन्तः, सञ्ज्ञपितः पशुरित्युदाहरणम्। ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाण इति प्रयोगो ज्ञपमिच्चेति चुरादिणिजन्तस्य। अन्ये तु 'मितां ह्रस्व' इत्यत्र 'वा चित्तविराग' इत्यतो वेत्यनुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्चानिष्टे विषये ह्रस्वाभावमाहुः। देवदत्तं प्रति श्लाघमानस्तां श्लाघां तमेव ज्ञापयितुमिच्छतीत्यर्थ इति, श्लाघा स्तुतिः, प्रत्यक्षेण देवदत्तं स्तौतीति यावत्। एवं हि तां देवदत्तः शक्यते ज्ञापयितुम्। अन्ये त्वाहुः। देवदत्तायात्मानं परं च श्लाघ्यं कथयतीत्यर्थ इति। तथा च भट्टिकाव्यम्॥

श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः।

इति। आत्मानं श्लाघ्यं परस्त्रीभ्यः कथयन्नित्यर्थः। 'एवं देवदत्ताय निह्नुत इति'। ह्नुङ् अपनयने देवदत्तं प्रति निह्नुवानस्तां निह्नुतिं तमेव ज्ञपयितुमिच्छतीत्यर्थः। इत्येव एवंशब्दस्यार्थः। निह्नुतिरपलापः, संनिहितमेव देवदत्तं धनिकादेरपलपतीत्यर्थः। अन्ये तु ह्नोतव्यं किञ्चिद्देवदत्तं ज्ञापयतीत्यर्थ इत्याहुः।'देवदत्ताय तिष्ठत इति'। ईदृशो ऽहमिति देवदत्तस्य स्थानेन प्रकाशयतीत्यर्थः।'देवदत्ताय शपत इति'। शपथेन किञ्चित्प्रकाशयतीत्यर्थः।'दे[1]वदत्तः श्लाघत इति'। ज्ञीप्स्यमानवचनात् कर्मसञ्ज्ञैव बाध्यते न कर्तृसञ्ज्ञेत्यर्थः। एवं गार्गिकया श्लाघते सभायामिति करणाधिकरणसञ्ज्ञे न बाध्येते। क्व चित्तु देवदत्तं श्लाघत इति पाठः। तत्रायं भावः। यस्माख्यायते स ज्ञीप्स्यमान इत्याख्यायमानो द्वितीयैव न्याय्येति। ये त्वाख्यायमानं ज्ञीप्स्यमानं वदन्ति तेषां यस्मायाख्यायते ततः षष्ठी भवति देवदत्ताय श्लाघते यज्ञदत्तो विष्णुमित्रस्येति॥

"धारेरुत्तमर्णः"॥ 'उत्तमर्णं यस्येति'। उत्तममुत्कृष्टतमम्, उत्कृष्टार्थवृत्तेरुच्छब्दात्तमपि द्रव्यप्रकर्षेत्यादामभावः, ऋतेः क्तः, ऋणम्, 'ऋणमाधमर्ण्ये' इत्यत्र कालान्तरे देयद्रव्यविनिमयोपलक्षणार्थमाधमर्ण्य-

[1] देवदत्तायश्लाघते पर्योति मुद्रितपुस्तकपाठस्तु हरदत्तदृग्गोचरः।

ग्रहणमित्युत्तमर्णोऽपि नत्वं भवति । अत्र बहुव्रीहौ निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनमिति सुखादेराकृतिगणत्वादस्मादेव वा निपातनादृणशब्दस्य परनिपातः । 'शतन्धारयतीति' । धृङ् अवस्थाने, ध्रियमाणं स्वरूपेणावतिष्ठमानं स्वभावादप्रच्यवमानं शतं प्रयुङ्क्त इति णिच् । 'ग्रामइति' । नन्वत्र परत्वादधिकरणसञ्ज्ञैव भविष्यति, उत्तमर्णोऽपि तर्हि हेतुसञ्ज्ञा स्यात् ॥

"स्पृहेरीप्सितः" ॥ 'चुरादावदन्तः पठ्यतइति' । तेन स्पृहयतीत्यत्रातो लोपस्य स्थानिवद्भावाल्लघूपधगुणो नेति भावः । 'ईप्सित इति' । मतिबुद्धीत्यादिना वर्त्तमाने क्तः । ईप्सितमात्रइयं सञ्ज्ञा प्रकर्षविवक्षायां तु परत्वात् कर्मसञ्ज्ञैव भवति पुष्पाणि स्पृहयतीति । यदा त्वीप्सितमीप्सिततमं वा शेषत्वेन विवक्ष्यते तदा षष्ठी भवति ॥

"क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" ॥ 'गुणेष्विति' । शौर्याचारादिषु । 'दोषाविष्करणमिति' । दम्भादिदोषाध्यास इत्यर्थः । तत्र क्रुधद्रुहावकर्म्मकाविति कारकशेषत्वाचटस्य शृणोतीतिवत् षष्ठ्यां प्राप्तायां वचनमितरयोस्तु सकर्म्मकात्वाद् द्वितीया प्राप्नोति, अत्र च चित्तदोषरूपत्वं यद्यपि क्रोधादीनामविशिष्टं तथाप्यन्येषामेवंजातीयकानां द्वेषादीनामग्रहणार्थमवान्तरभेदविवक्षया पृथगिमे निर्दिष्टाः, न तु चित्तदोषार्थानामिति तेनास्माद् द्वेष्टीत्यत्र न भवति, अनभिनन्दनं ह्यस्यार्थः । तथा चाचेतनेष्वपि प्रयुज्यते औषधं द्वेष्टीति । कथं पुनरेकेन क्रुधिना सर्वे क्रुधादयः शक्या विशेषयितुमत आह । 'क्रोधस्तावदिति' । भार्यामीर्ष्यतीत्यत्र केवलं परैर्दृश्यमानां भार्यां न क्षमते न तु तां प्रति कोपः ॥

"क्रुधद्रुहोरुपसृष्टयोः कर्म" ॥ 'उपसर्गेण सम्बद्धयोरिति' । 'उपसर्गाः क्रियायोगे' उपसृजन्तीत्युपसर्गाः पचाद्यचि न्यङ्क्वादित्वात् कुत्वम् । तेनोपसृष्टयोरित्यस्योपसर्गेण सम्बद्धयोरित्ययमर्थो भवति । स्वनिकायप्रसिद्धिर्वा ॥

"राधीक्ष्योर्यस्य विप्रश्नः" ॥ यस्येति कर्म्मणि षष्ठी, यद्विधं पृच्छ्यतइत्यर्थः । '[1]यत्सम्बन्धीत्यादि' । यत्सम्बन्धिनः शुभाशुभस्य विप्रश्न इति । 'देवदत्ताय राध्यतीति' । 'राधोकर्म्मकाद्वृद्धावेवे'ति विवादो, तत्र वृद्धावित्युपलक्षणमकर्म्मकादिति वचनाद् वृद्धावकर्म्मकत्वाव्यभिचारात्, एवकारस्तु भिन्नक्रमः राधोकर्म्मकादेव श्यन् भवति यथा वृद्धाविति, तेन सत्यप्येवकारे पर्यालोचनस्य वृत्तिरविरुद्धा तत्र धात्वर्थेनोपसंग्रहाज्जीवत्यादिवद् राधोकर्म्मत्वमविरुद्धम् । निमित्तं वेद नैमित्तिकः, उल्कादिषु वसन्तादिषु वा निमित्तशब्दो द्रष्टव्यः । यस्यग्रहणमनर्थकं यं प्रतीत्येव तत्र यं प्रति विप्रश्न इत्यन्वये किं नाम विवक्षितं न सिध्यति ॥

"प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता" द्विवचननिर्देशात् प्रत्येकमुपसर्गसम्बन्ध इत्याह । 'आङ्पूर्वस्य प्रतिपूर्वस्य चेति' । कः पुनरत्र पूर्वो व्यापार इत्यत्राह । 'प्रत्याङ्पूर्वश्चेत्यादि' । 'परेण प्रयुक्तस्येति' । इदं मे देहीत्येवं प्रार्थितस्येत्यर्थः । 'पूर्वस्याः क्रियाया इति' । सूत्रे तु व्यापाररूपविवक्षया पूर्वस्येति निर्देशः, तत्र हेतुसञ्ज्ञायां प्राप्तायां देवदत्तेन प्रतिशृणोतीति प्रयोगनिवृत्तये वचनमित्याहुः । विवक्षान्तरे च देवदत्तो गां प्रतिश्रावयतीति भवत्येव ॥

"अनुप्रतिगृणश्च" ॥ पूर्वेण साहचर्यादत्रापि प्रत्येकमुपसर्गसम्बन्ध इत्याह । 'अनुपूर्वस्य प्रतिपूर्वस्य चेति' । कः पुनरत्र पूर्वो व्यापार इत्यत्राह । 'होता प्रथममित्यादि' । 'अन्य इति' । अध्वर्युः । कथं पुनर्ज्ञायते ऽनुप्रतिपूर्वो गृणातिः शंसितुः प्रोत्साहने वर्त्ततइत्याह । 'अनुगरः प्रतिगर इत्यादि' । अनुगीयते प्रोत्साह्यते येन शब्देन सोऽनुगरः, एवं प्रतिगरः, ओथामो दैवेत्येवमादिकः शब्दः, तेन हि प्रतिगीर्यते ॥

(शेषमग्रे)

---

१ यस्येत्यादि पा: २ ।

॥ श्रीः ॥

साहित्यशास्त्रम्,

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

श्रीगणेशाय नमः ।

(*Continued from page* 522. VOL. XII.)

अनुमानं, तदुक्तं यत् साध्यसाधनयोर्वचः ॥ ११७ ॥

पक्षे सम्बन्धः, सपक्षवृत्तित्वं, विपक्षावृत्तित्वं चेतिरूपत्रयवान् हेतुः साधनं व्यापकत्वाभिमतस्याऽयोगव्यवच्छेदो व्यापकसम्बन्धपर्यवसन्नः साध्यम्· तदुभयवचनमनुमानालङ्कारः· यथा–

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं,(क)
यत्तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः, ।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदाऽसां स्मरः ॥

अत्र पूर्वार्द्धे साधनस्यो,त्तरार्द्धे साध्यस्य वचनम्· प्रयोगश्चैवम्, एताश्चक्रीकृतचापसदापुरोधावदञ्चितशरत्वादिविशिष्टमनोभवाः, सन्तत-निपतन्मर्मभेदिबाणक-लसद्भ्रूव्यापारस्थानत्वादिति·नन्वत्र पूर्वं साधना-त्साध्यस्यापि वचनं सम्भवति, यथा "मधु तिष्ठति वाचि योषिता"-मित्यादि· तत्कथं सामान्यतस्तदुक्तं, ननु विशेषत इति चेत्, साध्यस्य पूर्वभागे तादृशवैचित्र्याभावादिति ॥ ११७ ॥ (इत्यऽनुमानम् ३५)

विशेषणैर्यत्साकूतैरुक्तिः, परिकरस्तु सः ।

(क) भुवाविति क्वचित् ।

साकूतैः, साभिप्रायैः उक्तिरर्थाद् विशेष्यस्य उदाहरणम्—

महौजसो, मानधना, धनार्चिता, धनुर्भृतः, संयति लब्धकीर्त्तयः, ।
नसंहता,स्तस्य,नभेदवृत्तयः,(क)प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥

अत्र महौजस्त्वादिविशेषणानि परानभिभवनीयत्वाद्यभिप्रायकाणि नच वाच्य,मऽपुष्टार्थत्वस्य दोषत्वाभिधानादर्थसिद्धं पुष्टार्थत्वमिति दोषाभावमात्रतया कुतो ऽलङ्कारमध्ये पठितो ऽयमिति, एकनिष्ठत्वेन बहूनां विशेषणानामुक्तोदाहरणवदुपादाने वैचित्र्यमपि ह्यनुभवसिद्धं, न तु दोषाभाववत्त्व(ख)मात्रमिति सम्प्रदायः वयं त्वालोचयामः, तादृशैकविशेषणोपन्यासे ऽप्यलङ्कारत्वमुचितम्, अपुष्टार्थत्वविरहस्य निर्विशेषणतया ऽप्युपपत्तेरनुभवसिद्धत्वा(ग)द्वैचित्र्यस्य चानुभवसिद्धत्वात् यथा "शुद्धे सद्मनि पल्लविन्युपवन"इत्यादौ ॥ ऽ ॥ (इति परिकरः ३६)

व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥ ११८ ॥

उद्भिन्नत्वमस्फुटस्य प्रकाशः तथाचा,ऽस्फुटमपि वस्तुस्वरूपं कथंचिद्व्यक्तमथ केनापि यदपह्नूयते, सा व्याजोक्तिः नचेयमपह्नुतिः, प्रकृताप्रकृतयोः साम्ये तत्स्वीकारात्, अत्र तु तदभावात् नच प्रथमं गूढस्यानन्तरं प्रकाशस्यापह्नव इति सामग्रीभेदादेवापह्नवभेद इति वाच्यम् एवंविधेपि विषये साम्यसम्भवे ऽपह्नुतेरेवोपगमात् ननु यत्रापह्नवार्थं सादृश्योपक्षेपः, सा व्याजोक्तिः, सादृश्यार्थमेव तु यत्रापह्नवोपक्षेपः, सापह्नुतिरिति चेत्, न, तत्रोभयत्राप्यपह्नुतेरेवोपगमात् यदाहुः—

"साम्यायापह्नवो यत्र सा विज्ञेया त्वपह्नुतिः, ।
अपह्नवाय सादृश्यं यस्मिन्नेषाऽप्यपह्नुतिः ॥"

इति उदाहरणम्—

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुल(घ)खिलविधिव्यासङ्गभङ्गाकुलः ।

(क) नभिन्नवृत्तय इति पा० ।
(ख) दोषाभाववत्त्वेति पाठे बहुव्रीह्युत्तरं त्वप्रत्ययः ।
(ग) ०रनुभवसिद्धत्वाभावादित्येकस्तु विपरीतत्वाच्छेदः ।
(घ) विसंस्थुलेति तु क्वाचित्कः ।

स्माः शैत्यं(क) तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टो ऽवतात् वः शिवः ॥

अत्र पुलकवेपथू सात्त्विकौ रूपतया प्रवृत्तौ शैत्यकारणकतया प्रकाशनादपलपितस्वरूपाविति व्याजोक्तिं प्रकाशयतः। वयं तु– पुलकवेपथुभ्यां सात्त्विकाभ्यां प्रकाशिता गूढावगतिस्तयोः शैत्यकारणकताप्रकाशनेनापह्नुतेति व्याजोक्तिरियम् ॥ ११८ ॥ (इति व्याजोक्तिः ३७)

किंचित्पृष्टमपृष्टं च कथितं यत्प्रकल्पते(ख) ।
तादृगन्यव्यपोहाय, परिसङ्ख्या तु सा मता(ग) ॥ ११९ ॥

तादृक्, तुल्यम्। व्यपोहाय, व्यवच्छेदाय। किंचित्कथितं सत् स्वतुल्यस्यान्यस्य व्यवच्छेदाय यत्कल्पते, सा परिसङ्ख्या मतेति लक्षणम्। अन्यस्य कथनमन्यव्यपोहाय कथं कल्पत इति चेत्, प्रमाणान्तरावगतस्यैव(घ) वस्तुनः पुनश्शब्देन प्रतिपादनस्य प्रयोजनान्तराभावात्। 'पृष्टमपृष्टं' चेति विभागः। कथनं हि किञ्चित्प्रश्नपूर्वकं, किञ्चिच्चा ऽतत्पूर्वकमिति द्विविधमित्यर्थः। ते च द्वे अपि विधे व्यवच्छेद्यस्य प्रतीयमानत्ववाच्यत्वाभ्यां प्रत्येकं द्विविधे। तत्र प्रश्नपू(ङ)र्वके कथने व्यवच्छेद्यस्य प्रतीयमानता यथा–

किमासेव्यं पुंसां, सविधमनवद्यं द्युसरितः।
किमेकान्ते ध्येयं, चरणयुगलं कौस्तुभभृतः। ।
किमाराध्यं, पुण्यं। किमभिलषणीयं च, करुणा।
यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति ॥

अत्रान्यनदीसविधादि व्यवच्छेद्यं प्रतीयमानम्। तत्रैव वाच्यं व्यवच्छेद्यं यथा–

(क) हा शैत्यमित्येकस्यस्तु रसप्रतिकूलः सर्वथैव हेयः ।
(ख) प्रकल्प्यते इति पु। ।
(ग) स्मृतेति पा।
(घ) प्रमाणान्तरगतस्यैवेति पु। ।
(ङ) प्रश्नेति पु। ।

किं भूषणं सुदृढमत्र,यशो,न रत्नं
किं कार्यं,मार्यचरितं सुकृतं, न दोषः ।
किं चतुरप्रतिहतं, धिषणा, न नेत्रं
जानाति कस्त्वदितरः [क] सदसद्विवेकम् ॥

स्पष्टम् । अप्रश्नपूर्वके कथने व्यवच्छेद्यं प्रतीयमानं यथा—

कौटिल्यं कचनिचये, करचरणाधरदलेषु रागस्ते, ।
काठिन्यं कुचयुगले, तरलत्वं नयनयोर्वसति ॥

अप्रश्नपूर्वक एव कथने व्यवच्छेद्यं वाच्यं यथा—

भक्तिर्भवे,न विभवे, व्यसनं शास्त्रे, न युवतिकामास्त्रे, ।
चिन्ता यशसि, न वपुषि, प्रायः परिदृश्यते महताम् ॥

श्लेषेणाप्येष सम्भवति, यथा, "चित्रेषु वर्णसङ्कराः, खलसंयोगः शालिष्वि"त्यादि ॥ ११९ ॥ (इति परिसंख्या ३८)

यथोत्तरं चेत्पूर्वस्यपूर्वस्यार्थस्य हेतुता ।
तदा कारणमाला स्यात्—

यथोत्तरमिति वीप्सायां 'यथा'शब्दः तेनोत्तरोत्तरं प्रतीत्यर्थः उदाहरणम्—

जितेन्द्रियत्वं विनयस्य कारणं, गुणप्रकर्षो विनयादवाप्यते, ।
गुणप्रकर्षेण जनो ऽनुरज्यते, जनानुरागप्रभवा हि संपदः ॥

नन्वत्र कार्यकारणभावालङ्कृतिप्रपञ्चप्रसङ्गेन हेत्वलङ्कारो ऽपि लक्षणार्हः उक्तश्चायं भट्टोद्भटेन "हेतुमता सह हेतोरभिधानमभेदेन हेतु"रिति तत्किं न लक्षित इति चेत्, "आयुर्घृत"मित्यादिरूपस्यास्य वैचित्र्याभावेनालङ्कारत्वस्याभावात् नन्वेवम्

अविरलनलिनविकासः सकलालिमदश्च कोकिलानन्दः ॥
रम्यो ऽयमेति संप्रति लोकोत्कण्ठाकरः कालः ॥—

(क) कस्त्वदितर इति पु० ।

इत्यादौ प्राचां काव्यरूपताभिधानं क्रियते, अलङ्काराभावादिति चेत्, कोमलानुप्रासेनैव तत्सम्भवात्· तत् किं हेत्वलङ्कारो नास्त्येव· क एवमाह· कीदृशस्तर्ह्यसाविति चेत्, पूर्वोक्तकाव्यलिङ्गमेवेति ॥ ८– ॥
( इति कारणमाला ३९ )

—क्रियया तु परस्परम् ॥ १२० ॥
वस्तुनोर्जनने ऽन्योन्यम्—

वस्तुनोः परस्परं जन्यजनकभावो ऽसम्भवी, तस्य तं प्रत्येव पौर्वापर्ययोर्द्वयोरसम्भवादित्यत उक्तं 'क्रियये'ति· एकक्रियाजननद्वारेणेत्यर्थः· अविशिष्टं वस्तु तावदज्ञातकल्पम्· तेन वैशिष्ट्यप्रयोजकक्रियाजनके जनकत्वोपचारः· तथाच,मिथस्तादृशैकक्रियाजनकत्वमन्योन्यालङ्कार इति सारम्· उदाहरणम्—

हंसाणं सरेहिं सिरी सारिज्जइ अह सराणं हंसेहिं, ।
अरणोरणं व्विअ एए अप्पाणं णवर गरुअन्ति ॥

अत्र शोभाकरणेन सरोहंसयोर्मिथोजनकता ॥ १२०– ॥
( इत्य ऽन्योन्यम् ४० )

—उत्तरश्रुतिमात्रतः ।
प्रश्नस्योन्नयनं यत्र क्रियते, तत्र वा सति ॥ १२१ ॥
असकृद्यदसम्भाव्यमुत्तरं, स्यात्तदुत्तरम् ।

यत्रोत्तरश्रवणमात्रेणानुपात्तमपि प्रश्नवाक्यं परिकल्प्यते, तदेकमुत्तरम्· प्रश्ने सति लोकातिक्रान्तगोचरतया ऽसम्भाव्यं यदसकृत्प्रतिवचनं, तत्पुनरपरम्· अत्र प्रश्नोत्तरयोः सकृदुपादानं न चमत्कारीतीत्यसकृदित्युक्तम्· असम्भाव्यत्वं तु चमत्कारित्वमिति मान्याः· अप्रसिद्धत्वमिति वयम्· तच्च प्रमाणान्तरागोचरविषयत्वात्· अत एव प्रश्नपरिसंख्यातो भेदः· तत्र हि लोकसिद्धविषयस्योत्तरस्य प्रयोजनान्तराभावेना ऽन्यव्यपोहे तात्पर्यम्· अत्र तु निगूढविषयतया वाच्य एव तात्पर्यविश्रामः· तत्राद्यं यथा— ।

वाणिअअ! हत्थिदन्ता कुत्तो अह्माणं वग्घकित्तीओ, ।
जाव लुलिआलअमुही घरम्मि परिसक्कए सोण्हा ॥

'हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी, मूल्येन ताः प्रयच्छे'ति क्रेतृवचनमनेनोत्तरवाक्येनाऽनुमीयते· सूत्रे च प्रश्नपदं पूर्ववाक्यमात्रपरमिति प्रश्नाभावेऽप्यदोषः· यद्वा, 'हस्तिदन्तव्याघ्रकृत्तयस्तव सन्ती'ति प्रश्नवाक्यमिहोन्नेयम्· [नच वाच्य, मिदं काव्यलिङ्गमेव, उत्तरस्य प्रश्नहेतुत्वा(क)-दिति, उत्तरस्य तदनुत्पादकत्वात्·(ख) तर्हि ज्ञापकतयाऽनुमानमेवेति चेन्न, एकधर्मिगतत्वेन साध्यसाधननिर्देशे हि तत्· नचात्र तथा·](ग) तस्मादलङ्कारान्तरमेवोत्तरम् । द्वितीयं यथा—

का विसमा, देव्वगई· किं दुल्लहं, जं जणो गुणग्गाही· ।
किं सोक्खं, सुकलत्तं· किं दुक्खं, जं खलो लोओ ॥

अत्र देवगत्यादेर्वैषम्यादि लोकाप्रसिद्धमेव(घ) प्रकाश्यते· "किमासेव्यं पुंसां, सविधमनवद्यं द्युसरितः" इत्यादिप्रश्नपरिसङ्ख्यायामन्यव्यवच्छेदे तात्पर्यम्, अत्र तु वाच्य एवेति ततो भेदः ॥—१२१ ऽ ॥ (इत्युत्तरम् ४१)

कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते॥१२२॥
धर्मेण केनचिद्यत्र, तत्सूक्ष्मं परिचक्षते ।

कुतोपीति, आकारादिङ्गिताद्वा· सूक्ष्मस्तीक्ष्णमतिसंवेद्यः· तत्र रूपादेरन्यथात्वमाकारः· ततो यथा—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्याः(ङ) व्यञ्जयन्ती वयस्या पाणौ(च) स्मित्वा खड्गलेखां लिलेख ॥

(क) प्रश्नहेतुत्वाभावादितीति पुस्तकान्तरस्थस्तु नार्हः पाठः ।

(ख) काव्यलिङ्गस्य तदात्मकत्वादित्येकत्र त्रुटिमुद्र्याऽधिकं लिखितमास्ते ।

(ग) गौडाचार्यीयपुस्तके न चेत्यादिस्तथेत्यन्तः सन्दर्भो नास्ति· भाष्यन्तु तेन, "नतत्काव्यलिङ्ग"मित्यादि प्रकाशस्य प्रतिज्ञायाख्यायामवश्यव्याख्येयत्वादन्यथा 'तस्मा'दितिनिगमनानुपपत्तेश्च ।

(घ) ०दिलोकप्रसिद्धमेवेतित्वकस्थः सर्वथा हेयः ।

(ङ) तन्व्या इति कुवलयानन्दस्थः पाठः ।

(च) स्मित्वा पाणाविति प्रायः पठ्यते ।

अत्र कण्ठकुङ्कुमभेदलक्षणेनाऽऽकारेण लक्षितं पुरुषायितं सख्या सखीहस्ते खड्गलेखालेखनेन[क] वैदग्ध्यादभिव्यञ्जितम्, पुंसामेव पाणो कृपाणस्य योग्यत्वात्। चेष्टाविशेष इङ्गितम्· तेन यथा–

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
हस्ते नेत्रा[ख]र्पिताकूतं लीलापद्मं निमीलितम्॥

अत्र नेत्रोत्साहरूपेणेङ्गितेन लक्षितः कामिनः सङ्केतकालाभिलाषः कामिन्या निशासूचकेन पद्मनिमीलनेन[ग] लीलया प्रकाशितः

॥ १२२ ऽ ॥ (इति सूक्ष्मम् ४२)

उत्तरोत्तरमुत्कर्षो भवेत् सारः परावधिः॥

परावधिरिति, परः पर्यन्तभागो गद्यस्य पद्यस्य वाऽवधिरुत्कर्ष-सीमा यस्य· तेन पर्यन्तभागो यत्र सर्वोत्कृष्ट इत्यर्थः, धारा(धि)रोहितया तत्रैवोत्कर्षविश्रान्तेः· उदाहरणम्–

राज्ये सारं वसुधा, वसुन्धरायां[घ] पुरं, पुरे सौधम्,।
सौधे तल्पं, तल्पे वराङ्गनाऽनङ्गसर्वस्वम्॥

॥ १२३ ॥ (इति सारः ४३)

भिन्नदेशतयाऽत्यन्तं कार्यकारणभूतयोः।
युगपद्धर्मयोर्यत्र ख्यातिः, सा स्यादऽसङ्गतिः॥ १२४ ॥

अत्रात्यन्तमिति देशभेदस्यैवोपकारकं, न तु पृथगपि विवक्षितार्थम्· युगपदिति स्वरूपनिर्वचनम्· तेन कार्यकारणभूतयोर्धर्मयोर्यत्र भिन्नदेशतया सम्प्रतिपादनं, साऽसङ्गतिः, हेतुफलयोरग्निधूमाद्योरिव प्रसिद्धायाः समानदेशत्वरूपायाः सङ्गतेः परित्यागात्· तथाप्रतिपादनं च कारणान्तरेभ्यो वैलक्षण्यात्· उदाहरणम्–

(क) लिखनेनेति पाठः।
(ख) हृतनेत्रेति पा·।
(ग) संमीलनेनेति पा·।
(घ) वसुधायामिति क्वचित्।

जस्सेअ वणो तस्सेअ वेअणा भणइ तं जणो अलिअं, ।
दंतक्खअं कवोले वहुए वेअणा सवत्तीणं ॥

स्पष्टम्· नन्वयं विरोधालङ्कार एव· हेतुफलयोर्वैयधिकरण्यस्य विरोधरूपत्वादिति चेत्, वैयधिकरण्यं ह्यसङ्गतिः· नच सैव विरोधः, किन्तु तद्बाधिका, वैयधिकरण्येन तयोर्विरोधप्रतिभासनात्· नन्वेवमपि प्रतीयमानो विरोध एवालङ्कारो ऽस्तु, नतु तद्बाधिका ऽसङ्गतिरपि संवादात्· नच वाच्यं, समानाधिकरणविरोधो विरोधालङ्कारनिर्वाहको, नतु व्यधिकरणोपीति, लक्षणे सामान्यत एव विरोधस्योक्तत्वादिति, मैवम्, सामान्योक्तस्यापि विशेष एव पर्यवसानात्· अपवादविनिर्मुक्त एव देश उत्सर्गः प्रवर्त्तते· विरोधालङ्कारस्य चासङ्गत्यलङ्कारो ऽपवादक इति व्यधिकरणविरोधस्यापवादाक्रान्ततया तद्भिन्नविरोधे विरोधालङ्कार इति· अत एव तथैवोदाहृतम् ॥ १२३ ॥ ( इत्यसङ्गतिः ४४ )

समाधिः सुकरं कार्यं कारणान्तरयोगतः ।

इष्टात् कारणादन्येन कारणेनोपकृतः कर्ता यदक्लेशेन कार्यं करोति, स समाधिः सम्यगाधिरितिव्युत्पत्तेः· उदा०—

मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येद(क)मुदीर्णं घनगर्जितम् ॥

तयोस्तुल्यकर्तृताविरहात् न समुच्चयालङ्कारान्तर्भावः ॥ ऽ ॥
( इति समाधिः ४५ )

समं, योग्यतया योगो यदि सम्भावितः क्वचित् ॥ १२५ ॥

योग्यता, आनुरूप्यम्· सम्भावितः, सर्वसम्मतः· तेन, इद(ख)मनयोः समुचित(ग)मिति योग्यतया सम्बन्धस्य नियतविषयमध्यवसानं चेत्,तदा समं नामाऽलङ्कारः· योग्यता च प्रकर्षनिकर्षाभ्याम्· तत्र, प्रकर्षेण यथा—

(क) दिष्ट्यतदिति पु० ।
(ख) तेनेदमिति संहितमेव सर्वत्रास्ते ।
(ग) समुचितमिति पु० न किञ्चित् ।

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी,
रूपे देवोऽप्ययमनुपमो दत्तपत्रः(क) स्मरस्य, ।
जातं दैवात्सदृशमनयोः सङ्गतं यत्, तदेत-
च्छृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥

निकर्षेण यथा–

चित्रं चित्रं, बत बत महच्चित्र,मेतद्विचित्रं,
जातो दैवादुचितरचनासंविधाता विधाता, ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया,
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥

॥ १२५ ॥ (इति समम्) (शेषमग्रे)

श्रीमते मीमांसाद्वयगुरवे रामानुजाचार्याय नमः ।

## अथ श्रीभाष्ये ।

### प्रथमाऽध्याये द्वितीयः पाद आरभ्यते ।

(*Continued from page* 543. Vol. XII.)

सू॰ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न
निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

भा॰ अल्पायतनत्वमर्भकौकस्त्वं तद्व्यपदेशोऽल्पत्वव्यपदेशः "एष म आत्माऽन्तर्हृदय इत्यणीयसि हृदयायतने स्थितः त्वादणीयान् व्रीहेर्वा यवाद्वेत्यादिना ऽणीयस्त्वस्य स्वरूपेण व्यपदेशाच्च नायं परमात्मा अपि तु जीव एव सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः इत्यादिभिः परमात्मनोऽपरिच्छिन्नत्वावगमाज्जीवस्य चाराग्रमात्रत्वव्यपदे-

(क) दत्तपात्र इति पा॰ ।

ग्रादिति चेन्नैतदेवं परमात्मैव ह्यणीयानित्येवं निचाय्यत्वेन व्यपदिश्यते, एवं निचाय्यत्वेन—एवं द्रष्टव्यत्वेन एवमुपास्यत्वेनेति यावत्, न पुनरणीयस्त्वमेवास्य स्वरूपमिति व्योमवच्चायं व्यपदिश्यते, स्वाभाविकं महत्त्वं चाचैव व्यपदिश्यते ।

टी० कर्मकर्तृव्यपदेशाच्च हेतुतयोपन्यासायोगात् कथमुपासनार्थमपरमार्थभेदव्यपदेशं विजानन् सूत्रकारस्तस्यार्थहेतुतया तं ब्रूयात् न ह्यतात्त्विकभेदः प्रतिज्ञातः, ब्रह्मजिज्ञासेत्युपक्रमविरोधात्, "सम्पत्तेरिति जैमिनिः प्रियशिरस्त्वाद्यप्राप्तिः आध्यानाय प्रयोजनाभावा"दितिवत् जीवेश्वरभेदापारमार्थ्यविषयप्रतिज्ञान्तराभावाच्च गरुडनरेन्द्रयोरिव वस्तुतोभिन्नयोः परावरात्मनोरैक्योपदेशस्येवोपासनार्थत्वाश्रयणौचित्याच्च । गरुडनरेन्द्रयोरिव भेदस्य काल्पनिकत्वाश्रयणमयुक्तम् । अतः श्रुतिसूत्राणां काल्पनिकभेदविषयत्वमनुपपन्नम् । सू० अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च, अल्पायतनत्वमित्यादि अणीयस्त्वात्तेपकार्थव्यपदेशात् साक्षादणीयस्त्वव्यपदेशाच्चेत्यर्थः। परमात्मनस्तु वैधर्म्यमाह "सर्वगतमि"ति, । निचाय्य-शब्दार्थमाह "द्रष्टव्यत्वेने"ति, "चायृदर्शन"इति हि धातुः । फलरूपदर्शनव्यावृत्त्यर्थमाह "उपास्यत्वेने"ति, तद्भावत्यमाह "न पुनरि"ति, तदुपपादकं सूत्रखण्डं व्याचष्टे "व्योमवदि"ति, व्योमवद् द्रष्टव्यमित्युक्तेः प्रतिज्ञामात्ररूपत्वात् प्रमाणाकाङ्क्षा भवति व्यपदिश्यत इत्युक्ते प्रमाणमेव दर्शितं भवति, अतोऽध्याहारस्य तुल्यत्वेऽपि निराकाङ्क्षायोजना वरमित्यभिप्रायेण व्यपदिश्यत इति पदं पूरकतयाऽध्याहृत्य व्याख्यातं व्योमवच्छब्दफलितं स्वाभाविकमिति । ज्यायानिति वतु—शब्दस्य

मू० "ज्यायान् पृथिव्याः ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य" इति, अत उपासनार्थम् एवाल्पत्वव्यपदेशः तथा हि "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त

उपासीते"ति सर्वोत्पत्तिप्रलयकारणत्वेन सर्वस्यात्मतयाऽनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्म उपासीतेत्युपासनं विधाय "अथ खलु क्रतुमयोऽयं पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति यथोपासनं प्राप्यसिद्धिमभिधाय "स क्रतुं कुर्वीतेति गुणविधानार्थमुपासनमनूद्य "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तो वाक्यनादर"इति जगदैश्वर्यविशिष्टस्य स्वरूपगुणांश्चोपादेयान् प्रतिपाद्य "एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वे"त्युपासकस्य हृदयेऽणीयस्त्वेन तदात्मतयोपास्यस्य परमपुरुषस्योपासनार्थमवस्थानमुक्त्वा "एष

ज्यादेशो ज्यायः—शब्दनिष्पत्तिः "ज्यं च वृद्धस्य चे"ति हि सूत्रं ननु "प्रशस्यस्य श्र"इति तन्निष्पत्तिः वृद्धिश्च परिमाणाधिक्यमिह विवक्षितं न तु कालाधिक्यम् अत्राणीयस्त्वप्रतिसंबन्ध्याकारपरत्वाज्ज्यायश्शब्दस्य, अतः उपासनार्थमेवेति अतः पृथिव्यादिभ्योऽपि ज्यायस्त्वश्रवणादित्यर्थः। महत्तयाऽवगतस्य वस्तुन उपाध्युक्तिपूर्वकमुक्तं परिमाणमौपाधिकम् असम्भावितौपाधिकं परिमाणं स्वाभाविकमिति न्याय इह शिक्षितो भवति, अत्र हि हृदयमल्पत्वोपाधिभूतं श्रुतं न तु ज्यायस्त्वोपाधिः श्रुतः पृथिव्यादयस्तदुपाधय इति नाशङ्कनीयं, ततोऽपि ज्यायस्त्वश्रवणात्त हि ततोऽधिकपरिमाणत्वं तदुपाधिकं भवितुमर्हति, अणीयस्त्वस्योपासनार्थत्वमुपासनप्रकरणाविच्छेदेन स्वाभाविकमहत्त्वप्रपञ्चनेनोपपादयति "तथा ह्री"ति, सर्वात्मकं ब्रह्मोपासीतेति सर्वात्मकत्वं नोपास्यगुणतयोक्तं, तस्य वाक्यान्तरस्यत्वात् अतो लक्षणतो धर्मिनिर्देशः, तत्प्रयोजनञ्च शान्तिरूपाधिकारिवि-

शेषत्वासिद्धिः भगवदात्मकत्वे हि शास्त्रतोऽवगते रागद्वेषाद्यभावरूपा शमादिनिष्पत्तिः स्यात्, यथोच्यते "सर्वभूतात्मके तात! जगन्नाथे जगन्मये। परमात्मनि गोविन्दे मित्रामित्रकथा कुत" इति शास्त्रजन्यज्ञानपूर्वकशमादिनिष्पाद्यमेवोपासनं श्रुतन्तस्मादेवंविच्छान्तोदान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येदिति, तस्मान्नोपासननिष्पाद्यश्शमः किन्तु शमनिष्पाद्यमुपासनं ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य रागद्वेषा-

सू० स आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यस्सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर" इति अन्तर्हृदये ऽवस्थितस्योपास्यमानस्य प्राप्याकारन्निर्दिश्य एष म आत्मान्तर्हृदय एतद्ब्रह्मेत्येवम्भूतं परं ब्रह्म परमकारुण्येनास्मदुज्जिजीविषयाऽस्मद्धृदये संनिहितमितीदमनुसन्धानं विधाय "एतमितः प्रेत्याभिसम्भवितास्मी"ति यथोपासनं प्राप्तिनिश्चयानुसन्धानं च विधाय "इति यस्य स्यादद्धा न विचिकित्साऽस्ती"ति एवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहृतम्, अतः उपासनार्थमर्भकौकस्त्वमणीयस्त्वञ्च ॥

सू० संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

जीवस्येव परस्यापि ब्रह्मणः शरीरान्तर्वर्त्तित्वमभ्युपगतञ्चेत् तद्वदेव शरीरसम्बन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेन्न हेतुवैशेष्यात्, न हि शरीरान्तर्वर्त्तित्वमेव सुखदुःखोपभोगे हेतुरपि तु पुण्यपापरूपकर्मपरवशत्वम्तच्चाऽपहतपाप्मनः परमात्मनो न सम्भवति,

दिरहितस्सन् वक्ष्यमाणगुणकं ब्रह्मोपासीतेत्यर्थः सर्वात्मकं ब्रह्मेत्यनेन उपक्रमस्याणीयस्त्वविरोधित्वं दर्शितं प्रकरणाविच्छेदद्योतनाय । अथ ख-ल्वित्याद्युच्यते उपासनमनूद्यते यथा अग्निहोत्रं जुहोतीति विहितहोमः दध्ना जुहोतीत्यत्र दध्नो होमसाधनत्वविधानार्थं जुहोतिपदेनानूद्यते तथेति भावः । जगदैश्वर्यविशिष्टस्येत्यनेन तज्जलानित्यस्यानुवादः स्वरूप-गुणान्—अद्वारकगुणान् न हि ते प्रकृतिपुरुषद्वारकाः । निचाय्यत्वादित्य-स्यार्थमाह "एवंभूतमि"ति, सर्वकर्मत्वादिगुणानां द्विरुक्तिरुपास्यतया प्राप्यतया च हृदि स्थितेर्द्विरुक्तिः हृदि स्थितिज्ञापनार्थं सौलभ्यानुस-न्धानार्थं चेत्यर्थः । एवमत्र पूर्वत्रोत्तरत्र च विभुत्वाभिधानादर्भकौकस्त्व-स्वरूपोपाधिकथनाच्च मध्यगतमल्पत्वमौपाधिकमित्ययमर्थः उक्तो भवति,

सू० सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् । ८ । शरीरान्तर्वर्तित्वं हृदयवर्तित्वं वैशेष्यं—विशेषः भोगप्रसञ्जने सुखग्रहणं सांसारिकसुखस्यादिमध्यावसानेषु दुःखमिश्रत्वेनापुरुषार्थत्वनिक्षेपनिबन्धनम् ।

सू० तथा च श्रुतिः "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽ-भिचाकशीती"ति । सर्वत्रप्रसिद्ध्यधिकरणं समाप्तम् ॥

यदि परमात्मा न भोक्ता एवं तर्हि सर्वत्र भोक्तृतया प्रतीयमानो जीव एव स्यादित्याशङ्क्याह—

अत्त्रधिकरणम् । सू० अत्ता चराचरग्रहणात् ॥ ९ ॥

कठवल्लीष्वाम्नायते "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स" इति—

टी० तथा च श्रुतिः शरीरान्तर्वर्तित्वेऽपि फलसम्बन्धाभावेत्यर्थं अधिकरणार्थनिगमनम् अर्थसिद्धम्, अस्मिन्सूत्रे परस्मादन्यस्य जीवस्यान-भ्युपगमे परस्य कर्मफलभोक्तृत्वप्रसङ्ग इति चोद्यपरिहर्तृत्वाभिमानेन कै-श्चिदेवमुक्तम् आत्मान्तराभावो यद्यनवगतः तदा तन्निबन्धनचोद्यानुदयः अवगतत्वे किं शास्त्रादवगमः ? उतास्मद्वाक्यात् ? प्रथमे शास्त्रसिद्धात्मा-

न्तराभाववत् परस्य भोक्तृत्वाभावोऽपि शास्त्रसिद्धतया स्वीकार्यः, न ह्यर्द्धजरतीयं न्याय्यं, द्वितीये तु भ्रान्तिसिद्धगगनतलमलिनतादिविकल्पो गगनमिवापारमार्थिकभोक्तृत्वं परमार्थमद्वितीयं परमात्मानं न स्पृशतीति तत्र प्रथमं शिरोऽनभ्युपगमनिरस्तं शास्त्रं जीवपरयोरनन्यत्वं प्रतिपादयतीति प्रतिवादिवाक्यादात्मान्तराभावमवगम्य तथा सति परस्य जीववद्भोक्तृत्वप्रसङ्गात् अयोग्यं जीवपरैकत्वं शास्त्रं न प्रतिपादयितुं शक्नोतीति हि प्रतिपादयितुरभिप्रायः अतोनार्द्धजरतीयम्, अपरमार्थत्वान्न स्पृशतीति वचनव्यक्तिर्दूषणस्य दुष्परिहरतामवगमयति जीववदुपभोक्तृत्वं हि चोदयित्राऽऽपादितं जीवस्य च भोक्तृत्वं त्वन्मते मिथ्या अतो गगने मालिन्यवत् परस्मिन्कल्पितम्भोक्तृत्वं न तं स्पृशतीति वदता जीववद्भोक्तृत्वमभ्युपगतं स्यात्, न चांशभेदेन भोगव्यवस्था, वस्तुतो निरंशत्वात् सांशत्वेऽप्युपाधीनां गत्वरतया घटे चलति नभस्यल्पत्ववत्सर्वप्रदेशैरौपाधिकदोषान्वयप्रसङ्गात्, अतः परपक्षे भोक्तृत्वप्रसङ्गपरिहारोऽनुपपन्नः, सर्वत्रेतिसूत्रं स्ववाक्यस्यहेतुपरन्तदनन्तरवाक्यस्यहेतुं द्वितीयं तद्व्यतिरेकपरं तृतीयम्, उपसंहारस्यहेतुपरञ्चतुर्थं तत्र शङ्काविशेषपरिहारपरमनन्तरसूत्रद्वयं सूत्रद्वयोक्तहृदयावस्थानप्रयुक्तचोद्यपरिहारपरन्तदनन्तरसूत्रद्वयमिति सूत्रसङ्गतिः । सर्वत्रप्रसिद्ध्यधिकरणं समाप्तम् ॥

अथ उत्तराधिकरणसङ्गतिमाह—

"यदी"ति, सू· अत्ता चराचरग्रहणात् । ९ । कठेत्यादि यत्र स इति यस्मिन् प्रकारे स्थितः यत्प्रकारविशिष्टः तत्प्रकारक्को वेदेत्यर्थः विषयवाक्ये अत्तेत्यश्रवणादस्याः श्रुतेरेतत्सूत्राविषयत्वशङ्कां परिहर्त्तुमाह—

सू० अत्र ओदनोपसेचनसूचितोऽत्ता किं जीव एव? उत परमात्मे?ति सन्दिह्यते किं युक्तं जीव इति, कुतः भोक्तृत्वस्य कर्मनिमित्तत्वात् जीवस्यैव तत्सम्भवात् ।

टी० "अत्रे"ति, यस्येति षष्ठीनिर्दिष्टस्सम्बन्धः ओदनोपसेचनसामर्थ्यादत्तनीयात्तृभावलक्षणविशेषे पर्यवसितः, तस्मादत्ता सूचित इत्यर्थः

अग्निरत्ताद इति श्रुतिप्रसिद्धमस्यामुपनिषद्यग्नेः प्रस्तुतत्वं चावलम्ब्य अग्निर्जीवः परमात्मेति शिरस्त्रयं कल्पितमपरैः, चित्याग्नेः प्रकृतत्वेन साक्षादग्निप्रस्तावाभावात् अग्निप्रकरणस्य विच्छिन्नत्वादध्यात्मप्रकरणे विद्याङ्गकर्म्मोपयोगित्वमात्रं विनाऽग्निवैभवप्रतिपादनायोगाच्च तत्परत्वशङ्कायां मन्दोत्थानत्वमभिप्रयता भगवता भाष्यकारेण शिरोद्वयं विचारकोटौ निवेशितम् अत्ता जीवः? उत परमात्मे? ति विचारः, तदर्थमिदमत्तृत्वं किं कर्मफलभोक्तृत्वरूपम्? उत जगदुपसंहर्तृत्वरूपं? किमत्र पूर्वप्रस्तुतब्रह्मप्रकरणं विच्छिन्नं नेति, ऋतं पिबन्ताविति किं बुद्धिजीवौ निर्दिश्येते? उत जीवपरौ? पिबन्ताविति निर्देशः किं छत्रिवल्लक्षणया शब्दशक्त्या वा प्रयोज्यप्रयोजकविषयतया नेयः? उत न तं दुर्दर्शं या प्राणेनेति जीवपरयोर्दर्शनं किं लक्षणामापादयति? उत नेति उपक्रमे येयं प्रेत इति प्रश्नः किं जीवविषयः? उत परविषयः? इति यदा जीवविषयः तदानीमुपक्रमविरोधेन तन्दुर्दर्शमित्यादिना ऋतपानादिनिर्देशस्य प्रयोज्यप्रयोजकविषयतापादनायोगात् ऋतं पिबन्ताविति वाक्यस्य बुद्धिजीवपरत्वेन ब्रह्मप्रकरणं विच्छिन्नमितीह प्रतिपन्नमत्तृत्वं कर्मफलभोक्तृत्वरूपमिति अत्ता जीव इति फलितं यदा येयमिति प्रश्नः परविषयः तदानीमुपक्रमानुरोधेन तं दुर्दर्शमित्यादिना ऋतपाननिर्देशस्य प्रयोज्यप्रयोजकविषयतापादनोपपत्तेः ऋतं पिबन्ताविति वाक्यस्य जीवपरमात्मपरत्वे तु ब्रह्मप्रकरणविच्छेदाभावादिह प्रतिपन्नमत्तृत्वं जगदुपसंहर्तृत्वमेवेत्यत्ता परमात्मेति फलितं, भोक्तृत्वस्येति अदनोपसेचनसामर्थ्यावगतस्येति भावः। तत्र किमित्यत आह "जीवस्यैवे"ति, सर्वभूतान्तरात्माऽपहतपाप्मा न कर्मणा वर्धते नो कनीयान् अनश्नन्नन्य इति परस्य भोक्तृत्वं निषिद्धमिति भावः। तत्सम्भवात्कर्मफलभोक्तृत्वसम्भवात्, ब्रह्मक्षत्रशब्दवाच्यानां देहिनां स्त्रीपुंसात्मकत्वात्तत्तद्रूपजीवानां परस्परभोक्तृभोग्यभावस्सम्भवति जीवानां नित्यत्वादेव मृत्युवश्यत्वाभावान्मृत्युर्जीवस्य विधेय इत्यभिप्रायेण मृत्यूपसेचनत्वादोऽपि सम्भवतीति भावः। राद्धान्तमारभते

अत्रोच्यते

सू॰ अत्ता चराचरग्रहणात् ॥ १० ॥

भू॰ अत्ता परमात्मैव, कुतः चराचरग्रहणात्—चराचरस्य कृत्स्नस्य अत्तृत्वं हि तस्यैव सम्भवति न चेदङ्कर्मनिमित्तं भोक्तृत्वम् अपितु जगज्जन्मस्थितिलयहेतुभूतस्य परस्य ब्रह्मणो विष्णोः संहर्तृत्वं "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद"मित्यत्रैव दर्शनात्, तथा च मृत्युर्यस्योपसेचनमिति वचनात् ब्रह्म च क्षत्रं च इति कृत्स्नश्चराचरं जगदिहादनीयौदनत्वेन गृह्यते, उपसेचनं हि नाम स्वयमद्यमानं सद् यस्यादनहेतुरत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात्तदुपसिच्यमानस्य कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य जगतश्चराचरस्यादनमत्र विवक्षितमित्यवगम्यते, ईदृशं चादनमुपसंहार एव ।

टी॰ "अत्रे"ति, चराचरग्रहणादित्येतद्व्याचष्टे "चराचरस्ये"ति, कृत्स्नचराचरविषयं वा कतिपयविषयं वाऽस्तु ततः किं जीववैलक्षण्यस्य ? उक्तं हि कर्मफलभोक्तृत्वरूपमिदमत्तृत्वमित्यत्राह "न चेदमि"ति, कृत्स्नचराचरविषयम् अत्तृत्वं जीवस्यानुपपन्नमिति भावः । अत्तृत्वं विष्णुकर्तृकं चराचरसंहर्तृत्वमिति कथमवगम्यत ? इत्यत्र हेतुद्वयमाह "सोऽध्वन" इति, प्रकरणे परमात्मवाचिपदश्रवणं प्रथमो हेतुः । द्वितीयं हेतुमाह "तथा च मृत्युरि"ति, कथं चराचरस्यादनीयत्वसिद्धिः, मृत्यूपसेचननिर्देशो हि मृत्युवश्यत्वाभावाभिप्रायस्सम्भवतीत्यत्राह "उपसेचनं ही"ति, तदप्युपसेचन-शब्दो गौण एव निर्वाह्यः तथाऽपि सौधारणाकारेणोपचारो न घटते विशेषाकारसम्भवात्, न ह्यग्निर्माणवक इत्युक्तेऽग्निशब्दो दुष्यत्वाभिप्रायो वर्णनीयः मृत्युरुपसेच.

नमबाधक इत्युक्ते विशेषाकारोपस्थापनं न स्यात्, अबाधकत्वस्य लोष्टत्वादिसाधारणत्वात् स्वयमप्रमानत्वे सत्यन्यस्यानहेतुत्वन्तु विशेषकार इति तेनैवोपचारिकप्रयोगो युक्त इत्यर्थः । साधारणाकारं विहायावान्तराकारेण गौणोऽर्थो वर्णनीय इति न्यायोऽत्र व्युत्पादितः, परस्य जगत्संहारे मृत्यपेताऽपि नास्तीत्यस्मदुक्त एवार्थ इति शङ्कां परिहरन् फलितमाह? "अत"इति, कृत्स्नजगत्संहारे मृत्युपेताऽभावेऽपि मृत्योरप्यप्रमानत्वं व्यष्टिसंहारस्य तद्द्वारकत्वञ्चाभिप्रेतम् । एवं मृत्यूपसेचनत्वसामर्थ्यात् ब्रह्मक्षत्र-शब्दौ कृत्स्नचराचरप्रदर्शनार्थाविति भावः । ततोऽपि किमित्यत्राह? 'इदृशमि"ति, सूत्रार्थमुपसंहरति— (शेषमग्रे)

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

## ॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या ।

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

(*Continued from page* 535. Vol. XII.)

ज्योतिष्टोमे समाख्यानुसारेण दक्षिणाविभागाधिकरणम् ।

सू० समं स्यादश्रुतित्वात् ॥ १३ ॥

स्थिते विभागे चिन्त्यते किं समो विभागः स्यात्? उत प्रयासानुरूपोऽथवा समाख्यानुरूप? इति, विशेषाश्रवणात्साम्ये लोकवत्तु प्रयासानुरूप्ये प्राप्ते द्वादशाहे दीक्षा क्रमवाक्यगतार्द्धादिसमाख्यानात् ब्राह्मणाच्छंसिप्रभृतीनां तदनुरूपो विभागः प्रकृतावध्यवसीयते ॥

पूर्णमासिकाख्ये "तस्य धेनुः" इत्यनेन कृत्स्नक्रतुदक्षिणाबाधाधिकरणम् ।

सू० तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात्सामान्यात्तद्विकारः स्याद्यथेष्टिगुणशब्देन ॥ १४ ॥

एवं प्रकृतौ दक्षिणास्थितिर्निरूपिता, तस्यां हि निरूपितायां विकृतिषु बाधाबाधविचारः सुखेन वर्तिष्यत इतीदानीं बाधाबाधौ विचार्येते, अस्ति भूर्नामैकाहः "अयैव भूर्वैश्वदेवस्तस्य धेनुर्दक्षिणे"ति, तत्र संशयः किं धेनुर्गवामेव विकार? उत सर्वस्य गवाश्वादे? रिति, तदर्थमिदं विचार्यते किं गवादीनां प्रत्येकं दक्षिणात्वम्? उत सहितानाम्? मिति, तत्र प्रत्येकं दक्षिणात्वं न्याय्यं, कथं गवादिशब्दा जातिवचनाः दक्षिणा—शब्दो गुणवचनः, स हि भृतित्वेन गुणेन वर्तते, जातिगुणयोश्च जातिर्विशेष्यत्वेन गुणस्तु विशेषणत्वेन नीलमुत्पलं शुक्लो गौरित्यादिषु सार्वजनीनमेतत्, यच्च विशेष्यं तत्प्रधानमेव अतो गवादीनां प्राधान्यं प्राधान्यात्तेषां गुणभूता दक्षिणा प्रत्येकमेतैः सम्बध्यते गवादयो दक्षिणारूपाः कार्या इति, एवं बह्वीषु दक्षिणासु यस्याः कस्याश्चित्स्थाने निविशमानाया धेन्वा दक्षिणात्वमुपपन्नं, तत्र गोलिङ्गेन धेनुत्वेन गवां निवृत्ति[1]र्गम्यते, तस्माद्गवामेव निवर्त्ति[2]का धेनुर्नाश्वादीनामिति प्राप्ते ऽभिधीयते "गवादीनां प्रधानत्वे दृष्टं नास्ति प्रयोजनम्। ऋत्विगानमनार्थो तु दक्षिणा सप्रयोजना" ॥ यदि च द्रव्योपसर्जनत्वेन दक्षिणोच्येत ततो गुणवचनत्वादाश्रयभूतगवादिद्रव्यगतवचनप्राप्तेर्गवादीनां बहुत्वाद्दक्षिणा—शब्दो बहुवचनान्तः स्यात्, गुणवचनशब्दस्य व्याकरणे परोपसर्जनार्थत्वात्स्वप्राधान्ये तु नैष दोषो भवति, तथा हि यदा ऽनतिकरन्तद्दक्षिणेत्युच्यते एका चानतिरिति तदुपाधिको दक्षिणाशब्द एकवचनं लभते, गवादीनि तु तत्र विशेषणानि, न च विशेषणवशेन विशेष्ये सङ्ख्या संभवति यथा ऽग्नीषोमौ देवतेति तेनानेकगवाद्यात्मिकैका दक्षिणा विधीयते, गवादिरूपया च भृत्या दृष्टं प्रयोजनमृत्विगानमनं भृतिरूपसंस्कृतैर्गवादिभिर्नास्ति दृष्टं, तस्मादेका दक्षिणा गवाद्यात्मिका प्रकृतौ विकृतौ धेन्वात्मिका जातेति समस्तगवादिनिवृत्तिः ॥

यस्य सोममपहरेयुः, इत्यादौ एकां गाम् इत्यादिना गोगतसंख्याबाधाधिकरणम् ।

सू० एका पञ्चेति धेनुवत् ॥ १५ ॥

१ निवृत्तिर्गम्यते इति पा० ।
२ विकर्त्तिका इति पा० ।

"यदि सोममपहरेयुरेकां गां दक्षिणां दद्यादभिषुगे सोमे पञ्च गा दद्या"दिति श्रुतम्, तत्र संशयः किमेका पञ्च गावो निवर्त्तिका किं वा सर्वस्य दाक्षिण्यस्येति, तदर्थमिदं विचार्यते किमेकां दद्यादिति सम्बन्धः ? उतैकां गा ? मिति तत्र "द्वितीयाश्रुतिसामर्थ्याद्गवा हि क्रियया ऽन्वयः । एकधा पञ्चभिश्चातः सर्वं देयं निवर्त्तते ॥ उच्यते दद्यातिसङ्गतौ सत्यां गोशब्दे लक्षणा भवेत् । प्राप्तिको वा ऽनुवादः स्याद्द्विधा वाक्यं तु भिद्यते" ॥ वस्तुषु गवादिषु चोदकप्राप्तेषु एकं दद्यादिति विहितं किं तदेकमित्यनिर्द्दिशा-च्चोदकप्राप्तेषु यत्किंचिदिति गम्यते तत्र गामित्यश्वादीनामप्युपलक्षणार्थं स्यात्, गोरपि वा पक्षे प्राप्तेः प्राप्तिकोऽनुवादः स्यात्, न चैतदुभयमपि न्याय्यम् । अथ त्वेकां दद्यात्तां च गामिति विधीयते ततः प्राप्तक्रिया-ऽनुवादेनानेकार्थविधानाद्वाक्यं भिद्येत, यदि तु गां दद्यादिति गोरेव दक्षिणा दाने विधीयते ततस्तस्याश्चोदकप्राप्तैव द्वादशशतसङ्ख्या परिच्छेदिका प्राप्नोति पञ्चैकशब्दावनर्थकौ स्यातां विधाने वाक्यभेदः, अथ धेनुवद्द्विवर्त्तिकसङ्ख्या गोविधानादेकशब्दोऽनुवादः तथाऽप्यानर्थक्यं पञ्चशब्दस्त्वननुवाद एव, तस्माच्छब्दानर्थक्यपरिजिहीर्षया श्रुतिलक्षणामपि क्रियासम्बन्धमविधाय वाक्यलक्षणो गोसङ्ख्यासम्बन्ध एव विधीयते । यद्वा भवतु सङ्ख्ययोर्दानेनैवान्वयः तथाऽपि ते प्रातिपदिकाभिहितसङ्ख्यात्वसाम्याद्द्वादशशतसंख्यास्थाने निविशेते, सा च प्रकृतौ गोपरिच्छेदनैवोपकृतवतीति तत्स्थानपतिते एकपञ्चसंख्ये गवामेव परिच्छिन्द्यातामित्यश्वादीनामनिवृत्तिः ॥

साद्यस्के त्रिवत्सेन सर्वेषां क्रयार्थानां बाधाधिकरणम् ।

सू० त्रिवत्सश्च ॥ १६ ॥

त्रिवत्सः साण्डः सोमक्रयणः इत्यत्र तु साण्डानुवादेन त्रिवत्सविधौ सत्यग्नीषोमीयादिष्वपि प्रसङ्गात्सोमक्रयण एव त्रिवत्सो विधीयत इति सर्वाणि क्रयद्रव्याणि निवर्त्तन्ते इति विशेषः ॥

अश्वमेधे प्राकृताश्वविचनेनाश्वर्युभागबाधाधिकरणम् ।

सू० प्राकाशौ तथेति चेत् ॥ १७ ॥

अश्वमेधे श्रूयते "प्राकाशावध्वर्यवे ददाती"ति, तत्र संशयः किं प्राकाशौ कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकौ? उताध्वर्युभागस्य निवर्तकाविति, यदि प्राकाशौ ददातीति सम्बन्धः ततः कृत्स्नस्य, अथ प्राकाशावध्वर्यव इति ततस्तद्भागस्यैव तत्र "तद्दानन्तर्यसंप्राप्तं बाधित्वाऽध्वर्युसङ्गमम्। द्वितीयाश्रुतिसामर्थ्याद्ददातीति क्रियान्वयः॥ दानञ्च चोदकप्राप्तमुद्दिश्यते न चोद्देश्यमध्वर्युणा शक्यं विशेष्टुं, तस्मादध्वरं युक्त इत्येवमध्वर्यु-शब्दं कथंचिदृत्विङ्मात्रे व्याख्याय दानमात्रे प्राकाशविधिरिति कृत्स्ननिवृत्तिः, उच्यते ऽध्वर्युसम्बन्ध एव प्राकाशयोरिह विधीयते, अथथा पूर्वं दानं द्वाभ्यां विशेषितम् अध्वर्यु-शब्दस्यानर्थक्यभयाच्च दानमात्रे विधानम्, अतः क्रियान्वयनिमित्तो यः पश्चात्ततः सम्प्रदानस्याध्वर्योः सम्प्रदेयभूतयोश्च प्राकाशयोर्मिथः सम्बन्धः स एव विधीयते? अथ वा ऽध्वर्यु-शब्दस्यानर्थक्यपरिजिहीर्षयैव दानान्तरमेवापूर्वमध्वर्युप्राकाशविशिष्टं विधीयते तेन च दृष्टार्थत्वादध्वर्य्वानतिसिद्धेस्तद्भागः प्राकृतो निवर्त्तत इति न कृत्स्ननिवृत्तिः।

उपहव्ये अश्वेन कृत्स्नक्रतुदाक्षिण्यस्य बाधाधिकरणम्।

सू० धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य॥ १८॥

उपहव्यो निरुक्त इत्युपहव्यसंज्ञकमेकाहं विधाय श्रूयते "अश्वश्यावो दक्षिणा स ह्यनिरुक्तः स ब्रह्मणे देय" इति, किमयमश्वो ब्रह्मभागस्य निवर्त्तकः? किं वा कृत्स्नस्य क्रतुदाक्षिण्यस्ये? ति, तत्र ब्रह्मणे देय इति वचनाद् ब्रह्मणे दीयमानस्तस्यैवानतिं कुर्वंस्तद्भागमेव निवर्त्तयति प्राकाशवदध्वर्युभागं पुरुषान्तराणां चानत्यर्थं चोदकप्राप्तं दाक्षिण्यं दातव्यमेवेति प्राप्ते ब्रूमः द्वे ह्येते वाक्ये क्रतुसंयुक्तमेकम् अश्वश्यावो दक्षिणेति पुरुषसंयुक्तमपरं ब्रह्मणे देय इति तत्र पूर्वेण वाक्येनास्मिन् क्रतावश्वो दक्षिणेत्यश्वेनानतिः कार्येति विहिते यदन्यदस्मिन् क्रतौ चोदकेनानत्यर्थतया प्राप्तं तत्सर्वं धेनुन्यायेन निवर्त्तते, स चाश्वः क्रतौ भृतित्वेन विहितः सर्वर्त्विजां दातव्यः प्राप्तः सचुत्तरेण वाक्येन पुरुषान्त-

देभ्यो ऽपनीय ब्रह्मणे दीयते तेन पुरुषान्तराणां विनैव दक्षिणया प्रकारान्तरेणानतिः कर्त्तव्येति कृत्स्ननिवृत्तिः ॥

शतपथे सोमचमसेन कृत्स्नक्रतुदाक्षिण्यबाधाधिकरणम् ।

सू० तथा च सोमचमसः ॥ १९ ॥

शतपथे श्रूयते "औदुम्बरः सोमश्चमसो दक्षिणा सप्रियाय सगोत्राय ब्रह्मणे देय" इति, तत्र पूर्ववत्संशयपूर्वोत्तरपक्षाः, का पुनर्विशेषाशङ्का पूर्वत्र द्वे एव वाक्ये इह त्वेकमिदं वाक्यम् अतः प्रथमं क्रतुसंयोगाभावाद् ब्रह्मभागस्यैव निवृत्तिरिति विशेषा शङ्का, यद्यप्येकं वाक्यं तथाऽपि दक्षिणासंयोगात्सर्वनिवृत्तिरिति केचिदेवं वर्णयन्ति न त्वेतद्युक्तम् अत्रापि द्वे एव वाक्ये सोमचमसो दक्षिणेत्येकं सब्रह्मणे देय इत्यपरं स्पष्टमेवातो नायं विशेषः, सिद्धान्तोऽप्ययुक्तः सति ह्येकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः स्यादिति वक्ष्यामः, तस्मादेवं वक्तव्यम् अत्र हि केषां चिद्दक्षिणाद्रव्याणां प्रतिषेधः श्रूयते असौ सत्यां प्राप्तौ घटते तस्मान्नूनं सोमचमसः सर्वस्यानिवर्त्तक इति विशेषाशङ्का सोमचमसस्तुत्यर्थोऽयमर्थवादो यत्पशून्दद्यात्सोऽनृतं कुर्यादित्यादिना प्रतिषेधः तस्मात्पूर्ववत्सर्वनिवृत्तिः ॥

सोमचमसेन कृत्स्नदक्षिणापुरुषान्तरयोर्बाधाधिकरणम् ।

सू० यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ २० ॥

सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् इदं सूत्रद्वयं पूर्वोत्तरपक्षप्रयोजनकथनार्थत्वेन व्याख्याय पुनरन्यथा व्याख्यातं सोमचमसो ब्रह्मणे दक्षिणा देय इत्येकमिदं वाक्यमिति कृत्वा चिन्त्यते यद्येकं वाक्यं तदाऽपि किं कृत्स्नस्य क्रतुदाक्षिण्यस्य निवृत्तिः? उत ब्रह्मभागस्यैवे? ति दक्षिणासंयोगात् दक्षिणायाश्च चोदकेनैकस्याप्राप्तत्वात्तत्संयुक्तश्चमसः सत्यपि ब्रह्मसंयोगे कृत्स्नां दक्षिणां निवर्तयेत्, इतरथा हि ब्रह्मभागे दक्षिणावयवे दक्षिणा-शब्दो लक्षणया स्यात्, तस्माद्दक्षिणा संयोगात्कृत्स्ननिवृत्तिः, ब्रह्मसंयोगाच्च पुरुषान्तरापनय इत्येवमुत्सूत्रं पूर्वपक्षं कृत्वा यदि तु ब्रह्मण इति सिद्धान्ते वर्णयितव्यम् एकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः ब्रह्मणे दक्षिणात्वेन सोमचमसो देय इति न खल्वेकं वाक्यं सोमचमसः

क्रतोर्दक्षिणा नान्यस्योऽपि तु ब्रह्मणो देया नान्येभ्य इत्यर्थद्वयं शक्नोति विधातुं भिद्येत हि तथा वाक्यन्तस्माद्दक्षिणावयवे ब्रह्मभागे दक्षिणा–शब्दमङ्गीकृत्य तत्रैव सोमचमसोविधातव्यः। किं च दक्षिणा–शब्दोभृतिवचनः स द्व कर्मापेक्षयाऽपि प्रवर्त्तते अस्मिन् कर्मणीयं भृतिरिति, कर्त्रपेक्षयाऽपि प्रवर्त्तते अस्य पुरुषस्य कुर्वाणस्येयं भृतिरिति, तदिह यदि द्वे वाक्ये ततो यत्पुरुषविशेषासंयुक्तं तत्प्रकरणात् क्रतुना सम्बध्यमानं क्रत्वपेक्षयैव दक्षिणात्वं चमसस्य विदधत् क्रतुगतं कृत्स्नं दाक्षिण्यं निवर्त्तयेद्, यदा पुरुषविशेषसंयुक्तमेकं वाक्यं तदा तदपेक्षयैव दक्षिणात्वं चमसस्य विदधत्तद्भागमेव निवर्त्तयति, तद्भागश्च यद्यपि क्रत्वपेक्षया दक्षिणावयवस्तथाऽपि ब्रह्मापेक्षया भृतित्वान्मुख्यैव दक्षिणेति न लक्षणाप्रसङ्गः, तस्मादेकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः सत्रे वा पुरुषापनयादिति कृत्वा चिन्तोद्धाटनम् ॥

वाजपेये रथस्य भागनियामकताधिकरणम्।

सू० यजुर्युक्ते त्वध्वर्योर्दक्षिणाविकारः स्यात् ॥ २१ ॥

वाजपेये "सप्तदश रथाः सप्तदश दास्य" इति दक्षिणां विधाय श्रूयते "यजुर्युक्तं रथमध्वर्यवे ददाती" ति तत्र संशयः किं यजुर्युक्तो रथोऽध्वर्युभागं निवर्त्तयेच्चे? ति तत्र "प्राकाशवद्यजुर्युक्तः स्यात्तद्भागस्य बाधकः। न चायं बाधकस्तस्य प्राप्तस्य नियमो ह्यसौ ॥ प्राकाशौ ह्यपूर्वावध्वर्य्वानतिकरत्वेन विधीयमानौ युक्तं तत्र यत्तद्भागं प्राकृतं बाधेते इति, इह तु सप्तदशरथा द्रव्यान्तराणि च वाजपेयस्य दक्षिणात्वेन विहितानि इति तत्र यजुर्युक्तस्यापि रथस्य प्राप्तमेव दानं सत्यध्वर्यवे ऽन्यस्मै वा कस्मैचिद्दातव्यः सचाध्वर्योर्नियम्यते, ततश्च नायमर्थः यदध्वर्यवे ददाति तद्यजुर्युक्तं रथमिति किं तर्हि यजुर्युक्तं यद्ददाति तदध्वर्यव इति तस्य च द्रव्यान्तरसहितस्यैव दानं प्राप्तमिति तादृशस्यैव नियमाच्च द्रव्यान्तरनिवृत्ति, अध्वर्युभागे तु यथा प्राप्तो यजुर्युक्तो नियम्यते ॥

इति शास्त्रदीपिकायां दशमाध्यायस्य तृतीयः पादः ॥ ३ ॥

## अथ चतुर्थः पाद आरभ्यते ॥

अग्न्यादौ नारिष्टहोमादिभिर्नक्षत्रेष्ट्यादीनां समुच्चयाधिकरणम् ।

सू० प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥

नक्षत्रेष्टौ श्रूयते "सोऽ[1]नुजुहोती"ति तत्र मन्त्रा आम्नाता "अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा" इत्येवमादयः सन्ति च प्रकृतौ नारिष्टहोमाः तत्र संशयः किं वैकृतैरुपहोमैः प्राकृता नारिष्टहोमा बाध्यन्ते ? किं वा समुच्चय ? इति, तदर्थं च किं वैकृताः प्राकृतानां कार्यं वर्त्तन्ते न ? इति तत्रोपहोमाः कार्यमपेक्षमाणाः होमत्वसामान्यात्प्राकृतहोमकार्यउपस्थिते तत्रैव विधीयन्ते, तस्मिंश्च कार्ये प्रत्यक्षश्रुतैरुपहोमैर्नि[2]र्वर्तिते तत्कार्यकराः प्राकृता निवर्त्तन्ते शरैरिव कुशा इति प्राप्ते ब्रूमः—"सति प्राकृतकार्यत्वे भवेद्बाधो न चास्ति तत् । साधारणं न होमत्वं तस्योपस्थापनक्षमम्" ॥ सर्वसाधारणं हि होमत्वं न नारिष्टकार्यमुपस्थापयितुमर्हति, विधीयमानस्य तु होमविशेषस्य दूरापास्तमेव तदुपस्थापकत्वमदृष्टार्थत्वाच्च होमानां प्रमाणान्तरमपि तत्कार्यकरत्वेनास्ति, न च प्रत्यक्षश्रुतैरुपहोमैर्निराकाङ्क्षा विकृतिः प्राकृतमित्यम्भावं नापेक्षत इति वाच्यं सन्निपातिनां द्रव्यदेवतासंस्काराणामलाभे कथंभावस्यापरिपूर्णत्वात्, तस्मादुभयेषामभ्युच्चयः स्यादतिदेशोपदेशाभ्यामवगतत्वात्, यदुक्तमाक्षेऽभ्युच्चयं वक्ष्याम इति तदिदं शरास्तु बर्हिः शब्दलक्षिते कुशकार्ये विहिता युक्तं यत्कुशान्बाधन्ते तदिदमुक्तं "चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत" प्रकृतिसन्निधानादिति । यद्वाऽधिकरणान्तरमिदम् उभयोः कुशशरयोः प्रमाणावगतत्वात्समुच्चयः प्राकृतकार्यत्वाच्च निवृत्तिः, एवं वा वाजपेये श्रूयते "रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोती"ति प्रकृतावुपावर्तध्वमिति मन्त्रेण दर्भाभ्यां स्तोत्रोपाकरणं तदिह किं रथो दर्भयोर्निवर्तकः घोषश्च मन्त्रस्य ? उत रथस्य घोष उभयोर्निवर्तक ? इति संशयः, तदर्थं च किमयं समाहारद्वन्द्वो रथेन घोषेण चे?ति किं वा षष्ठी-

१ सोऽत्र जुहोतीति पा० ।
२ निर्वर्तिते इति पा० ।

तत्पुरुषः ? तत्र षष्ठीसमासपक्षे पूर्वपदस्य लक्षणा स्यात्, अतः समाहारद्वन्द्वः तेन रथो घोषश्च द्वयमुपाकरणसाधनं तत्र रथो द्रव्यत्वसामान्यात् दर्भयोर्निवर्तकः, घोषस्तु मन्त्रस्य शब्दत्वसामान्यात्, एवं च नावश्यं रथस्यैव घोष आदर्तव्य घोषस्याविशेषणात्, येन केन चिदपि घोषेण कार्यसिद्धिरिति प्राप्ते ब्रूमः-इतरेतरयोगद्वन्द्वे पदद्वयमपि श्रुतिवृत्तं स्यात्तथा तु रथघोषाभ्यामिति द्विवचनं स्यात्, समाहाराश्रयणे तु द्वे अपि पदे लक्षणार्थे स्यातां तत्पूर्वपद१मात्रे लक्षणावृत्तिमङ्गीकृत्य षष्ठीसमासाश्रयणं, तस्माद्रथस्य घोष उपाकरणस्य साधनं स च प्राकृतं साधनं मन्त्रदर्भौ निवर्तयति ॥

बृहस्पतिसवादौ बार्हस्पत्यग्रहादिभिः प्राकृतैन्द्रवायवादिग्रहाणां समुच्चयाधिकरणम् ।

सू० सर्वत्र तु ग्रहाम्नानमधिकं स्यात्प्रकृतिवत् ॥ २ ॥

बृहस्पतिसवे श्रूयते 'बार्हस्पत्यं ग्रहं गृह्णाती'ति त्रिवृत्स्यर्कं गृह्णातीति महाव्रते शुक्रं गृह्णातीति अश्वमेधे सौवर्णराजताभ्यां महिमानौ गृह्णातीति एवं जातीयका वैकृता ग्रहाः प्राकृतानामैन्द्रवायवादिग्रहाणां निवर्तका न वेति संशये ग्रहाणां यागनिर्वृत्त्यर्थत्वेनैककार्यत्वात्प्रत्यक्षश्रुतैर्वैकृतैर्ग्रहैर्निर्वृत्ते यागे चोदकप्राप्ता निवर्तन्ते इति प्राप्ते ब्रूमः "येषां मिथो नपेक्षाणां कार्येणैकेन सङ्गतिः । तेषां बाधो विकल्पो वा नैवमस्ति ग्रहेषु न ॥" न हि यागनिर्वृत्त्या ग्रहावाक्यैर्विधीयन्ते बार्हस्पत्येन यजेतेति, येन निरपेक्षा यागं निर्वर्तयेयुः, प्रयोगवचनस्तु चोदकप्राप्तानुपदिष्टांश्च ग्रहान्योगपद्येन गृह्णन् सहितानामेव यागान्वयं गमयति, न च दृष्टार्थानि ग्रहणानि विनापि ग्रहणेन यागनिर्वृत्तिसिद्धेः । यश्च ग्रहेषु देवतोद्देशः सोऽप्यत्यन्तादृष्टार्थ एव, न हि ग्रहणस्य देवतया किञ्चिद्दृष्टमस्ति, न चैकेन ग्रहणेन देवतोद्देशेन वा यददृष्टं तदन्येन क्रियत इति प्रमाणमस्ति, अतो यथा प्रकृतावैन्द्रवाय्वादिग्रहाणां समुच्चयस्तथा प्राकृतवैकृतानामपि भवितुमर्हति आह भवत्येवं ग्रहान्तरविधायकं गृह्णातीत्यादौ बार्ह-

१ 'पूर्वपदमात्रे' इति तु युक्तः पाठः ।

स्यन्ये तु प्राकृतेष्वेव देवतामात्रं विधीयते न यहान्तरमित्यनुदाहरणं यहणविधाने श्रुतिः देवताविधाने वाक्यम् अतो यहणविधिरेव न्याय्य इति चेत् न वाक्यार्थविशेषवर्जनीयत्वात् देवतावद्दस्याप्रमादपाठात् तेनो-भयविधानाद्वरं देवतामात्रविधानं, न चाविपरिवृत्तिः, यहाणां चोदक-प्राप्ता विपरिवृत्ते, यद्यपि च चोदकः कार्यप्रधानत्वान्न स्वरूपेण पदार्थान् स्पृशति तथाऽपि कार्यमुखेन तेषां विपरिवृत्तेः शक्य तदनुवाद देगुणवि-धान, येषां च कार्यप्राप्त्युत्तरकालं पदार्थानामपि पृथगतिदेश इष्टस्तन्मते सुतरामस्ति विपरिवृत्तिः । यस्त्वेवं नेच्छति तस्यैकां गां दक्षिणां दद्यादि-ति दानान्तरमेव विधीयेत तेन समस्तप्राकृतं दाक्षिण्य धेनुन्यायेन निव-र्त्तेत तथा "अध्वर्य्यो होत्रे हरतो"ति हरणान्तरमप्राकृतं विधीयेताध्वर्य्युप्रीव-तिपत्त्यर्थं तत्राप्राकृतकार्यत्वात्प्राकृतं होतुरिडाभक्षणं न निवर्तयेत्, तस्मा-च्चोदकप्राप्तेषु यहेषु बृहस्पतिमात्रविधानादनुदाहरणम्, उच्यते—प्राकृत-यहानुवादेन देवताविधौ तेषां बहुत्व दाग्नेया यहा भवन्तीति बहुवचनं स्यात्, यद्यपि चानुवाद्यगता सङ्ख्या न विवक्षिता तथाऽपि बहुषु बहु-वचनेनैव भवितव्यं, सोऽयमभिधानबाधः, विशिष्टविधौ तु गौरवमात्रं तस्माद्देवताविशिष्टयहान्तरविधिरेव न्याय्य इति सूक्तमुदाहरणम् ॥

वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुच्चयाधिकरणम् ।

सू० प्राजापत्येषु चाम्नानात् ॥ ३ ।

वाजपेये श्रूयते "सप्तदश प्राजापत्यान् पशूनालभत" इति, सन्ति तु चोदकप्राप्ता आग्नेयादयः क्रतुपशवः ते किं प्रजापत्यैर्निवर्त्यन्ते ? किं वा समुच्चीयन्ते ? इति पशुत्वेन प्रकृतिलिङ्गेन संयोगान्निवृत्तिं मन्वानस्योत्तर न पशुत्व सवनीयादिकार्यमलमुपस्थापयितुमनेकसाधारणं, न च प्राकृत-पश्वनुवादेन गुणविधिः सम्भवति देवतान्तरस्य संख्यान्तरस्य च विधौ वा-क्यभेदात्तस्मात्कर्मान्तराणि तानि च दृष्टार्थत्वात् प्राकृतैः समुच्चीयन्ते ॥

साद्यपद्योष्टा आमनहो-मैरनुयाजानां समुच्चयाधिकरणम् ।

सू० आमने लिङ्गदर्शनात् ॥ ४ ॥

सांग्रहण्यां श्रूयते "आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोती"ति सन्ति तु प्रकृतौ त्रयो ऽनुयाजाः ते किम् आमनहोमैर्बाध्यन्ते ? उत समुच्चीयन्ते ? अन्यत्रश्रुतत्वात्त्रित्वस्य च प्रकृतिलिङ्गत्वाच्चिवृत्तिः । अथ वा तिस्रो जुहोति तदामनमसीत्यादिभिर्मन्त्रैरित्यनुयाजेष्वेव मन्त्रविधिं मन्यते त्रित्वविशिष्टहोमानुवादे विशिष्टानुवादाद्वाक्यभेदः तस्मात्कर्मान्तराणि, न च त्रित्वमात्रमनेकसाधारणमनुयाजकार्यं शक्नोत्युपस्थापयितुमिति समुच्चयः ॥

महाव्रते ऋत्विगुपगानस्य पत्न्युपगानेन समुच्चयाधिकरणम् ।

सू० उपगे[1]षु शरवत्स्यात्प्रकृतिलिङ्गसंयोगात् ॥ ५ ॥

गवामयने महाव्रतं नामैकाह तत्र दितु दुन्दुभयो नदन्तीत्यादि विधाय श्रूयते पत्न्य उपगायन्तीति प्राकृतं च सामगानमृत्विजश्चोपगातारः प्राप्ताः तत्र पत्न्य उपगायन्त्य. किं सामगानस्योपगातॄणामृत्विजां निवर्तिकाः? किं वा दुन्दुभ्यादिवादित्रनादानुपगायन्त्यो भिन्नविषयत्वादृत्विजामनिवर्तिकाः ? इदमपरं सन्दिह्यते किं गानस्योपचय उपगानम् ? उतोपचयात्मकं गानमुपगान ? मिति, तत्र गानस्योपचय उपगानं गान-शब्दश्च शारीरेऽङ्गौतौ प्रसिद्धः, तस्माद्गानस्योपचयङ्काण्डवीणादिभिः कुर्वन्त्य ऋत्विजां निवर्तकाः ? भवतु वोपचयात्मकं गानमुपगानं तथाऽपि गायतेः शारीरगीतिवचनत्वाच्छारीरमेवेदमुपगानं तच्छारीरस्योपचयो भवति समानजातीयत्वात्, अतः सामगानस्यैवोपगाने पत्न्यो वर्तन्त इति ऋत्विजां निवृत्तिः–उच्यते नायमेकान्तः यच्छारीर एव गायतिरिति तन्त्रीगानेऽपि प्रयोगात्, ततश्च यद्यपि गानस्येदमुपगानं तथाऽपि दुन्दुभ्यादीनां गानानामनन्तरविहितानां विपरिवर्तमानानामिदमुपगानं पत्नीभिः कर्तव्यम् अपि चोपचयात्मकं गानमुपगानं सामानाधिकरण्यलाभात्, तच्च काण्डवीणादिभिः क्रियमाणं न कथंचिच्छारीरं सम्भवति तेन वादित्रादिकमिदमुपगानं तत्कस्योपचय इति दुन्दुभ्यादीनां गानानां समान-

[1] उपगेष्विति ।

जातीयत्वात्प्रकृतत्वाच्च तेषामेवेदमुपगानं पत्न्यः कुर्वन्तीति न साम-विषयाणामृत्विजां निवृत्तिः ॥

अञ्जनाभ्यञ्जने नवनीताभ्यञ्जनस्य गौग्गुलवाभ्यञ्जनादिभिः समुच्चयाधिकरणम् ।

सू० संस्कारे चान्यसंयोगात् ॥ ६ ॥

अस्त्यञ्जनाभ्यञ्जनं नाम सत्रं तत्र श्रूयते गौग्गुलवेन प्रातः सवनेऽभ्यञ्जत इत्यादि तत्किं प्राकृतस्य नवनीताभ्यञ्जनस्य निवर्तकं नेति संशये दृष्टार्थत्वात् अञ्जनाभ्याञ्जनस्य प्राकृतस्य वैकृतेन निवृत्तिः, सत्यं, दृष्टार्थमभ्यञ्जनं तथाऽपि नैकार्थ्यं नवनीताभ्यञ्जनस्य स्नेहनार्थत्वाद्गौग्गुलवादेस्तु चन्दनानुलेपनवद्दृतीकरणार्थत्वात्, न च प्राकृतेऽभ्यञ्जने गुणविधिः प्रातःसवन इति गौग्गुलवेनेति चानेकगुणश्रवणात् ॥

महाव्रते अहतवाससः तार्प्यादिभिः समुच्चयाधिकरणम् ।

सू० आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारः स्यात् ॥ ७ ॥

महाव्रते श्रूयते "तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी"ति तत्र संशयः किं तार्प्यं दर्भमयस्य चोदकप्राप्तस्याहतस्य वाससो निवर्तकं ने? ति तत्र कौपीनाच्छादने परिदधातीति प्रयुज्यते तस्मिंश्च तार्प्येण कृते तत्कार्यस्याहतस्य निवृत्तिः, नैवं कम्बलं परिधत्त इत्युपरिवासस्यपि दर्शनात् तार्प्यदर्भमययोश्च कौपीनाच्छादनेऽतीवायोग्यत्वात्तत्राप्याचारप्राप्तस्योत्तरीयस्य स्थाने विधीयते । किं चाधिकमिदं तार्प्यादिपरिधानं वासांसि विस्रंसयतीति वासो बहुत्वानुवाददर्शनात्, तस्मादुपरिधारणे तार्प्यादिविधिरित्याहतस्यानिवृत्तिः ॥

महाव्रते रथन्तरादिसाम्नां श्लोकादिसामभिः समुच्चयाधिकरणम् ।

सू० सामस्वर्थान्तरश्रुतेरविकारः प्रती[1]यते ॥ ८ ॥

तत्रैव श्रूयते "श्लोकेन पुरस्तात्सदसः स्तुवीते"त्यादि तत्र श्लोकादिभिः सामभिः प्राकृतानां गायत्रादिसाम्नां निवृत्तिर्न वे? ति सन्देहे स्तुत्य-

१ प्रतीयेतेति पा० ।

र्थत्वान्निवृत्तिः स्यादेवं यदि प्राकृतस्तुत्यनुवादेन सामान्तरं विधीयेत न त्वेवमस्ति, न हि प्राप्तस्तुत्यनुवादेन सामान्तरं पुरस्तात्सद्भस इति च देशान्तरं शक्यं विधातुम्, अतः स्तुतिरेवात्र विधेया, सा चादृष्टार्थो न प्राकृतीनां निवर्तिका भवितुमर्हति एकार्थत्वानवगमात् तदेतद्गतप्रायं विस्पष्टीकरणार्थम् उत्तरविवक्षया या अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्याविकारः स्यात् क्वचिच्छ्रूयते कौत्सं भवति काण्वं भवति वसिष्ठस्य जनित्रे भवतः क्रौञ्चानि भवन्तीति किं कौत्सादीनि सामानि प्राकृतानां निवर्त्तकानि नेति संशयः, तत्र साममात्रं श्रूयते न स्तुत्यर्थता, तस्मात्स्तुत्यर्थानामनिवृत्तिः सत्यं, न प्रत्यक्षः स्तुतिसंयोगः प्रकरणात्तु क्रत्वर्थत्वेनाव गतानि सामानि लिङ्गात्प्राकृतानां साम्नां कार्यमृगक्षराभिव्यक्तिमवलम्बमानानि प्राकृतानां निवर्त्तकानि भवन्ति ॥ (शेषमग्रे)

# वृत्तिवार्तिकम् ।

(*Continued from page* 555. Vol. XII.)

शुद्धा यथा ।

क्वणद्द्विरेफावलिनीनकङ्कणं
प्रसार्य शाखाभुजमञ्जुमञ्जरी ।
कृतोपगूढा कलकण्ठकूजिते-
रनामयं पृच्छति दक्षिणानिलम् ॥ १ ॥

अत्र द्विरेफशब्दस्य द्वौ रेफौ यस्येति व्युत्पत्त्या भ्रमरशब्दवृत्तेस्तद्वाच्ये निरूढलक्षणा । एवं त्वगादिशब्दानां त्वगिन्द्रियादिष्वपि शुद्धा निरूढा लक्षणा द्रष्टव्या ॥

जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा, सारोपा, साध्यवसाया च गौणी शुद्धा चेत्येवं सप्तविधा फललक्षणा । जहल्लक्षणा यथा ।

त्वत्पादपद्मसुषमानुकृतिक्षमाणि
प्राप्तुं प्रवालपदभाञ्जि विभूषणानि ।
वल्काऽऽवृता धृतजटाः सुरदीर्घिकायां
कल्पद्रुमाः कति गिरीश तपश्चरन्ति ॥ १ ॥

अत्र सुरदीर्घिकापदस्य कल्पद्रुमाधिकरणायोग्ये तत्तीरे लक्षणा । मुख्यार्थस्य तदधिकरणत्वेनान्वयाभावाज्जहल्लक्षणा । कल्पद्रुमाणां तपश्चर्योत्प्रेक्षोपकारकतीरस्यातिशयितपावनत्वद्योतनं फलम् । एवं गङ्गायां घोष इति प्रसिद्धोदाहरणमप्यनुसन्धेयम् । तत्र गोस्वामिनः प्रीतये तीरस्याधिकशैत्यद्योतनं फलम्(१) । व्यतिरेकलक्षणापि जहल्लक्षणाप्रभेद एव । यथा ।

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितामास्स्व ततः शरदां शतम् ॥ १ ॥

अत्रापकारिण्यन्वययोग्ये उपकृतादिपदैः स्वार्थविरुद्धं लक्ष्यते । त्वया ऽपकारे क्रियमाणेऽपि मयैवं प्रियमेवोच्यतइति स्वसाधुत्वद्योतनं फलम् । अजहल्लक्षणा कुन्ताः प्रविशन्ति यष्टयश्चेति । अत्र भीतिपलायमानवाक्ये कुन्तादिपदस्य तद्वत्सु पुरुषेषु लक्षणा । कुन्तादेरपि पुरुषसंहितत्येन एकक्रियान्वयादजहल्लक्षणा । तेषां निर्दयप्रहर्तृत्वादिद्योतनं फलम् । ग्रामो दग्धः, पुष्पितं वनमित्यादिप्रयोगे ग्रामादिपदस्य स्वार्थैकदेशपरित्यागेन तद्वृत्तेर्जहदजहल्लक्षणा । दग्धभूयस्त्वादिद्योतनं फलम् । सारोपा यथा ।

नाथ त्वदीयमकलङ्कमिमं मुखेन्दु-
मापीय तृप्यति सदा वसुधा यतस्ते ।

(१) धार्मिकं प्रत्युक्तावधिकपावनत्वादिद्योतनं फलम् ।

तेनैव किं नु वसुधारसगोचरोऽभू-
दिन्दुः कलङ्कमलिनीकृतमध्यभागः ॥ १ ॥

अत्रेन्दुशब्दस्य मुखे लावण्यादिसादृश्याद्गौणसारोपलक्षणा । तादूप्यप्रतीतिः फलम् । एवं गौर्वाहीकः, मुखं कमलमित्यादिष्व-स्त्वेपि गौणसारोपलक्षणा द्रष्टव्या । गौणसाध्यवसायलक्षणा यथा ।

नाभेरभूत्तव चतुर्भुज नान्तरिक्षं
यन्नाभिरेव यदुनेतरियं ततो(१)ऽभूत् ।
अन्योन्यसंश्रयपराहतिदूषितं य-
दाह श्रुति(२)स्तदविमृश्य किमर्थतत्त्वम् ॥ १ ॥

अत्रान्तरिक्षपदस्य भगवदवलग्ने सूक्ष्मत्वसादृश्याद्गौणसाध्यवसायलक्षणा । सर्वथैवाभेदप्रतिपत्तिः फलम् । विषयस्य विषयिभेदानपह्नवेन तद्रूपोपरक्ततावप्रतीतिस्तादूप्यप्रतिपत्तिः, विषयस्य विषयिणैवाभेदप्रतिपत्तिः, सर्वथैवाभेदप्रतीतिरिति सारोपसाध्यवसानलक्षणाफलयोर्भेदः । लक्षणाविषयविषयिवाचकयोर्द्वयोरपि निर्देश आरोपः, विषयिपदमात्रस्य विषयलाक्षणिकतया निर्देशोऽध्यवसाय इत्यारोपाध्यवसाययोर्भेदः । ननु सारोपलक्षणोदाहरणे मुखेन्दुमित्यादाविन्द्वादिपदस्य मुखादौ न मुखत्वादिना लक्षणा । मुखादिपदस्यापि सत्त्वेन पौनरुक्त्यापत्तेः । नापीन्दुगतलावण्यादिगुणेन । अन्यगुणस्यान्यत्र प्रवृत्तिनिमित्तत्वायोगात् । नापि मुखगतलावण्यादिगुणेन, मुख्यार्थसंबन्धरहितगुणमुखेन लक्षणायोगात् । मैवम् । मुखचन्द्रोभयानुगतलावण्यसामान्यादिमुखेन लक्षणोपगमे दोषद्वयस्याप्यस्पर्शात् । इदमे-

(१) ततः=अन्तरिक्षात् ।
(२) नाभ्या आसीदन्तरिक्षमिति श्रुतिः ।

वाभिसंधायोक्तं वृद्धैः(१) "लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता"ति । शुद्धा सारोपलक्षणा यथा ।

आपादमाचिकुरभारमशेषमङ्ग-
मानन्दसारमरविन्ददृशामसीमम् ।
अन्तर्मम स्फुरतु सन्ततमन्तरात्म-
न्नम्भोजलोचन तव श्रितहस्तिशैलम् ॥ १ ॥

अत्र भगवदङ्गस्यानन्दकारित्वेनानन्दपदस्य सारोपलक्षणा । आनन्दकरणे इतरवैलक्षण्यद्योतनं फलम् । आनन्दकारिविषयनिगरणेनानन्दोऽयमिति प्रयोगे साध्यवसायलक्षणा । आनन्दाव्यभिचारद्योतनं फलम् । एवं शुद्धा पञ्चविधा गौणी द्विविधेति सप्तविधा फललक्षणा । ननु गौण्यामपि जहदजहल्लक्षणाभेदौ सम्भवतः । मुखं कमलं गौर्वाहीक इत्यादौ जहल्लक्षणा तावत्स्फुटैव । अजहल्लक्षणापि गोवाहीकोभयविषये गाव एते समानीयन्तामित्यादौ दृश्यते, ऽतः कथं द्विधैव गौणी । उच्यते । मुख्यार्थसादृश्येन लक्षणा हि गौणी, न च तस्यैव तत्सादृश्यमस्ति येन मुख्येपि गौणी वृत्तिः स्यात् । शुद्धा त्वजहल्लक्षणा कुन्ताः प्रविशन्तीत्यादौ विशेषणवाचिनो विशिष्टे सम्भवति । विशिष्टविशेषणयोरेकदेशैकदेशभावरूपसम्बन्धसत्त्वात् । अतो गाव एते समानीयन्तामित्यादावभिधालक्षणाभ्यामेवार्थद्वयप्रतिपादनम् । गङ्गायां घोषोऽश्वश्च पिबतीत्यत्रेवेति न गौण्यां जहदजहल्लक्षणाभेदसम्भवः । तस्मात्सप्तैव लक्षणाभेदा इति । इत्थमयं चिरन्तनैः प्रदर्शितो लक्षणाविभाग इति ॥

अत्रेदं प्रतिभाति । शुद्धासु साध्यवसायलक्षणाप्रभेदकथनमयुक्तम् । परार्थे स्वसमर्पणस्याविशेषेण तस्य जहल्लक्षणातिरेकात् । न हि

(१) भट्टपादादिभिः ।

तदविशेषेपि सारोपलक्षणायां(¹)विषयवाचकसामानाधिकरण्यकृतवैचित्र्यवदिह वैचित्र्यान्तरमस्ति येन तद्वदेव जहल्लक्षणातः पृथगुदाह्रियेत। ननु कार्यकारणभावसम्बन्धेन वृत्तिरित्यत एव ततः पृथक्त्वमस्तु, कार्यकारणभावातिरिक्तेन गङ्गातीरादिगतसंयोगादिसम्बन्धेन वृत्तौ जहल्लक्षणेत्येवमसङ्करोपपत्तेः। मैवम्। राजकीयः पुरुषोयं राजा, इन्द्रार्था स्थूणा इन्द्रः, अतक्षा ऽयं तक्षा, अग्रहस्तोयं हस्त, इति स्वस्वामिभावतादर्थ्यतात्कर्म्यावयवावयविभावेष्वपि कार्यकारणभावइव सारोपसाध्यवसायलक्षणयोराकरग्रन्थेषूदाहरणात्। आश्रयाश्रयिभावसम्बन्धेप्यलङ्कारसुधानिधावुदाहरणाच्च। वैचित्र्यान्तराभावेपि सम्बन्धभेदमात्रेण विधान्तरोपगमे संबन्धभेदान्तरेण त्वयापि विधान्तरोपवर्णनस्यापि प्रत्याख्यातुमशक्यतया सप्तविधत्वनियमासंगतत्वप्रसङ्गाच्च। ननु साध्यवसायलक्षणोदाहरणेष्वभेदाभिव्यक्तिरस्ति। अयमानन्दो ऽयं राजेत्यादावानन्दराजाद्यभेदाभिव्यक्तिपूर्वकमेवानन्दाव्यभिचारित्वानुल्लङ्घ्यानुशासनत्वादिफलप्रतीतेः। अतो व्यङ्ग्यवैचित्र्येण भेदोस्त्विति चेद्, न। जहल्लक्षणोदाहरणे(²)तीरे प्रवाहभेदाभिव्यक्तिपूर्वकमेव तत्र तद्गतातिशयितशैत्यपावनत्वादिफलप्रतीतेः। तीरे प्रवाहतादात्म्यप्रतीत्यभावे तत्र प्रवाहगतातिशयितशैत्यादेः प्रत्ययासम्भवात्। न हि तीरे गङ्गासम्बन्धप्रयुक्तं तद्गतस्वाभाविकशैत्यादिद्योतनमेव लक्षणाफलं येन गङ्गादिसम्बन्धितीरत्वेन लक्षणयैव तल्लभ्यते इति नाभेदाभिव्यक्तिरङ्गीक्रियते। सत्यपि मुख्ये गङ्गातीरादिपदेष्वापत्तेश्च शब्दप्रयोगे मुख्यप्रयोगादपि लभ्यस्य लक्षणाफलत्वायोगात्। काव्यसरणौ लक्षणायाः काव्यशोभातिशयाधायकतया ऽधिकं स्तोतुका

(१). आपादभारमिति पद्ये आनन्दसारमित्यत्र।
(२) गङ्गायां घोष इत्यादौ।

मस्तस्य प्रवाहतादात्म्यप्रतिपत्त्या "तद्गतातिशयितपावनत्वद्योतनाय तस्मिन्गङ्गापदं प्रयुङ्क्त इति दर्शनाच्च । अतो जहल्लक्षणायामप्यभेदाभिव्यक्तिरविशिष्टा । उक्तं च काव्यप्रकाशिकायां "तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्यय" इति । रत्नाकरेणाप्युक्तं "स्रोतस्तीरयोरेकशब्दबोध्यत्वेन तादात्म्यप्रतीतौ स्रोतोधर्माः शैत्यपावनत्वादयस्तीरे प्रतीयन्त इति प्रयोजनसिद्धि"रिति । अत एव साध्यवसायलक्षणायाः फलकृतो ऽन्यकृतो वा न जहल्लक्षणातो भेदः सम्भवतीति न तदुदाहरणपार्थक्यं युक्तम् । तथा सारोपलक्षणोदाहरणे उपमानोपमेयानुगतसाधारणधर्ममुखेन लक्षणेत्ययुक्तम् । तथा हि यत्र साधारणधर्मस्यापि पदान्तरेणोपादानं तत्र तेन पौनरुक्त्यापत्तेः । यथा ।

तारामिरामपरिणाहि लसत्सिताभ्रं(१)
तापिच्छमेचकमुरःशरदन्तरिक्षम् ।
प्राप्येव देव तव कौस्तुभपूर्णचन्द्रः
पूर्णां बिभर्ति पुरुषोत्तम कान्तिरेखाम् ॥ १ ॥

अत्र हि वक्षोन्तरिक्षयोः साधारणः परिणाहित्वं मेचकत्वादिधर्मोपि पृथगुपात्त एव । उपात्तधर्मातिरिक्तधर्ममुखेन लक्षणास्त्विति चेन्न । उपात्तमेचकत्वादिव्यतिरिक्तसामान्यधर्मास्फुरणेपि सहृदयानां परिपूर्णवाक्यार्थप्रतीतिदर्शनात् । द्रव्यादिसामान्यधर्मस्य कवितानङ्गत्वादन्ततः कवयितुरप्येतादृशस्थलेषूपात्तधर्मातिरिक्तधर्मगर्भीकारासंभवाच्च । नन्विह मास्तु सारोपलक्षणा, उर एव शरदन्त-

(१) तारमुन्नतं सुविस्तृतं, यद्वा तारैः श्रेष्ठमौक्तिकैरभिरामं परिणाहि, विशालं चोरः । ताराभिर्नक्षत्रैरभिरामं परिणाहि, चान्तरिक्षम् । लसन् सिताभ्रो घनसारो यस्मिन्नेवंविधमुरः । लसन्ति सिताभ्राणि स्वच्छजलदा यस्मिंस्तथाभूतमन्तरिक्षम् ।

रिचमिति मयूरव्यंसकादिसमासोऽऽगमे हि सा भवति । किन्तु उरःशरदन्तरिचमिवेत्युपमितसमासे।ऽस्तु तत्र च विग्रहवाक्यस्थो लुप्तेवकारः सादृश्यं प्रतिपादयतीति नोपमानवाचकस्योपमेये लक्षणेत्यालङ्कारिकाणामभ्युपगमः । तत्र तु लुप्तोपमाङ्गीकारादिति न कश्चिद्दोष इति चेन्न । मेचकत्वादिसामान्यस्य शब्दोपात्ततयोपमितसमासासम्भवात् । उपमितं व्याघ्रादिभिः सामान्याप्रयोगइति तत्समासानुशासनात् । आलङ्कारिकैरपि सामान्यप्रयोगे सत्युपमाबाधकसत्वात् सारोपलक्षणामूलको रूपकालङ्कारः न तूपमालङ्कार इत्यभ्युपगमात् । उपमितसमासे धर्मवाचकलुप्तोपमालङ्कारस्यैव तैरुदाहरणाच्च । सामान्यधर्मप्रयोगेप्युपमितसमासाङ्गीकारे हि केवलवाचकलुप्तापि तत्रोदाह्रियेत । नन्वेवं साधारणधर्मप्रयोगे सादृश्यमुखे तल्लक्षणास्तु तद्वाचकस्येवादेरप्रयोगेण पौनरुक्त्यस्याप्रसङ्गात् । तत्प्रयोगे उपमानवाचकस्य सादृश्यप्रतियोगिपरतया उपमेयलक्षणाया अबाध्यत्वादिति चेन्न । तथा सति सादृश्यस्य शब्दोपात्तत्वेनोपमालङ्कारस्य प्राप्त्या सारोपलक्षणायां रूपकादिरलङ्कारो नोपमेत्यलङ्कारविभागासामञ्जस्यप्रसङ्गात् । न हि सादृश्यस्य वाच्यत्वे एवोपमा, कमलसुहृन्मुखमित्यादौ सुहृदादिपदेन तल्लक्षणायामपि उपमासंप्रतिपत्तेः । अपि च पादाम्बुजमित्यादौ व्याघ्रादिसमासेनोपमाया मयूरव्यंसकादिसमासेन रूपकस्य च सम्भवेन सर्वेषानवधारणे प्राप्ते यत्र "पादाम्बुजं भवतु वो विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः" इत्यादौ पादे सम्भवन्मञ्जीरयोगादिकं निबध्यते तत्र तद्वानुगुण्यात्पूर्वपदार्थप्रधानेन व्याघ्रादिसमासेनोपमालङ्कारः । यत्र तु "यस्यानिशं दिविषदश्चरणारविन्दमुत्तंसयन्त्यमितभक्तिपराश्च नम्रा" इत्यादावरविन्दकार्यमुत्तंसनादिकं निबध्यते तत्र तदानुगुण्या-

दुत्तरपदार्थप्रधानेन मयूरव्यंसकादिसमासेन रूपकालङ्कार इति व्यवस्था सर्वैरपि प्रतिपाद्यते। न चेयं व्यवस्था चरणारविन्दमित्यादिरूपकस्थलेष्वरविन्दादिपदानामरविन्दत्वाद्याकारमपहायारुणिमादिसाधारणधर्ममुखेन तन्निबन्धनसादृश्यमुखेन वा चरणादिलक्षकत्वं युज्यते। तथा सत्युत्तरपदार्थस्यारुण्यसादृश्यादिगुणस्य प्राधान्यायोगेन मयूरव्यंसकादिसमासाश्रयणेपि व्याघ्रादिसमासाश्रयण इव पूर्वपदार्थचरणस्यैव प्राधान्यापत्त्या उत्तंसनानुगुण्यस्य स्वविरहतोल्यापत्तेः। गुणजात्योर्जातिप्राधान्यस्य नीलोत्पलादौ व्यवस्थितेः। उत्तरपदार्थस्य प्राधान्येपि अरविन्दत्वजातेरिवारुण्यस्य सादृश्यादिगुणस्योत्तंसनानुगुणत्वाभावाच्च। तस्मात्सारोपलक्षणोदाहरणेषु साधारणमुखेन न लक्षणेत्युक्तम्। तथा ताद्रूप्यप्रतीतिश्च फलमित्यप्ययुक्तं स्यात्। सामान्यधर्ममुखेन सादृश्यमुखेन वा लक्षणोपगमे ताद्रूप्यस्याभिव्यक्त्ययोगात्। तदा हि कान्तिमन्मुखं चन्द्रसदृशं मुखमित्यर्थः संपद्येत, न चैतावता ताद्रूप्याभिव्यक्तिः, कान्तिमन्मुखमित्यादिप्रयोगेपि तत्प्रसङ्गात्। न च गङ्गायां घोष इत्यादौ स्रोतस्तीरयोरभेदाध्यवसायवन्मुखचन्द्रयोरेकशब्दबोध्यतया केवलशब्दशक्तिमूलव्यञ्जनव्यापारेण ताद्रूप्याध्यवसाय इति नातिप्रसङ्ग इति वाच्यम्। तदा मुखकान्तिमतोरेव ताद्रूप्याभिव्यक्तिसम्भवेन "वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते" इत्यादावानुभविकस्य मुखत्वोपरक्तचन्द्रताद्रूप्यप्रत्ययस्याक्लिष्टसमर्थनासम्भवात्। तथा मुखं कमलमित्यादिष्वाक्षेपि सर्वत्र विषयविषयिपदयोः सामानाधिकरण्ये सारोपलक्षणेत्यप्ययुक्तम्।

विद्वन्मानसहंस वैरिकमलासङ्कोचदीप्रद्युते
दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर।

सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
साम्राज्यं वरवीर वत्सरशतं वैरिञ्च्युमुच्चैः क्रियाः ॥ १ ॥

इत्यत्र हंसादिशब्दानां वर्ण्यराजनि प्रत्यासत्तिरूपमुख्यसादृश्याप्रतीत्या लक्षणासम्भवात् । तथा हि विदुषां मानसं हृदयमेव मानसं सर इत्यादिश्लेषनिमित्तकाभेदाध्यवसायलभ्यमानसचारित्वादिसाधारणधर्मनिबन्धनमेव तत्र सादृश्यं वाच्यं, तदन्यस्य मुखकमलादिवत्प्रसिद्धसादृश्यस्याभावात् । न च तेन सादृश्येन लक्षणा सम्भवति, तल्लाभकस्य श्लेषस्य रूपकोत्थाप्यतया रूपकापेक्षलक्षणादशायां तस्य बुद्धिपथानारोहात् गमकाभावेन श्लेषनिवृत्तेः । अभिधायाः प्रकरणनियम्यत्वपक्षे प्राचीनाभिमते रूपकात् प्राक् प्रकरणसम्बन्धरहितसरोलक्षणार्थाभिधानस्यैवासम्भवात् रूपकपूर्वसंसिद्धं श्लेषं तदा ज्ञापयेद्यदि तदा रूपकमेव स्यात् । अन्यथा श्लेषरूपकयोर्विभागं व्यवस्थापितवता चक्रवर्तिनाप्यस्मिन्नुदाहरणे रूपकोपवर्णनेनात्र श्लेषपाश्चात्यस्य स्फुटीकरणाच्चेति । अत्रेदं तत्त्वम् । विद्वन्मानसहंसेत्यादौ हंसादिपदानां वर्ण्यराजनि लक्षणा नाङ्गीकृतेत्या, सामानाधिकरण्येन वर्ण्यस्य राज्ञः प्रसिद्धहंसजातीयादिभिरभेदस्य वाक्यार्थविधयैव प्रतीतेः । न चैवमभेदप्रत्ययसम्भवेपि ताद्रूप्यप्रत्ययो लक्षणां विना न सिध्येत् स एव च विषयविषयिपदसामानाधिकरण्यस्थले सर्वत्र विवक्षित इति वाच्यम् । तत्र मानाभावात् । "ऊर्ध्वं विरञ्चिभवनात्तव नाभिपद्म" इत्यादौ विषयविषयिपदैसमानाधिकरण्येपि एवकारसाक्षात्पदाभ्याम् उरःस्थले प्रसिद्धपरमपदाभेदविवक्षाया एव स्फुटीकरणाच्च । न चैवं विद्वन्मानसहंसेत्यादावतिशयोक्तिरेव स्यात् विषयस्य विषयिताद्रूप्ये रूपकं विषय्यभेदे ऽतिशयोक्तिरिति व्यवस्थितेः । तथा च विषयविषयि-

सामानाधिकरण्यस्थले रूपकं विषयिपदमात्रनिर्देशस्थलेऽतिशयोक्तिरिति व्यवस्थाविभाग इति वाच्यम्।

हृत्पङ्कजानि भजतां प्रतिबोधयन्ती
ससारसागरमपि प्रतिशोषयन्ती।
ज्योत्स्ना त्वदङ्घ्रिनखचन्द्रसमुद्भवेय-
मन्यादृशीमभयद प्रकृतिं बिभर्ति॥ १॥

इत्यत्र नखकान्तिरूपविषयनिगरणेन ज्योत्स्नेति विषयिपदमात्रप्रतीतिदर्शनेन व्यवस्थाद्वयस्याप्यशक्याङ्गीकारत्वात्। तथा च यदि तादूप्ये रूपकमभेदेऽतिशयोक्तिरिति व्यवस्थां परित्यज्य विषयविषयिपदसामानाधिकरण्ये रूपकं विषयिपदमात्रनिर्देशेऽतिशयोक्तिरिति व्यवस्थानुपपत्तिः। यदि च तथा सति रूपकातिशयोक्त्योः शब्दवैचित्र्यनिबन्धनमात्रभेदप्राप्त्या परस्परमर्थालङ्काररूपत्वं न स्यादित्यादि व्यवस्थाद्रियेत तदा "ज्योत्स्ना त्वदङ्घ्रिनखे" त्यादौ विषयिपदमात्रनिर्देशेऽपि प्राचीनमर्यादायामतिशयोक्तिमपहाय रूपकमेवाङ्गीकर्तव्यम्। "विद्वन्मानसहंसे" त्यादौ विषयविषयिपदसामानाधिकरण्येऽप्यतिशयोक्तिरङ्गीक्रियतां किमनुपपन्नम्। तस्मादेतादृशस्थले समभिव्याहारभेदप्रतीत्यभ्युपगमे न कश्चिद्दोष इति व्यर्थोलक्षणोपपादनप्रयासः। न चैवं सर्वत्र विषयविषयिपदसामानाधिकरण्यस्थले समभिव्याहारभेदप्रतीतेर्वक्तुं शक्यत्वात्क्वचिदपि सारोपलक्षणा न स्यादिति वाच्यम्। इष्टापत्तेः॥ इति श्रीमदप्पयदीक्षितविरचिते वृत्तिवार्तिके लक्षणावृत्तिनिर्णयो नाम द्वितीयः परिच्छेदः(१)॥

(१) यद्यपि ग्रन्थकर्तृप्रतिज्ञानुसाराद्व्यञ्जनावृत्तिनिर्णयो नाम तार्तीयीकः परिच्छेदोऽस्तीत्यवसीयते तथाप्यस्माभिः कृतान्वेषणैरप्येतावत एव ग्रन्थस्योपलम्भादत्रैव साम्प्रतं मुद्रणं कारितमग्रे चेदुपलप्स्यतेऽवशिष्टभागस्तर्हि सोऽपि प्रकाशयिष्यते।

# खण्डनखण्डखाद्यम् ॥

## चतुर्थः परिच्छेदः ।

(*Continued from page 560. Vol. XII.*)

ख० पृथिव्यामेव तद्व्यवहारापत्तेः पृथिवीं पदार्थान्तरं चापेक्ष्य मध्यत्वस्य विवक्षितस्याधः शब्दार्थप्रदर्शनमन्तरेण निर्वक्तुमशक्यत्वात् । पृथिव्यपेक्षयोर्ध्वमपरापेक्षयाचाधः तच्च तयोर्मध्यमित्येव निरूच्यते मध्यत्वम् अन्यथा तिर्यगतिप्रसङ्गात् । तद्यथा पृथिव्यपेक्षया पूर्वमपरापेक्षया च पश्चिमं तयोर्मध्यमुच्यते प्रतीपदिगवस्थितयोः परस्परापेक्षया प्रतीपदिक्सङ्करे मध्यमव्यवहारात् * अथान्यः कश्चिदाधारार्थोऽस्तु प्रतीतिसिद्धत्वात् प्रतीतेश्चैवमनन्योपपाद्यत्वात ? *—मैवम् ॥

टी० ॥ [a]"पृथिव्यामि' ति । पृथिव्याः पृथिवीमार्तण्डापेक्षयान्तरालत्वाभावान्मार्तण्डापेक्षया पृथिव्यधो न स्यादित्यर्थः । पृथिव्यपेक्षया नागलोको नाधः स्यात्पृथिव्यतिरिक्तत्वेनावधेर्विशेषितत्वादिति वार्थः [b]"पृथिवीमि"ति । पृथिव्याऊर्ध्वं मार्तण्डस्य वाधो मध्यमिति मध्यत्वज्ञान मधो ज्ञानाधीनमधोज्ञानं च मध्यत्वज्ञानाधीनमित्यन्योन्याश्रय इत्यर्थः ॥ एतदेवाह—। [c]"पृथिवी"ति । अन्यथा तिर्यग्देशोपि मध्यः स्यात् यत्राधस्त्वनिरूपकं प्रकृते न स्यादित्याह—। [d]"अन्यथे"ति । तदेव व्युत्पादयति । [e]"तद्यथे"ति ॥ [f]"परस्परे"ति । विरुद्धयोर्दिशोरन्तराले मध्यव्यवहारादित्यर्थः [g]"प्रतीपदिगवस्थितयोरि"ति । स्फुटार्थं निरूपकमात्राभिधानं अधःपदार्थानिरुक्त्या व्यवहिताधःस्थितत्वमाधारत्वं मास्तु

(१) सादिगधः पदार्थ इति शब्दार्थं प्रसिद्धत्वादुपेत्य तात्पर्यार्थं यवोपवर्णितः।

यद्‌तिरिक्तमेव किञ्चित्स्यादित्याह—। [h] "आद्ये"ति । इहेतिप्रतीत्यन्यथानुपपत्त्या कल्पनीयमिति भावः ॥

मू० [a] तद्ध्यनित्यं वा स्यान्नित्यं वा नाद्यः [b] तदभावे आधारप्रतीत्यभावप्रसङ्गात् [c] गोत्वादिनित्यत्वन्यायसाम्येप्यस्यानित्यत्व तेषामप्यनित्यत्वापाताच्च नापि द्वितीयः ताद्दृशमप्यनुगतमननुगतं वा स्यात् द्वितीये त्वनुगताधारप्रतीत्यसम्भवः [d] सङ्केतग्रहाशक्यत्वं च । प्रथमे [e] सामान्यवदाश्रयापरित्यागि वा स्यात्तत्त्यागि वा आद्ये यदेव तदाधारतया प्रतीतं तत्तदाधेयं न स्यात द्वितीये च यदि नियामकमन्तरेण तत्स्वाश्रयं भजति च त्यजति च तद् नियमानुपपत्त्या [f] सर्वदा तद्भजनत्यजनोचितप्रत्ययव्यवहारप्रसङ्गः ॥

टी० ॥ [a] "तद्धी"ति । यत्कल्पनीयमाधारत्वमित्यर्थः ॥ [b] "तदभावे"इति । तदभावकाले इत्यर्थः ॥ [c] "गोत्वादौ"ति । एकगोव्यक्तिनाशेपि व्यक्त्यन्तरनिष्ठतया प्रतीयमानत्वं प्राक्परत्वाच्च प्रतीयमानत्वं गोत्वस्य नित्यत्वमन्तरेणानुपपद्यमानमित्ययं न्यायोस्त्याधारत्वेपि तुल्यः स चेदाधारत्वं नित्यं न साधयेद्गोत्वमपि नित्यं न साधयेदित्यर्थः यद्वा आधारत्वस्यानित्यत्वे गोत्वमपि नित्यं न स्यादाधारमन्तरेण तस्यानिरूपणादित्यर्थः ॥ [d] "सङ्केते"ति । व्यक्तीनाम् आनन्त्यव्यभिचाराभ्यामाधारपदशक्तिग्रहो न स्यादित्यर्थः ॥ [e] "यदेव तदि"ति । आधाराधेयभावापन्नयोः पीठपिठरयोर्नियमेनाधाराधेयभावौ न प्रतीयेते पीठस्याधेयतादशायामप्याधारत्वपरित्यागप्रसङ्गादित्यर्थः यत्तु व्याख्यातं दण्डाधारः पुरुषो दोलाश्रये न स्यादिति तन्नादेयं दण्डाधारदशायामपि दोलाधेयत्वसम्भवात् ॥ [f] "सर्वदे"ति । आधारत्वस्य स्वाश्रयपरित्यागेनाधारत्वप्रतीतिभं-

जने वाधारत्वप्रतीतिरित्येकं वस्तु सर्वदा विरुद्धप्रतीतिद्वयालिङ्गितं स्यादित्यर्थः ।

मू० * अथ तस्याश्रयभजनत्यजनयोर्नियामकमस्ति तर्हि [a] स वक्तव्यः सोपि कल्पयिष्यते ऽन्यथाधारप्रतीत्यनुपपत्तेः? *—इति चेन्न, [b] तत्परिकल्पने यदेव भजने नियामकं स एवाधारोस्तु कृतं पूर्वपरिकल्पितेनेति * अस्त्वेवमेव? *—इति चेन्न, [d] तस्यापि स्वाश्रयभजनत्यजननियामकस्यावश्यं वाच्यत्वे तस्यापि चैवं वैयर्थ्यमित्यधिकाऽपरिकल्पने नियमानुपपत्तिरधिकपरिकल्पने च पूर्व वैयर्थ्यप्रसङ्ग इति [e] दुरुत्तरं व्यसनमापद्येत ॥

टी० ॥ [a] "स वक्तव्य" इति । तादृशं न किञ्चिदस्तीति भावः ॥ [b] "तत्परिकल्पने" इति । आधारत्वविशिष्टप्रतीतेरन्यदेव तर्हि प्रयोजकमिति किमाधारत्वेनेत्यर्थः ॥ [c] "अस्त्वि"ति । भजननियामकमेवाधारत्वस्थानेऽभिषिच्यतामित्यर्थः भजननियामकमाधारत्वाभिव्यञ्जकं धर्मान्तरं तदेवाभिव्यक्तिविरोधि धर्मान्तरं त्यजननियामकमित्यर्थः त्यजननियामकं च विनाशकमिति व्याख्यानमनादेयं नित्यत्वपक्षस्यात्र दूष्यत्वात् ॥ [d] "तस्यापी"ति । भजननियामकस्यापीत्यर्थः तत्रापि त्यागि वाऽत्यागिवेति विकल्पसम्भवादिति भावः ॥ [e] "दुरुत्तरमि"ति । पूर्वं प्रतिपादितनियामकं तेनैव तद्वैयर्थ्ये क्वापि विश्रामो न स्यात् उपजीव्योपजीवकभावोपि न नियामकः आधारत्वस्यानुत्पादादादेवोत्पत्तौ नोपजीव्यत्वं क्लृप्तावुपजीव्यत्वेनान्यथासिद्धेः सम्भवादिति भावः ॥

मू० * [a] परस्परस्य परस्परेण नियामकत्वम्? *—इति चेत् [b] अन्योन्याश्रयिणौ तौ द्वावपि परस्पराकर्षकभावव्यवस्थया सुस्थीकुरु ततो दास्यामस्तवोत्तरं [c] * जात्यादयोपि

तद्येवमनुपपन्ना? * —इति चे[d]त्,—नोच्चैर्वक्तव्यं यदि कोपि परः शृणोति तदा मद्वदनिष्टमस्माकं प्रकाशीकृतं स्यात् किञ्च य[e]त्तदा धारत्वं तत्साधारमनाधारं वा अन्त्य क(¹)विशिष्टप्रत्ययं कुर्याद्विशेषाभावात् आद्ये तदाधारत्वं वाच्यं * स्वरूपमेव तस्य तादृशं येन स्वयं सत्ता स्वात्मनि सत्ताप्रत्ययकारिणी सत्तान्तरमन्तरेण यथा तथेदमपि विनैवाधारत्वान्तरं स्वाधारप्रत्ययकारि? *—इति चेन्न, [f]भ्रान्तित्वप्रसङ्गात् यथा विना रजतत्वं तत्प्रत्ययो भ्रान्तिस्तथैव स्यात उपपाद्यश्चायमर्थो भेदखण्डनप्रस्तावि इत्युपरम्यते * [g]विनाप्याधाराधेयभावं स्वभावसंबन्धेन नियामकत्वं भविष्यति यथा विषयविषयिभावेनार्थज्ञानयोः? *—इति चेन्न,

टी० ॥ अनवस्थापरिहारायाह—। [a]"परस्परे"ति, एवं सत्यन्योन्याश्रयो दोषः क्वापि न स्यादित्याह—। [b]"अन्योन्ये"ति । आधारत्वखण्डनं जात्युपप्लावकमित्याह—। [c]"जात्यादय"इति । इष्टापत्तिमाह—। [d]"नोच्चैरि"ति। सर्वपदार्थखण्डनप्रवृत्तस्य जातिखण्डनमिष्टमेवेति भावः॥ [e]"तदाधारत्वमि"ति । आधारत्वविशिष्टे वर्त्तमानमाधारत्वं साधारं भवेत्तथाच तदाधारत्वं वाच्यमित्यर्थः ॥ दृष्टान्तदार्ष्टान्तिकयोर्दोषमाह—। [f]"भ्रान्तित्वे"ति । विषयविषयिभावखण्डनं प्रस्तौति—। [g]"विने"ति ।

मू० स्वभावसम्बन्धस्य निरस्तत्वात् यमुदाहरसि च विषयविषयिभावं सोपि निर्वक्तुं न शक्यते । तथाहि कः पुनर्ज्ञानादेर्घटादिना विषयविषयिभावः * प्रकाशस्य तत्तदीयतामात्ररूपः स्वभावविशेष? *—इति चेन्न, [a]इच्छा-

(१) क्वेत्यस्य स्थाने कथमित्यपि क्वचित्पुस्तके पाठः ।

द्विषयाव्यापनात् *[b] विषयिणः? *—इति चेन्न, [c] तत्त्वस्यैव निरूप्यमाणत्वात् किंच [d] स्वभावः स्वधर्मो वा स्वात्मा वा तस्य विवक्षितः [e] आद्ये ज्ञानत्वादिकं वा साधारणमसौ तत्तद्घटज्ञानादिनियतो वा कश्चित् आद्ये [f] साधारण्यान्न विशेषतस्तदीयतामात्ररूपत्वसम्भवः द्वितीये तु [g] प्रतिविषयं व्यावृत्तज्ञानधर्मस्वीकारे वचनभङ्गिभेदेन साकारतास्वीकारः ॥

टी० ॥ प्रकाशस्य सत इत्यभावसमवाययोर्व्यावर्त्तनाय । [a] "इच्छे"ति । अस्याः प्रकाशत्वाभावादित्यर्थः ॥ [b] "विषयिण" इति । प्रकाशस्येति स्थाने "विषयिण" इति कर्त्तव्यमित्यर्थः ॥ [c] "तत्त्वस्ये"ति । विषयित्वेनैव विषयित्वनिरूपणे आत्माश्रय इत्यर्थः स्वस्य भावो स्वं वा स्वभाव इति समासद्वयाश्रयणेन विकल्पयति—[d] "स्वभाव" इति ॥ [e] "आद्य" इति । ज्ञानत्वं वा तत्तद्घटादिज्ञानत्वं वा धर्म इति विकल्पार्थः ॥ [f] "साधारण्यादि"ति । ज्ञानत्वमेव यदि विषयित्वं तदा तस्य साधारण्याद्घटविषयकमपि ज्ञानं पटविषयकं स्यादित्यर्थः ॥ [g] "प्रतिविषयमि"ति । घटज्ञानत्वं चेद्विषयित्वं तदा घटस्यापि ज्ञानाकारप्रविष्टतया योगाचारमतप्रवेश इत्यर्थः ॥

मू० किञ्च [a] * नासौ धर्म उपधेयान्तराधीनः? *—विषयीभूतघटाद्यतिरिक्तोपाधिप्रतीत्यपेक्षाप्रसङ्गात् * [b] नच घटादिरेव तथा * असंबन्धात् [c] तथापि तथात्वेऽतिप्रसङ्गात् [d] नापि जातिरूपः, क्वचिद्घटमात्रपटमात्रज्ञानगततया पृथग्व्यवस्थितौ सत्यां घटपटविषयैकज्ञाने सह व्यवस्थित्या जातिसङ्करप्रसङ्गात् [e] प्रतिविषयं ज्ञानभेद नियमे विशिष्टज्ञानानुपपत्तेः ॥

टी० ॥ किञ्च घटज्ञानत्वं स्वस्य(१)धर्मस्तदीयत्वं यत्तदुपाधिरूपं जातिरूपं वा उपाधित्वेप्युपाधेयमन्यद्वा घटादिकमेव वा । आद्यं दूषयति । [a]"नासावि"ति । यथा पुरुषे दण्डित्वज्ञानं दण्डरूपोपाधेयपरतन्त्रं तथा प्रकृतेपि घटज्ञानमुपाधेयान्तरपरतन्त्रज्ञानं स्यादित्यर्थः द्वितीयमाशङ्क्याह–। [b]"नचे"ति । घटज्ञानत्वलक्षणोपाधौ घट एव चेदुपाधेयस्तदा यथा दण्डस्वरूपेणोपाधेयेन पुरुषस्य संयोगः संबन्धस्तथा ज्ञानस्य नास्तीत्यर्थः विषयविषयिभावस्य चाद्याप्यनिरूपणादिति भावः ॥ [c]"तथापी"ति । उपाधेयोपाधिमतोः संबन्धं विनाप्युपाधेरवच्छेदकत्वे ऽदण्डिनमपि दण्डित्वमवच्छिन्द्यादित्यर्थः तृतीयमाशङ्क्य(२)निराकरोति–। [d]"नापी"ति। घटज्ञानत्वपटज्ञानत्वे जाती तदुभयसमूहालम्बने सङ्कीर्णे स्यातामित्यर्थः ननु जातिसङ्करभयेन नानाविषयकं ज्ञानमेव नाभ्युपेयमित्यत आह–। [e]"प्रतिविषयमि"ति । तर्हि विशेषणविशेष्योभयविषयकं विशिष्टज्ञानमपि न स्यादित्यर्थः ।

मू० [a]एवंभूतविचित्रजात्यभ्युपगमे प्रत्येकोचितव्यवहारस्याप्यभावप्रसङ्गात् * [b]अथ जातिसङ्करोपीष्यते(३) ? * तथापि स एव विशेषो घटज्ञानत्वादिरस्त्विति विषयासिद्धिः [c] * अथ विषयेणापि संबन्धप्रतिभासात्सोपीष्यते *–न, [d]तस्यैव संबन्धस्य विचार्यमाणत्वात् * [e]स एवासौ ? *–इति चेन्न, [f]तदैक्याज्ज्ञानार्थसाधारणविषयप्रतीत्यापत्तेः * संयोगप्रतीतिवत् । [g]विषयित्वं तत्र(४)अर्थे तु विषयत्वमन्यत् ? *–इति चेन्न ॥

(१) स्वस्य = ज्ञानस्य ।

(२) उपाधिरूपं जातिरूपं वा उपाधित्वेप्युपाधेयमन्यद्वा घटादिकमेव वा–इत्यत्रान्यद्वा घटादिकमेव वेति पक्षद्वयं निराकृत्य जातिरूपं वेति तृतीयं पक्षं निराचष्टे इत्यर्थः ।

(३) निर्दुष्टत्वादिति शेषः ।

(४) तत्र = ज्ञाने ।

टी० ॥ ननु नीलत्वादिभिन्ना यथा चित्रत्वं पृथगेव जातिस्तथा नानाविषयकज्ञाने चित्रत्वमेव घटज्ञानत्वं भिन्ना जातिस्यादित्यत आह—। [a] "एवंभूते"ति । अन्ततो निर्विकल्पकस्यापि नानाविषयत्वेन चित्रत्वापत्तौ घटज्ञानत्वादिव्यवहारः क्वापि न स्यादित्यर्थः ननु गुणगतजातौ जातिसङ्करो न दोष इत्याह—। [b] "अपि"ति । तर्हि घटज्ञानत्वपटज्ञानत्वादिजातीनामेव ज्ञानव्यावर्तकत्वे विषयासिद्धिरेवेत्यर्थः ॥ ननु विषयासत्त्वे घटस्य ज्ञानमित्येव कथं स्यादित्याह—। [c] "अपे"ति । षष्ठ्यर्थ एव विचार्यत इत्याह—। [d] "तस्यैवे"ति । ननु विषयविषयिभाव एव षष्ठ्यर्थस्तत्र किं विचारणीयमित्याह—। [e] "स एवे"ति । तर्हि संयोगवदेक एवासौ व्यासज्यवृत्तिसंबन्ध इत्युभयं विषयिविषयश्च स्यादित्याह—। [f] "तदैक्यादि"ति । ननु ज्ञानमात्रनिष्ठ एवायं सम्बन्धो विषयित्वाख्यस्तदन्यदेव च विषयगतं विषयत्वं तत्र चोभयत्रोभयं निरूपकमात्रं नत्वधिकरणमपीत्याह—। [g] "विषयत्वमि"ति ।

ख० [a] सैव हि ज्ञातता स्यात्सा च निराकरिष्यते [b] द्वितीये च स्वात्मा घटपटव्यक्तीनामिव घटपटज्ञानव्यक्तीनां व्यावृत्त इति तत्तद्विषयभानगोचरानुगताकारबुद्धिव्यवहारभङ्गप्रसङ्गः किञ्च तदीयता ज्ञानस्य स्वभाव इति वचनं विचारमर्हति तदिति तावद्विषयपरामर्शः संबन्धिता च छप्रत्ययार्थः तदेतदन्योन्यविशिष्टमुभयं ज्ञानस्य स्वभाव इति ब्रुवाणेन विषया विज्ञानस्य स्वभाव इत्युक्तं भवतीति साधु विज्ञानवादनिराकरणप्रकरणोपसंहरणमकारि [c] * संबन्धमात्रं ज्ञानस्य स्वभावो ननु विषय इत्याशय? *—इति क्षेत्र, [d] विशेषानुपादने संबन्धमात्रमिदं सर्वस्यैव स्यात् [e] अतो न तावन्न कस्यचित्संबन्धस्वरूपतात्यागप्रसङ्गात् नापि नियतस्य

टी० ॥ [a] "सैव ह्री"ति। अनुमतं बहिर्विषयत्वं तामेव भट्टो ज्ञाततामाह सा च निरसनीयैवेत्यर्थः ॥ [b] "द्वितीये" इति। स्वं च तद्भावश्चेति कर्मधारयपक्षे इत्यर्थः ॥ घटज्ञानाकारपटज्ञानाकारानुगतप्रत्ययाभावप्रसङ्ग इत्यर्थः। तदीयत्वं घटीयत्वं ज्ञानस्य स्वभावः स्वरूपमित्युक्ते घटोऽपि ज्ञानस्वभावान्तर्गत एवेति विज्ञानवादिनो योगाचारस्य निराकरणमात्मतत्त्व विवेके यदुपसंहृतं "प्रकाशस्य सतस्तदीयत्वमेव विषयित्वमि"ति तद्विज्ञानवादपर्यवसन्नमेवेत्यर्थः ननु घटीयत्व ज्ञानस्येत्यनयोक्त्या घटसंबद्धत्व ज्ञानस्यायाति न तु घटत्वमपीति न विज्ञानवादप्रवेश इति शङ्कते–। [c] "संबन्धे"ति। संबन्धोऽपि संबन्धिनं विषयमादायैव ज्ञानस्य स्वभावो भवेदित्याह–। [d] "विशेषे"ति। ननु संबन्धः कथं संबन्धिनियत इत्यत आह। [e] "यत"इति। कस्यापि चेन्न स्यात्तदा संबन्ध एव न स्यादित्यर्थः।

मू० [a] तादात्म्यापत्तेरुक्तत्वात् [b] नियामकासम्भवाच्च *[c] कारणं नियामकम्?*–इति चेन्न, तेन नियामकेन किं भवति [d] तदीयत्वं तस्य संबन्धस्येति चे[e]त्तदेव तदीयत्वं ज्ञानस्वभावभूतसंबन्धस्वरूपप्रविष्टं उत बहिर्भूतं धर्मान्तरं यदि प्रथमः तच्छब्दार्थोऽपि तर्हि स्वरूपप्रविष्ट इति [f] विषयज्ञानयोः स एवाभेदप्रसङ्गः द्वितीये च तस्य धर्मान्तरस्य विषयेणाभेदः [g] तच्छब्दार्थस्य विषयस्य विशेषणस्य तदीयशब्दार्थविशिष्टरूपे प्रविष्टस्य स्वीकृतधर्मान्तरस्वभावतया निरुक्तत्वात् [h] अस्त्वसौ धर्मो विषयाभिन्न एवेति चेन्न॥

टी० ॥ ननु भवतु नियतस्यैव कस्यचिदित्यत आह–। [a] "तादात्म्ये"ति। दोषान्तरमाह–। [b] "नियामके"ति। घटीयमेव घटज्ञानमित्यत्र नियामकाभाव इत्यर्थः॥ ननु घटीयत्वे घटेन्द्रियसन्निकर्षजत्वमेव नियामकमित्याह–। [c] "कारणमि"ति ॥ [d] "तदीयत्वमि"ति। घटज्ञानं घटीयं क्रियते इत्यर्थः॥ [e] "तदेवेति। ज्ञानस्वभावभूतो यः संबन्धस्त-

त्स्वरूपप्रविष्ट इत्यर्थः ॥ तदीयत्वस्य ज्ञानस्वरूपप्रविष्टत्वे दोषमाह–। [f] "विषयज्ञानयोरि"ति । धर्मान्तरं चेत्तदीयत्वं तदा तच्छब्दार्थो विषयो धर्मान्तरस्वरूपं भवेदित्याह–। [g] "तच्छब्दार्थस्ये"ति ॥ [h] "अस्त्वसावि"-ति । तदीयत्वं धर्मो विषयाभिन्नोऽस्तु तावतापि विषयो ज्ञानं चेत्येतावद्वेवायातं तच्चास्मदभिमतमेवेत्यर्थः ।

मू० [a] तथापि किमसौ स्वीकृतेन स्वभावसंबन्धेन संबद्धो न वा नचेत्तद्विज्ञानं न कस्यचित्संबन्धि स्यात संबद्धश्चेत्तत्किं संबन्धान्तरेणाहोस्वित्स्वभावसंबन्धेनैवासौ ज्ञानात्मकसंबन्धसंबन्धीयः आद्ये तत्राप्येवं प्रसङ्गो यस्या भयेन स्वभावसंबधः स्वीकृतः सा तदवस्थैवानवस्था द्वितीयश्चेज्ज्ञानात्मकसंबन्धसंबन्धीय इत्यत्र विशिष्टस्वरूपे ज्ञानमपि विशेषणं प्रविष्टमिति [b] पूर्वोक्तन्यायेन [c] धुनोक्तन्यायेन च ज्ञानस्यैवास्यैव [d] द्वयमपि स्वात्मेति वाग्भङ्गिभेदमात्रेण [e] ज्ञानगोचरयोरभेदस्वीकार इति [f] एतेनान्यत्रापि स्वभावसंबन्धः प्रत्याख्यातव्यः ज्ञानफलाधारत्वं विषयत्वं

टी० ॥ [a] "तथापी"ति । तदीयत्वं यद्धर्मान्तरं तद्विषयपर्यवसन्नं स्वभावसंबन्धश्च ज्ञानमेव(१) तच्चोभयं संबद्धं न वा आद्ये अत्रापि संबन्धान्तरापेक्षायामनवस्था अन्त्ये ज्ञानं न कस्यापि तदिति घटव्यवहारादिकं न प्रवर्त्तयेत् प्रवर्त्तयद्वा सर्वत्रैव प्रवर्त्तयेदित्यर्थः ॥ [b] "पूर्वोक्ते"ति । ज्ञानस्य घटीयत्वस्वभावत्वे ज्ञानघटयोरभेदापादकेनेत्यर्थः ॥ [c] "अधुने"ति । तदीयत्वं धर्मान्तरं तच्च विचार्यमाणं विषयस्वरूपं तेन सह पुनर्ज्ञानस्य स्वभाव एव संबन्ध इत्यादिनेत्यर्थः ॥ [d] "द्वयमि"ति । घटो घटीयत्वं चेत्यर्थः ॥ [e] "ज्ञानगोचरयोरि"ति । ज्ञानविषययोरित्यर्थः ॥ [f] "एतेने"ति । घटरूपसमवायेऽपि घटीयः स्वभावसंबन्धेन चेत्तदा घटोऽपि समवायप्रविष्ट एव भिन्नेन संबन्धेन चेत्तदा तत्र तत्रापि संबन्धापेक्षायामनवस्थेत्यादिनेत्यर्थः ॥ (शेषमग्रे)

(१) स्वोभावः स्वभाव इति पूर्वोक्तरीत्या ।

॥ ॐ नमो गणेशाय ॥

# काशिकाव्याख्या पदमञ्जरी ।

(*Continued from page* 570. Vol. XII.)

"साधकतमं करणम्" ॥ षिधू संराद्धावित्यस्य हेतुमण्ण्यन्तस्य 'सिद्ध्यतेरपारलौकिक' इत्यात्वे राध साध संसिद्धावित्यस्य वा ण्यन्तस्य साधकशब्दः क्रियात्मकश्चार्थः, प्रयोज्यः कर्ता, सिध्यतः साध्यवतो वा क्रियात्मनोऽर्थस्य प्रयोजकतमं साधकतमम् । ननु सामग्र्यधीना क्रियासिद्धिर्नो खलु कर्त्रादीनामन्यतमापायेऽपि क्रियानिष्पद्यते तत्किमपेक्षः कारकाणां मध्ये एकस्यातिशययोगः स्यात् । उच्यते । दात्रादेः छेद्यद्रव्यानुप्रवेशो व्यापारः, काष्ठादेः पाके प्रज्वलनजनितोष्णस्पर्शानुप्रवेशः, तदनन्तरमेव क्रियासिद्धिः, नैवं कारकान्तरेष्वनुप्रवेशस्तद्व्यापारानन्तरं वा क्रियानिष्पत्तिः समस्ति, अतः ।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम् ॥

विवक्ष्यतइत्यनेनैतद् दर्शयति देशकालावस्थादिवशेन यस्य क्रियां प्रत्युपयोगातिशयेन व्यापारः प्रत्यासीदन् विवक्ष्यते तदा तस्य करणत्वं भवतीति, यथा स्थाल्यधिकरणत्वेन प्रसिद्धा तस्या अपि तनुतरकपालतया प्रकर्षविवक्षायां करणत्वं भवति[1] स्थाल्या पच्यतइति । उक्तं च

वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यतइत्येषा विवक्षा दृश्यते यतः ॥

इति । न चैवं कर्तुरपि करणत्वविवक्षा प्रसङ्गः । भिन्नजातीयत्वात् । सकलसाधनविनियोगकारी खल्वसौ, न च शतधनो निष्कधनेन सह स्पर्द्धते । कथं तर्ह्यश्वेन दीपिकया रथेन सञ्चरतइति बहूनां करणत्वं यावता तेष्वपि यदासन्नोपकारकं तदेव करणं युक्तम् । उच्यते ।

[1] स्थाल्या ओदनं पच्यत इति पा॰ २ ।

कारकान्तरापेक्षः करणस्यातिशयो न स्वकक्षायां तेन सर्वेषां क्रियानिष्पत्तौ सन्निपत्योपकारकत्वात् सिद्धं करणत्वम्। 'तमब्ग्रहणं किमिति'। कारकाधिकारात् सिद्धे साधकत्वे पुनःसाधकश्रुतिः प्रकर्षार्था भविष्यतीति प्रश्नः। 'गङ्गायां घोष इति'। असति तमब्ग्रहणे आधारो नाम यत्राधारात्मा व्याप्तो भवत्याधेयेन, तेनेहैव स्यात् तिलेषु तैलं पयसि[1] सर्पिरिति, गङ्गायां घोष इत्यत्र न स्यात्, तमब्ग्रहणं तु ज्ञापयति इह प्रकरणे सामर्थ्यगम्यः प्रकर्षो नाश्रीयते, तेनेहापि भवति, यदा च देशधर्मो घोषं प्रत्याधारभावः स्रोतस्युपचर्यते तदेदं तमब्ग्रहणस्य प्रयोजनं, यदा तु गङ्गाशब्दस्तीरे वर्तते तदा न प्रयोजनम्, आधेयेन व्याप्तिसम्भवान्मुख्य एवाधारभाव इति॥

"दिवः कर्म च"॥ ननु चाक्षान् दीव्यतीत्यत्र पातयतीत्यर्थस्तत्र कर्मत्वं सिद्धम्, अक्षैर्दीव्यतीति, क्रीडतीत्यर्थे, तत्र करणत्वं सिद्धं किमर्थमिदमित्याशङ्क्याह। 'पूर्वेण करणसंज्ञायामिति'। अक्षैः क्रीडतीत्यस्यामेव विवक्षायामक्षान् दीव्यतीतीष्यते, अत्र च करणसञ्ज्ञैव प्राप्नोति, अक्षान्पातयतीत्यत्र चार्थे ऽक्षैर्दीव्यतीति नेष्यते, अतः साधकतमस्यैव करणसंज्ञायां प्राप्तायामयमारम्भ इत्यर्थः। अथ किमर्थश्चकारः, करणसंज्ञापि यथा स्यात्, नैतदस्ति प्रयोजनम्। वक्ष्यमाणमन्यतरस्यांग्रहणमिहैव करिष्यामि तत्राह। 'चकारात्करणसंज्ञा चेति'। युगपत्संज्ञाद्वयं यथा स्यादिति भावः। अन्यतरस्यांग्रहणे तु पर्यायः स्यात्, यदा कर्म न तदा करणं यदा करणं न तदा कर्म, चकारात्तु युगपदेव संज्ञाद्वयं भवतीत्यर्थः। यौगपद्यप्रयोजनं मनसा दीव्यतीति कर्मत्वादण् प्रत्ययः करणत्वाच्च तृतीया 'मनसः सञ्ज्ञाया' मित्यलुक् मनसादेवः, इह चाक्षैर्देवयते देवदत्तो यज्ञदत्तेनेति, अक्षैरिति तृतीयाप्रयोगेपि धातोः सकर्मकत्वाद् गतिबुद्धीत्यादिना ऽण्यन्तावस्थायां कर्तुर्यज्ञदत्तस्य कर्मसंज्ञा न भवति, अणावकर्मकादिति परस्मैपदं च, यदि तर्हि समावेशोऽक्षान् दीव्य-

[1] दधीति पा॰ २।

तीति परत्वात्तृतीया प्राप्नोति पर्याये तु नायं दोषः, कर्मसंज्ञापक्षे करणसंज्ञाया अभावात् । समावेशे तु करणसंज्ञाया अवकाशो विदेवना अक्षाः, 'करणाधिकरणयोश्चे' ति ल्युट्, कर्मसंज्ञाया अवकाशो दीव्यन्ते भवताक्षाः, 'भावकर्मणो' रिति यगात्मनेपदे, अक्षान्दीव्यत्र तूभयसंज्ञाकार्यप्रसङ्गे परत्वात्तृतीया स्यात् । नैष दोषः । कार्यकालं हि संज्ञापरिभाषं ततश्च कर्मणि द्वितीयेत्यत्र यदस्योपस्थानं तदनवकाशमिति द्वितीया भविष्यति, अयं तर्हि समावेशे दोषो दीव्यन्ते ऽक्षा इति कर्मण्यभिहितेपि करणस्यानभिहितत्वात्तृतीया स्यात्, तथा देवना अक्षा इति ल्युटा करणस्याभिधानेपि कर्मणोनभिधानेन द्वितीया स्यात् । नैष दोषः । एकैव कारकशक्तिः संज्ञाद्वययोगिनी, ततश्चैकस्मिन् कारकेऽभिहिते कारकान्तरमप्यभिहितमेव भवति शक्तेरेकत्वात् ॥

"परिक्रयणे संप्रदानमन्यतरस्याम्" ॥ परिक्रयणशब्दे धातुगतमेव रेफमाश्रित्य रषाभ्यामित्येव णत्वं प्रथमोपनिपतितत्वाद् यथोपसर्गाभावे क्रयणमिति न तूपसर्गस्थमाश्रित्य 'कृत्यच' इत्यनेन तस्य पश्चादुपनिपतितत्वेन बहिरङ्गत्वात् । 'वेतनादिनेति' । वेतनं भृतिः, नियतकालत्वमेव स्पष्टयति । 'नात्यन्तिकः क्रय एवेति' । परिशब्दः सामीप्यं द्योतयति । क्रयो नामात्यन्तिकं स्वीकरणं नियतकालं तु तस्य समीपमेवेति परिशब्दस्यार्थः ॥

"आधारोऽधिकरणम" ॥ आध्रियन्ते ऽस्मिन् क्रिया इत्याधार इति अध्यायन्यायोद्यावेत्यादिना ऽधिकरणे घञ्, क्रियापेक्षत्वात कारकभावस्य क्रियाग्रहणं, यदि क्रियाधारस्याधिकरणसंज्ञा कर्तृकर्मणोरेव स्यात् कर्तृस्था हि क्रिया भवति कर्मस्था वा, कर्तृसंज्ञायाः कोवकाशो ये कर्मस्थक्रियाः पचत्योदनं देवदत्त इति, नन्वत्राप्यधिश्रयणादेराधारः कर्तेति स्यादेव प्रसङ्गः, अयं तर्ह्यवकाशो देवदत्ताय रोचते मोदक इत्युक्तम् अत्र देवदत्तस्थस्याभिलाषस्य मोदकः कर्तेति, अथाप्यनवकाशा कर्तृसंज्ञा एवमपि पर्यायः स्यात्, अथ कर्मसंज्ञायाः कोऽवकाशः ये कर्तृस्थक्रियाः, आदित्यं पश्यतीति, अतः कर्तृकर्मणोरेवाधिकरणसंज्ञा प्रसङ्ग इत्यत

आह । 'कर्तृकर्म्मणोरित्यादि' । कथं पुनः साक्षात्क्रियाधारे सम्भवति क्रियाधारभूतकर्तृकर्म्मव्यवधानेन क्रियाधारस्य गौणस्य ग्रहणं शक्यं विज्ञातुं, करणसंज्ञायां तमब्ग्रहणेन ज्ञापितमेतद् यथाकथञ्चित्क्रियाधारस्यापि करणसंज्ञा भवतीति, मुख्यस्यापि तु कस्माच स्याद् इत्येतावदपि न, परत्वात् कर्तृकर्म्मसंज्ञाभ्यां बाधितत्वादिति गतमेतत् । 'आस्तइति' । कर्तृस्थायाः क्रियाया उदाहरणं, पचतीति कर्म्मस्थायाः, त्रिविधं च तदधिकरणम् । औपश्लेषिकं वैषयिकमभिव्यापकं चेति, कटे आस्ते, गुरौ आवसति, तिलेषु तैलमिति ॥

"अभिनिविशश्च" ॥ नेरल्पाच्तरस्यापूर्वनिपाताद् अभिनीति समुदायानुकरणमित्याह । 'अभिनिपूर्वस्येति' । अन्यथा ऽभिपूर्वस्य निपूर्वस्य चेति ब्रूयात् ॥

"उपान्वध्याङ्वसः" ॥ 'वसेरश्यर्थस्येति' । अर्थशब्दो निवृत्तिवचनः, व्यधिकरणे षष्ठी, अश्यर्थस्य यो वाचकस्तस्येत्यर्थः । भोजननिवृत्तिवाचिन इति यावत्, यद्वा शीङोर्थः श्यर्थः न श्यर्थस्तस्य अस्थानार्थस्येत्यर्थः । स्थानेपि हि शीङ् वर्त्तते जलाशयमिति, तेन ग्रामे तिष्ठतीत्यत्रार्थे ग्राममुपवसतीति भवति । अस्थानार्थत्वे तु ग्रामउपवसतीति, स तर्हि प्रतिषेधो वक्तव्यः, न वक्तव्यः, कथं, नाचोपपूर्वस्य वसेः ग्रामो ऽधिकरणं किं तर्ह्यनुपसर्गस्य, ग्रामे वसन् त्रिरात्रमुपवसति । एतदुक्तं भवति । विशिष्टाधारावस्थितत्वेन निश्चिते देवदत्ते भोजननिवृत्तिविशिष्टकालं प्रतिपादयितुमिदं प्रयुङ्क्ते ग्रामउपवसतीति, तत्रान्तरङ्गत्वात् प्रतीयमानवसिक्रियापेक्षो ग्रामस्याधिकरणभावः, उपवसनं तु स्वरूपेणैव कालमपेक्षतइति कालेनैवान्तरङ्गः सम्बन्धो ग्रामादिना तु बहिरङ्ग इत्यप्रयुक्तमपि त्रिरात्रादिकं कर्म भवति ॥

"कर्त्तुरीप्सिततमं कर्म" ॥ 'कर्तुः क्रिययेत्यादि' । कर्तुर्यदाप्तुमिष्टतममित्यन्वयः, कर्तुरिति चेप्सितापेक्षया 'क्तस्य च वर्त्तमान' इति कर्त्तरि षष्ठी । 'ईप्सित इति' । मतिबुद्धीत्यादिना वर्त्तमाने क्तः । 'क्रिययेति' । करणे तृतीया, कर्त्ता हि नाम यः क्रियामनुतिष्ठति तेन कर्तुर्य-

दिप्सितममित्युक्ते तत्क्रियाविशादसौ कर्ता भवति तया करणभूतयेति गम्यते, कर्त्रा यदाप्तुमिष्यते आत्मीयया क्रिययेत्यर्थः । ईप्सितशब्दोयमस्त्यभिप्रेते रूढः, ईप्सितोभिप्रेत इति, अस्ति क्रियाशब्दः, आप्लृ व्याप्तौ सन्, 'आप्नृप्धामीत्' आप्तुमिष्टमीप्सितमिति तत्र क्रियाशब्दस्येह ग्रहणमिति दर्शितमाप्तुमिष्टतममिति, 'कर्म्मणा इति'। अश्वस्य, स हि भक्षणक्रियया माषानाप्तुमिच्छति, यद्येवं यद्याश्वस्य वस्तुतो भक्षणे कर्तृत्वे, सत्यपि संप्रति बन्धनं प्रति कर्म्मत्वेन विवक्षितत्वादकर्तृत्वाद् माषाणां कर्म्मसंज्ञा न भवति तथा सार्थाद्धीयतइत्यत्रापि हीयमानं सार्थो जहातीति वस्तुवृत्तेन त्यागेन कर्तुरपि सार्थस्य संप्रत्यपादानरूपेण विवक्षितत्वाद् अकर्तृत्वात्कर्म्मणि यगात्मनेपदे न स्याताम् । अत्राहुः । कर्म्मकर्त्तर्यत्र यगात्मनेपदे, कथं, जहातिरयं गमनायां वर्तते देवदत्तं सार्थो जहाति अपगमयतीत्यर्थः, एवैव च सार्थस्यापगमना यदुत क्षुदुपघातादिना देवदत्तस्यापगमे तत्समर्थाचरणं, यदा तु क्षुधादिना स्वयमेवापगच्छति तदा कर्मकर्तृत्वं तदायं प्रयोगः, ततश्च हीयतइति सार्थः स्वयमेवापगच्छतीति, पुनः कुतो हीयते इत्यपेक्षायां सार्थेन सम्बन्ध इति । 'तमब्ग्रहणं किमिति'। 'ईप्सिततमस्यापीप्सितत्वसम्भवाद् उदाहरणसिद्धिं मन्यते । 'पयसौदनं भुङ्क्तइति'। करणसंज्ञा तु दात्रेण लुनातीत्यादौ सावकाशा, नहि दात्रं लवनेनेप्सितं, तथा युक्तमित्यनेनापि न भवति, द्वेष्योदासीनप्राप्त्योस्तत्र ग्रहणात्, सत्यप्यत्र पयसो भुजिक्रियायां प्रकृष्टोपकारकत्वेईप्सायाः प्रकर्षाभावः, यत्र तर्हि पय एवेप्सिततमं तत्र प्राप्नोति, तद्यथा, कश्चित् कं चिदाह सिद्धं भुज्यतामिति, स आह, प्रभूतं भुक्तमस्माभिरिति, इतर आह पयो भविष्यतीति, अपरस्त्वरमाण आह, पयसा खलु भुञ्जीयेति, अत्र प्राप्ताप्राप्तविवेकेन पयस एवेप्सिततमत्वं न त्वोदनस्य, अत्राप्योदनमेवेप्सिततमं पयसस्तु संस्कारकत्वात् करणत्वं न त्वस्य केवले गुणे आदरः, किं तर्हि तत्संस्कृते, ओदनेन ह्यसौ केवलस्य पयसः पानेन संतुष्यतीति, यदि तमब्ग्रहणं क्रियते, पयसौदनं भुङ्क्तइत्यत्रैव, स्यात्तु पंचत्योदनमित्यादौ न स्यात्, नहीप्सिततमं युक्तम्, असति प्रतियोगिनि वस्तु यत्तुल्यजातीयं

तदेव प्रतियोगितां भजते कारकं चात्र न किञ्चिदिष्टमीप्सितं पयसस्त्वीप्स्यमानत्वाद् युज्यते प्रतियोगिता, नैष दोषः। अत्रापि क्रियापेक्षः प्रकर्षः, आदौ हि कर्त्ता फलार्थं क्रियामभीप्सति अतः फलार्थमिष्यमाणत्वाद् ईप्सिता क्रिया फलं तु स्वरूपेणेष्यमाणमीप्सिततमं क्रियाया अपि कर्म्मत्वं संदर्शनादिविशेषान्तरास्पर्धया, यत्र तर्हि फलाभावस्तत्र न स्यात्, क्व च फलाभावः विकार्ये, काष्ठानि भस्मीकरोतीति नहि काष्ठानि फलरूपाणि, मा भूवन् तानि स्वरूपेण फलानि भस्मात्मना तु फलानि, प्राप्ये तर्हि न स्यात्। आदित्यं पश्यति हिमवन्तं शृणोतीति, नह्यत्र क्रियया कश्चिदतिशयो जन्यते, अत्राप्यतिशयो जन्यते प्राकट्यं नाम, यो हि यं पश्यति शृणोति वा तस्यासौ प्रकटो भवति, प्रतिपत्त्रव्यतिरिक्तपुरुषापेक्षया तु विशेषो नास्तीत्युच्यते। यद्वा तमब्ग्रहणेन यत्रापकृष्टेच्छा तदेव व्यावर्त्यते तेन पश्यत्यादावादित्यादीनामपि प्रतियोगिनोऽसत्त्वेनापकर्षाभावाद् भविष्यति, अत्र च लिङ्गं 'ललाटकुक्कुट्यौ पश्यती' ति। 'कर्म्मत्यनुवर्त्तमान इति'। 'अधिशीङ्स्थासामित्यतः'। 'आधारनिवृत्त्यर्थमिति'। प्राच्यं कर्म्मग्रहणमाधारेण संबद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति भावः। आधारानुवृत्तौ को दोषस्तत्राह। 'आधारस्यैव हि स्यादिति'। क्वेत्याह। 'गेहमित्यादि'। यत्र तु न स्यात्तदाह। 'ओदनं पचतीत्यादि'। एतच्चेप्सिततमं कर्म्म त्रिविधं निर्वर्त्यं विकार्यं प्राप्यमिति, तथा युक्तमपि द्विविधं द्वेष्यमितरच्च, अकथितं चेत्यपरं संज्ञान्तरप्रसङ्गे चाप्यद्विवः कर्म चेत्यादिः, तदेवं सप्तविधं कर्म्म। उक्तं च

निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधामतम्।
तच्चेप्सिततमं कर्म्म चतुर्धाऽन्यत्तु कल्पितम्॥
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्॥

इति। तथा

यदसज्जायते सद्वा जन्मना यत् प्रकाश्यते।
तन्निर्वर्त्यं विकार्यं तु कर्म्म द्वेधा व्यवस्थितम्॥

प्रकृत्युच्छेदसम्भूतं किं विल्वकाष्ठादि भस्मवत् ।
किं गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥

इति । तत्र निर्वर्त्यं घटं करोतीति, व्यक्त्यभिप्रायेण जन्मसामान्याभिप्रायेण प्रकाशनम् । ननु च यदि घटो न कर्तव्यो ऽथ कर्तव्यो न घट इत्यनुपपन्न घटं करोतीति, नैष दोषः । तथाविधं वस्तु करोति यस्य निष्पन्नस्य घट इति संज्ञेति, अयमत्रार्थः, एवमोदनं पचतीत्यादावपि, विकार्यं काष्ठानि भस्म करोति सुवर्णं कुण्डलं करोतीति, प्राप्यमादित्यं पश्यतीति नह्यत्र प्रत्यक्षेणानुमानेन वा क्रियाजन्यः कश्चिदतिशयो गम्यते, यथा निर्वर्त्यविकार्ययो रज्जुं सृजति काष्ठं दहति देवदत्तं रोधयतीति, कारकत्वं तु प्राप्यस्याभासोपगमादिभिः, आदित्यो ह्याभासमुपगच्छति यतो दृश्यते ऽभिव्यक्तिमुपयाति यतो व्यक्तमुपलभ्यते सहते च दर्शनं यतः शक्यते द्रष्टुमतदेवमाभासोपगमोऽव्यक्तिः सोढत्वमिति कर्मणो विशेषाः प्राप्यमाणस्य क्रियासिद्धौ विवक्षिताः ॥

"तथा युक्तं चानीप्सितम्" ॥ तथेति पृथक् पदं नोपसमस्तं लक्षणाभावात् । चकारो ऽवधारणे ऽनेकार्थत्वान्निपातानां, तथेत्यस्य चानन्तरे द्रष्टव्य इत्याह । 'तेनैवेति' । 'ईप्सितादन्यत्सर्वमनीप्सितमिति' । यथा ऽधर्मानृतादिभिरुत्तरपदार्थप्रतिपक्षभूतं यद्वस्तु तत्प्रतिनिषेधद्वारेणाभिधीयते, तथेहानीप्सितशब्देनेप्सितप्रतिपक्षभूतं न द्वेष्यमेवाभिधीयते किं तर्हि अश्वलोष्टइत्यादिवदीप्सितव्यतिरिक्तं सर्वमिति सर्वशब्दस्यार्थः । 'विषं भक्षयतीति' । न कस्यापि विषमीप्सिततममिति भावः । ननु य एव मनुष्यो व्याध्यादिना सर्वतः पीडितो मरणमेव श्रेयो मन्यते तस्य विषमपीप्सिततममेव, यदिष्टं गुडादिभ्रान्त्या विषे प्रवर्तते तस्यापि तदीप्सिततममेव, यदिष्टं गुडादि तद्बुद्धिरेव तत्र प्रवर्तते ऽतोऽत्र पूर्वेणैव सिद्धमित्युदाहरणान्तरोपन्यासः । 'ग्रामं गच्छन्निति' । नात्र वृक्षमूलानीप्सिततमानि पूर्वमनभिसंहितत्वाद्वान्तरो-

यकं हि तदुपसर्प्यणं, न चात्रापि यावद्ग्रामं गच्छत्विति न प्रयुज्यते तावन्नान्तरीयकता न प्रतीयतइति पूर्वेणैव सिद्धम्, यथा नदी कूलं कषतीत्यत्राचेतनत्वादीप्साभावः पदान्तरसम्बन्धात्प्रतीयमानो बहिरङ्गत्वात्कर्मसंज्ञां न प्रतिबध्नाति, भवत्ययं प्रतिपत्तारं प्रति उपपादनप्रकारः, यस्तु प्रयुङ्क्ते स पूर्वमेवेप्साप्रकर्षाभावं जानन् तत्कथं प्रयुक्तमिति पूर्वेणासिद्धिरेव, एवं च नदीकूलमित्यत्रापि अनेनैव कर्म्मसंज्ञा, तथा यत्र क्रियायामेव तात्पर्यं न फले नान्तरीयका तु फलसिद्धिस्तत्राप्यनेनैव भवति, अथ क्रियाफलयोगि कर्मेति कस्माद् नोक्तं यदीप्सिततमं यद्वेप्स्यमितरच्च तत्र सर्वत्रानुगतमेतद्, यदुत क्रियाफलयोगित्वं कर्तुरपि तर्हि कर्म्मत्वं स्यात् क्रियाफलस्य संयोगस्य तत्रापि भावात् । अथ परसमवेतक्रियाफलयोगीति लक्षणम् एवमप्यात्मा ज्ञातव्य इत्यत्र न स्यात्, संविदश्च स्वयं प्रकाशाभिमतायाः कर्म्मत्वं स्यात्, घटमहं जानामीत्यत्र हि त्रितयमेव भासते घटो ज्ञानमात्मा चेति, तत्र ज्ञानं क्रिया तत्फलं शब्दप्रयोगादिरूपो व्यवहारस्तेन युज्यमानस्य घटस्य यथा कर्म्मत्वं तथा ज्ञानस्यापि स्यात्, ज्ञानं हि क्रिया भवति व्यवहाररूपस्य फलस्याश्रयभूतं तस्यैव ज्ञानस्य यत् स्वरूपं तदपेक्षया यः पर आत्मा तत्र च समवैतीत्यलमियता, चोरानित्यत्रापि मन्तुकामो वा मित्रादिरूपेण विपर्यस्यमानो अ चोरानुपसर्पतीति पूर्वेणैव सिद्धम् ॥

"अकथितं च" ॥ अकथितशब्दोयमस्त्यप्रधाने रूढः, तद्यथा ऽकथितोहमस्मिन् ग्रामेऽप्रधानभूत इति गम्यते, अस्ति च क्रियाशब्दो ऽकीर्तितपर्यायः, कथ वाक्यप्रबन्धे, चुरादावदन्तः पठ्यते, तत्र पूर्वस्य ग्रहणे पाणिना कांसपात्र्यां दोग्धि पय इत्यत्र पाणिकांसपात्र्योरपि स्यात्, करणाधिकरणसंज्ञयोस्तु पचत्यादिरवकाशो, नहि तत्रास्य प्रसङ्गः दुहियाचीति परिगणनात्, अतो द्वितीयस्य ग्रहणं तदाह । 'केनाकथित,मपादानादिभिर्विशेषकथाभिरिति'। किञ्च प्रमाणं तदाह । केनेति करणनिर्देशः, रूढिशब्देषु हि व्युत्पत्त्यर्थमेव क्रियोपादीयते न तत्र करणादि सम्बध्यते नहि गच्छतीति गौरित्यत्र केनेति प्रश्नो रथेनेति प्रतिवचनं वा भवति, इह

कारकइत्यनुवर्त्तनात् सत्येव कारकत्वे कथितस्य संज्ञया भाव्यमिति सामर्थ्याद्विशेषकथाभिरित्युक्तम् । 'परिगणनं कर्त्तव्यमिति' । नटस्य शृणोतीत्यादौ धात्वन्तरप्रयोगे मा भूत् । प्रच्छिभिक्षीत्यत्र 'छे चे' ति तुक् प्राप्तोऽनित्यत्वादागमशासनस्य स न कृतः, 'सनाद्यन्ता धातवः' 'इको यणची' तिवत् । 'उपयुज्यतइत्युपयोग इति' । असंज्ञायामपि कर्म्मणि घञ् । 'तस्य निमित्तं गवादीति' । अनेन गां दोग्धि पय इत्यादौ पयःप्रभृतेरुपयुज्यमानत्वादीप्सिततमत्वं गवादेस्तु तदर्थत्वादुपादानस्यानीप्सिततमत्वं च दर्शयति, तथायुक्तत्वाभावाच्च गवादेस्तथायुक्तमित्यनेनापि न सिध्यति । एतदेव दर्शयति । 'तस्यैवमित्यादि' । उपयुज्यमानस्य पयःप्रभृतेर्यन्निमित्तं गवादि तस्येत्यर्थः । पाण्यादिकमप्युपयोगनिमित्तमिति तेनापि विनोपयोगस्य पयसोऽसम्भवात् । 'तदर्थमाहेति' । तस्य करणादेः कर्म्मसंज्ञानिवृत्त्यर्थमित्यर्थः, प्रयोजनवचनएव चार्थशब्दो निवर्त्यमानतया तु प्रयोजनत्वं लुङ्मुखस्वरोपचाराः प्रयोजनमितिवत् । 'अपूर्वविधाविति' । यत्रान्यो विधिर्नास्ति तत्रेत्यर्थः । पूर्वग्रहणमन्यमात्रोपलक्षणं, तेन वक्ष्यमाणयोर्हेतुकर्तृसंज्ञयोरपि विषये कर्म्मसंज्ञा न भवति सूत्रेण कथितमिति कथननिवृत्तिपरायां चोदनायां भूतकालो न विवक्ष्यते यथा 'पराजेरसोढ' इत्यत्रासहिष्यमाणस्याप्यपादानसंज्ञा भवति अध्ययनात् पराजेष्यतइति, तद्वदत्रापि साधनमिति, साधनं हि प्रधानभूतां क्रियामपेक्ष्य गुणो भवति । 'प्रधानकर्म्म धर्मादीति' । तस्य तु प्राधान्यं तदर्थत्वात् प्रवृत्तेः । 'सम्बध्यतइति' । सचतइत्यस्यार्थकथनमेतत्, षच समवाये स्वरितेत् । केचित्तु परस्मैपदिभिः सह धातुमेनं पठन्ति षच समवाये रप लप व्यक्तायां वाचीति, तत्राहुः । षच सेचनइत्यस्यानुदात्तेतोऽनेकार्थत्वात्समवाये प्रवृत्तिरिति, सम्बध्नातेश्च कर्म्मव्यापारे सन्निवर्त्तनइति कर्तृपदस्य कर्मपदेनार्थकथनं नानुपपन्नं, यथा राध्यत्योदन इत्यस्य पच्यतइति । 'उक्तमिति' । आचरितमित्यस्य विवरणम् । 'सूत्रकारेणेति' । कविशब्दो मेधाविमात्रवचनोऽपि प्रकरणात् सूत्रकारे प्रत्युक्त इति दर्शयति । 'गां दोग्धि पय इति' । ननु चात्रायमर्थो गोः पयस्त्यजति, दोग्धा गवा पय-

ऽत्याजयतीति तत्र प्रयोजकव्यापारेणाप्यमानत्वात् सिद्धा गोः कर्म्मसंज्ञा न च वाच्यं प्रयोजकव्यापारेणाप्यमानस्य यदि भवति गत्यर्थादिष्वेवेत्युत्तरसूत्रे नियमादत्र न प्राप्नोति यथा पचन्तं देवदत्तं प्रयुङ्क्ते पाचयति देवदत्तेनेत्यत्रेति, णयन्तेष्वेव स नियमोऽयं तु प्रकृत्यन्तः । नैतदस्ति । यथा णयन्तेषु धातुषु क्रियाविशिष्टस्य प्रयुक्तिः प्रतीयते गमयतीति, नैवमत्र निष्क्रियस्यापि गवादेर्दोहननयनादिषु विनियोगात् । तथा ह्यदुहानापि गौर्दुह्यते अगच्छन्तो भारादयः शिरसा नीयन्ते तस्माद्द्वाभ्यामेकस्या एव क्रियायाः श्रवणाद् गोपयसोर्भेदेन कर्म्मत्वं न भवति, णिचि तु सति प्रकृत्यंशस्य प्रत्ययांशस्य च भेदेन द्वे क्रिये वाच्ये इति कर्मभेदोपपत्तिः । 'गमयति ग्रामं देवदत्तमिति' । यदा तु दुहेः क्षरणमर्थः क्षरति गोः क्षीरं क्षीरं क्षारयति देवदत्त इति तदा यद्यपि गोरपायेऽवधिभावो विद्यते तथाप्यविवक्ष्यते तस्मिन्निमित्तत्वमात्रापेक्षायामुदाहरणोपपत्तिः । एवं चावधित्वविवक्षायामपादानसंज्ञायां भवत्येव गोर्दुह्यते पय इति, यदा तु पयस्येव विशेषणं गोः तदा षष्ठी गोः पयो दोग्धीति, । 'पौरवं गां याचतइति' । पूरोरपत्यं पौरवः । ननु विहितात्रापादानसंज्ञा पौरवादसौ गामादत्ते, न याचनादेव तत आदत्ते याचितो सौ यदि ददाति तत आदत्ते, ननु मा नामादिता ऽऽदित्सते तावत् तदपि न यतः स्वभावं परिच्छिन्दत्सु नोदित्समानोऽपि याचते । 'गामवरुणद्धि व्रजमिति' । ननु च गां व्रजं प्रवेशयतीत्ययमत्रार्थः, ततश्च सिद्धं व्रजस्य कर्म्मत्वम् । अथ व्रजे गामवस्थापयतीत्यर्थस्तर्हि कथितात्राधिकरणसंज्ञा यदा तस्यावरोधनक्रियां प्रति निमित्तत्वमात्रं विवक्ष्यते न कर्मत्वं नाधिकरणत्वं तदेदमुदाहरणं व्रजेन हेतुनाऽवस्थापयतीत्यर्थः । 'माणवकं पन्थानं पृच्छतीति' । प्रच्छ ज्ञीप्सायां तुदादिः, । ग्रहिज्यादिना संप्रसारणं, ननु च कथितात्रापादानसंज्ञा स हि तस्मादुपदेशमादत्ते न प्रश्नमात्रादादत्ते पृष्टोऽसौ यद्युपदिशति तत आदत्ते मानामादिता आदित्सते तावत् तदपि न, अनादित्समानोऽपि स्वभावपरिज्ञानाय पृच्छति । भिक्षिर्याचिवद्व्याख्येयः । किमर्थं पुनर्याचिभिक्ष्योरुभयोरुपादानं नह्यनयोरर्थभेदोऽस्ति, यथा-

श्यया चेयं संज्ञा न दुह्यादिस्वरूपा। अथा समानार्थेऽपि हि दृश्यते देवदत्तं शतं प्रार्थयतइति, उच्यते । अनुनयार्थस्य याचतेर्ग्रहणार्थं, तेनाविनीतं विनयं याचते क्रुद्धं प्रसादं याचतइत्यत्रापि भवति, सकृदुपात्तस्य चोभयरूपानुपपत्तेः भिक्षिरपि गृहीतः । 'वृक्षमवचिनोति फलानीति' । यत्राः' प्यवचिन्वन् वृक्षान् फलमादत्तइत्यपादानसंज्ञाया अयं विषयस्तथापि यदा वृक्षो नावधित्वेन विवक्ष्यते निमित्तरूपेणैव तु विवक्ष्यते तदेदमुदाहरणम् । 'ब्रूते ऽनुशास्तीति' । ब्रूञ् व्यक्तायां वाचि, शासु अनुशिष्टौ अदादी, यद्यप्यत्र धर्मेण वचनानुशासनकर्मणा माणवकस्याभिप्रेयमाणत्वं तथापि ददातिकर्माभावात्सम्प्रदानसंज्ञाया अप्रसङ्गः, ये तु तत्र ददातिकर्मणेति नाश्रयन्ति तेषामपि निमित्तत्वमात्रं विवक्षितं नाभिप्रेयमाणत्वमित्युदाहरणोपपत्तिः ॥ (शेषमग्रे)

॥ श्रीः ॥

# काव्यप्रकाशस्य

परिवृत्तिव्याख्यानम्,

# काव्यप्रदीपः,

## विद्वच्चक्रचूडामणिश्रीमद्गोविन्दमहामहोपाध्यायप्रणीतः ॥

श्रीगणेशाय नमः ।

(Continued from page 579. Vol. XII)

क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात्, ।
कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत्, ॥ १२६ ॥
गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये ।
क्रमेण च विरुद्धे य,त्स एष विषमो मतः ॥ १२७ ॥

द्वयोरत्यन्तविलक्षणतया यत् क्वचिद्योगो घटनां नोपैति, किन्त्वनुपपद्यमानतयैव प्रतीयते, स एको विषमः यच्च क्वचित्कार्यमारभमाण

कर्त्ता बलवत् कारणान्तरेण विष्टम्भात् क्रियाफलं नाप्नोति, प्रत्युतानिष्टं विषयमासादयेत्, स द्वितीयः· यच्च क्रियाफललाभेऽपि कार्यकारणयोर्गुणौ क्रिये वा विरुद्धे भवतःस्तौ तृतीयचतुर्थौ विषमौ, सर्वत्र समताया विपर्ययात्· तत्र प्रथमो यथा–

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना, ।
अयं क्व च कुकूलाग्निदुःसहो मलयानिलः ॥

द्वितीयो यथा–

सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः, ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥

अत्र त्राणरूपफलाभावे ऽन्येन ग्रासरूपो ऽनर्थः ।

तृतीयो यथा–

सद्यः करस्पर्शमवाप्य चित्रं रणेरणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोका[क]भरणं प्रसूते ॥

चतुर्थो यथा–

आनन्दममन्दमिमं[ख] कुवलयदललोचने! ददासि त्वम्,
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥

अत्रानन्ददानशरीरतापक्रिये विरुद्धे· सूत्रे विभाग उपलक्षणपरः· तेन, सम्बन्धिनोरानुरूप्याभावात्मकस्य विषमस्यान्येऽपि भेदास्सम्भवन्ति·[ग] तत्रावयवावयविनोर्वैषम्ये यथा–

विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये, ।
मदविभ्रमासकलया पपे पुनः स पुर[घ]स्त्रियैकतरयैकया दृशा ॥

एवमन्यत्राप्यूह्यम् ॥ १२६ ॥ १२७ ॥ (इति विषमः ४७)

(क) त्रिलोक्याभरणमिति प्रकाशसः पाठः ।
(ख) ०मिदमिति पु· ।
(ग) भवन्तीति पु· ।
(घ) पुनरिति प्रायः प्राप्यते ।

महतो यन्महीयांसावाश्रिताश्रययोः क्रमात् ।
आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ॥ १२८ ॥

वर्णनीयोत्कर्षापेक्षया यन्महत्याश्रिते विषये तदपेक्षया तनुरप्याश्रयो महीयान् स्यात् महीयस्तया वर्ण्यते, महत्याश्रये विषये आधेय एव तथा वर्ण्यते, तदुभयमधिकालङ्कारः· तत्राद्य(क) यथा—

अहो विशालं भूपाल! भुवनत्रितयोदरम्, ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥

अत्राश्रयस्य भुवनत्रयस्य महत्तया वर्णनम् ।

द्वितीयं यथा—

युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकास(ख) मासत, ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥

अत्राधेयभूताया मुदो महीयस्त्वं विवक्षितम् ॥ १२८ ॥

(इत्यऽधिकम् ४८)

प्रतिपक्षमशक्तेन प्रतिकर्त्तुं तिरस्क्रिया ।
या तदीयस्य तत्स्तुत्यै, प्रत्यनीकं तदुच्यते ॥ १२९ ॥

अपकारिणमपि विपक्षं साक्षादपकर्त्तुमक्षमेण केनापि तदीयस्य तिरस्करणं तमेवोत्कर्षयितुं, तदुच्यते प्रत्यनीकं, प्रतिनिधितुल्यत्वात्; यथाऽनीके ऽभियोज्ये ऽशक्तेन तत्प्रतिनिधिभूतः कश्चिद्विगूढमभियुज्यते, तथेहापि प्रतियोगिनि विजेयेऽशक्तेन तदन्यो विजीयत इत्यर्थः· तदीयत्वं च साक्षात्सम्बन्धेन परम्परासम्बन्धेनेति द्विविधमेतत्· तत्राद्यं यथा—

त्वं विनिर्जितमनोभवरूपः सा च सुन्दर! भवत्यऽनुरक्ता, ।
पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः ॥

अत्र कामिन्याः कामिनश्च साक्षादेव स्वस्वामिभावसम्बन्धः ।

द्वितीयं यथा—

(क) तत्राद्यो—इति क्वचित् ।
(ख) सविकाशमिति पु· ।

यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुना ऽपि बाधते ॥

अत्र यत्पदार्थेन मुख्यस्यावयवावयविभावसम्बन्धः, तेन चन्द्रस्य सादृश्यलक्षण इति परम्परासम्बन्धः ॥ १२९ ॥ (इति प्रत्यनीकम् ४९)

**समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते ।**
**निजेनागन्तुना वाऽपि, तन्मीलितमिति स्मृतम् ॥ १३० ॥**

निजं, स्वाभाविकम्. लक्ष्म, निगूहनीयसाधारणचिह्नं तद्द्वारेण केनचिद्वस्तुना बलवत्तया यत्किञ्चिद्वस्तु वस्तुगत्यैव तिरोधीयते, तन्मीलितालङ्कारः. तच्च द्विधा, लक्ष्मणः क्वचित्स्वाभाविकत्वात्क्वचिदागन्तुकत्वाच्चेत्यर्थः. तत्र स्वाभाविकेन लक्ष्मणा मीलितं यथा—

अपाङ्गतरले दृशौ, मधुरवक्रवर्णा गिरो,
विलासभरमन्थरा गति, रऽतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया,
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥

अत्र दृक्तरलताद्यऽङ्गस्य स्वाभाविकं लिङ्गं, समानं च तिरोधेये न मदेन, तत्राप्येतदुपलम्भात् । आगन्तुकेन लक्ष्मणा यथा—

ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विपस्ते ।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो बत भियां न बुधो[(क)] ऽप्यभिज्ञः ॥

अत्र कम्पपुलके अङ्गस्य लिङ्गे, हिमाद्रिकन्दरानिवाससामर्थ्याधिगतशीतरूपकारणस्यागन्तुकत्वेन तत्कार्यभूतयोस्तयोरप्यागन्तुकत्वमभयोः समानता च, तेष्वपि तयोरुपलम्भात् ॥ १३० ॥ (इति मीलितम् ५०)

**स्थाप्यते ऽपोह्यते वाऽपि यथापूर्वं परंपरम् ।**
**विशेषणतया यत्र वस्तु, सैकावली द्विधा ॥ १३१ ॥**

(क) विबुध इति पु० ।

स्थापनं विधिरपोहो निषेधः। यथापूर्वमिति वीप्सायामव्ययीभावः। तेन पूर्वपूर्वं वस्तु[क] प्रत्युत्तरस्य वस्तुनो यत्र विशेषणतया बाहुल्येन विधिर्यत्र वा तथा निषेधः, सा द्विधैकावली। विशेषणतया विधिरित्यस्य विधेर्विशेषणत्व[ख]मित्यर्थः। एवं विशेषणतया निषेधोऽपि। कश्चित्तु 'पूर्वकालविशेषणतया स्थितं वस्तु परं विशेष्यं कृत्वा यत्र स्थाप्यते ऽपोह्यते वा, सैकावलीति सूत्रार्थ' इत्याह। तत्तु "पूर्वं प्रति यथोत्तरस्य वस्तुन" इत्यादिप्रकाशविरुद्धम्। तत्र विधौ यथा—

पुराणि यस्यां सवराङ्गनानि, वराङ्गना रूपपुरस्कृताङ्गाः।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य॥

अत्र पुराणामङ्गना, तासामङ्गविशेषणक्रियामुखेन रूपं, तस्य विलासास्तेषामस्त्रत्वमिति क्रमेण विशेषणतया विधिः। निषेधे यथा—

न तज्जलं, यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम्।
न षट्पदोऽसौ, न जुगुञ्ज यः कलं, न गुञ्जितं तन्न जहार यन्मनः॥

अत्र जले पङ्कजस्य, तत्र षट्पदानां, तत्र गुञ्जितस्य, तत्रापि मनोहारिताया विशेषणतया निषेधः॥ १३१॥ (इति मीलितम् ५१)

**यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः।**

**स्मरणम्—**

अत्रार्थस्मृतिः स्मरणालङ्कार इति लक्षणम्। यथानुभवमिति स्मृत्याकारप्रदर्शनम्। दृष्टे तत्सदृश इति तद्धेतुसंस्कारोद्बोधनिर्देशोऽदृष्टादेरप्युपलक्षणम्। वस्तुतस्त्वन्यादृशस्मृतेर्विच्छित्त्यभावेनालङ्कारत्वाभावव्यवच्छेदकतया लक्षणान्तर्गतमेवैतत्। तदयं वाक्यार्थः—केनचिदाकारेण नियतो यदाकदाचित्प्रमाणेनानुभूतः स कालान्तरे संस्कारोद्बोधहेतौ तत्समानधर्मदर्शने सति यदनुभूतेन प्रकारेण स्मर्यते, तत् स्मरणालङ्कारः। स द्विधा, एतज्जन्मनि जन्मान्तरे वाऽनुभूतस्य स्मृतेः[ग] क्रमेणोदाहरणम्—

(क) पूर्वपूर्वमिति पु०।
(ख) विशेषणमिति पु०।
(ग) अनुभूतस्मृतेरिति पु०।

निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः, ।
तद्भवैः कुहरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम्[क] ॥

कज्जुअगहिअजसोदात्थणमुहविणिवेसिदाहरउडस्स ।
संभरिअ[ख]पंचजण्णस्स णमह कण्हस्स रोमचं ॥

॥ स्पष्टम् ॥ ऽ–॥ (इति स्मरणम् ५२)

–भ्रान्तिमान, ऽन्यसंवित्तत्तुल्यदर्शने ॥ १३२ ॥

अत्राप्यन्यसंवि[ग]दिति लक्षणम्· तत्तुल्यदर्शन इति हेतुनिर्देशः· अन्येतिपदार्थम्परामृशता तदित्यनेना[घ]प्राकरणिकं निर्दिश्यते· तथाच, तेन तुल्यमर्थादिह प्राकरणिकं लभ्यते[ङ] तेन, प्राकरणिकस्याऽप्राकरणिकतुल्यस्य दर्शने सति यदप्राकरणिकत्वेन ज्ञानं, स भ्रान्तिमानित्यर्थः· नच रूपके निर्गीर्याध्यवसानरूपायामतिशयोक्तौ वाऽतिव्याप्तिः· तत्र वस्तुनो भ्रमाभावेऽप्यध्यवसानमात्रस्वीकारात्· इह त्वर्थानुगमेन संज्ञाप्रवृत्तेर्भ्रमोपगमस्य स्पष्टमेवोपगमात्· उदा०–

कपाले मार्जारः पय इति करांल्लेढि[च] शशिन,
स्तरुच्छिद्रप्रोतान् बिसमिति[छ] करी संकलयति, ।
रतान्ते तल्पस्थान् हरति वनिताप्यंशुक[ज] इति,
प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति[झ] ॥

॥ १३२ ॥ (इति भ्रान्तिमान् ५३)

आक्षेप उपमानस्य, प्रतीप,मुपमेयता ।
तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धना ॥ १३३ ॥

(क) ०रवाणामिति पा· ।
(ख) समरिअ–इति, सुम्मरिअ–इति च पा· ।
(ग) ०संवित्तिरिति प्रायः ।
(घ) तदित्यत्र नेति पु· ।
(ङ) निर्दिश्यत इति पु· ।
(च) करान्लेढीति सर्वत्र प्राप्यते ।
(छ) विसमिति पु० ।
(ज) ०प्यंशुकमिति पु· ।
(झ) विप्लवयतीति केषांचित्पाठे प्रप्लवयतीतिवद्यामधातुक्रिया द्रष्टव्या ।

अस्य प्रयोजनं निर्वाहयितुमुपमेयमेवाऽलमित्य ऽप्रयोजकतयो-पमानतया प्रसिद्धस्योपमेये तस्माद्विशेषविवक्षया· ऽनादरार्थमुपमेयभावः कल्प्यते, तदुभयरूपं प्रतीपम्, उपमेयस्योपमाने प्रतिकूलवर्त्तित्वात्· तत्राद्यं यथा—

लावण्यौकसि, सप्रतापगरिमण्य,ऽग्रेसरे त्यागिनां,
देव! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः, किमेष विहितः पूषा, किमुत्पादितं
चिन्तारत्नमऽहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ।

अत्र यथासङ्ख्यसत्त्वे ऽप्याक्षेप एव चमत्कारकारीत्याक्षेपोदाह-रणमेतत् । द्वितीये तु क्वचिदुपमित्यनिष्पत्त्या तिरस्कारः, क्वचित्तु निष्पत्ति-सैव तद्धेतुः· क्रमेणोदाहरणम्—

ए एहि दाव सुंदरि! कण्णं दाऊण सुणसु वअणिज्जं, ।
तुज्झ मुहेण किसोअरि! चंदो उअमिज्जइ जणेण ॥

अत्र मुखोपमानस्य शशिनः स्वल्पगुणत्वादुपमित्यनिष्पत्ति 'वअ-णिज्जं' इतिपदेन द्योत्यते, सैव च तिरस्कारहेतुः ।

गर्वमसंभाव्य(क) मिमं लोचनयुगलेन वहसि किं मुग्धे!(ख) ।
सन्तीदृशानि दिशि दिशि सरस्सु ननु(ग) नीलनलिनानि ॥

अत्र नलिनानां लोचनोपमेयीकरणमेवा ऽनादरहेतु,रुपमेयस्य न्यूनगुणत्वस्थितेः· अनयैव रीत्या तदपि प्रतीपं द्रष्टव्यम्· यत्तु समानगुण-योगाभावेनोपमानत्वाननुभवे ऽप्यर्थस्योपमानत्वकल्पना·· कथमिति चेन्न, उपमानतिरस्कारस्यालङ्कारताबीजत्वात् तच्च द्विधा सम्भवति, उपमा-नत्वेनैव प्रसिद्धस्योपमेयत्वकल्पनया असदृशत्वेन प्रसिद्धस्योपमानत्वकल्प-नया वा· सूत्रं चोपलक्षणतया योज्यम्· उदाहरणम्—

(क) ०मसंवाद्यमिति कुवलयानन्दस्थः पाठः;
(ख) किं वहसि भद्रे !—इति कु० ।
(ग) नवेति कैचित्पठन्ति ।

अहमेव गुरुः सुदारुणानामिति हालाहल! मा स्म तात[क]! दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवने ऽस्मिन्वचनानि दुर्जनानाम् ॥

अत्र हालाहलस्य खलवचनोपमानत्वमसम्भाव्यमानमेवोपनिबद्धं तिरस्कारहेतुः ॥ १३३ ॥ (इति प्रतीपम् ५४)

प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया ।
ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम् ॥ १३४ ॥

अतादृशत्वेपि विवक्षितगुणसाम्यस्य प्रस्तुतस्या ऽन्येन ऽप्रस्तुतेन योगाद्यत्तेनैकात्म्यं बध्यते, तत्सामान्यं, समानगुणयोगात्. तत्रापरित्यक्तनिजगुणस्येत्यपि[ख] विशेषणं विवक्षितम्, अन्यथा तद्गुणालङ्कारे ऽतिव्याप्तेः. 'बध्यत' इत्यस्य प्रत्यायनमात्रमर्थो, न तु शाब्दं प्रतिपादनम्. उदाहरणे "अविभाव्यतां गता" इत्यादावैकात्म्यस्या ऽशाब्दत्वात्. उदाहरणम्—

मलयजरसविलिप्ततनवो नवहारलताविभूषणाः[ग]
सिततरदन्तपत्त्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धराम ऽविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियो ऽभिसारिकाः ॥

अत्राभिसारिकाचन्द्रिकयोरैकात्म्यप्रतीतिः. क्वचित्प्रस्तुताप्रस्तुतयोरुत्तरकालीनविवेकादिना तदुच्चयनम्. यथा—

वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि नापतिष्यन् को ऽवेदयिष्यन्नवचम्पकानि ॥

अत्र भृङ्गपातानन्तरं भेदप्रत्ययो, न तु पूर्वमेव प्रतीतिः. ननु भृङ्गपातेन भेदप्रत्ययात् कथमैकात्म्यप्रतीतिरिति चेत्, अये तथात्वेपि प्राथमिकाभेदप्रत्ययस्या ऽनिरासात्, तस्य वृत्तत्वात् ॥ १३४ ॥ (इति सामान्यम् ५५)

(क) तात! मा स्मेति क्वचित् ।
(ख) ०गुणस्येत्यपीति पु० ।
(ग) विभूषिता इति पा० ।

विना प्रसिद्धमाधारमाधेयस्य व्यवस्थिति, ।
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा, ॥ १३५ ॥
अन्यत् प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।
तथैव करणं चेति विशेषस्त्रिविधो मतः ॥ १३६ ॥

स एव त्रिधा· तत्र प्रसिद्धमाधारं विनाऽऽधेयस्य विशिष्टावस्थितिर्यदभिधीयते, स एको विशेषः· तत्र प्रसिद्धमित्यनेनेदमुक्तं, यत्, अत्र[क] वास्तवमाधारत्वं न विवक्षितं, किन्तु कविप्रसिद्धमात्रसिद्धमिति· अत एव तथैवोदाहरणम्—

दिवमप्युपयातानामाऽऽकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः, कथमिह[ख] कवयो न ते वन्द्याः ॥

अत्र कविरूपं प्रसिद्धमाधारं विना गिरां विशिष्टा ऽवस्थितिरुक्ता । एकस्य वस्तुनो युगपद्या एकात्मा ऽनेकवृत्तिः, सः द्वितीयो विशेषः· एकात्मेति, एकेन स्वभावेनेत्यर्थः· एतच्च विशेषण"मेकस्त्रिधा वससी"त्यादियथासङ्ख्यव्यावर्तनाय· युगपदिति पर्यायवारणाय· उदाहरणम्—

सा वसइ तुज्झ हिअए साच्च अच्छीसु साअ वअणेसु, ।
अह्मारिसाणं सुंदर ! ओआसो कधं[ग] पावाणं ॥

स्पष्टम् । रभसेनान्यत् कार्यं कुर्वतः कर्तुमशक्यस्यान्यस्यापि कार्यस्य तथैव करणं, स तृतीयो विशेषः· अत्र तथैवेति तेनैव प्रकारेणेत्यर्थः· [घ] एतच्च "धुनोति चासिं तनुते च कीर्त्ति"मित्यादिसमुच्चयव्यावर्त्तनाय· उदाहरणम्—

---

(क) यदत्रेति पु· ।
(ख) कथमिवेति पा· ।
(ग) कत्थमिति पु· ।
(घ) एतच्चेत्येकत्र नास्ति ।

स्फुरदुद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजता ऽनवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च[क] ॥

अत्रान्यस्य करणं शाब्दम्. क्वचित्तु व्यङ्ग्यम्. यथा–

गृहिणी, सचिवः, सखी मिथः, प्रियशिष्या ललिते कलाविधौ, ।
करुणाविमुखेन मृत्युना हरता त्वां, वद, किं न मे हृतम् ॥

अत्र 'किंच मे हृत'मिति सचिवादिसर्वहरणरूपकार्यकरणं व्यज्यते.[ख] नन्वाधारं विना वास्तवस्याऽऽधेयस्य व्यवस्थितिरनुपपन्नैव. एवमन्ययोर[ग]प्यनुपपत्तिरिति चेन्न, अतिशयोक्तिमालम्ब्य तथाभिधानात्. सर्वत्रैवंविधे विषये ऽतिशयोक्तिरेव प्राणायिता, तां विना प्रायशोऽलङ्कारत्वाभावात्.[घ] अत एवाहुः–

"सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते ।
यत्नो ऽस्यां कविभिः[ङ] कार्यः, कोऽलङ्कारो ऽनया विना" ॥

विभाव्यत इति, विशिष्टो भाव्यते चमत्कारविशेषविषयः क्रियत इत्यर्थः ॥ १३५ ॥ १३६ ॥ ( इति विशेषः ५६ )

**स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत् ।**
**वस्तु तद्गुणतामेति, भण्यते स तु तद्गुणः ॥ १३७ ॥**

अत्युत्कृष्टगुणस्याप्रस्तुतस्य योगात्तद्गुणसम्बद्धुपरागात्स्वकीयं रूपं तिरस्कृत्य प्रकृतं वस्तु यत्तदनुकारमेवासादयति, स तद्गुणो भण्यते, 'तस्याप्रस्तुतस्य गुणो ऽत्रे'ति व्युत्पत्तेः. मीलिते वस्त्वन्तरेणाच्छादितस्य तस्यैव[च] प्रस्तुनः प्रतीतिः. अत्र त्वनाच्छादितस्वरूपस्यैव वस्त्वन्तरगुणापत्तिरिति ततो भेदः. उदाहरणम्–

(क) बृहस्पतिश्चेति पु० ।
(ख) व्यज्यत इत्येकत्र नास्ति ।
(ग) ०रनुपपन्नैवमत्रमन्ययोरिति पु० ।
(घ) प्रायेणालङ्काराभावादिति पा० ।
(ङ) कविनेति पे० ।
(च) ०च्छादितस्यैवेति पु० ।

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥

अत्रातद्गुणाद्वयं, रवितुरगापेक्षया गरुडाग्रजस्य तदपेक्षया हरिन्मणीनां प्रकृष्टगुणत्वात्तद्रूपतया तत्प्रतीतेः· एतेन यत् केनचिद्व्याख्यातं 'स्वगुणत्यागानन्तरं पुनस्तत्प्राप्तिस्तद्गुण' इति· तदनादेयम्, तस्याप्रस्तुतस्य गुणोऽत्रास्तीतिव्युत्पत्तिकथनप्रकाशविरोधात्, तत्र गुणद्वयकथनेन च तद्गुणद्वयव्युत्पादना,"दत्ते सीमन्तरत्न" इत्यादौ वक्ष्यमाणे सङ्करोदाहरणे तद्गुणत्वाभावप्रसङ्गाच्च· नहि तत्र त्यक्तस्य स्वकीयरूपस्याऽवाप्तिः ॥ १३७ ॥ (इति तद्गुणः ५७)

तद्रूपाननुहारश्चेदस्य स स्याद् ऽतद्गुणः ।

तदिति, प्रकृतेत्यर्थः· अस्य, अप्रस्तुतस्य· अत्युज्ज्वलगुणयोगे ऽपि यदि न्यूनगुणोऽप्रकृतः प्रकृतस्य गुणं नानुहरति, तदा ऽतद्गुणः· उदाहरणम्—

धवलोसि जइवि सुंदर! तहवि तुए मज्झ रंजिअं हिअअं,·
राअभरिएवि हिअए सुहअ! णिहितो ण रत्तोसि ॥

अत्रातिरक्ते मनसि धृतस्याप्यरक्तत्ववचनाद्गुत्तरार्द्धमेवोदाहरणम्· तत्र प्रकृतं हृदयं, सम्बोध्यस्त्वऽप्रकृतः, स्वहृदयवृत्तान्तनिवेदनस्यैव विवक्षितत्वात्· एवंचात्र सूत्रे तत्पदेन प्रकृतमिवाप्रकृतमप्युच्यते· तथा ऽस्येत्यनेनाप्रकृतमिव प्रकृतमप्युपस्थाप्यते, सामान्यमुखप्रवृत्तत्वात्· तथाचाप्रस्तुतेन प्रस्तुतरूपाननुहरणवत् प्रस्तुतेनाप्रस्तुतरूपाननुहारो ऽन्यप्र[क]कारः· यथा—

गाङ्गमम्बु सित,मम्बु यामुनं कज्जलाभ,मुभयत्र मज्जतः ।
राजहंस! तव शुभ्ररूपता चीयते, नचनचाऽपचीयते ॥

(क) अन्यः—इति पु० ०द्वारे ऽन्यः प्रकार इति पा० ।

अत्रान्यापदेशपक्षे राजहंसस्याप्राकारणिकत्वं प्राकारणिकसत्पुरुषोपमानतयोपपादनीयम्· वाच्यमात्रविश्रान्तौ न काचिदनुपपत्तिः ॥ ऽ ॥

( इत्य ऽतद्गुणः ३८)

यद्यथा साधितं केना,प्यपरेण तदन्यथा ॥ १३८ ॥
तथैव य[क]द्विधीयेत, स व्याघात इति स्मृतः ।

यथा येनोपायेन, तथा तेनोपायेनेत्यर्थः· तथा च,[ख] केनापि कर्त्रा यद्वस्तु येनोपायेन यथा साधितं, तदन्येन कर्त्रा जिगीषुणा तद्वस्तु[ग] तेनैवोपायेन ततोऽन्यथा चेत्साध्यते, स व्याघात इत्यर्थः, प्रथमसाधितवस्तुनो व्याहतिहेतुत्वात्· उदाहरणम्—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः, ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे [घ] वामलोचनाः ॥

अत्र दृशैव दाहो जीवनं च ॥ १३९ ॥ ऽ ॥

( इति व्याघातः ५९ )

एवं शुद्धालङ्कारा दर्शिताः· अस्ति पुनः कश्चिद् विषयो, यत्राङ्गदादिसम्बद्धपद्मरागप्रमुखमणिमेलकवत् प्रोक्तानामलङ्काराणां संवलन एव चमत्कारः· तस्मात्सोऽप्यलङ्कारः· तत्र द्वयी गतिः, परस्परमनपेक्ष्य व्यवस्थिते,स्तदभावाच्च· तत्र प्रथमा संसृष्टिरुच्यते, द्वितीया तु सङ्करः· सच [ङ]त्रिविध इति प्रकारचतुष्टयं लक्षयति—

सेष्टा[च] संसृष्टि,रेतेषां भेदेन यदिह स्थितिः ॥ १३९ ॥

---

(क) तद्विति पु०, न तु युक्तम् ।
(ख) एकत्र "तथेत्येतावन्मात्रं,न तु,चकारोऽपीति ।
(ग) जिगीषुतया यद्वस्त्विति पु० ।
(घ) स्तुम इति पा० ।
(ङ) चो नास्त्येकत्र ।
(च) सैषेति प्रकाशेषु प्राय उपलभ्यते ।

भेदः स्वरूपतो विषयतो वा, परस्परमनपेक्षत्वम्. यद्वा, विषयभेदे सति परस्परानपेक्षत्वम्. स्थितिः, व्यवस्थितिः. एतेषां समनन्तरमेवोक्तानामलङ्काराणां भेदेन यत् स्थितिः, सा संसृष्टिरिष्टा. सङ्करभेदास्तु नैवम्, अङ्गाङ्गिभावे स्वरूपतः[क] सापेक्षत्वात्, दनिश्चये व्यवस्थितेरेवाभावात्, व्यवस्थिते विषयतः परापेक्षत्वात् विषयाभेदाच्च. सेयं शब्दालङ्कारमात्रस्या-ऽर्थालङ्कारमात्रस्य[ख] वा, शब्दार्थालङ्कारयोर्वेति त्रिप्रकारा. तत्राद्या यथा—

वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥

अत्रानुप्रासयमकयोः परस्परमनपेक्ष्य[ग] व्यवस्थितिः. द्वितीया यथा—

लिम्पतीव तमोऽङ्गानि, वर्षतीवाऽञ्जनं नभः, ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां[घ] गता ॥

अत्रोत्प्रेक्षोपमे परस्परमनपेक्ष्य व्यवस्थिते संसृष्टिं प्रयोजयतः ।

अन्त्या यथा—

सो णत्थि एत्थ गामे, जो एअं महमहन्तलावण्णं[ङ] ।
तरुणाणं हिअअलुडिं परिसक्कंतिं णिवारेइ ॥

अत्रानुप्रासरूपके शब्दालङ्कारौ. नन्वनयोः शब्दार्थरूपाश्रयभेदेन कथमेकार्थसमवायलक्षणा संसृष्टिरिति चेत्, एकत्रार्थे छन्दसि वा समवेतत्वात् ॥ १४० ॥

(इति संसृष्टिः ६०)

(शेषमग्रे)

(क) स्वरूपतत इति पु. ।
(ख) अन्यत्रात्र वाकारो नास्ति ।
(ग) ०मनपेक्ष—इति पु. ।
(घ) ०र्विफलतामिति पा. ।
(ङ) ०लावण्णं इति पु. ।

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीरामानुजाचार्याय ॥

॥ शास्त्रदीपिका ॥

भट्टकुमारिलमतानुगा पूर्वमीमांसासूत्रव्याख्या

विषमपदटिप्पणीसमेता ।

ओं श्रीगणेशाय नमः ।

(*Continued from page* 598. VOL. XII.)

कौत्सादिभिर्यथास्वं एकादिबाधाधिकरणम् ।

सू० सर्वेषामविशेषात् ॥ ९ ॥

कौत्सादीनि निवर्तकानीत्युक्तम्, इदमिदानीं विचार्यते किं कौत्सं सर्वेषां निवर्तकं तथा वसिष्ठस्य जनित्रे तथा क्रौञ्चानि? उतैकमेकस्य द्वे द्वयोः, बहूनि बहूना?मिति, अविशेषात्सर्वत्र सर्वेषां निवृत्तौ प्राप्तायाम् प्राप्तायामुच्यते यत्रैकं श्रूयते तत्रैकस्य निवृत्तिः, यत्र द्वयं तत्र द्वयोर्यत्र बहूनि तत्र बहूनामिति यावन्त्यत्र वैकृतानि तावतामेव प्राकृतानां निवृत्तिः तन्मात्रेणैव वैकृतसामोपदेशस्यार्थवत्त्वादितरनिवृत्तौ प्रमाणाभावात् ॥

विवृद्धाविवृद्धस्तोमकक्रतुषु यथाक्रमं प्राकृतसामबाधाबाधाधिकरणम् ।

सू स्तोमविवृद्धौ[1] त्वधिकं स्याद्-विवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वाच्च ॥ १० ॥

प्रत्यक्षश्रुतैः सामभिस्तावत्सङ्ख्यानां प्राकृतानां विकार इत्युक्तम् । अथेदानीं विचार्यते यत्र स्तोमविवृद्धिर्यथा द्वात्रिंशः पवमानोऽभिषेचनीय इत्यादौ तत्र प्रत्यक्षश्रुतैराजसामभिः प्राकृतानि विक्रियन्ते किं? किं वा समुच्चय इति तत्र विवृद्धस्तोमकेष्वागमेन सङ्ख्यापूरणं वक्ष्यते तत्रागमेन विवृद्धौ पूरितायां प्रत्यक्षश्रुतानि राजसामानि विवृद्धावनवकाशमलभमानानि प्राकृतबाधेन वर्तन्ते तेनाविवृद्धौ विवृद्धौ च सर्वत्र बाध इति प्राप्ते ब्रूमः "प्राकृतानामबाधेन वैकृतानामसम्भवः ।, यत्र तत्रैव बाधः स्याद् विवृद्धौ त्वस्ति

१ स्तोमस्त्रिवृद्धात्त्वधिकमिति पा० ।

सम्भवः, ॥ न ह्यागमेन सङ्ख्यापूरणं वाचनिकं विवृद्ध्यन्यथानुपपत्त्या त्वागमः क्रियते सा चेह विवृद्धिरुपदिष्टातिदिष्टसामभिरेव सिद्ध्यतीति को नामाश्रुतानामागमं कृत्वा ऽतिदिष्टानि बाधेत, तस्माद्विवृद्धौ समुच्चयः ॥

पवमान एव विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्वापाधिकरणम् ।

**सू० पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ ११ ॥**

अविवृद्धौ प्रत्यक्षश्रुतेः कौत्सम्भवतीत्यादिभिस्तावत्सङ्ख्यानां प्राकृतानामुद्वापः, विवृद्धौ तु प्रत्यक्षश्रुतानां राजसामादीनामधिकानामावाप इति स्थितं, तत्र चिन्त्यते किं यस्मिन्कस्मिंश्चित्स्तोत्रे यस्यां कस्यांचिदपि प्रत्यक्षश्रुतानामावापो यतः कुतश्चिच्च प्राकृतानामुद्वापो ऽथवा पवमानेष्वेव गायत्रीबृहत्यनुष्टुप्स्वावापोद्वापाविति तत्र यत्र क्वचिदपि निवेशे वैकृतानामर्थवत्त्वादविशेषः तन्निबन्धनश्च प्राकृतानामुद्वाप इति सोऽप्यविशेषेणैव स्यात्, त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च अत्र ह्येवाऽवपन्ति अत एवोद्वपन्तीत्येतत्तु 'हि'—शब्दोऽपक्षन्यात् वर्तमानापदेशरूपत्वाच्च विधायकं नावापोद्वापौ नियन्तुमलम् । यद्यपि नियामकं तथाऽपि पवमानविषययोरेवावापोद्वापयोर्द्देशविधानार्थं न स्तोत्रान्तरपरिसंख्यानार्थम् इति, उच्यते अपूर्वत्वादस्यार्थस्य विधायकमेवेदं स्तुतिकल्पितविधिशक्तिकमतो वचनात्पवमानेष्वेवावापोद्वापौ । न न्वेकविंशेनातिरात्रेणेत्यादौ स्तोमविवृद्धिरविशेषेण श्रुतासर्वत्र कर्तव्या . सा 'चावापेनैव नाभ्यासेन अभ्यासस्याश्रुतत्वादिति वक्ष्यतिततश्च सर्वस्तोत्रेष्वावापे कर्तव्ये प्रत्यक्षश्रुतानामपि यत्र क्वचिदावापः स्यात् सत्यं, यदि सर्वत्रावाप? स्यात् स तु न्यायात्सर्वत्र प्राप्तोऽत्र ह्येवावपन्ति अत एवोद्वपन्तीति वचनाद्गायत्र्यादिभ्योऽन्यत्र परिसंख्यायते, न चेदमेवा वापस्य वचनमिति निबन्धकारवचनाद्गमितव्यं कौत्सादीनां, पाठादेवा वापसिद्धेः, अन्यत्रापि विवृद्धावागमेन संख्यापूरणं वक्ष्यमाणन्यायसिद्धं न विधातव्यम् एवकारोऽपहतविधिशक्तिकं चेदं तस्मात्परिसंख्या, न च परिसंख्यायास्त्रिदोषत्वम् एवकारेण तस्या एव श्रुतत्वात्, तेन स्तोत्रान्तरेष्वगत्याऽभ्यासेनैव

पूरणम् । ननु कण्वरथन्तरन्यायेन कौत्सादीनां स्वयोनावेव गानाच्च प्राकृतीषु चत्स्वावापप्राप्तिः असत्याञ्च प्राप्तौ कथं परिसंख्या तस्माद्विधिरेव गायत्र्यादिष्वावापस्य नैतदेवं कौत्सं भवतीत्यादिषु साममात्रमुपदिश्यते तद्योनिभूतायास्तृचो नोपदेशेन नातिदेशेन प्राप्तिः, यदि परमक्लृप्तकल्पनाभयादध्ययनसिद्धरूपान्यथाभावभयाच्च स्वयोनावेव गीयते तच्चायुक्तं प्राकृत्यो हि चचः प्रकृतौ क्रमप्रकरणाभ्यामङ्गत्वेनावधारिताः सामानि च प्रतिसंस्कार्यत्वात्प्रधानभूता इहापि स्तोत्राङ्गत्वेनातिदेशतः प्राप्ता न शक्यन्ते बाधितुम्, अतः प्राकृतिष्वेव चत्सु प्रत्यक्षश्रुताऽन्यागम्यमानानि च सर्वाण्यपूर्वाणि सामानि गेयानीति प्राप्ते आवापे परिसंख्यार्थमेव वचनम् एवमेवकारः समर्थितो भवति बृहद्रथन्तरस्य तु यथा स्वयोनावेव स्वयोनेरुत्तरयोश्च गानन्तथा वक्ष्यामः तस्मात्पवमानेष्वावापोद्वापौ ॥

यागादौ विधिशब्देनैव देवताभिधानाधिकरणम् ।

सू० विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥ १२ ॥

दर्शपूर्णमासयोः श्रूयते आग्नेयोऽष्टाकपाल इति बहूनि चाग्नेरभिधानानि अग्निः शुचिः पावक इत्यादीनि तत्र तद्वाचिषु निगमेषु येन केन चिच्छब्देनाग्नेरभिधानं कर्त्तव्यम्? उत विधिगतेनैवाग्निशब्देने? ति "तत्र देवतात्वं विधायाग्नेश्चोदना विनिवर्त्तते । प्रयोगकाल उद्देशो येन केनापि सिध्यति आन्यर्थे देवताकर्त्तव्य इत्येत्यावांश्चोदनार्थः तस्य शब्देनोद्दिश्यमानस्य देवतात्वमिति प्रयोगावस्थायां शब्दोच्चारणमापतति तत्र यमे तु नास्ति प्रमाणं पावक-शब्देनापि ह्युद्दिश्यमाने चोदनाभिहितमग्नेर्देवतात्वं सम्पादितमेव भवति, तस्मादनियम इति प्राप्ते केचित्तावदाहुः-सत्यमर्थस्यैव देवतात्वं चोदनयोच्यते तस्य त्विदमेव देवतात्वं यच्छब्देनोद्देशः तेन तच्छब्दोच्चारणमेव पुरुषस्य व्यापारः स्वव्यापारे चासौ नियोक्तव्यः तेनार्थस्यापि देवतात्वमुक्त्वा तन्मात्रेण पर्यवस्यन्ती चोदना शब्दोच्चारणं यागविधाय पर्यवस्यति तस्यां चावस्थायां विधिगतस्य शब्दस्य सन्निहितस्य परित्यागे कारणाभावात्तदुच्चारणमेव विधी-

यते न शब्दान्तरस्य असन्निहितत्वात्, तस्माद्विधिशब्दनियम इति अस्मिं-स्तु पक्षे स्यादपि कथंचिद्विधिशब्द एव नियमः किं तु यत्र पर्यायेण शब्दद्वयेन देवताविधिः यथाऽग्नये पावकाय निर्वपेदग्नये शुचय इति तत्र द्वाभ्यामपि शब्दाभ्यामेकमर्थमभिधाय तस्य देवतात्वे विहिते शब्दाकाङ्क्षा-वेलायामुभयोः शब्दयोः सन्निहितत्वेऽप्येकेनैवार्थस्योद्देशसम्भवादनुष्ठानमात्रा-विशेषत्वे विकल्पेनान्यतरस्यैवोपादानं स्यात् न द्वयोः, न हि निरपेक्षयोरेक-कार्ययोः समुच्चयः, न त्वेकेनैव वाक्येन विधानात्समुच्चयः सिद्ध्यति, स्यादेव यदि प्रथमोपनिपात एव शब्दस्वरूपं वाक्यार्थोन्वयि स्यात्, अर्थसम-र्पणेन तु चरितार्थौ शब्दौ पश्चादाकाङ्क्षावशादनुष्ठानमात्राविशेषत्वे-दाकाङ्क्षापूरणसामर्थ्याद्विकल्पेनैव ग्रहीतव्यौ । अथैकेनैवार्थस्य देवतात्व सिद्धे द्वितीयः शब्दः स्वरूपपर इत्युच्यते तथा सति तस्यैवोच्चारणं स्या चेतरस्यार्थसमर्पणेन चरितार्थस्य, अथैवमादिषु शब्दस्यैव वाक्यार्थान्व यित्वं तथा सति सर्वत्रैवमेव सिद्धान्तयितव्यम् अवश्यं ह्यत्र शब्दोच्चारण एव पुरुषो नियोक्तव्यः तत्र किमित्यर्थस्य देवतात्वं विधाय पश्चाच्छ-ब्दोच्चारणं विधीयते प्रथममेव शब्दस्वरूपं वाक्यार्थान्वयित्वेन विधी यते तद्विधानेन चार्थस्य देवतात्वं प्राप्तमेवानूद्यते, येन हि शब्देनोद्दिश्य हविस्त्यज्यते तस्यार्थस्य देवतात्वं भवति, तस्माच्छब्दोच्चारणेन तस्यैव विधानाच्च पर्यायप्रसक्तिः ॥

अतिदेशस्थलेऽपि विधि-शब्देनैव देवताभिधानाधिक-रणम्

सू० तथोत्तरस्यां ततौ तत्प्रकृति-त्वात् ॥ १३ ॥

सौर्यादिषु विकृतिषु चिन्त्यते चोदकप्राप्तेषु ऊर्जि(१)त्यादिनिगमेषु किं विधि—शब्द एव वक्तव्यः? उतादित्या दशब्दा अपी? ति संशयः, तत्र विधिवाक्ये हविस्त्यागमात्रे सूर्य—शब्दो विधीयते नोऽज्जित्यादिषु निग-मेषु प्रकृतौ तूज्जित्यादिष्वग्नि—शब्द एव पठित इति तदाश्रयणम् इह त्वसति पाठे येन चिदुपलक्षणमिति प्राप्ते ऽभिधीयते प्रकृतावग्नि—शब्दो

(१) ऊर्जी, ऊर्जि, एवमपि पुस्तकान्तरे पाठो दृश्यते ।

न यागरूपेण संम्बध्यते किं तर्हि यागकरणके भावनापरनामधेये प्रयोगे भावनया ह्यङ्गानि सम्बध्यन्त इति, सप्तमनवमाध्याययोर्व्याख्यातं, तेनाग्नि-शब्दयुक्तः प्रयोगः कर्तव्यः स कियत्कृत्वः केषु च प्रदेशेषूच्चारयितव्य इत्यपेक्षायां याज्यानुवाक्यापाठादुज्झित्याविपाठाच्च तावत्कृत्वस्तेषु च प्रदेशेषूच्चारणीय इति गम्यते विकृतावपि सूर्यशब्दः प्राकृतस्याग्निश-ब्दस्य स्थाने निविशमानस्तेषु प्रदेशेषु वक्तव्यो भवति, तस्माद्वृधि-शब्द एव सर्वेषु निगमेषु विकृतिष्वपि वक्तव्यः ॥

आधाने अग्नेः सगुणेना-भिधानाधिकरणम् ।

सू० प्राकृतस्य गुणश्रुतौ सगुणेनाभि-धानं स्यात् ॥ १४ ॥

सन्त्याधाने पवमानेष्टयः अग्नये पवमानाय अग्नये पावकाय अग्नये शुचय इति तत्र तद्वार्विषु निगमेषु किमेक एवाग्नि-शब्दो वक्तव्यः? किमुभौ शब्दौ वक्तव्यौ अग्नये पवमानाय निर्वपाम्यग्निं पवमानमावहाग्नेः पवमानस्याहमुज्जितिमनूज्जेषमिति "तच्चैकेनार्थनिर्देशसिद्धेर्नोच्चारणं द्वयोः, । स चाग्निशब्दं एवैकश्चोदकानुग्रहाद्भवेत्" स्यादेवं यदि प्रथममर्थं विधाय पश्चाच्छब्दाश्रयणं भवेत् शब्द एव तु भावनाङ्गत्वेन विधीयत इत्युक्तं, तस्मादुभयोर्विधानादुभौ वक्तव्यौ ॥

आधानाज्यभागयोरग्नेर्निर्गुणे-नाभिधानाधिकरणम् ।

सू० बुधन्वान्पवमानवद्विशेषनिर्दे-शात् ॥ १५ ॥

पवमानेष्टिष्वाज्यभागौ प्रकृत्य श्रूयते बुधन्वानाग्नेयः कार्यः पाव-कवान्सौम्य इति तत्र संशयः किं बुधन्वत्तया पावकवत्तया (१) ऽवगुणे न सगुणमभिधानं निगमेषु कर्तव्यं बुधन्वन्तमग्निमावह पावकवन्तं सोम-मावहे? ति. उत विकारेण प्रकृतिवन्निर्गुण? मिति, तदर्थमिदं चिन्त्यते किं देवताविशेषणं बुधन्वत्ता? उत मन्त्रविशेषणं? मिति मन्त्रस्य स्वरूपप्र-करणाभ्यां प्राप्तत्वाद्देवतानिर्देशः; तदयमर्थः आग्नेय आज्यभागो बुधन्वान् बुधन्वच्छब्दयुक्तः कार्यः, तस्य च देवताद्वारेण बुधन्वच्छब्दवत्ता, तदनेन

(१) गुणेन सगुणमभिधानमिति पा० ।

प्रकारेण देवताया बुधन्वता विहिता भवति, तस्मात्सगुणमभिधानं कर्त्तव्यं नैतदेवं मन्त्रान्तराण्यप्यग्निलिङ्गानि सोमलिङ्गानि च प्रकरणे विद्यन्ते, तत्र मन्त्रविशेषनियमार्थं वचनमुपपन्नं तेन मन्त्रद्वारेण बुधन्वत्ताऽन्यभागस्य विधीयते न चाहत्याग्नेर्बुधन्वत्ता विधीयते तद्विताथें वृत्तस्योपसर्ज्जनीभूतस्याग्नेर्विशेषणत्वेन विशेषणान्तरासहत्वात् मन्त्रमेव चाऽग्नेय-शब्देन निर्द्दिश्य तस्यैव बुधन्वत्ता साक्षाद्विधीयते, एवं चोदकप्राप्ता देवता न विकृता भवति ॥

गवानुबन्धनपृषदाज्यहोम-योर्विधिशब्दाभ्यामेव उस्राव-नस्पतिशब्दाभ्यामभिधाना-धिकरणम् ।

सू० विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ॥ १९ ॥

ज्योतिष्टोमे श्रूयते गौरनुबन्ध्य इति तत्राग्नीषोमीयस्य पशोः छागस्य वपाया मेदस इति मन्त्रश्चोदकेन प्राप्तः तत्र मन्त्रान्तरमाम्नातम् उस्राया वपाया मेदस इति तत्र संशयः किं गोशब्दादन्येन येन केनचिदभिधानं कर्त्तव्य ? मुतोस्रा-शब्देनैवेति तथा पशौ वनस्पतिं यजतीति श्रुतं स्विष्ट कृद्विकारश्च वनस्पतिः, तत्र निगमेषु किं विधिशब्दादन्येन केन चिदभिधानम् ? उत विधिशब्देनैवे ? ति किं प्राप्तमुभयत्रापि विधिशब्दादन्येनकेनचित्तदभिधानं तत्र निगमे स्यात् प्रकृतौ विधिनिगमभेदात् पशुशब्देन विधिः, छागशब्देन निगमः तथा स्विष्टकृच्छब्दको विधिः अग्निं स्विष्टकृतं यजतीति निगमस्त्वस्विष्टकृच्छब्दकः ये देव्या ऋत्विजस्तेऽभिरग्न इति, यच्च प्रकृतौ श्रुतं तद्विकृतौ कर्त्तव्यं, तस्मात् गोशब्दादन्येनाभिधानं तदपि येन केन चित् शब्देन उस्राया वपाया मेदस इति च पाठमात्रं न विधिरस्ति तथा वनस्पतावपि विधिशब्दादन्येन येन केनचिदभिधानमिति मन्यते— उच्यते प्रकृतावार्थिको विधिनिगमभेदो न वाचनिकः न चार्थिकं चोदकः प्रतिदिशति, तेनानुबन्ध्याया द्रव्यत्वाद्विधिशब्दनियमाभावे विधिशब्देनान्येन वा येन केनचिदभिधाने प्राप्ते प्रकरणाम्नानादुस्रा-शब्दस्य तेनैवाभिधानं वनस्पतौ तु देवतात्वाद्विधिशब्देनैव ॥

अवभृथे आग्नीवरुणयोः स्विष्टकृच्छब्देनाभिधानाधिकरणम् ।

सू० स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्त्तेत ॥ १७ ॥

अवभृथे श्रूयते "आग्नीवरुणौ स्विष्टकृतौ यजती"ति किं निगमेष्वस्विष्टकृच्छब्दकं वचनमाग्नीवरुणावावहे? ति उत स्विष्टकृच्छब्दकमाग्नीवरुणौ स्विष्टकृतावावहे? ति यद्येषा वचनव्यक्तिः स्विष्टकृत्कार्ये आग्नीवरुणाविति ततोऽग्नीवरुणयोर्देवतात्वादस्विष्टकृच्छब्दकम् । अथैवं वचनं व्यज्यते यत्स्विष्टकृद्गुणेन सगुणां देवतां यजति तदग्नीवरुणौ न केवलमग्निमिति ततः स्विष्टकृत्त्वेनाग्नीवरुणयोर्विधानात्सस्विष्टकृच्छब्दकमिति तत्सिद्ध्यर्थमिदं चिन्त्यते किं स्विष्टकृच्छब्दः प्रकृतौ समुदायप्रसिद्ध्याऽग्नौ प्रयुक्तः? उत स्विष्टकरणयोगेने? ति तत्र भूतस्य स्विष्टकरणयोगस्याग्नावभावाद्रूढ्याऽयं शब्दोऽग्नेर्वाचको ऽतोनाग्नीवरुणयोः शक्नोति वर्त्तितुमतः कार्यलक्षणार्थः स्विष्टकृच्छब्दः स्विष्टकृत्कार्ये ऽग्नीवरुणौ निर्गुणौ विधीयेते तस्मादस्विष्टकृच्छब्दकं वचनम् उच्यते भूतकालतामात्रासम्भवेऽपि स्विष्टकरणयोगस्य तावत्सम्भवाद्भूतकालताया अपि प्रयोगान्तरापेक्षयोपपन्नत्वाच्च समुदायप्रसिद्धौ प्रमाणमस्ति तेन स्विष्टकृद्गुणकावग्नीवरुणौ यष्टव्याविति श्रौत एव स्विष्टकृच्छब्दो न लक्षणा, तस्मात्सगुणयोरेव देवतात्वात्सगुणमभिधानम् ॥

अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेनाग्निशब्देनाग्निरभिधानाधिकरणम् ।

सू० सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ॥ १८ ॥

अग्नीषोमीयपशौ पशुपुरोडाशः तत्र चोदकप्राप्तस्य स्विष्टकृतो गुणलोपः श्रुतः, अग्निं यजतीति किमयं प्रधानमात्रे गुणलोपः? उत सर्वेषु निगमेष्वि? ति प्रधानमात्रे यजतीति लोपश्रवणात् अवशिष्टेषु निगमेषु प्रकृतिवत्स्विष्टकृद्गुणयुक्तमभिधानं प्रयोग एव निर्गुणविधिरिति सर्वत्र गुणलोपः ॥

अनुयाजेषु स्विष्टकृद्व्यपदेशस्य संस्कारकर्मताधिकरणम् ।

सू० स्विष्टकृदावापिको ऽनुयाजे स्यात् प्रयोजनवदङ्गानामर्थसंयोगात् ॥ १९ ॥

दर्शपूर्णमासयोस्त्रयोऽनुयाजास्तृतीयः स्विष्टकृद्देवत्यः स किमवा पिकस्योत्तरार्द्धात्स्विष्टकृते समवद्यतीत्यस्य स्विष्टकृतः संस्कारार्थे? उतारा दुपकारक? इति, तत्र "उभयोर्दर्शशेषत्वाद्विशेषानवधारणात् । न मिथोऽङ्गाङ्गिभावः स्यात्तस्मादारादुपक्रिया ॥ उच्यते देवतास्मरणं ह्यत्र दृष्टमेव प्रयोजनम् । अनूयाजस्य तेनेह न युक्ताऽदृष्टकल्पना ॥ न चादृश्यमाणविशेषत्वम् आवापिकस्य द्रव्यप्रतिपत्त्येष्टदेवतास्मरणेन च कृतार्थत्वाच्चानुयाजिकस्विष्टकृद्देवता संस्कारार्थत्वम्, अनूयाजस्य तु दृष्टप्रयोजनान्तराभावाददृष्टकल्पनापरिहारायावापिकस्विष्टकृत्संस्कारार्थत्वमध्यवसीयते ॥

दर्शपूर्णमासयोर्याज्यापुरोनुवाक्ययोः संस्कारकर्मताधिकरणम् ।

सू॰ अन्वाहेति शब्दवत्कर्म स्याच्चोदनान्तरात् ॥ २० ॥

दर्शपूर्णमासयोः तिष्ठन्याज्यामन्वाह आसीनः पुरोऽनुवाक्यामन्वाहेति किं याज्यापुरोनुवाक्योच्चारणम्? अर्थकर्म - उत संस्कारकर्मार्थप्रतीत्यर्थ? मिति, तत्रार्थप्रतिपत्त्यर्थत्वे रूपादेव प्राप्तमुच्चारणं न विधातव्यं तस्माददृष्टार्थं, सत्यं, यद्युच्चारणं विधीयेत रूपादेव तु प्राप्तमुच्चारणमनूद्य तिष्ठन्नासीन इति गुणविधानाच्च वचनानर्थक्यमतो नादृष्टार्थता ॥

मनोतायामूहाभावाधिकरणम् ।

सू॰ मनोतायान्तु वचनादविकारः स्यात् ॥ २१ ॥

अग्नीषोमीये पशावस्ति मानेतामन्त्रस्त्वं ह्यग्ने प्रथमो मनोते"ति तत्रैव चेदं वचनं यद्यप्यन्यदेवत्यः पशुरग्नेय्येवमनोताकार्येति सोऽयं मनोतामन्त्रः किं विकृतिषु वायव्यादिपशुषु यथादेवतमूहितव्यो ऽथाऽविकारेण प्रयोक्तव्य? इति संशयः तदर्थं च यद्यप्यन्यदेवत्य इत्येतद्वचनं प्रकृत्यर्थ? मुत विकृत्यर्थ? मिति तत्र पशोरग्नीषोमदेवत्यत्वात्केवलाग्निदेवत्या मनोता तत्रासामर्थ्यादुत्कृष्यमाणावचनेनानेन वार्यते यद्यपि द्विदेवत्यः तथाऽप्येकदेवत्यैव मनोता तत्र कार्या नोत्क्रष्टव्येति, न चानेन वचनेन विकृतिषूहः प्रतिषिध्यते प्रकृतावेवार्थवत्त्वादिति विकृतिषु कार्यं कुर्यात्तद्वचनेनावस्थापिता मनोता न प्रकृतावदृष्टार्था येन विकृतिषु नोह्येत,

शक्नोति ह्यसावग्निद्वारेण लक्षणया देवताभूतावग्नीषोमौ प्रकाशयितुं, तस्माद्वायव्यादिषु यथादेवतमूहितव्येति प्राप्ते ब्रूमः "अग्निद्वारेण मन्त्रोऽयमग्नीषोमौ प्रकाशयन्। वचनेनैव वचनं प्रकृतावधितिष्ठते॥ न च विकृतिषु सामान्यसम्बन्धोऽस्ति, येन लिङ्गेन केवलाग्निदेवत्याया उत्कर्षः स्यात् तस्मान्नोत्कर्षप्राप्तिः येन तन्निवारणेन प्रकृतावेव वचनं कार्यं कुर्यात्, तस्माद्विकृतिषु यथादेवतमूहे प्राप्ते तन्निवारणार्थं वचनमिति वायव्यादिष्वनूह इत्यग्नि—शब्दस्याबाधः॥

कण्वरथन्तरस्य स्वयोनौ गानाधिकरणम्।

सू० पृष्ठार्थेऽन्यद्रथन्तरं तद्योनिपूर्वत्वात्स्यादृचां प्रविभक्तत्वात्॥२२॥

वैश्यस्तोमे श्रूयते कण्वरथन्तरं पृष्ठं भवतीति तत्र संशयः किं कण्वरथन्तरं बृहद्योनौ रथन्तरयोनौ वा गेयम्? उत रथन्तरयोनावेव? उत स्वयोनौ? इति, तत्र कण्वरथन्तरशब्देन साममात्रं प्राकृतयोः साम्नोः स्थाने विधीयते तद्योनिभूतयोस्तृचोः प्रकृतौ क्रमकरणाभ्यामङ्गत्वेनावधारितयोरिह चोदकेन प्राप्तयोर्नास्ति किञ्चिन्निवर्त्तकं, तस्मात्तयोरन्यतरत्र गानम् अथ वा कण्वस्य रथन्तरं कण्वरथन्तरमिति यौगिकोऽयं शब्दः रथन्तरशब्दश्चारथन्तरे तद्धर्मातिदेशार्थः, तस्माद्रथन्तरयोनावेव गेयं नैतदेवं कण्वसम्बन्धे प्रमाणाभावात्, तस्माद्रूढोऽयं कण्वरथन्तरशब्दो न कण्वस्य रथन्तरम् इत्येवं प्रवृत्तः, तस्मान्न तावद्रथन्तरयोनावेव गेयं, नापि बृहद्योनौ रथन्तरयोनौ वा किन्तु स्वयोनावेव, कस्मात् उत्तराग्रन्थे तस्यास्तदुत्तरयोश्च पठितत्वात् कृत्स्नोह्युत्तराग्रन्थः एकं साम तृचे क्रियते स्तोत्रीयं यद्योन्यां तदुत्तरयोर्गायतीति वचनार्थानुष्ठानाय ऋग्विशेषापेक्षायां तत्परिज्ञानाय योनय उत्तराश्च प्रतिसाम विभक्ता उत्तराग्रन्थे ऽपठ्यन्ते नावृत्त्यर्थं कण्वरथन्तरयोनिरपि तत्रैव पठिता सा, यत्र कण्वरथन्तरं तदङ्गत्वेन ज्ञायते तस्मात्स्वयोनौ गेयम्, एवं चाम्नानसिद्धर्क्परित्याग ऋगन्तरसञ्चारश्च न कल्पितौ भवतः कौत्सादिसाम्नान्तु योनिरुत्तराग्रन्थेन पठितेति तेषां प्राकृतीष्वेव ऋक्षु गानम्॥

कण्वरथन्तरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् ।

सू॰ कार्यत्वादुत्तरयोर्यथा प्रकृति ॥२३॥

कण्वरथन्तरस्यैवोत्तरागाने संशयः किं बृहदुत्तरयोरथन्तरोत्तरयोर्वा गानम्? उत स्वयोन्युत्तरयोरपि? तत्र स्वयोन्युत्तरयोरपि गीयमानस्याम्नानसिद्धत्वादित्याग आगन्तरस्यास्वाराावपरिहार्यो इदं वोदकप्राप्तयोरेव गानमिति मन्यते उत्तरायन्थे पाठस्तु स्वयोनिवदुत्तरयोरप्यविशिष्ट इति स्वयोन्युत्तरयोरेव गानम् ॥

अग्निष्टुति स्तुतशास्त्रयोरविकाराधिकरणम् ।

सू॰ ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ॥ २४ ॥

अग्निष्टुति श्रूयते आग्नेया ग्रहा भवन्तीति प्रकृतौ नानादेवत्यानि स्तोत्रशस्त्राणि तानि यदि देवतासंस्कारार्थानि ततोऽग्निष्टुति यथादेवतमूहितव्यानि तेषां स्वार्थकर्मत्वं द्वितीये स्थितं तस्मादविकार इति द्वितीयसिद्धस्यैव प्रयोजनकथनमेतत् ॥

चातुर्मास्येषु आज्यशब्दस्याविकारेणावाहनाधिकरणम् ।

सू॰ उभयपानात्पृषदाज्ये दध्नः स्यादुपलक्षणं निगमेषु पातव्यस्यो-[1]पलक्षणत्वात् ॥ २५ ॥

चातुर्मास्येषु श्रूयते पृषदाज्येनानुयाजान् यजतीति सन्ति प्रकृतावाज्यपशब्दयुक्ताः निगमाः देवानाज्यपानावह स्वाहा देवानामाज्यपान्देवानामाज्यपानां प्रियाधामानि देवाआज्यपा आज्यमजुषन्तेति आज्यप-शब्देन च तत्र प्रयाजानुयाजदेवता उच्यन्ते अत्र च पृषदाज्येनानुयाजा, यष्टव्याः तदिह संशयः आज्यप-शब्दस्याज्यदधिपानित्येव विकारः,? अथ वा दधिपानि? ति उत पृषदाज्यपानिति अहोस्विदविकारेणैव प्रयोग? इति यद्युभयं हविस्ततः प्रथमः पक्षः यदि द्रव्यैकत्वं ततो द्वितीयः यदि पृषदाज्यं नाम द्रव्यान्तरं हविस्ततस्तृतीयः, अथ त्वाज्यमेव हविः तस्य तु पृषत्त्वं विशेषता

1 उपलक्षणादिति पा॰ ।

संस्कारमात्रं तज्जननार्थं च दधि ततः सिद्धान्तः तत्र पृषदाज्यं गृह्णाति द्वयं वा इद सर्पिश्च दधि चेति तुल्यवत्सङ्कीर्तनादुभयं हविः । नन्वेकेन प्रकृतौ देवतोपलक्षिता तेनेह यद्यप्युभयं हविः तथाऽप्येकेन देवतोपलक्षणसिद्धेर्नोभयादरो यज्ञपतिशब्दवदिति चेत् स्यादेवं यदि यज्ञपतिवत्पराथं हविः तदपि देवतावदनुष्ठानाङ्गत्वेन स्मर्तव्यमेव तस्मादुभयोपलक्षणम् अथ वा द्विरुपस्तृणाति सकृदभिघारयतीत्युपस्तरणाभिघारणवादाद्दधिसंस्कारार्थमाज्यं दध्येव हविः ततो दधिपानित्येव वक्तव्यं, नैतद् द्वयमपि युक्तं ग्रहणे हि दध्याज्ययोस्तुल्यत्वं दध्नो वा प्राधान्यं गम्यते यागे त्वाज्यमेव पृषत्त्वगुणकं करणत्वेन श्रुत्या विधीयते नोभयं, नापि दधि, यच्च यागद्रव्यं तदर्थो ग्रहणसंस्कारः तस्माद्ग्रहणे ऽप्याज्यमेव प्रधानं तस्य तु पृषत्तासम्पादनार्थं दधि गृह्यते न स्वार्थेनानुपयोगित्वात्, तथाविधे तु दधनि तुल्यनिर्देश उपस्तरणादिवादेन च प्राधान्यनिर्देशोऽर्थवादमात्रं तस्मादविकारः । अन्यस्त्वाह दध्ना आज्येन द्रव्यान्तरं निष्पद्यते तस्य वाचकः पृषदाज्य-शब्दः, तच्च हविः पृषदाज्येनानूयाजान् यजतीति वचनात् तस्मात्पृषदाज्यपानिति वक्तव्यं, स्यादेतदेवं यदि पृषदाज्य-शब्दः समुदायशक्त्या द्रव्यान्तरमभिधत्ते न त्वेवमस्ति पृषच्छब्दो[1] हि लोके चित्रत्ववचनः पृषद्रजुः पृषन्मणिरिति तेन पृषदाज्येन चित्रेणाज्यनेत्यर्थः, तेन प्राकृतस्यैवाज्यस्य हविषश्चित्रता गुणमात्र विधानम्, एवं च गुणं सम्पादयितुं दधि गृह्यते प्राधान्यनिर्देशोऽर्थवादमात्रं हविरेव च प्रकृतावुपलक्षितं न हविर्गुणः अविकारेण तेनाज्यपानित्येवोपलक्षणं चोदकानुग्रहश्चैवमविकाराद्भविष्यति ॥

इति शास्त्रदीपिकायां दशमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

( शेषमग्रे )

---

१ पृषदाज्य-शब्दो ह्रीति पा० ।

॥ श्रीः ॥

श्रीमद्रामानुजाचार्यप्रणीत इति प्रसिद्धो

# वेदान्ततत्त्वसारः ॥

श्रीमते रामानुजाय नमः ॥

*(Continued from page* 439, Vol. XI.*)*

जीवब्रह्मणोरज्ञानकृतो भेद,स्तद्विषया भेदश्रुतिरिति चेत्तथापि जीवाज्ञानपक्षे पूर्वोक्तो विकल्पस्तत्फलं च तदवस्थम् । ब्रह्माज्ञानपक्षे स्वप्रकाशस्वरूपस्य ब्रह्मणो ऽज्ञानसाक्षित्वं तत्कृतजगत्सृष्टिश्च न संभवति । अज्ञानेन प्रकाशस्तिरोहितश्चेत्, तिरोधानस्य प्रकाशनिवृत्तिकरत्वेन प्रकाशस्यैव स्वरूपत्वात्स्वरूपनिवृत्तिरेवेति स्वरूपनाशादिदोषसहस्रं प्रागेवोदीरितम् । "अधिकन्तु भेदनिर्देशात्" । तुशब्दः पक्षं व्यावर्त्तयति । आध्यात्मिकादिदुःखयोगार्हात्प्रत्यगात्मनो ऽधिकमर्थान्तरभूतं ब्रह्म, कुतः, भेदनिर्देशात्, प्रत्यगात्मनो

It may be said that the difference between Soul and Brahma is the product of ignorance, and that the Śruti passages which speak of difference relate to this ignorance—imagined difference, (and not to any real distinction). Here, also, on the view that ignorance resides in Soul, the afore-mentioned dilemma (240) would present itself, and the same consequence would follow. If you maintain that ignorance resides in Brahma, we reply that Brahma being of self-luminous essence cannot be a witness of ignorance, nor can (241) the creation of the world be a result of such witnessing. If you say that the light (luminous nature or essence of Brahma) is concealed by ignorance, we reply that concealment causes failure of light; hence as light (luminousness, self-manifestation) is the essence of Brahma), there would

240. Namely, that stated on p. 73.

241. The creation of the world (duality) is held by the Śaukaras to be the result of Brahma's being a witness (perceiver) of Nescience.

हि भेदेन् निर्द्दिश्यते परं ब्रह्म, "य आत्मनि तिष्ठन्नात्मनो ऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मनो ऽन्तरो यमयति स त आत्मान्तर्य्याम्यमृत: ", "पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्तत-स्तेनामृतत्वमेति", "स कारणं करणाधिपाधिप: ", "तयोरन्य: पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो ऽभिचाकशीति", "ज्ञाज्ञौ द्वावजावीशा-नीशौ ", "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्नि-रुद्ध: ", "प्रधानक्षेत्रज्ञपतिर्गुणेश: ", "नित्यो नित्यानाम् ", "यो-ऽक्षरमन्तरे सञ्चरन्यस्याक्षरं शरीरं यमक्षरो न वेद एष सर्वभूतान्त-

occur a failure (destruction) of essence. The destruction of essence thus involved, and innumerable other faults have already been spoken of.

Again, there is the Sūtra, "But (242) (Brahma) is ulterior to Soul (or Self), because of there being a declaration of difference." The word 'but' sets aside the (opposite) view. Brahma is ulterior, is a different being from the Internal Soul or Self, which is susceptible of connection with pain originating in the (corporeal) self etc. Whence? 'Because of there being a declaration of difference'—because the Supreme Brahma is declared to be distinct from the Internal Soul in such Śruti passages as "He (243) who dwelling in Soul is within Soul, whom Soul does not know, whose body Soul is, who rules Soul within, he is thy Soul (Self), the ruler within, the immortal," "But (244) when he regards Soul and the Actuator as distinct, then delighted thereby (or together with him, the Actuator, the Supreme Spirit), he attains immortality." "He (245) is the cause, the lord of the

242. Brahma Sūtras II. 1. 22.

243. Brihad Āranyaka Upanishad III. 7. 22. *Atmā* instead of *vijnāna*, according to the Mādhyandina text.

244. Śvetāśvatara Upanishad I. 6.

245. Ibid. VI. 9.

रात्मा ऽपहतपाप्मा दिव्यो देव एको नारायण" इत्याद्याः । तथा सुषुप्तावपि जीवपरयोर्भेदः "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्च-न वेद नान्तर"मिति स्वापदशायां जीवस्य सर्वज्ञेन परमात्मना निरस्तसमस्तभ्रमस्य बाह्याभ्यन्तरज्ञानलोपः श्रूयते, न ह्यकिञ्चि-ज्ज्ञस्य तदानीमेव सर्वज्ञेन सता स्वेन परिष्वङ्गः सम्भवति । "सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवती" त्यत्रापि न जीवपरयोः स्वरूपैक्यमुच्यते, अपि तु सुषुप्तिकाले नामरूपानुसन्धानाभावात्प्रलय-काल इव ब्रह्मणि लयः प्रतिपाद्यते, स्वमपीतो भवति स्वात्मनि

lord of the organs," "One (246) of them eats the sweet fruit the other looks on without eating," "There (247) are two, one knowing, the other not knowing, both unborn, one strong, the other weak," "From (248) this the Māyā—associated one creates all this, and in it another (Soul) is imprisoned by Māyā," "The (249) Master of Nature and of Soul, the lord of the qualities," "He (250) is the eternal among the eternals (the supremely eternal)," "He who pervades the imperishable (Soul), whose body the imperishable is, whom the imperishable does not know, is the inner Soul of all beings, devoid of sin, the one heavenly deity Nārāyaṇa."

(251) Moreover, in deep-sleep also there is difference between Soul and the Supreme Spirit, for in the words "This person embraced by the omniscient Soul knows nothing that is without, nothing that is within," it is declared that in the state of deep sleep there is a sublation of all knowledge pertaining to Soul of what is without and within, because it has been freed

246. Ibid. IV. 6.
247. Ibid. I. 9.
248. Ibid. IV. 9.
249. Ibid. VI. 16.
250. Ibid. *Śloka* 13.
251. Repeated from p. 62.

ब्रह्मणि लीनो भवति न तु स्वस्मिन्नेव स्वस्य लयः सम्भवति। अत्रापि सता सोम्य तदा सम्पन्नो भवतीति तृतीयास्वारस्यात्सम्पत्तिशब्दस्य परिष्वङ्गशब्दैकार्थ्यान्न स्वरूपैक्यसम्भवः। तथा च सूत्रकारः "सुषुप्त्युत्क्रान्त्योर्भेदेने"ति। तथा च "विवक्षितगुणोपपत्तेश्च", "अनुपपत्तेस्तु न शारीर" इति। वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यऽनादर" इति। ननु "स क्रतुं कुर्वीते"ति विहितमुपासनम्, तत्रायं गुणविधिः, असता च गुणेनोपासनं विहितार्थं स्यात्, "मनो ब्रह्मेत्युपासीते"-

from all weariness (when embraced) by the all-knowing Supreme Spirit; for one who is devoid of knowledge cannot at the same time be embraced by his own self being all-knowing and truly existent. And in "He then becomes united with the existent, my dear child, he is gone to his own self," it is not declared that there exists a unity of essence in the case of Soul and the Supreme Spirit, but rather it is taught that because of the non-existence of consciousness as to name and form in the time of deep sleep there is absorption in Brahma as in the time of the dissolution of the universe. "He is gone to his own self," i. e. he is then absorbed in Brahma as his own self, but his own absorption in his own self is impossible. Also in "He then becomes united with the existent, my dear child," the words 'united with' agreeing in meaning with the word 'embraced,' in accordance with the proper force of the third (instrumental) case, it is impossible that Soul and Brahma should be one in essence. Hence the author of the Sūtras has said, "Because there is representation of difference in deep sleep, and in the going forth (of Soul at death)."

Of like import are the Sūtras "Because (252) the qualities that are to be described find place in (are possible, belong to)

252. Brahma Sūtras I. 2. 2.

तिवत्, अन्यथा, "अशब्दमस्पर्शमि" त्यादिनिर्गुणवाक्यविरोधः, अतो मनोमयत्वादयो न पारमार्थिका इति चेन्नैवं "सर्वत्र प्रसिद्धोपदेशादि," ति सूत्रविरोधात् । सर्वेषु वेदान्तेषु प्रसिद्धं ब्रह्म, इह च "सर्वं खल्विदं ब्रह्म तज्जलानि" ति शान्त उपासीते ति वाक्योपक्रमे श्रुतं तदेव मनोमयत्वादिभिर्धर्मैर्विशिष्टमुपदिश्यत इत्यर्थः । न हि सर्वेषु वेदान्तेषु कल्पितगुणोपदेशादितिहेतुर्वक्तुं शक्यते साध्याविसिद्धिप्रसङ्गात् । न च "सर्वं खल्विदं ब्रह्मे" ति वचनमेवाभावज्ञापनार्थमिति वाच्यम्, 'तज्जलानि' तिहेतुविरोधात् । किञ्च, यदि "सर्वं खल्विदं ब्रह्मे"-

Brahma alone," "Because (253) they do not find place in the embodied one, Soul, (that is not referred to as intelligent, etc)." The qualities about to be described find place in the Supreme Spirit alone—"He (254) who is intelligent, whose body is vital spirit, whose form is light, whose resolves are real, whose essence is like ether, whose are all works, all desires, all smells, and all tastes, who embraces all this, who is without speech, and without regard (for any object, as one with no desire unsatisfied)."

But it may be said that the preceding words (255) "Let him thus meditate" contain the meditation (upāsana) enjoined, the foregoing 'He who is intelligent,' etc., is an injunction of qualities by the ascription of which the meditation is to be performed, and, furthermore, meditation by means of unreal qualities may be the matter enjoined (256), as in the text "Let (257) him meditate

253. Ibid. Sūtra 3.

254. Chhāndogya Upanishad III. 14. 2.

255. Namely, in the passage just quoted.

256. Or, as this translation seems to require *vihitārthah*, perhaps the more correct translation would be 'and this meditation may have its object (viz. Brahma) enjoined (declared) through the medium of unreal qualities.'

257. Chhāndogya Upanishad III. 18. 1.

तिवचनमेवाऽऽभासनान्मिथ्यात्वविधिस्तर्हि पुनः "स क्रतुं कुर्वीतेति" सगुणोपासनविधिरनर्थकः स्यात्, नहि निर्विशेषज्ञानवतः सगुणोपासनविधिरिति सङ्गतं भवति । "अशब्दमस्पर्शमि" त्यादि श्रुतिस्तु भूतभौतिकवैलक्षण्यं ब्रह्मणः प्रतिपादयतीति न विरोधः, "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणा" इति स्मृतेः । ननु तत्र "तथा ऽरसन्नित्यमगन्धवच्चे" ति गन्धरसादेर्निषेधः, इह तु "सर्वगन्धः सर्वरस" इति यावद्गन्धरसविधिः, न चैकस्मिन्वस्तुनि गुणतदभावावुपपन्नाविति तस्माद्विषयभेदवर्णनेन हि विरोधपरिहारः कार्यः । स च कार्य्यब्रह्मणि मनोमयत्वादिः, शुद्धे त्वशब्दत्वादिरिति चेन्न "विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति", "पतिं विश्वस्यात्मे-

on mind as Brahma," (where mind is only an assumed quality of Brahma); for otherwise such sentences as "without (258) voice, without touch," teaching that Brahma is without qualities, would be contradicted. Hence intelligence and the other qualities mentioned are not real.

We reject this view, for the reason that it would contradict the Sūtra "Because (259) of the setting forth of one certified in all." Its meaning is that in all the Vedānta texts Brahma is certified, and here (in the Chhándogya Upanishad) the very same being that is mentioned in the beginning of the passage—"One should thus calmly meditate, 'All this is Brahma, for it is produced, absorbed, and breathes in that'"—is (in III. 14. 2.) set forth as differenced by intelligence and other qualities. For it cannot be alleged that the argument contained in the Sūtra is 'Because of the setting forth of fictitiously—ascribed (unreal) qualities in all the Vedánta texts', seeing that that would involve the disproof of what both the Vedānta and your system seek to prove (viz., the true nature of Brahma).

258. Katha Upanishad I. 3. 15.
259. Brahma Sūtras I. 2. 1.

श्वरं शाश्वतं शिवमच्युतं", "यमन्तःसमुद्रे कवयो वयन्ति", "न तस्येशे कश्चन", "तस्य नाम महद्यशः", "परात्परं यन्महतो महान्तम्", "न तत्समश्चाभ्यधिकश्च दृश्यते", "न त्वत्समः", "परं हि पुण्डरीकाक्षान्न भूतो न भविष्यति", वाराहे "नारायणात्परो देवो न भूतो न भविष्यति", ब्राह्मे "न हि विष्णुसमा काचिद्गतिरन्याभिधीयते । इत्येवं सततं वेदा गायन्ते नात्र संशयः" ॥ श्वेताश्वतरे,

Nor can it be said that the words 'all this is Brahma' are really intended to make known the non-existence (of all but Brahma), for that would be opposed to the argument which follows—' for it is produced, absorbed, and breathes in that.' Moreover, if the words 'all this is Brahma' are really an injunction (declaration) of the falsity (of all but Brahma) by declaring the world to be a mere appearance (or by making manifest its real nature), then the following injunction of meditation on Brahma as possessed of qualities, viz. 'Let him thus meditate,' would be meaningless; for it would be irrational to hold that one who has received the knowledge that Brahma is undifferenced (devoid of qualities) should afterwards be enjoined to meditate on Brahma as possessed of qualities. As for 'without voice, without touch' and other Śruti passages, they teach that the nature of Brahma is different from that of the elements and the products of the elements; hence they do not contradict those passages which describe the possession of qualities (as 'He who is intelligent,' etc.). For as the Smṛiti says, "The qualities of Nature, viz., *sattvádi,* pertain not to the Lord."

But it may be said that in the passage just quoted ('without voice, without touch,' etc.,) the words 'Likewise without taste, eternal, without smell,' are a denial of smell, taste, etc., but here (in the passage 'He who is intelligent,' etc.), the words 'whose are all smells and all tastes' are an affirmation of all smell and taste (as qualities of Brahma), and there cannot be in the same

" स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद् यः ।
प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः " ॥
" एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च " ॥
" सगुणो निर्गुणो विष्णुर्ज्ञानगम्यो ह्यसौ स्मृतः, न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिले-

entity both qualities and the absence of qualities. Hence the (apparent) contradiction is to be repelled by describing (setting forth) a distinction of subjects (in the Vedic texts), namely thus, that intelligence and other qualities (therein mentioned) pertain to Brahma viewed as an effect, and voicelessness, etc., to the pure (absolute) Brahma.

This, too, we reject, for the following and other passages of the Sruti and Smriti prove that to Nārāyaṇa alone pertains the highest nature, and that he is endowed with qualities as possessing divine and excellent qualities, and devoid of qualities as free from natural (pertaining to Prakriti) and evil qualities,—" All this is the (Supreme) Spirit, all lives through him," " The master of all, the lord of soul, the eternal, blessed, imperishable," " Whom (260) sages weave (as weavers a piece of cloth) in the midst of the world-ocean, (that is, whom sages know to pervade all things)," "There is none who rules over him," " His (261) name is Great Glory," " One who is higher than the high, and greater than the great," " There is none seen equal to him, or superior," " There (262) is none equal to thee," " There never has been, nor will be, one greater than the lotus-eyed Vishṇu," (in the Varāha Purāṇa) " There has not been, nor will be, a greater deity than Nārāyaṇa," (in the Brahma Purāṇa) " There is declared no other refuge like unto him, so, without doubt, the Vedas steadfastly

260. Mahānārāyaṇa Upanishad 3.
261. Śvetāśvatara Upanishad IV. 19.
262. Bhagavadgītā XI. 4. 3.

गुणेः", "एष आत्मा ऽपहतपाप्मा", "परा ऽस्य शक्तिर्विविधैव श्रूयते", "तत्त्वं नारायणः पर" इत्यादिश्रुतिस्मृतिभिर्नारायणस्यैव परतत्त्वं दिव्यकल्याणगुणयोगेन सगुणत्वं प्राकृतहेयगुणरहितत्वेन निर्गुणत्वमिति विषयभेदवर्णनेनैकस्यैवावगमाद्ब्रह्मद्वैविध्यं दुर्वचनमिति दिक् ॥

इति श्रीमद्रामानुजाचार्य्यप्रणीत इतिप्रसिद्धो वेदान्ततत्त्वसारः सम्पूर्णः ॥

proclaim," (in the Śvetāśvatara Upanishad) " He is omnific, omniscient, self-caused, who knows, is the author (or destroyer) of time, endowed with qualities, all-knowing, master of Nature and Soul, lord of the qualities, the cause of the bondage, the existence, and the liberation of the world," " One God hidden in all beings, all-pervading, the inner soul of all beings, the supervisor of works, the dweller in all beings, the witness, the observer, absolute, and without qualities," " Endowed with qualities, devoid of qualities, attainable by knowledge, is Vishṇu ; all the companies of holy sages cannot declare all his qualities though he is separate from the qualities of Nature (*sattvādi*)," " This Spirit is devoid of sin," " His supreme power is declared to be manifold," " Nārāyaṇa is the (highest) being, the supreme."

By thus describing (setting forth) a distinction of subjects, since it appears that Brahma is one only, a two-fold nature is wrongly asserted.

Thus far a brief indication (of the system of Rāmānuja, and his refutation of Śānkara doctrines).

J. J. JOHNSON.

श्रीमते मीमांसाद्वयगुरवे रामानुजाचार्याय नमः ।

# अथ श्रीभाष्ये ।

## प्रथमाऽध्याये द्वितीयः पादः ।

(*Continued from page* 587, VOL. XII.)

भू० तस्मादीदृशं जगदुपसंहारित्वरूपमभोक्तृत्वं परमात्मन एव ॥

सू० प्रकरणाच्च ॥ १० ॥

प्रकरणञ्चेदं परस्यैव ब्रह्मणः "महान्तं विभुमात्मानम्मत्वा धीरो न शोचति" "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" "यमेवैष वृणुते स तेन लभ्यः तस्यैष आत्मा विवृणुते तनुं स्वामि"ति प्रकृतं क इत्था वेद यत्र स इत्यपि हि तत्प्रसादादृते तस्य दुरवबोधत्वमेव प्रस्तुतं पूर्वं प्रत्यभिज्ञायते ।

टी० "तस्मादि"ति, सोऽध्वन इत्यादिवाक्ये विष्णोः श्रूयमाणात्वान्मृत्यूपसेचनसामर्थ्यसिद्धचराचरादनीयत्वाच्च कृत्स्नजगदुपसंहर्तृत्वरूपमेवेदं भोक्तृत्वमिति नेदं कर्मनिमित्तम्, अतः परमात्मैवात्तेत्यर्थः ॥ सू० प्रकरणाच्च । १० । स्ववाक्यस्थहेतुः पूर्वमुक्तः प्राकरणिकहेतुरत्रोच्यते अस्य सूत्रस्य न "जायते म्रियत" इत्यादिवाक्यं विषयतया परैरुपात्तं तदयुक्तं, पित्रादिमरणस्येव परमात्मनो हन्यमानत्वस्य लोकप्रसिद्ध्यभावेन तन्निषेधायोगात् एतत्स्वरूपेण "न जायते म्रियते वा कदाचिदि"ति भगवद्गीतावचनेनास्य वाक्यस्य जीवपरत्वावगमात्, उभौ तौ न विजानीतो नायं हन्ति न हन्यत इत्यनन्तरोक्तहन्तृहन्तव्यताभ्रान्तेः परमात्माश्रयत्वायोगेन जीवपरत्वोपपत्तेश्च अतो "नायमात्मा" "महान्तं विभु"मित्यादिरेव विषयः एकप्रकरणत्वद्योतनमित्यत्राह "क इत्थे"ति, तत्प्रसादादृते तस्य दुरवबोधत्वस्य पूर्वोक्तस्य प्रत्यभिज्ञानादित्यर्थः । केश्चिदेवमुक्तम् "अशरीरं शरीरेष्व-

नवस्येऽवस्थितमि''ति, परमात्मनः शरीरेऽवस्थितिश्रवणात् यस्य ब्रह्म च क्षत्रं चेत्यनेन श्लोकेन शरीरे हृदयप्रदेशे वा परस्य स्थितिरिति जिज्ञास्यते अत एव हि क इत्था वेद यत्र स इति वचनं न पुनः कस्तं वेदेति तदनेन निरस्तं वेदितव्यं प्रश्नानुगुणप्रतिवचनादर्शनात् । ननु अनन्तरमेव दृश्यते— "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टा''विति चेत्सत्यं श्रूयते तत्र स्थानत्वेन किमुक्तं किं सुकृतस्य लोकः ? उत गुहा ? तत्र सुकृतस्य लोक इति शरीरं वाऽन्यद्वा उभयमपि शरीरसम्बन्धिदेशविशेषो न भवतीति तत्रोत्तरम्भवितुमर्हति, न च स्थानमात्रमेव पृष्टम् अशरीरं शरीरेष्वित्यनेनैव तत्सिद्धेः । अथ गुहा स्थानत्वेन निर्दिष्टा साऽपि पूर्वमेव ज्ञातेति न प्रश्नसम्भवः गुहाहितं गह्वरेष्ठं पुराणमिति हि श्रुतं यत्र स इत्येकवचनेन पृष्टे पिबन्ताविति द्विवचनोत्तरं चानुचितम्, अतः क इत्था वेदेति वाक्यस्य यथोक्त एवार्थः । उत्तरसूत्रस्य शङ्कामाह—

सू० अथ स्यान्नायं ब्रह्मक्षत्रौदनसूचितः पुरुषोऽपहतपाप्मा परमात्मा अनन्तरम् "ऋतम्पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता" इति कर्मफलभोक्तुरेव सद्वितीयस्याभिधानात्, द्वितीयश्च प्राणो बुद्धिर्वा स्यात् ऋतपानं हि कर्मफलभोग एव स च परमात्मनो न सम्भवति बुद्धिप्राणयोस्तु भोक्तृजीवस्योपकरणभूतयोः यथाकथञ्चित्पानेऽन्वयः सम्भवतीति तयोरन्यतरेण सद्वितीयो जीव एव प्रतिपाद्यते, तदेकप्रकरणत्वात्पूर्वप्रस्तुतोऽत्ताऽपि स एव भवितुमर्हतीति, अत्रोच्यते—

टी० "अथ स्या''दिति, प्रकरणविच्छेदं दर्शयति "ऋतं पिबन्ताव''ति, लिङ्गाद्धि प्रकरणं दुर्बलम् ऋतपानलिङ्गबलात्तु प्रकरणविच्छेदोऽत्र प्रतिपाद्यते, यस्य ब्रह्म चेति वाक्यापेतया महान्तं विभुमित्यादि परमात्मप्रकर-

णविच्छेदो माभूत् ऋतपानान्वयवाक्येन्तु विच्छिन्नं स्यादिति शङ्कापरिहारार्थमनन्तरमित्युक्तं, महान्तमित्यादिवाक्यानां व्यवहितत्वाद्विच्छेदो युक्तः, न तु यस्य ब्रह्म चेति वाक्येनाऽव्यवहितस्य ऋतं पिबन्ताविति वाक्यस्येति भावः। द्वयोस्समप्राधान्यशङ्कापरिहारार्थं सद्वितीयस्येत्युक्तम्, अत भोक्तुर्जीवत्व? कथं द्वितीयस्य च बुद्धिप्राणयोरन्यतरत्वं? कथं कथं न परमात्मत्व"-मित्यत्राह "ऋतपानं ही"ति, कर्मफलभोग एवेति न हि सर्वसंहर्तृत्वमुच्यत इतिवत् ऋतपानस्य निर्वाहान्तरं सुवचमिति भावः। ततः किमित्यत्राह "स चे"ति, भवदभिमतस्य कथं तत्सम्भव इत्यत्राह "बुद्धी"ति, यथाकथंचिदिति उपकरणत्वेनान्वय इत्यर्थः। करणे कर्तृत्वोपचारात् पिबन्ताविव्युक्तमिति भावः। तयोरन्यतरेण सद्वितीयो जीव एवेति। अयमभिप्रायः यद्यपि प्रयोजककर्तरि परमात्मनि उपकरणभूतबुद्धिप्राणयोरन्यतरस्मिंश्च पिबन्ताविति निर्देशस्य क्लिष्टत्वं समानन्तथाऽपि बुद्धिप्राणयोरन्यतरपरिग्रहो न्याय्यः प्रथममेव हि पिबन्ताविति निर्देशेन भोक्ता जीवः प्रतिपन्न इत्यविगीतं, द्वितीयविशेषे हि विप्रतिपत्तिः तत्र गुहावच्छिन्नत्वं सुकृतसाध्यलोकवर्तित्वञ्च सर्वगतस्य परस्य स्वरसतो न सम्भवति अप्रकाशप्रकाशरूपार्थपरच्छायातप-शब्दाभ्यामचिदन्तःकरणचेतनोपस्थापनं युक्तन्तत्र प्रथमत एवानेकैः पदैः स्वरसतः प्रतिपन्नस्य भोक्तुः प्राधान्येन प्रतिपाद्यत्वं यथा न विरुध्यते तथा द्वितीयो वक्तव्यः, द्वितीयस्य परमात्मत्वे भोक्तुः प्राधान्येन प्रतिपाद्यत्वं विरुध्यते उपकरणभूतान्तःकरणस्य द्वितीयत्वे भोक्तुः प्राधान्येन प्रतिपाद्यत्वन्न विरुध्यत इति। अतः किमस्तुर्जीवभावस्येत्यत्राह "तदेके"ति,।

सू० गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

स्नू० न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टौ ऋतं पिबन्ताविव्युच्येते अपि तु जीवात्मपरमात्मानौ हि तथा व्यपदिश्येते, कुतः तद्दर्शनात् अस्मिन् प्रकरणे जीवपरयोरेव गुहाप्रवेशव्यपदेशो दृश्यते परमात्मनस्तावत् "तं दुर्दर्शं

गूढमनुप्रविष्टं गुहाहितङ्गह्वरेष्ठं पुराणम् अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती"ति जीवस्यापि "या प्राणेन सम्भवत्यादितिर्देवतामयी गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायते"ति कर्मफलान्यत्तीत्यदितिर्जीव उच्यते प्राणेन सम्भवतीति प्राणेन सह वर्त्तते देवतामयी इन्द्रियाधीनभोगा गुहां प्रविश्य तिष्ठन्ती हृदयपुण्डरीकोदरवर्त्तिनी या भूतेभिर्व्यजायत पृथिव्यादिभिर्भूतैः सहिता देवादिरूपेण विविधा जायते, एवञ्च सति ऋतं पिबन्ताविति व्यपदेशः छत्त्रिणो गच्छन्तीतिवत्प्रतिपत्तव्यः ।

टी० सू० गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् । ११ । ऋतं पिबन्ताविति निर्दिष्टयोरपि गुहां प्रविष्टाविति सूत्रयतोऽयमभावः द्वितीयस्य पानं पक्षद्वयेऽपि क्लिष्टं बुद्धिप्राणयोरन्यतरपक्ष एव छायातपनिर्देशो लोकशब्दनिर्देशश्च घटताङ्गुहाप्रवेशस्तु न कथं चिदपि घटते आत्मा गुहायां निहितः यो वेद निहितं गुहायां गुहाहितं गह्वरेष्ठं विधूय कविरेतदनुतिष्ठेत् गुहाशयं पूः प्राणिनः सर्वएव गुहाशयस्येति परमात्मनो गुहांप्रवेशव्यपदेशप्रसिद्धिप्राचुर्यात् बुद्धिप्राणयोरन्यतरस्य तादृशप्रसिद्ध्यभावाच्चेति एतमेवाभिप्रायं हृदि निधाय सूत्रे प्रतिज्ञाखण्डं व्याचष्टे "न प्राणजीवावि"ति, जीवपरमात्मानौ हीति सूत्रे हि–शब्दः सौत्रार्थस्य परमसाध्योपपादकत्वसूचक इति भावः । सूत्रे प्रतिज्ञोपपादकं हेतुखण्डं व्याचष्टे 'अस्मिन्नि"ति, परमात्मनस्तावदिति गुहाप्रवेशव्यपदेशो दृश्यत इत्यन्वयः तम्दुर्दर्शं द्रष्टुमशक्यं कुतः गूढन्तिरोधायककर्मरूपाविद्यादिना तिरोहितत्वादित्यर्थः गुहाहितं हृदयवर्त्तिनङ्गह्वरेष्ठम् आत्मा निष्पापमणि परमव्योमनिलयं वा अध्यात्मयोगाधिगमेनेति परोपासनस्य जीवोपासनमङ्गत्वेन विधीयते जीवपरयोरुभयोरपि प्रकरणप्रतिपाद्यमानत्वात् जीवस्यापीति गुहाप्रवेशव्यपदेशो

दृश्यत इत्यन्वयः । अदिति-शब्दस्य देवमातरि भूमौ च वेदप्रसिद्धेस्त-द्भावृत्यर्थमवयवशत्या जीववाचित्वं दर्शयति "कर्मफलानी"ति, रूढार्थस्य गुहाप्रवेशासम्भवाद्योगपरिग्रह इति भावः । कर्मफल-शब्देन ऋत-शब्दार्थो निर्दर्शितो भवति छत्रिणो गच्छन्तीति न्यायेन निर्वाहे लाक्षणिकत्वं स्यादिति मुख्यकल्पनिर्वाहमाह-

सू० यद्वा प्रयोज्यप्रयोजकरूपेण पाने कर्तृत्वं जीवपरयोरुपपद्यते

सू० विशेषणाच्च ॥ १२ ॥

अस्मिन् प्रकरणे जीवपरमात्मानावेवोपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते "ब्रह्मयज्ञन्देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेती"ति ब्रह्मयज्ञो जीवः ब्रह्मणो जातत्वात् ज्ञत्वाच्च तन्देवमीड्यं विदित्वा जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्य इत्यर्थः तथा "यस्सेतुरीजानानामक्षरम् ब्रह्म यत्परम् अभयं तितीर्षतां पारन्नाचिकेतं शकेमही"त्युपास्यः परमात्मा उच्यते नाचिकेतन्नाचिकेतस्य कर्मणः प्राप्यमित्यर्थः, "आत्मानं रथिनं विद्धि शरीरं रथमेव चे"त्यादिना उपासको जीव उच्यते तथा "विज्ञानसरथिर्यस्तु मनःप्रग्रहवान्नरः सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पद"मिति प्राप्यप्राप्तारावभिधीयेते जीवपरमात्मानौ इहापि छायातपावित्यज्ञत्वसर्वज्ञत्वाभ्यान्तावेव विशिष्य व्यपदिश्येते ।

टी० 'यद्वे'ति, मुख्यत्वेऽप्यस्वारस्यमात्रमस्ति लाक्षणिकत्वादपि तद्वरं बुद्धिप्राणयोरन्यतरपरत्वमिति था ऽस्वरसं कारणत्वेन हि तयोरन्वयः परमात्मनस्तु तत्प्रयोजको हेतुरित्युक्तप्रक्रियया प्रयोजककर्तृतायाः कर्तृत्वविशेषत्वात्मुख्यत्वाच्चिन्त्वे पिबन्ताविति निर्देशः स्वरस इति भावः । पिबन्ताविति

निर्देशस्वमस्यमुभयोश्चेतनत्वं घटते उभौ गुहां प्रविष्टाविति निर्देशो हि न दण्डसद्वितीयपुरुषविषयः अपि तु पुरुषद्वयपरः ब्रह्मविदो वदन्तीत्युक्तत्वाच्च जीवसद्वितीयपरमात्मपरत्वं युक्तम् । एवं निर्वाहद्वयेनापि प्रकरणविच्छेदकलिङ्गत्वेन पराभिमतस्य ऋतपानान्वयस्य अन्यथासिद्धिरुक्ता भवति गत्यभावे यदमुख्यन्तत्र द्वयोः प्रतिपन्नयोः प्रकरणानुगुणस्य ग्राह्यत्वं सजातीययोरेव द्विवचननिर्देशार्हत्वं चेति न्यायद्वयमत्र शिक्षितं सू० विशेषणाच्च तत्तद्वाक्योदितविशेषणान्तराणि च प्राप्यत्वप्राप्तृत्वोपास्यत्वोपासकत्वान्तर्भूतानीत्यभिप्रायेण उपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टावित्युक्तं ब्रह्मयज्ञमित्युपासकं वदति शकेम हि उपासितुं प्राप्तमिति शेषः आत्मानं रथिनमित्यादि शरीराद्युपासनपरिकरसहितो जीव उच्यत इत्यर्थः । इहापि ऋतं पिबन्ताविति वाक्येऽपि अज्ञत्वसर्वज्ञत्वाभ्यामित्येन ज्ञाज्ञौ द्वावजाविति वाक्यं स्मारितम् उदाहृतवाक्यैकार्थ्याच्छायातप-शब्दयोरयमेवार्थः विशेषणाच्चेति सूत्रे छायातपत्वरूपविशेषणमपि विवक्षितमिति भावः । उत्तरत्र त्रयाणामेव चैवमित्यादिसूत्रेण वक्ष्यमाणत्वेऽपि चोद्यस्य बुद्धिस्थत्वात् संग्रहत्वाय तत्पूर्वकं परिहारमाह—

भू० अथ स्यात् "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इति जीवस्वरूपयाथात्म्यप्रश्नोपक्रमत्वात्सर्वमिदं प्रकरणं जीवपरमिति प्रतीयत इति, नैतदेवं न हि जीवस्य देहातिरिक्तस्यास्तित्वनास्तित्वशङ्कयाऽयं प्रश्नः तथा सति पूर्ववरद्वयवरणानुपपत्तेः तथा हि पितुः सर्ववेदसदक्षिणक्रतुसमाप्तिवेलायां दीयमानदक्षिणावैगुण्येन क्रतुवैगुण्यं मन्यमानेन कुमारेण नचिकेतसाऽऽस्तिकाग्रेसरेण ...ऽपि पितुः क्रतुसाद्गुण्यमिच्छता कस्मै मां दा... पृष्टवता स्वनिर्बन्धरुष्टपितुर्वचनात् स्वसदनात्प्रोषुषि यमेतद्दर्शनात् तत्र

तिस्रो रात्रीरुपोषुषा स्वोपवासभीतत्प्रतिविधानप्रवृत्त-मृत्युप्रत्तेवरत्रये आस्तिक्यातिरेकात्प्रथमेन वरेण स्वात्मानं प्रति पितुः प्रसादो वृतः एतच्च सर्वं देहातिरिक्तमात्मानमजानतो नोपपद्यते, द्वितीयेन च वरेणोत्तीर्णदेहात्मानुभाव्य-फलसाधनभूताग्निविद्या वृता, तदपि देहातिरिक्तात्मानभिज्ञस्य न सम्भवति अतस्तृतीयेन वरेण यदिदं व्रियते येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीय" इति, अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्व-

टी० "अथ स्यादि"ति, अस्मिन्प्रकरणे जीवपरमात्मनोर्विशेष्यत्वमयुक्तम् उपक्रमस्य जीवपरत्वादित्याह "येयं प्रेत" इति, परिहरति "नैतदि"ति, वरद्वयं किं ? तद्वरणानुपपत्तिः कथ ? मित्यत्राह "तथा ही"ति, पितृप्रसादवरणस्य अग्निविद्यावरणस्य च प्रत्येकनिरपेक्षहेतुत्वसूचनार्थम् एतच्च सर्वं तदपीति द्विरुक्तम्, अत्र परमेति अत्र यदिदं व्रियते यद्वरणं क्रियते त न वरण इत्यर्थः मोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्व जिज्ञासयेति मोक्षज्ञानाय मोक्षानुबन्धिजिज्ञासयाऽयं प्रश्न इत्यर्थः । येयमित्यादिप्रश्नवाक्यं मोक्षस्वरूपः प्रश्नः कण्ठोक्तः प्रतिवचनप्रकारेणोपासनादिप्रश्नश्चार्थसिद्ध इत्यवगम्यते एवं विभागज्ञापनार्थं विज्ञानाय-

श्रु० जिज्ञासयाऽयं प्रश्नः क्रियते एवं च येयं प्रेत इति न शरीरवियोगमात्राभिप्रायम् अपि तु सर्वग...
प्रायं यथा न प्रेत्य संज्ञाऽस्ती...
मनुष्ये प्रेते सर्वबन्धविनिर्मुक्ते ॰